Printed by Ramchandra Yesu Shedge, at the Nirnaya Sagar Press, 26–28,
Kolbhat Street, Bombay.

---

Published by Sheth Pushpachandra Khemchandra, Valad (*via* Ahmedabad).

अस्य ग्रन्थस्य प्राप्तिस्थानम्—

१ शाह फूलचंद खीमचंद. मु० वलाद. (स्टे. मेदरा. ए. पी. आर)
२ शाह भूरालाल फूलचंद. मु० अमदावाद ( शाहपुर मंगलपारेखखांचा रेवादासनी पोल )
३ शाह नागरदास प्रागजी. मु० अमदावाद ( डोशीवाडानी पोल )
४ मास्तर छोटालाल नानचंद. मु० अमदावाद ( झवेरीवाडा कोठारीपोलना नाके )

# प्रस्तावना ।

विदाङ्कुर्वन्तु हंहो मनीषिणः !—परमपवित्रीभूताद्यमङ्गल्याद्यलोकोत्तमाद्यशरण्यपञ्चमदेवश्रीमदर्हद्वक्त्रप्रसूतस्य अनेकलब्धिसम्पन्नश्रुतस्थविरगणधरमुनिग्रथितस्य अनाद्यनिधनापारसंसारपारावारपरिभ्रमणपरिश्रान्तानेकभव्याङ्गिगणसंवेगरङ्गकारणस्य सद्बोधरम्यतापन्नस्य विबुधजनपरमपदसाधनकारणीभूतस्य जैनधर्मैकसारभूतसकलगुणमूलविनयप्रभृतिषट्त्रिंशदध्ययनरूपस्य मूलागमस्य श्रीमत उत्तराध्ययनाभिधानसूत्रस्योपरि अनेकैः सुविहितगीतार्थाचार्यप्रवरैर्भिन्नभिन्नरचनासमकतया रचिता भूयस्यो वृत्तयः सन्ति । ताभ्यः काश्चन मुद्रिता अपि दृष्टिपथमापतन्ति । तन्मध्यगता या पुनर्गम्भीरार्थसङ्कलिता निपुणगणगम्या शिष्यहितानाम्नी बृहद्वृत्तिः थारापद्रगच्छीयैर्वादिवेतालेत्याख्यविरुदबिभ्राणैः श्रीमद्भिः शान्त्याचार्यैर्विहिताऽस्ति, ततश्च वृत्तेरेषा सुगमप्राकृतगद्यमयकथागर्भिता एकपाठगता सुखबोधानाम्नी लघुवृत्तिरैदंयुगीनमन्दबुद्धिसत्त्वहितकाम्यया समुद्धृता देवेन्द्रगणयपरनामधेयैः पूज्यप्रवरैः श्रीमन्नेमिचन्द्राचार्यैर्गुरुभ्रातृश्रीमन्मुनिचन्द्राचार्योपरोधेनेति ।

सूत्रस्यास्य वृत्तिकारका एते आचार्याः कदाऽभूवन् ? किंगच्छीयाः ? केऽमीषां गुरवः ? कदा कुत्र पवित्रस्थले कृता च वृत्तिरियम् ? इत्येतत्प्रश्ननिर्णयस्तु एतद्वृत्तिप्रान्तप्रशस्त्यवलोकनाद् भवति । तथा चात्र प्रशस्त्यन्तर्गतकतिपयपद्यानामुल्लेखः—

"विश्रुतस्य महीपीठे, बृहद्गच्छस्य मण्डनम् । श्रीमान् विहारुकप्रष्ठः, सूरिरुद्योतनाभिधः ॥ १ ॥

"शिष्यस्तस्याऽऽम्रदेवोऽभूदुपाध्यायः सतां मतः । यत्रैकान्तगुणापूर्णे, दोषैर्लेभे पदं न तु ॥ २ ॥

"श्रीनेमिचन्द्रसूरिरुद्धृतवान् वृत्तिकां तद्विनेयः । गुरुसोदर्यश्रीमन्मुनिचन्द्राचार्यवचनेन ॥ ३ ॥

"शोधयतु बृहदनुग्रहबुद्धिं मयि विधाय विज्ञजनः । तत्र च मिथ्यादुष्कृतमस्तु कृतमसङ्गतं यदिह ॥ ४ ॥

"अणहिलपाटकनगरे, दोहडिसच्छ्रेष्ठिसत्कवसतौ च । सन्तिष्ठता कृतेयं, नवकरहरवत्सरे चैव ॥ ५ ॥"

इत्येतेभ्यः स्पष्टार्थेभ्यः पद्येभ्यः प्रस्तुतवृत्तिकृतां श्रीमतां नेमिचन्द्राचार्याणां स्पष्टमेव सत्तादि प्रतीयते ।

तत्र सत्ता तु अमीषामाचार्याणां प्रशस्त्यन्तिमपद्योक्ताभ्यां वृत्तिकरणस्य नगर-कालाभ्यां विक्रमार्कीयस्य द्वादशशतकस्य पूर्वार्धादर्वाक् स्फुटैव । एते ह्याचार्याः प्राचुर्येणाऽणहिलपत्तने दोहडिश्राद्धवसतौ स्थितवन्त इत्यपि प्रतीयते, यतस्तत्र स्थितैरमीभिः प्रथममेषा वृत्तिः कृता एकोनत्रिंशदधिके एकादशशते विक्रमसंवत्सरे ( ११२९ ) ।

२ तदनु प्राकृतपद्यात्मकं श्रीमहावीरचरित्रं द्वितीयं ग्रन्थरत्नं तन्नगरे तच्छ्रेष्ठिसत्कोपाश्रयस्थैरेवामीभिः कृतमेकचत्वारिंशदधिके एकादशशतके ( ११४१ ) वैक्रमीये । तथा च श्रीमहावीरचरित्रान्तर्गतान्तिमगाथायुगलम्—

"अणहिलवाडपुरम्मी, सिरिकन्ननराहिवम्मि विजयंते । दोहट्टिकारियाए, वसहीए संठिएणं च ॥ ८४ ॥

वाससयाणं एकारसण्ह विक्कमनिवस्स विगयाणं । अगुयालीसे संवच्छरम्मि एयं निबद्धं ति ॥ ८५ ॥"

अनेन श्रीवीरचरित्रप्रशस्तिगतगाथायुग्मेनास्य चरित्रस्य निर्माणकालः स्पष्ट एव । एतच्चरित्रमपि श्रीमद्भिर्नेमिचन्द्रसूरिभिः श्रीउत्तराध्ययनवृत्तेर्विरचनानन्तरं ततो विहृत्य पुनरागत्य तत्र स्थितैरेव व्यधायीत्यपि निश्चीयते ।

यत्पुनः श्रीप्रवचनसारोद्धारनामकस्य ग्रन्थरत्नस्य कृतिकारा एते एव पूर्वोदितसूरिवरा इति श्रीसागरानन्दसूरिभिस्तद्ग्रन्थप्रस्तावनायामलेखि तन्न समीचीनम् । यद्यप्युक्तग्रन्थकारा तन्नामान एव गुरवोऽप्येषां आम्रदेवाः तथाप्येते पूर्वोक्तग्रन्थद्वयकर्तृभ्यो भिन्ना एव तत्प्रशस्तितोऽवसीयन्ते । तथा च तत्प्रशस्तिः—

"धम्मधराधरणमहावराहजिणचंदसूरिसिस्साणं । सिरिअम्मएवसूरीण पायपंकयपराएहिं ॥ १ ॥

"सिरिविजयसेणगणहरकणिट्ठजसदेवसूरिजिट्ठेहिं । सिरिनेमिचंदसूरीहिं सविणयं सिस्सभणिएहिं ॥ २ ॥

"समयरयणायराओ, रयणाणं पिव समत्थदाराइं । निउणनिहालणपुव्वं, गहिउं संजत्तिएहिं व ॥ ३ ॥

"पवयणसारुद्धारो, रइओ सपराववोहकज्जम्मि । जं किंचि इह अजुत्तं, वहुस्सुया तं विसोहंतु ॥ ४ ॥

"जा विजयइ भुवणत्तयमेयं रविससिसुमेरुगिरिजुत्तं । पवयणसारुद्धारो, ता नंदउ बुहपढिज्जंतो ॥ ५ ॥

अनेन प्रशस्त्युल्लेखेन **प्रवचनसारोद्धार**ग्रन्थकारका अन्ये एव **नेमिचन्द्रा**चार्याः स्पष्टतया निश्चीयन्ते । यत एतेषां गुरुगुरवस्ततो भिन्ननामानः, श्री**आम्रदेव**सूरयो गुरवोऽपि परे एव, यतः पूर्वोक्त**नेमिचन्द्राणां** तु श्री**आम्रदेवा** उपाध्याया एव गुरवः कथितास्सन्ति । वेहारुक-बृहद्गच्छ-रचनासमय-नगर-वसत्याद्युल्लेखोऽप्यत्र नास्ति, अत एव **प्रवचनसारोद्धार**ग्रन्थकर्त्तार उक्तग्रन्थद्वयकर्तृभिन्ना एव श्री**नेमिचन्द्राः** । यदुत उक्तवृत्तिकरणकाले अन्येषां कतिपयानामेतन्नाम्नामाचार्याणामपि सत्ताऽभूदिति । किञ्च य**दुत्तराध्ययन**लघुवृत्तिकृदाचार्याणां गुरुभ्रातृत्वापन्नानां श्री**मुनिचन्द्रा**चार्याणां पितृव्यगुरुता लिखिताऽस्मीभिस्तदपि न सम्यगिति ज्ञायते । गच्छोऽप्येतेषां "बृहद्गच्छस्य मण्डनमि"त्यनेन स्पष्ट एव । गुरुपरम्पराऽप्यमीषां प्रशस्तितः स्पष्टैव, यतो गुरुगुरवः श्रीमन्त **उद्योतना**चार्याः, श्री**आम्रदेवो**पाध्याया गुरुवर्याः, श्री**मुनिचन्द्र**सूरयो गुरुभ्रातरः, श्री**नेमिचन्द्र**सूरीणामिति गुर्वावलिः ।

मुद्रणावसरे सवृत्तिकस्यास्यागमस्य सशोधनार्थमुपलब्धानां दशसङ्ख्याकानामादर्शहस्तलिखितप्रतीनां क्रमस्त्वेवम्—तत्राद्यैका प्रतिः **गुर्जरदेशान्तर्वर्त्तिवालापुर( वलाद )नगरसंस्थापितासद्गुरुवर्यतपोनिधिश्रीमद्विवेकविजयमुनिपुङ्गव**ज्ञान-

भाण्डागारसत्का चत्वारिंशदधिकद्विशतपत्रमाना जीर्णपर्णा शुद्धा लिपिसुन्दरा, एतत्प्रान्ते प्रशस्तिसत्क एक एवान्तिम-
श्लोको दृश्यते च, प्रेसकोपी चैतदुपरित एव कारिताऽभूदिति । किञ्चैतद्ग्रन्थमुद्रणकारणमस्मद्गुरुवर्याणां प्रेरणैव ।

पुनश्च प्रतीनां षट्कमकब्बरशाहिप्रतिबोधविधायिजगद्विख्यातजगद्गुरुश्रीमद्विजयहीरसूरिजन्मभूम्युत्तरगुर्जरप्रदेशा-
न्तःस्थप्रह्लादनपुरेत्याख्यनगरमध्य'दायरा'इतिनामस्थानसंस्थसंवेगिगच्छोपाश्रयज्ञानागारसत्कम् ।

तासु प्रथमा—नवनवत्युत्तरत्रिशत( ३९९ )पत्रमयी प्राचीना शुद्धप्राया, प्रान्तविभागे—"संवत् १५४५ वर्षे
कार्त्तिकसुदि ३ दिने श्रीधर्मघोषगच्छे मूलपट्टे श्रीधर्मसूरिसन्ताने श्रीपद्मशेखरसूरिपट्टालङ्करणगच्छाधिराजश्रीपद्मा-
नन्दसूरिशिष्यवाचकश्रीभावशेखरवाचनार्थं लिखितमिदं मुनिना क्षमारत्नेन श्रुतज्ञानवृद्धये ॥ शुभं भवतु श्रीपार्श्व-
प्रसादात् ॥" इतिकृतोल्लेखश्च वर्त्तते ।

द्वितीया—चतुर्दशोत्तरशतत्रय(३१४)पत्रात्मिका नातिप्राचीना नातिशुद्धा मूलपाठविरहिता अन्तिमपत्रात्पूर्वपत्रन्यूना,
सा च प्रान्तवर्त्तिना "अथ संवत् श्रीनृपविक्रमकालातीतसंवत् १६१८ वर्षे माघमासे शुक्लपक्षे ५ शुक्रे अदेहउसमापुरे
श्रीउत्तराध्ययनटीकायां दो० लहुयीआदिसमस्तसङ्घेन लिखापिते गुणिश्रीलडूकृते शास्त्रमिदं सुधासमं श्रीउत्तराध्ययनवृत्ति-
रियम् ॥ यादृशं पुस्तके दृष्टं, तादृशं लिखितं मया। यदि शुद्धमशुद्धं वा, मम दोषो न दीयते ॥ १ ॥ लेखकपाठकयोर्माङ्गल्यं
ददातु ॥ तैलाद्रक्षेज्जलाद्रक्षेद् रक्षेच्छिथिलबन्धनात् । परहस्तगताद्रक्षेदेवं वदति पुस्तकम् ॥ २ ॥ इत्युल्लेखेन सङ्गताऽस्ति ।

तृतीया पुनः—पड्विंशत्युत्तरत्रिशत(३२६)पत्रप्रमाणा सूक्ष्माक्षरा अनतिजीर्णा प्रायः शुद्धा विंशतितमपत्रविकला
च, अन्ते च "यादृशं पुस्तके दृष्टं, तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा, मम दोषो न दीयते ॥ १ ॥ संवत्
१५६३ वर्षे लिखितम् ॥" इत्युल्लेखवती ।

चतुर्थी च—षड्विंशत्यधिकचतुःशत(४२६)पत्रयुक्ता स्थूललिपिका अनतिप्राचीना शुद्धाशुद्धा च, अवसाने "संवत् १६६१ वर्षे फाल्गुणमासे कृष्णपक्षे ५ दिने भोमवारे पं० हरजी लिखितं शुभं भूयात् ॥ यादृशं पुस्तके दृष्टं, तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा, मम दोषो न दीयते ॥ १ ॥" इति लेखकपुष्पिका चास्ति ॥

पञ्चमी—त्रिचत्वारिंशाधिकत्रिशत(३४३)पत्ररूपा न प्रायो जीर्णा न च प्रायोऽशुद्धा आद्यपत्रद्वयविरहिता च, प्रान्ते लेखकपुष्पिकाविहीना च ।

षष्ठी पुनः—एकसप्तत्युत्तरत्रिशत(३७१)पत्राङ्किता नूतना न प्रायः शुद्धा लिपितोऽशोभना त्रिपाठी चेयम् । पृष्ठे "संवत् १६६२ वर्षे कार्त्तिकमासे शुदि ३ दिने सोमे लिखितम् ॥ श्रीआदिनाथप्रसादात् शुभं भवतु । लेखकपाठकयोः शुभं भवतु ॥ श्री ॥" इति पुष्पिका लेखकस्य ।

तदनु प्रतीनां त्रयी गुर्जरप्रान्तान्तर्गतडभोडाइत्याख्यनगरसंस्थापितश्रीमद्विजयानन्दसूरीन्द्रसन्तानीयश्रीमन्मानविजयमुनिचित्कोपसत्का ।

तत्रैका—एकोनाशीत्यधिकशतद्वय(२७९)पत्रवती दिव्याक्षरा परमशुद्धा, अन्ते च "संवत् १६१२ वर्षे भाद्रपदवदि १२ रविवारे श्रीसागरसूरिसन्ताने श्रीसमयभक्तमहोपाध्यायशिष्यश्रीपुण्यनन्दिउपाध्यायशिष्यश्रीरत्नरङ्गोपाध्यायतच्छिष्यवाचकाऽमरगिरिगणिना स्ववाचनार्थं लिपीकृता । लिखिता श्रीफलवर्द्धिकानगरे । वाच्यमाना चिरं नन्द्यात् ॥ शुभं भवतु कल्याणमस्तु लेखकपाठकयोः । यादृशं पुस्तके दृष्टं, तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा, मम दोषो न दीयते ॥ १ ॥" इति लेखकपुष्पिका ।

द्वितीया—पञ्चोत्तरशतद्वय(२०५)पत्रयुता प्राचीनपर्णा शुद्धा, प्रान्तभागे लेखकस्य पुष्पिका चेयम्—"संवत् १५५२

वर्षे श्रीपत्तननगरे श्रीखरतरगच्छे श्रीजिनराजसूरयस्तत्पट्टे श्रीजिनवर्धनसूरयस्तेषां पट्टे श्रीजिनचन्द्रसूरयस्तदीयान्वये श्रीजिनसागरसूरयस्तदन्वये श्रीजिनचन्द्रसूरयस्तत्पट्टपूर्वाचलसहस्रकरावतारश्रीपूज्यराजश्रीजिनहर्षसूरीणामुपदेशेन श्रीउपकेशवंशे छाझहडगोत्रे सं० खीमाभार्या सं० खेतलदेपुत्र सं० कउझकेन सं० कर्पूरदेपुत्र सं० देवदत्तपौत्र सं० नाकरप्रमुखपरिवारसहितेन श्रीउत्तराध्ययनलघुवृत्तिरलेखि पं० कमलसंयममुनिपठनार्थम्॥" इति ।

तृतीया च—एकषष्ठ्युत्तरद्विशत(२६१)पत्रात्मिका प्राचीनप्राया शुद्धप्राया च, अस्या (१-१७३-१७४-१७५-१७६-१७७-१७८) मेतावन्ति पत्राणि न सन्ति । प्रान्ते वृत्तिकर्तुः प्रशस्तिरपि नास्ति, परं पुस्तकलेखकस्य महती पुष्पिका त्वेम्—"आसीत् श्रीराजगच्छे सदसि नरपतेरल्हणाख्यस्य साङ्ख्यग्रन्थव्याख्याविधाताऽन्नलनृपतिपुरो वादिगर्वापहर्त्ता । जैनावज्ञाप्रसक्तं जिनमतसुदृढं विग्रहेशं विधाय, श्रीमज्जैनेन्द्रधर्मोन्नतिकरणपटुर्धर्मसूरिर्मुनीन्द्रः ॥ १ ॥ वादीन्द्रः किल धर्मसूरिरभवच्छ्रीरत्नसिंहाभिधो, देवेन्द्रोऽपि गुरुस्ततोऽप्युदभवद्रत्नप्रभः सूरिराट् । आचार्यो विजयीश्वरः प्रभुरभूद्विद्वज्जने स्वस्थधीः, सूरीशोऽपि च रत्नचन्द्रसुगुरुराणन्दसूरिस्ततः ॥ २ ॥ ततोऽप्यभूवन्नमरप्रभेन्द्रा, विबोधिता यैर्बहुशो नरेन्द्राः । तेषां क्रमोल्लासनभानुमाली, पुरा भवति स्म ज्ञानेन्दुशाली ॥ ३ ॥ श्रीसागरेन्द्रसूरीशाः, सत्क्रियासु विशारदाः । तत्पट्टभूषणाश्चासन्, सूरयो मलयेन्दवः ॥ ४ ॥ सकलवादिमदद्विपकेशरी, स पद्मशेखरसूरिगुरुस्ततः । वहुविनेयवरेष्वपि वाचकः, समभवद्भुवि भावशशी मुनिः ॥ ५ ॥ सुशिष्यो भावचन्द्रस्य, कर्मसागरपाठकः । विश्रुतः शास्त्रनैपुण्यात्कलाकेलिकुतूहली ॥ ६ ॥ तेषां सुश्रावकाश्चाथ, भूरयः सूरवंशजाः । सद्गुणाढ्यस्य वंशस्य, प्रपूर्तिर्विस्तरा न किम् ॥७॥ सूराणवंशस्य पट्टप्रदीपः, श्रीसूरदेवो भुवि सुप्रतापः । तदन्वयेऽभूद्धरदेवकाख्यः, पुत्रः पवित्रो ननु पद्मसिंहः ॥८॥ मोषाको रत्नसिंहश्च, कमलरूपा तथैव च । मुनिचन्द्रः सोमदेवश्च, पद्मसिंहस्य

पुत्रकाः ॥ ९ ॥ पुरुषार्था इव चत्वारः, सोमदेवस्य पुत्रकाः । डूङ्गरः पर्वतश्चैव, शिखरश्चाचाकस्तथा ॥ १० ॥ सङ्घपतिपदं प्राप्य, श्रीमन्नगरकोटके । तीर्थयात्रां जयी चक्रे, शिखरः कीर्त्तिभूषितः ॥ ११ ॥ सिरियादेवी प्रथमा, लाछलदेवी तथा परा तस्य । सञ्जाते द्वे दयिते, रतिप्रीतीव मदनस्य ॥ १२ ॥ प्रथमायास्त्रयः पुत्रा, जज्ञिरे स्वगुणोज्ज्वलाः । शिरपतिः श्रीपालश्च, सहस्रवीरस्तथैव च ॥ १३ ॥ तथा परस्या द्वौ पुत्रौ, जज्ञाते यशःशालिनौ । सहस्रराज-भामंलौ, मूर्त्ताविव यशोजयौ ॥१४॥ भर्तुः पुण्यार्थमर्थेन, लाछिनाम्न्या लिखापितम् । पुस्तकं वाच्यमानं हि, चिरं नन्दतु शासने ॥ १५ ॥ उत्तराध्ययनवृत्तेः, पुस्तकोऽयं प्रशस्तरुक् । वाचनाचार्यकर्मसागरस्य प्रददे मुदा ॥१६॥ बाणनन्दपयोधीन्दुमिते (१४९५) विक्रमवत्सरे । पुस्तकं लेखयामास सा स्वकीयधनव्ययात् ॥ १७ ॥ यावत्पूर्वाङ्गणेऽस्मिन्नममतममते गोमयालेपनार्द्रे, सायंसन्ध्यापुरन्ध्री स्फुरदुडुकुसुमे मुञ्चतीन्दुप्रदीपम् । प्रातः श्रीसान्ध्यरागप्रसृमरघुसृणे भानुकुम्भञ्च तुष्टै, धर्मावीशस्य तावज्जिनवचनमिदं विश्वलोके मुदे स्तात् ॥ १८ ॥" इति ।

अस्य संशोधनसमये युगपत्सम्पूर्णतत्पुस्तकप्रदातृणामुक्तमहाशयानां विशालोदारता धन्यवादास्पदीभूता एव । किञ्च गुरुस्य ग्रन्थस्यान्तिमप्रुफनिरीक्षणे मुनिवर्यैः श्रीमत्पुण्यविजयैर्महाशयैः परिश्रमोऽकारि तदर्थं तेषामप्यनुग्रहः स्मृतिपथान्न कदापि विस्मर्यतेऽस्माभिः । अन्यच्चैतद्वृत्तिगतानि कथान्तर्गतानि वा यानि कानिचित् प्राकृत-अपभ्रंशभाषामयानि प्रस्ताविकपद्यानि तेषां संस्कृतच्छायाप्यधः कृतावलोकनीयेति ।

पूर्वोक्तप्रकारेण सावधानीभूय संशोधितेऽप्यस्मिन् ग्रन्थे प्रमादवशाद् दृष्टिदोषवशाद्वा यत्र कुत्रचित् स्थले या काप्यशुद्धिर्वाचकानां दृष्टिपथमवतरेत्तत्र संशोध्य वाचनीयं कोविदमहाशयैरिति प्रार्थयते—

संवत् १९९२ पौषशुक्ला प्रतिपत्
मु० राजनगर (लुणसावाडा)
जैनोपाश्रय ।

विजयोमङ्गसूरिः ।

अस्यागमस्य मुद्रणकार्ये आर्थिकसाहाय्यप्रदातॄणां भाग्यवतां श्रमणोपासकानां

# नामावलिः—

राजनगरान्तर्गतशाहपुरसत्का द्रव्यसहायता—

५०० मङ्गलपारेखखांचा इत्यस्य उपाश्रयसत्कज्ञानद्रव्यम्।
१५१ शाह–डाह्याभाई साकरचंद.
१०१ शाह–नानालाल हीरालाल.
५१ शाह–भूलाभाई वलाखीदास.
४१ शाह–बबाभाई उमेदचद
३१ शाह–मणिलाल मगनलाल
३१ शाह–नगीनदास दोलतराम.
३१ शाह–केशवलाल जेचद.
२५ शाह–फूलचंद लल्लुभाई.
२५ शाह–साकरचंद बेचरदास.
२५ शाह–शिवलाल मनसुखराम.
२५ शाह–चूनीलाल रायचंद.
२५ शाह–खोडीदास छोटालाल.
२५ शाह–उमेदराम भूराभाई.
२५ शाह–साकलचंद चकुभाई.
२५ शाह–हीरालाल माणेकलाल.
२५ शाह–सकरचंद दोलतचंद.
२५ शाह–छोटालाल भाईचद.
२५ शाह–नगीनदास छगनलाल.

प्रह्लादनपुरसत्का द्रव्यसहायता—

२७५ श्रीतपागच्छोपाश्रयसत्कज्ञानद्रव्यम्।
१५१ शाह–अमृतलाल नथुचंद.
१०१ परिख–डाह्याभाई नगीनदास.
१०१ शाह–गोदडभाई डोसजी.
५१ कोठारी–रिखवचंद उजमचंद.
५१ परिख–मलुकचंद बादरमल.
५० (कमलाबाई)द्वारा देसाई–कालीदास पीतांबरदास
५० शाह–ललुभाई हरिचंदस्य विधवा (गढ)
२५ मेता–जयतीलाल कालीदास.
१०० शाह–कस्तूरचंद मनसुखराम. (वकादवास्तव्य)
५१ कोचर–संपतलालस्य मातृ पानीबाई.

# लघुशुद्धिपत्रकम् ।

| पृष्ठम् | निरङ्कपङ्क्तिः | साङ्कपङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|---|
| ७ | १ | ० | भुंजंतो | भुञ्जंतो |
| ७ थी ९६ सुधी | ० | हेडिंग | श्रीनैमिचन्द्रीयवृत्तिः । | श्रीनेमिचन्द्रीया सुखबोधाख्या लघुवृत्तिः । |
| ९ | ० | ८ | विढपयिष्यति' | विढपयिष्यति, |
| १३ | ० | हेडिंग | ध्यनयन्सूत्रे श्रीनैमि | ध्ययनसूत्रे श्रीनेमि |
| १९-२०-२१ | ० | हेडिंग | प्रथमं विनयाध्ययनम् | द्वितीयं परिषहाध्ययनम् । |
| ५० | ६ | ० | अथ' | 'अथ' |
| ५५ | २ | ० | वेहांरिय | वेहारिय |
| ६१ | १३ | ० | पिय ? | पिय ! |
| ६३ | ० | ७ | क्रमेण, | क्रमेण |
| ९७ थी १०८ सुधी | ० | हेडिंग | श्रीनैमि | श्रीनेमि |
| ११५ | १४ | ० | गौरखवद् | गौरखरवद् |
| १२० | ० | १६ | निपील्यन्ते | निष्पील्यन्ते |
| १२२ | ० | १६ | संगम | संयम |

| पृष्ठम् | निरङ्कपङ्क्तिः | साङ्कपङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|---|
| १२३ | हेडिंग | ० | त्तयो | त्तनिवृत्तयो |
| १३५-१३६ | ० | हेडिग | दुर्मुख- | द्विमुख- |
| १५५ | ० | १ | जगरक्खण ! | जगरक्खण !, |
| १५५ | ० | २ | किविणासण !, | विणासण !, |
| १७८ | ३ | ० | शिल्पेनशिल्पिकः | शिल्पेन शिल्पिकः |
| १९२ | ६ | ० | नेइ | नेइ, |
| १९४ | ० | ५ | हे ! महाभाग ! | हे महाभाग ! |
| १९८ | ० | १२ | निभद्धा | निबद्धा |
| २३३ | १ | ० | अणट्टाकित्तिपव्वए | अणट्ठाकित्ति पव्वए |
| २७१ | ४ | ० | निर्ग्रन्थ | निर्ग्रन्थ |
| २७१ | ७ | ० | सुगममेव— | सुगममेव । |
| २९४ | ० | ६ | लछणो | लंछणो |
| ३३१थी३३६ सुधी | हेडिंग | ० | त्रिसप्ति— | त्रिसप्तति— |
| ३३६ | २ | ० | व्यायन् | ध्यायन् |

श्रीआत्मवल्लभग्रन्थाङ्कः—१२.

ॐ नमः प्रवचनाय ।

न्यायाम्भोनिधि-श्रीमद्विजयानन्दसूरीन्द्रपट्टालङ्कारश्रीमद्विजयवल्लभसूरिपादपद्मेभ्यो नमः ।

पूर्वोद्धृतजिनभाषितश्रुतस्थविरसन्दृब्धानि-

श्रीमन्नेमिचन्द्रसूरिविहितसुखबोधाऽऽख्यवृत्तियुतानि-

# श्रीउत्तराध्ययनानि ।

प्रणम्य विघ्नसङ्घात-घातिनस्तीर्थनायकान् । सिद्धांश्च सर्वसाधूंश्च, स्तुत्वा च श्रुतदेवताम् ॥ १ ॥ आत्मस्मृतये वक्ष्ये, जडमतिसङ्क्षेपरुचिहितार्थं च । एकैकार्थनिबद्धां, वृत्तिं सूत्रस्य सुखबोधाम् ॥२॥ बह्वर्थाद् वृद्धकृताद्, गम्भीराद् विवरणात् समुद्धृत्य । अध्ययनानामुत्तर-पूर्वाणामेकपाठगताम् ॥ ३ ॥ [त्रिभिर्विशेषकम्] अर्थान्तराणि पाठान्तराणि सूत्रे च वृद्धटीकातः । बोद्धव्यानि यतोऽयं, प्रारम्भो गमनिकामात्रम् ॥ ४ ॥ तानि च षट्त्रिंशद् भवन्ति । तत्र विनयमूलत्वाद् धर्मस्य प्रथमं विनयाध्ययनम्, तस्य चेदमादिसूत्रम्—

**संजोगा विप्पमुक्कस्स, अणगारस्स भिक्खुणो । विणयं पाउकरिस्सामि, आणुपुव्विं सुणेह मे ॥१॥**

व्याख्या—'संयोगात्' सम्बन्धाद् बाह्याभ्यन्तरभेदभिन्नात्, तत्र मात्रादिविषयाद् बाह्यात् कषायादिविषयाभ्यन्तरात्, विविधैः प्रकारैः—ज्ञानभावनादिभिः प्रकर्षेण मुक्तः—त्यक्तो विप्रमुक्तस्तस्य, "अन्योऽन्यं भवचक्रे, जाताः सर्वेऽप्यनन्तशो

जीवाः । मात्रादिबन्धुभावं, शत्रूदासीनभावं च ॥१॥" अतः कोऽत्र बन्धुः ? को वा परः ?, तथा—"'कोहो य माणो य अणि-
ग्गहीया, माया य लोभो य पवड्ढमाणा । चत्तारि एए कसिणा कसाया, सिञ्चन्ति मूलाइं पुणब्भवस्स ॥१॥" अतो न द्वेषः क्रो-
धादिरिपुवर्गस्याऽवकाश इत्यादिपरिभावनादिभिः स्वजनादिसम्बन्धरहितस्येत्यभिप्रायः, 'अनगारस्य' परकृतगृहनिवासित्वात्त-
त्राऽपि ममत्वमुक्तत्वात् सङ्गरहितस्य 'भिक्षोः' साधोः 'विनयं' साधुजनासेवितसमाचारं उपचारं वा अभ्युत्थानादि 'प्रादुःक-
रिष्यामि' प्रकटयिष्यामि, कथम् ? इत्याह—'आनुपूर्व्या' परिपाट्या, प्राकृतत्वात्तृतीयार्थे द्वितीया, 'शृणुत' आकर्णयत, अनेन
च श्रोतुरभिमुखीकरणेन पराङ्मुखमपि प्रतिबोधयतो व्याख्यातुर्धर्म एवेति ख्यापितं भवति । तथा च वाचकः—"न भवति
धर्मः श्रोतुः, सर्वस्यैकान्ततो हितश्रवणात् । ब्रुवतोऽनुग्रहबुद्ध्या, वक्तुस्त्वेकान्ततो भवति ॥१॥" 'मम' कथयत इति गम्यत
इति सूत्रार्थः ॥१॥ यदुक्तं विनयं प्रादुःकरिष्यामीति तत्र विनीतस्वरूपे कथिते विनयस्वरूपमुक्तमेव स्यादिति तत्स्वरूपमाह—

**आणाणिद्देसकरे, गुरूणमुववायकारए । इंगियाकारसंपण्णे, से विणीए त्ति वुच्चइ ॥ २ ॥**

**व्याख्या**—आज्ञा—सौम्य ! इदं कुरु इदञ्च मा कार्षीरिति गुरुवचनं तस्य निर्देशः—इत्थमेव करोमीति निश्चयाभिधान-
माज्ञानिर्देशस्तं करोतीत्याज्ञानिर्देशकरो गुरूणाम्—आचार्यादीनामुपपातः—समीपस्थानं तत्कारकः—तदनुष्ठाता, न त्वादेश-
भयाद् दूरस्थायी, इङ्गितं—निपुणमतिगम्यं प्रवृत्तिनिवृत्तिसूचकमीषद्भ्रूशिरःकम्पादि आकारः—स्थूलधीसंवेद्यः प्रस्थानादि-
भावसूचको दिगवलोकनादिः, आह च—"अवलोयणं दिसाणं, वियंभणं साडगस्स संवरणं । आसणसिढिलीकरणं,
पट्ठियलिंगाइं एयाइं ॥ १ ॥" अनयोर्द्वन्द्वे इङ्गिताकारौ ताभ्यां गुरुगताभ्यां सम्पन्नः—युक्तस्तद्वेदितया कथिते विनयस्वरूपे

---

१ "क्रोधश्च मानश्चानिग्रहीता माया च लोभश्च प्रवर्धमानाः । चत्वार एते कृत्स्ना कषायाः, सिञ्चन्ति मूलानि पुनर्भवस्य ॥ १ ॥"

२ "अवलोकनं दिशां विजृम्भण शाटकस्य संवरणम् । आसनशिथिलीकरणं प्रस्थितलिङ्गान्येतानि ॥ १ ॥"

इङ्गिताकारसम्पन्नः 'सः' इति विशेषणान्वितः 'विनीतः' विनयान्वितः 'इतिः' सूत्रपरामर्शे उच्यते तीर्थकरगणधरादिभिरिति सूत्रार्थः ॥ २ ॥ अविनीतत्वपरिहारेण विनीतो भवतीत्यतोऽविनीतस्वरूपमाह—

**आणाऽणिद्देसकरे, गुरूणमणुववायकारए । पडिणीए असंबुद्धे, अविणीए त्ति वुच्चई ॥ ३ ॥**

व्याख्या—आज्ञाऽनिर्देशकरो गुरूणामनुपपातकारकः 'प्रत्यनीकः' प्रतिकूलवर्त्ती, किमित्येवंविधोऽसौ ? इत्याह—'असम्बुद्धः' अनवगततत्त्वोऽविनीत इत्युच्यते, कूलवालकश्रमणवत् । तथाहि—एगस्स आयरियस्स चेल्लओ अविणीओ, तं आयरिओ अंबाडेइ । सो खारं वहति । अन्नया आइरिया सिद्धसेलं तेण समं वंदगा विलग्गा । ओयरंताणं वहाय सिला मुक्का । दिट्ठा आयरिएणं, पाया ओसारिया, इयरहा मारिओ होंतो । सावो दिन्नो—दुरात्मन् इत्थीओ विणस्सिहिसि त्ति । 'मिच्छावाई एसो भवउ' त्ति काउं तावसासमे चेव अच्छइ । नईए कूले आतावेइ । पंथब्भासे सत्थो जो एइ तओ आहारो होइ । नईए कूले आयावेमाणस्स सा नई अन्नओ पवूढा तेण कूलवालओ नामं कयं । इओ य सेणियपुत्तो कोणियराया चेडयरायाहिट्ठियं हल्लविहल्लवेरेण वेसालिं नगरिं रोहेइ । न य सा तीरए घेत्तुं मुणिसुव्वयसामिथूभप्पभावाओ, तओ विमन्नो कोणिओ । चिरकालेणं देवयाए आगासे भणितं—"समणे जइ कूलवालए, मागहियं गणियं गमिस्सए । राया य असोगचन्दए, वेसालिं नगरिं गहिस्सए ॥१॥" सो मग्गिज्जइ । तत्थ अच्छंतो [3]आगमिओ । गणियाओ सद्दाविआओ । एगा भणति—अहं आणेमि । कवडसाविया जाया, सत्थेण गया वंदइ, भणइ य—'[3]उद्दाणे भोईयम्मि चेइयाइं वंदामि, तुम्हे य सुया एत्थ अओ वंदणत्थमागया, ता करेसु अणुग्गहं, गेण्हसु फासुएसणिज्जं भत्तं' ति भणिऊण पारणगे मोयगा संजोइया दिन्ना । अईसारो जाओ । ओसहप्पओगेणं पन्नविओ । उव्वत्तणाईहिं संभिन्नं चित्तं । आणिओ कोणिय-

1 "श्रमणो यदि कूलवालको मागधिकां गमिष्यति । राजा चाशोकचन्द्रो वैशालीं नगरीं ग्रहीष्यति ॥ १ ॥" २ ज्ञात. । ३ मृते । ४ भर्तरि ।

समीवं। भणिओ—तहा करेहि जहा **वेसाली** घिप्पइ। ततो तेण अब्भंतरं गंतूण नेमित्तियवेसो कओ। मुणिओ मुणिसुव्वयथूभप्पभावो। एसो लोगेण पुच्छिओ—कहिं नगररोहो अवगच्छिस्सइ ?। तेण भणियं—जइ एयं थूभं अवणेह। अवणीयं। भग्गा नयरी हलेहिं वाहिय त्ति ॥ ३ ॥ साम्प्रतं दृष्टान्तपूर्वकमविनीतस्यैव सदोपतामाह—

**जहा सुणी पूइकण्णी, निक्कसिज्जइ सव्वसो। एवं दुस्सीलपडिणीए, मुहरी निक्कसिज्जति ॥ ४ ॥**

**व्याख्या**—'यथा' यद्वत् शुनी स्त्रीनिर्देशोऽत्यन्तकुत्सोपदर्शकः, पूती—परिपाकतः कुथितगन्धौ कृमिकुलाकुलत्वाद्युपलक्षणमेतत् कर्णौ—श्रुती यस्याः सा पूतिकर्णी 'निष्कास्यते' निर्वास्यते 'सर्वतः' सर्वेभ्यो गृहाङ्गणादिभ्यः लेष्टुलकुटादिभिः, प्राकृतत्वाच्च 'सव्वसो' त्ति शसुप्रत्ययः, उपनयमाह—'एवम्' अमुना प्रकारेण दुष्टं—रागाद्युपहतं शीलं—स्वभावो यस्य स दुःशीलः प्रत्यनीकः प्राग्वद् अनयोर्विशेषणसमासः, 'मुखरः' बहुविधाऽसम्बद्धभाषी 'निष्कास्यते' सर्वतः कुलगणसङ्घादेरिति सूत्रार्थः ॥४॥ आह—अनर्थहेतौ दौःशील्ये किमित्यसौ रमते ? उच्यते—पापोपहतमतित्वात्तत्रैवास्य रतिः, एतदेव दृष्टान्तपूर्वकमाह—

**कणकुंडगं चइत्ता णं, विट्ठं भुंजइ सूयरो। एवं सीलं चइत्ता णं, दुस्सीले रमई मिए ॥ ५ ॥**

**व्याख्या**—कणाः—तण्डुलास्तेषां तन्मिश्रो वा कुण्डकः—कुक्कुसः कणकुण्डकस्तं त्यक्त्वा 'विष्ठां' पुरीषं 'भुङ्क्ते' अभ्यवहरति 'सूकरः' गर्त्तासूकरो यथेति गम्यते, एवं 'शीलं' प्रस्तावाच्छोभनं त्यक्त्वा दुष्टं शीलं दुःशीलं तत्र 'रमते' धृतिमाधत्ते मृग इव 'मृगः' अज्ञत्वादविनीत इति योगः। इदमत्र हृदयम्—यथा मृगो मरणापायमपश्यन् अज्ञतया गौरीगानाकृष्टो व्याधमनुसरति तथैषोऽपि दुःखाकीर्णभवभ्रमणमनवगच्छन् निर्विवेकतया विट्स्थानीये दुःशीले रमत इति सूत्रार्थः ॥५॥ उक्तोपसंहारपूर्वं कृत्योपदेशमाह—

**सुणियाऽभावं साणस्स, सूयरस्स नरस्स य। विणए ठविज्ज अप्पाणं, इच्छंतो हियमप्पणो ॥ ६ ॥**

**व्याख्या**—'श्रुत्वा' आकर्ण्य 'अभावं' कुत्सार्थत्वान्नञः अशोभनं भावं सर्वतो निःकासनलक्षणं "साणस्स" त्ति प्राकृत-

स्थापयेदात्मानम् आत्मनैवेति गम्यते, दान् शुन्याः 'सूकरस्य च' दृष्टान्तस्य 'नरस्य च' दार्ष्टान्तिकस्य 'विनये' वक्ष्यमाणस्वरूपे
इच्छन् 'हितम्' ऐहिकमाऽऽमुष्मिकमात्मनः, विनयादेव हि तत्सम्भवात्। आह च—"विणया णाणं णाणाओ दंसणं दंस-
णाओ चरणं च। चरणाहिंतो मोक्खो, मोक्खे सोक्खं निराबाहं ॥१॥" इति सूत्रार्थः ॥६॥ यतश्चैवमतः किम्? इत्याह—

**तम्हा विणयमेसिज्जा, सीलं पडिलभेज्जओ। बुद्धपुत्ते नियागट्ठी, ण णिक्कसिज्जइ कण्हुइ ॥ ७ ॥**

व्याख्या—तस्माद् विनयम् 'एषयेत्' अनेकार्थत्वेन धातूनां कुर्यात्। किं पुनर्विनयस्य फलं येनैवमुपदिश्यते? इत्याह—'शीलम्' उक्तस्वरूपं 'प्रतिलभेत' प्राप्नुयात् 'यतः' विनयात्, अनेन विनयस्य शीलावाप्तिः फलमुक्तम्। अस्याऽपि किम्? इत्याह—बुद्धानाम्—आचार्यादीनां पुत्र इव पुत्रो बुद्धपुत्रः, "पुत्ता य सीसा य समं विभत्ता" इतिवचनात्, स्वरूप-विशेषणमेतत्, 'नियागार्थी' मोक्षार्थी सन् 'न निष्कास्यते' न बहिःक्रियते 'कुतश्चिद्' गच्छगणादेः, किन्तु विनीतत्वेन सर्वगुणाधारतया सर्वत्र मुख्यः क्रियत इति भाव इति सूत्रार्थः ॥ ७ ॥ कथं पुनर्विनय एषयितव्यः? इत्याह—

**णिसंते सिया अमुहरी, बुद्धाणं अंतिए सया। अत्थजुत्ताणि सिक्खिज्जा, णिरट्ठाणि उ वज्जए ॥८॥**

व्याख्या—'निशान्तः' नितरामुपशमवान् अन्तः क्रोधपरिहारेण बहिश्च प्रशान्ताकारतया 'स्यात्' भवेद् अमुखरः मन् 'बुद्धानाम्' आचार्यादीनाम्। 'अन्तिके' समीपे 'सदा' सर्वकालम्, किम्? इत्याह—'अर्थयुक्तानि' हेयोपादेयार्थाभिधा-यकानि अर्वागागमवचांसि 'शिक्षेत' अभ्यस्येत् 'निरर्थकानि' उक्तविपरीतानि पुनर्वैशेषिक-वात्स्यायनादीनि स्त्रीकथादीनि वा 'तुः' पुनरर्थे 'वर्जयेत्' परिहरेत्। आह च—"सिंगाररसुत्तुइया[3], मोहमई फुंफुमा हसहसेइ। जं सुणमाणस्स कहं, समणेण न सा कहेयव्वा ॥ १ ॥" इति सूत्रार्थः ॥ ८ ॥ कथं पुनरर्थयुक्तानि शिक्षेत? इत्याह—

---

१ "विनयाज्ज्ञानं ज्ञानाद्दर्शनं दर्शनाच्चरणं च। चरणान्मोक्षो मोक्षे सौख्यं निराबाधम् ॥१॥" २ "पुत्राश्च शिष्याश्च समं विभक्ताः"।
३ "शृङ्गाररसोत्तेजिता मोहमयी करीषाग्निः एमहसायति। यां शृण्वतः कथां श्रमणेन न सा कथयितव्या ॥ १ ॥"

**अणुसासिओ न कुप्पेज्जा, खंतिं सेवेज्ज पंडिए । खुद्देहिं सह संसग्गिं, हासं कीडं च वज्जए ॥ ९ ॥**

व्याख्या—'अनुशिष्टः' कथञ्चित् परुषोक्त्याऽपि शिक्षितः 'न कुप्येत्' न कोपं गच्छेत्, किं तर्हि कुर्यात्? 'क्षान्ति'
परुषभाषणादिसहनात्मिकां 'सेवेत' भजेत, यतः—''धन्यस्योपरि निपतत्यहितसमाचरणधर्मनिर्वापी । गुरुवदनमल-
यनिःसृतो, वचनरसश्चन्दनस्पर्शः ॥ १ ॥'' 'पण्डितः' बुद्धिमान् । तथा 'क्षुद्रैः' शीलहीनैः पार्श्वस्थादिभिः 'सह' समं
''संसग्गिं'' ति प्राकृतत्वात् संसर्गं 'हासं' हसनं 'क्रीडां च' अन्त्याक्षरिका-प्रहेलिकादानादिरूपां वर्जयेत्, लोकागम-
विरुद्धत्वाद् गुरुकर्मबन्धहेतुत्वाच्चैषामिति सूत्रार्थः ॥ ९ ॥ पुनरप्यन्यथा विनयमाह—

**मा य चंडालियं कासी, बहुयं मा य आलवे । कालेण य अहिज्जित्ता, तओ झाएज्ज एक्कओ ॥१०॥**

व्याख्या—'मा' निषेधे, 'चः' समुच्चये, चण्डः–क्रोधस्तद्वशाद् अलीकम्–अनृतभाषणं चण्डालीकं, लोभाद्यलीकोप-
लक्षणमेतत्, 'मा कार्षीः' मा विधासीः, आह च—''मुसावाओ य लोगम्मि, सव्वसाहूहिं गरहिओ । अविस्सासो य भूयाणं,
तम्हा मोसं विवज्जए ॥१॥'' बह्वेव 'बहुकम्' अपरिमितमालजालरूपं मा च 'आलपेत्' भाषेत । उक्तं च—''महुरं निउणं थोवं,
कज्जावडियं अगव्वियमतुच्छं । पुव्विं मइसंकलियं, भणंति जं धम्मसंजुत्तं ॥१॥'' बह्वालपनादध्ययनादिक्षतिर्वातक्षोभादिसम्भ-
वादिति । किं पुनः कुर्यात्? इत्याह—'कालेन' प्रथमपौरुष्यादिलक्षणेन 'चः' पुनरर्थे 'अधीत्य' पठित्वा पृच्छाद्युपलक्षण-
मेतत्, 'ततः' अध्ययनादनन्तरमिति गम्यते 'ध्यायेत्' चिन्तयेत् 'एककः' भावतो रागादिरहितो द्रव्यतो विविक्तशयनास-
नादिसंस्थ इति सूत्रार्थः ॥१०॥ इत्थमकृत्यनिषेधः कृत्यविधिश्चोपदिष्टः । कदाचिदेतद्विपर्ययसम्भवे किं करणीयम्? इत्याह—

**आहच्च चंडालियं कट्टु, न निण्हविज्ज कयाइ वि । कडं कडेत्ति भासिज्जा, अकडं नो कडित्ति य ॥ ११ ॥**

---

१ ''मृषावादश्च लोके सर्वसाधुभिर्गर्हितः । अविश्वासश्च भूतानां तस्मान्मृषां विवर्जयेत् ॥ १ ॥'' २ ''मधुरं निपुणं कार्यापतितम-
गर्वितमतुच्छम् । पूर्वं मतिसंकलितं भणन्ति यद् धर्मसंयुक्तम् ॥ १ ॥''

व्याख्या—''आह च'' कदाचित् 'चण्डालीकम्' उक्तस्वरूपं 'कृत्वा' विधाय 'न निह्नुवीत' न कृतमिति नाऽपलपेत् 'कदाचिदपि' यदाऽपि परैर्नोपलक्षितस्तदापीत्यर्थः, तर्हि किं कुर्यात्? इत्याह—'कृतं' विहितं चण्डालीकादि 'कृतमि'ति कृतमेव 'भाषेत' ब्रूयाद् न भयलज्जादिभिरकृतमपि, तथा 'अकृतं' तदेव 'नो कृतमिति' अकृतमेव भाषेत, न तु मायोपरोधादिना कृतमपि, अन्यथा मृषावादादिदोषसम्भवात्। इदं चात्राऽऽकूतम्—कथञ्चिदतिचारसम्भवे लज्जाद्यकुर्वन् स्वयं गुरुसमीपमागम्य—''जहं वालो जपंतो, कज्जमकज्जं च उज्जुयं भणति। तं तह आलोएज्जा, मायामयविप्पमुक्को उ ॥ १ ॥'' इत्याद्यागममनुसरन् मनःशल्यं यथावदालोचयेदिति सूत्रार्थः ॥ ११ ॥ इहैवं पुनः पुनरुपदेशश्रवणाद् यदैव गुरूपदेशस्तदैव प्रवर्तितव्यं निवर्त्तितव्यं चेति स्यादाशङ्का तदपनोदायाऽऽह—

**मा गलियस्सेव कसं, वयणमिच्छे पुणो पुणो। कसं व दट्ठुमाइन्ने, पावगं परिवज्जए ॥ १२ ॥**

व्याख्या—'मा' निषेधे, 'गल्यश्व इव' अविनीततुरङ्गम इव 'कस' कसप्रहारं 'वचनं' प्रवृत्तिनिवृत्तिविषयमुपदेशं 'इच्छेत्' अभिलषेत् 'पुनः पुनः' वारं वारं, किं पुनः कुर्यात्? इत्याह—'कसं' चर्मयष्टिं दृष्ट्वा 'आकीर्ण इव' विनीताश्व इव स्यात्, सम्बन्धात् प्रस्तावाच्छिष्यो गुरोराकारादि दृष्ट्वा 'पापकं' गम्यमानत्वादनुष्ठानं 'परिवर्जयेत्' सर्वप्रकारैः परिहरेत्, उपलक्षणत्वादितरच्चाऽनुतिष्ठेत्, किमुक्तं भवति?—यथाऽऽकीर्णोऽश्वः कसग्रहणादिनाऽऽरोहकाशयमुपलभ्य कसेनाऽशातित एव तदभिप्रायानुरूपं चेष्टते तथा सुशिष्योऽप्याकारादिभिराचार्याशयमवगम्य वचनेनाऽप्रेरित एव, मा भूदाचार्यस्य वचनायास इति सूत्रार्थः ॥ १२ ॥ गल्याकीर्णतुल्ययोः शिष्ययोर्दोषगुणावाह—

**अणासवा थूलवया कुसीला, मिउं पि चंडं पकरंति सीसा।**
**चित्ताणुया लहु दक्खोववेया, पसायए ते हु दुरासयं पि ॥ १३ ॥**

---

१ ''यथा वालो जल्पन् कार्यमकार्यं चर्जुकं भणति। तत्तथाऽऽलोचयेन्मायामदविप्रमुक्तस्तु ॥ १ ॥''

व्याख्या—'अनाश्रवाः' वचस्यस्थिताः 'स्थूलवचसः' असुनिरूपितभाषिणः 'कुशीलाः' दुःशीलाः 'मृदुमपि' अकोपनमपि 'चण्डं' कोपनं 'प्रकुर्वन्ति' प्रकर्षेण विदधति 'शिष्याः' विनेयाः, सम्भवति ह्येवंविधशिष्याऽनुशासनाय पुनःपुनर्वचनखेदमनुभवतो मृदोरपि गुरोः कोप इति । 'चित्तानुगाः' हृदयानुवर्त्तिनः 'लघु' शीघ्रं 'दाक्ष्योपेताः' अविलम्बितकारित्वयुक्ताः 'प्रसादयेयुः' सप्रसादं कुर्युः 'ते' शिष्याः 'हुः' पुनरर्थे 'दुराशयमपि' आशुकोपनमपि प्रक्रमाद्गुरुं, किं पुनरनुत्कटकषायमिति । अत्रोदाहरणं चण्डरुद्राचार्यशिष्यः, तत्र सम्प्रदायः—अवंतीजणवए उज्जेणीए नयरीए ण्हवणुज्जाणे साहुणो समोसरिया । तेसिं च आयरिओ चंडरुद्दाभिहाणो अईवरोसणो 'साहूणं ऊणाइरित्ताइदोसदुट्ठमणुट्ठाणं पासंतो अईवरोसमुवगच्छइ' त्ति तद्दंसणपरिहरणत्थं आयहियट्ठयाए एगंते सज्झायज्झाणं कुणंतो अच्छइ । एत्थंतरे उज्जेणिवत्थव्वओ अहिणववित्तविवाहो इब्भपुत्तो कयकुंकुमंगराओ पवरनेवत्थो नियवयंसयसमेओ एगो जुवाणो तेसिं साहूण पासमागओ । उवहासेण पणमिऊण भणियं तेण—कहेह मे धम्मं । ते य 'केलीकिलो एस' त्ति न किंपि जंपंति, सज्झायंता अच्छंति । तेण परिहासेण भणियं—देहि मे भयवं ! दिक्खं, णिव्विण्णोऽहं घरवासेणं, भारियाए वि अहं दोहग्गत्तणेण परिचत्तो, ता करेह पसायं, उत्तारेह संसाराओ । साहूहि वि 'एस उल्लंठो अम्हे पवंचेइ' त्ति काऊण "घृष्यतां कलिना कलिः" इति चंडरुद्दं उवइसंति—एत्थ अम्ह गुरू अच्छइ सो पव्वावेही, वयमणहिगारिणो दिक्खादाणस्स, ता गच्छह एयस्समीवे । परिहासेण चेव ते गया सूरिसमीवे । सो य सहावेण चेव फरुसो । तेण पणमिऊण भणियं—भयवं ! पव्वावेह ममं जेण सुहेण अच्छामि, भग्गो घरवावारेण परलोयं च साहेमि । तेण वि 'विप्पावगो' त्ति नाऊण संजायमाणकोवेण भणियं—छारमाणेहि । आणिओ एगेण । उवविट्ठो एस 'नमोक्कारं' ति भणिऊण । काउमारद्धो सूरी लोयं । वयंसया विसण्णा । 'मित्त ! नाससु' त्ति भणिओ तेहिं । सो वि भवियव्वयावसेण लहुकम्मयाए य 'कहं संपइ कयलोचो

निरवायाए अब्भुवगयपवज्जो गच्छामि गेहं ? ति जाओ भावसमणो । अविइं काऊण गया वयंसया । ते वि उवस्सयं गया । सेहेण भणियं—भयवं ! अन्नत्थ वगामो, उप्पव्वाविस्सति मम बंधुणो साहू य अणत्थं पाविस्संति, अप्पविइन्नया नेव गच्छामो, महंतं माहुवंदं नज्जइ वच्चमाणं । सूरिणा भणियं—पंथं पडिलेहेहि जेण रयणीए वगामो । सो वि पंथं पडिलेहिऊण आगओ । रयणीए निग्गया । 'पुरओ वच्चसु' त्ति भणिओ सेहो गच्छइ अग्गओ । चंडरुद्दो वि रयणीए अपेच्छंतो खाणुए पक्खलिओ वेयणावसेण 'हा दुट्ठसेह ! न सोहणो मग्गो पडिलेहिओ' त्ति रूसिएण मत्थए दंडएणं आहओ, सिरं फोडियं तहा वि सम्मं सहइ, चिंतइ य—अहो ! मे अहन्नया जेण एस सुहमच्छंतो नियसाहुमज्झे समणभावगं कओ त्ति, कहमेयं सम्ममक्खलियं नेमि ?, कहमेयस्स समाहिं उप्पाएमि ?—त्ति पयत्तेण गच्छंतस्स सुहभावगोवगयस्स केवलनाणमुप्पन्नं । पहाया रयणी । दिट्ठो रुहिरोरालियसिरो । तओ पच्चागयदढसंवेगो 'अहो ! एयस्स सेहस्स वि खंती, अहो ! मम चिरपव्वइयस्स वि पत्तगणिपयस्स वि उक्कडरोसय' त्ति एमाइभावणापरिगओ अप्पाणं निंदिउमारद्धो सूरी, उप्पण्णं च केवलं नाणं ॥ एवं सुशिष्यश्चण्डमपि मृदुं करोति गुरुमिति सूत्रार्थः ॥ १३ ॥

कथं पुनर्गुरुचित्तमनुगमनीयम् ? इत्याह—

**नाऽपुट्ठो वागरे किंचि, पुट्ठो वा नालियं वए । कोहं असच्चं कुव्वेज्जा, धारिज्जा पियमप्पियं ॥ १४ ॥**

व्याख्या—न 'अपृष्टः' कथमिदमित्याद्यजल्पितो गुरुणेति गम्यते 'व्यागृणीयात्' वदेत् तथाविधकारणं विना 'किञ्चित्' स्तोकमपि, पृष्टो वा न 'अलीकम्' अनृतं वदेत्, कारणान्तरेण गुरुभिरतिनिर्भर्त्सितोऽपि न तावत्कुध्येत्, कथञ्चिदुत्पन्नं वा क्रोधम् 'असत्यं' तदुत्थविकल्पविफलीकरणेन 'कुर्वीत' विदध्यात् तद्विपाकमालोचयन्, यथा—"क्रोधः परितापकरः, सर्वस्योद्वेगकारकः क्रोधः । वैरानुषङ्गजनकः, क्रोधः क्रोधः सुगतिहन्ता ॥ १ ॥" उदाहरणञ्चात्र—कस्सइ कुलपुत्तयस्स

भाया वेरिएण वावाइओ। सो जणणीए भन्नइ—पुत्त! पुत्तघायगं घायसु त्ति। तओ सो तेण नियपोरुसाओ जीवग्गाहं गिण्हिऊण जणणीसमीवमुवणीओ, भणिओ य—भाइघायग! कहिं आहणामि? त्ति। तेण वि खग्गमुग्गामियं दट्ठूण भयभीएण भणियं—जहिं सरणागया आहम्मंति। इमं च सोऊण तेण जणणीमुहमवलोइयं। तीए महासत्तत्तणमवलंवंतीए उप्पन्नकरुणाए भणियं—न पुत्त! सरणागया आहम्मंति। जओ—"सरणागयाण विस्संभियाण पणयाण वसणपत्ताणं। रोगियअजंगमाणं, सप्पुरिसा नेय पहरंति ॥ १ ॥" तेण भणियं—कहं रोसं सफलं करेमि?। तीए भन्नइ—न पुत्त! सवत्थ रोसो सफलो करेयव्वो। पच्छा सो तेण विसज्जिओ चलणेसु निवडिऊण खामेऊण य गओ ॥ एवं क्रोधमसत्यं कुर्यात्, तथा 'धारयेत्' स्वरूपेणाऽवधारयेत् 'प्रियं' प्रीत्युत्पादकं स्तुत्यादि 'अप्रियं' तद्विपरीतं निन्दादि, न तयो रागं द्वेषं च कुर्यादित्यर्थः। उक्तं च—"लाभाऽलाभे सुखे दुःखे, जीविते मरणे तथा। स्तुतौ निन्दाविधाने च, साधवः समचेतसः ॥ १ ॥" **उदाहरणं** चाऽत्र—असिवोवद्दवे नयरे आदन्नस्स सपुरजणवयस्स राइणो समीवं तिन्नि भूयवाइया आगया भणंति—अम्हे असिवं उवसमावेमो त्ति। राइणा भणियं—सुणेमो केणुवाएणं? ति। तत्थेगो भणइ—अत्थि मम मंतसिद्धमेगं भूयं अलंकियविभूसियं, तं सव्वजणमणहरं रूवं विउव्विऊण गोपुररत्थासु लीलायंतं परियडइ तं न निहालेयव्वं, तं निहालियं रूसइ, जो पुण तं निहालेइ सो विणस्सइ, जो पुण तं पेच्छिऊण अहोमुहो ठाइ सो रोगाओ मुच्चइ। राया भणइ—अलाहि मे एएण अइरूसणेण। वीओ भणइ—महच्चयं भूयं महइ महालयं रूवं विउव्वइ लंबोयरं चिप्पिटं विवृतकुच्छिं पंचसिरं एगपायं विसिहं बिभत्सरूवं अट्टट्टहासं मुयंतं गायंतं पणच्चमाणं, तं च विकृतरूपं परिभमंतं दट्ठूण जो पओसइ उवहसइ पवंचेइ वा तस्स सत्तहा सिरं फुट्टइ, जो पुण तं सुहाहिं वायाहिं

1 "शरणागतानां विश्रब्धानां प्रणतानां व्यसनप्राप्तानाम्। रोगिताजङ्गमानां सत्पुरुषा नैव प्रहरन्ति ॥ १ ॥"

अहिनंदइ धूवपुप्फाइएहिं पूएइ सो सव्वामयाणं मुच्चइ । राया भणइ—अलाहि एएणं पि । तइओ भणइ—ममावि एवं-विह चेव नाइवेसकर भूयमत्थि, प्रियाप्रियकारिणं दर्शनादेव रोगेहिंतो मोयइ । एवं होउ त्ति । तेण तहाकए असिवं उवसंतं । तुट्ठो राया । आणंदिया नायरया । पूइओ सो भूयवाई सव्वेहिं पि । एवं साहू वि मुंडियसिरमलमलिणवत्थत्त-णाईहिं परेहिं पडिणीएहिं परिभूयमाणो, एवं वंचिज्जमाणो हसिज्जमाणो वा, भत्तिमंतेहि य थुव्वमाणो पूइज्जमाणो प्रियाप्रियं सहेत इति सूत्रार्थः ॥ १४ ॥ आह—क्रोधाद्यसत्यताकरणादिना किमात्मन एव दमनमुपदिश्यते न परस्यदमनीयस्य ? अत्रोच्यते—

**अप्पा चेव दमेयव्वो, अप्पा हु खलु दुद्दमो। अप्पा दंतो सुही होइ, अस्सिं लोए परत्थ य ॥१५॥**

व्याख्या—आत्मैव 'दान्तव्यः' इन्द्रियनोइन्द्रियदमनेन मनोज्ञेतरविषयेषु रागद्वेषवशत उन्मार्गगामी उपशमं नेतव्यः। उक्तं च—"इतश्चेतश्च धावन्तं, मनोमत्तमतङ्गजम् । ज्ञानाङ्कुशवशं कृत्वा, पुनः पन्थानमानयेत् ॥ १ ॥" किमित्येवमुपदिश्यते ? इत्याह—आत्मैव हुशब्दस्यैवकारार्थत्वात्, 'खल्वि'ति यस्मात् 'दुर्दमः' दुर्जयः, तद्दमने दमिता एव बाह्यदमनीया इति न तद्दमनमुपदिश्यत इति भावः, उक्तं च—"सव्वमप्पे जिए जियं"[1]। कः पुनरेवं गुणः ? इत्याह—आत्मा दान्तः सुखीभवति 'अस्मिंल्लोके' इह भवे 'परत्र च' परलोके । दान्तात्मानो हि परमर्षय इहैव सुरैरपि पूज्यन्ते मोक्षं च साधयन्ति । अदान्तात्मानस्तु चौरपारदारिका इहैव विनश्यन्ति । तथा—"सद्देण[2] मओ रूवेण पयंगो महुयरो य गंधेणं । आहारेण य मच्छो, वज्झइ फरिसेण य गइंदो ॥ १ ॥" परत्र च दुर्गतिपातादि प्राप्नुवन्ति । तत्र चोदाहरणम्—एगम्मि सन्निवेसे दो भायरो चोरा । तत्थ य सत्थेण वच्चंताणं साहूणं वासारत्तो पत्तो । 'न य कोइ अत्थि

---

१ "सर्वमात्मनि जिते जितम्"। २ "शब्देन मृगो रूपेण पतङ्गो मधुकरश्च गन्धेन । आहारेण च मत्स्यो बध्यते स्पर्शेन च गजेन्द्रः ॥१॥"

साहुभद्दगो' त्ति तेसिं चोरनायगाणं सयासमुवगया साहू । तद्दंसणेण आणंदिया ते, पणमिऊण य भणिया—मुणी ! भणह पओयणं । साहूहिं भणियं—अम्हं न कप्पइ वासारत्ते विहरिउं, अओ वासावासपाउग्गमुवस्सयं जाएमो । सहरिसं च दिन्नो तेहिं—चिट्ठह एत्थ वीसत्था । ठिया तत्थ साहू, भणिया य—अम्ह गेहेसु चेव पज्जत्तं गेण्हेयव्वं । मुणीहिं भणियं—न कप्पइ एगत्थ चेव पिण्डग्गहणं, ता विहरिस्सामो सव्वत्थोचियघरेसु, तुम्ह वसहिदाणेण चेव महापुण्णबंधो, जओ—"[1]जो देइ उवस्सयं जइवराण तवनियमजोगजुत्ताणं । तेणं दिन्ना वत्थऽन्नपाणसयणासणविगप्पा ॥२॥ तवसंजमसज्झाओ, नाणब्भासो जणोवयारो य । जो साहूणमुवग्गहकारी सेज्जायरो तस्स ॥ ३ ॥ पावइ सुरनररिद्धी, सुकुलुप्पत्ती य भोगसामिद्धी । नित्थरइ भवमगारी, सेज्जादाणेण साहूणं ॥ ४ ॥ इमं च सोऊण सुट्ठुयरं ते परितुट्ठा । तओ सकम्मरयाणं मुणीणोवद्दवं रक्खंताणं पज्जुवासणपराण य तेसिं साहूणं च तवसंजमरयाणमइक्कंतो वासारत्तो । गच्छंतेहिं अन्नवयगहणअसमत्थाणं तेसिं दिन्नं राइभोयणवयं । साहियं च जहा—[2]मालिंति महियलं जामिणीसु रयणीयरा समंतेण । ते विट्टालिंति फुडं, राईए भुंजमाणे उ ॥ ५ ॥ मेहं पिपीलियाओ, हणंति वमणं च मच्छिया कुणइ । जूया जलोयरत्तं, कोलियओ कोढरोगं च ॥ ६ ॥ वालो सरस्स भंगं, कंटो लग्गइ गलम्मि दारुं च ।

---

१ यो ददाति उपाश्रयं यतिवरेभ्यस्तपोनियमयोगयुक्तेभ्यः । तेन दत्ता वस्त्रान्नपानशयनासनविकल्पाः ॥ २ ॥ तप.संयमस्वाध्यायो ज्ञानाभ्यासो जनोपकारश्च । यः साधूनामुपग्रहकारी शय्यातरो तस्य ॥३॥ प्राप्नोति सुरनरर्द्धीः सुकुलोत्पत्तिं च भोगसमृद्धिम् । निस्तरति भवमगारी शय्यादानेन साधुभ्यः ॥ ४ ॥ २ "मालयन्ति महीतलं यामिनीषु रजनीचराः समन्तात् । ते विट्टालयन्ति स्फुट रात्रौ भुञ्जानांस्तु ॥ ५ ॥ मेधां पिपीलिका घ्नन्ति वमनञ्च मक्षिका करोति । यूका जलोदरत्वं लूता कुष्ठरोगञ्च ॥ ६ ॥ वालः स्वरस्य भङ्गं कण्डको लगति गले दारु च । तालौ विध्यति अलिः व्यञ्जनमध्ये भुज्यमान. ॥ ७ ॥" जीवाना कुन्थ्वादीनां घातनं पानभोजनादिषु । एवमादिरजनीभोजनदोषान् कः कथयितु शक्नोति ॥ ८ ॥

तालुम्मि विंधइ अली, वंजणमज्झम्मि भुंजंतो ॥७॥ जीवाण कुंथुमाईण घायगं पाणभोयणाईसु। एमाइरयणिभुंजणदोसे को साहिउं तरइ ॥८॥ इमम्मि वयम्मि दढपयत्तेहिं होयव्वं ति भणिऊण गया ते साहुणो। ते वि अणुवइऊण नियत्ता मुणि- सेनाए कयत्थगत्ताणं मन्नंता चिट्ठंति। अन्नया तेहिं धाडीए गएहिं बहुयं गोमहिसक्कमाणीयं। तत्थ तेसि मज्झे एगे अंतरा य पढ़े महिसं वावाइऊण पइउमारद्धा। अन्ने मज्झे गामस्स मज्जस्स गया। मंसइत्ता संपहारेंति—अद्धगे मंसे विसं पक्खिव- वामो, तो तं मज्जइत्ताण दाहामो। तओ अम्हं बहूयं गोमहिसकं भागेणमागमिस्सइ। भवियव्वयावसेण मज्जइत्तेहिं वि एवं चेव सामच्छियं। पक्खित्तं च विसं। आइच्चो य अत्थं गओ। ते भायरो न भुत्ता वयभंगो त्ति काउं, इयरे परोप्परविइन्नविससंजुत्तमज्जमंसेण उवभुत्तेण मया कुगइं च गया। इयरे इहपरलोए य सुहभागिणो जाया। एवं ताव जिब्भिंदियं दमेयव्वं। एवं सेसेसु वि इंदिएसु 'अप्पा दंतो सुही होइ इहपरत्थ य' इति सूत्रार्थः ॥ १५ ॥ किं पुनः परिभावयन्नात्मानं दमेत् ? इत्याह—

**वरं मे अप्पा दंतो, संजमेण तवेण य। माऽहं परेहिं दम्मन्तो, बंधणेहिं वहेहि य ॥ १६ ॥**

व्याख्या—वरं—प्रधानं मे—मया आत्मा—जीवस्तदाधाररूपो वा देहो दान्तो—दमं ग्राहितो असमञ्जसचेष्टातो व्यावर्तितः, केन हेतुना ? संयमेन—पञ्चाश्रवविरमणादिना तपसा च। चः—समुच्चये। विपर्यये दोषमाह—मा—निषेधे, अह- मित्यात्मनिर्देशः, परैः—आत्मव्यतिरिक्तैः 'दम्मंतो' त्ति आर्षत्वाद् दमितः—खेदितः, कैः ? बन्धनैः—वध्रादिविरचितैर्मयूर- बन्धादिभिः वधैः—लत्तालकुटादिताडनैः ॥ अत्रोदाहरणं सेयणओ हत्थी—एगाए अडवीए हत्थिजूहं महल्लं परिवसइ। तत्थ जूहवई जाए जाए गयकलहए विणासेइ। तत्थेगा करिणी आवन्नसत्ता चिंतेइ—जइ कहवि गयकलहओ जायइ मे तोमएण विणासिज्जिहि त्ति काउं लंवंती ओसरइ। जूहाहिवेण जूहं छुब्भइ, पुणो ओसरइ, ताहे वीयतइयदिवसे जूहेण

साहुभद्दगो' त्ति तेसिं चोरनायगाणं सयासमुवगया साहू । तद्दंसणेण आणंदिया ते, पणमिऊण य भणिया—मुणी! भणह पओयणं । साहूहिं भणियं—अम्हं न कप्पइ वासारत्ते विहरिउं, अओ वासावासपाउग्गमुवस्सयं जाएमो । सहरिसं च दिन्नो तेहिं—चिट्ठह एत्थ वीसत्था। ठिया तत्थ साहू, भणिया य—अम्ह गेहेसु चेव पज्जत्तं गेण्हेयव्वं । मुणीहिं भणियं—न कप्पइ एगत्थ चेव पिण्डग्गहणं, ता विहरिस्सामो सव्वत्थोचियघरेसु, तुम्ह वसहिदाणेण चेव महापुण्णबंधो, जओ—"[1]जो देइ उवस्सयं जइवराण तवनियमजोगजुत्ताणं । तेणं दिन्ना वत्थऽन्नपाणसयणासणविगप्पा ॥२॥ तवसंजमसज्झाओ, नाणब्भासो जणोवयारो य । जो साहूणमुवग्गहकारी सेज्जायरो तस्स ॥ ३ ॥ पावइ सुरनररिद्धी, सुकुलुप्पत्ती य भोगसामिद्धी । नित्थरइ भवमगारी, सेज्जादाणेण साहूणं ॥ ४ ॥ इमं च सोऊण सुट्ठुयरं ते परितुट्ठा । तओ सकम्मरयाणं मुणीणोवद्दवं रक्खंताणं पज्जुवासणपराण य तेसिं साहूणं च तवसंजमरयाणमइक्कंतो वासारत्तो । गच्छंतेहिं अन्नवयगहणअसमत्थाणं तेसिं दिन्नं राइभोयणवयं । साहियं च जहा—[2]मालिंति महियलं जामिणीसु रयणीयरा समंतेण । ते विट्टालिंति फुडं, राईए भुंजमाणे उ ॥ ५ ॥ मेहं पिपीलियाओ, हणंति वमणं च मच्छिया कुणइ । जूया जलोयरत्तं, कोलियओ कोढरोगं च ॥ ६ ॥ वालो सरस्स भंगं, कंटो लग्गइ गलम्मि दारुं च ।

[1] यो ददाति उपाश्रय यतिवरेभ्यस्तपोनियमयोगयुक्तेभ्य. । तेन दत्ता वस्त्रान्नपानशयनासनविकल्पा. ॥ २ ॥ तपःसयमस्वाध्यायो ज्ञानाभ्यासो जनोपकारश्च। यः साधूनामुपग्रहकारी शय्यातरो तस्य ॥३॥ प्राप्नोति सुरनरर्द्धी. सुकुलोत्पत्तिं च भोगसमृद्धिम्। निस्तरति भवमगारी शय्यादानेन साधुभ्य' ॥ ४ ॥ [2] "मालयन्ति महीतलं यामिनीपु रजनीचरा. समन्तात् । ते विट्टालयन्ति स्फुटं रात्रौ भुञ्जानांस्तु ॥ ५ ॥ मेधां पिपीलिका घ्नन्ति वमनञ्च मक्षिका करोति । यूका जलोदरत्वं लूता कुष्ठरोगञ्च ॥ ६ ॥ वालः स्वरस्य भङ्गं कण्डको लगति गले दारु च । तालौ विध्यति अलि. व्यञ्जनमध्ये भुज्यमानः ॥ ७ ॥" जीवाना कुन्थ्वादीनां घातनं पानभोजनादिपु । एवमादिरजनीभोजनदोपान् कः कथयितुं शक्नोति ॥ ८ ॥

गल्लम्मि विंधइ अली, वंजणमज्झम्मि भुंजंतो ॥७॥ जीवाण कुंथुमाईण घायणं पाणभोयणाईसु। एमाइरयणिभुंजणदोसे को साहिउं तरइ ॥८॥ इमम्मि वयम्मि दढपयत्तेहिं होयव्वं ति भणिऊण गया ते साहुणो। ते वि अणुव्वइऊण नियत्ता मुणिसेवाए कयत्थमप्पाणं मन्नंता चिट्ठंति। अन्नया तेहिं धाडीए गएहिं वहुयं गोमहिसक्कमाणीयं। तत्थ तेसि मज्झे एगे अंतरा य पहे महिसं वावाइऊण पइउमारद्धा। अन्ने मज्झे गामस्स मज्जस्स गया। मंसइत्ता संपहारेंति—अद्धगे मंसे विस पक्खिवामो, तो तं मज्जइत्ताण दाहामो। तओ अम्हं वहूयं गोमहिसक्कं भागेणमागमिस्सइ। भवियव्वयावसेण मज्जइत्तेहिं वि एवं चेव सामच्छियं। पक्खित्तं च विसं। आइओ य अत्थं गओ। ते भायरो न भुत्ता वयभंगो त्ति काउं, इयरे परोप्परविइन्नविससंजुत्तमज्जमंसेण उवभुत्तेण मया कुगइं च गया। इयरे इहपरलोए य सुहभागिणो जाया। एवं ताव जिब्भिंदियं दमेयव्वं। एवं सेसेसु वि इंदिएसु 'अप्पा दंतो सुही होइ इहपरत्थ य' इति सूत्रार्थः ॥ १५ ॥ किं पुनः परिभावयन्नात्मानं दमेत्? इत्याह—

**वरं मे अप्पा दंतो, संजमेण तवेण य। माऽहं परेहिं दम्मन्तो, बंधणेहिं वहेहि य ॥ १६ ॥**

व्याख्या—वरं–प्रधानं मे–मया आत्मा–जीवस्तदाधाररूपो वा देहो दान्तो–दमं ग्राहितो असमञ्जसचेष्टातो व्यावर्तितः, केन हेतुना? संयमेन–पञ्चाश्रवविरमणादिना तपसा च। चः–समुच्चये। विपर्यये दोषमाह–मा–निषेधे, अहमित्यात्मनिर्देशः, परैः–आत्मव्यतिरिक्तैः 'दम्मंतो' त्ति आर्षत्वाद् दमितः–खेदितः, कैः? बन्धनैः–वध्रादिविरचितैर्मयूरबन्धादिभिः वधैः–लत्तालकुटादिताडनैः ॥ अत्रोदाहरणं सेयणओ हत्थी—एगाए अडवीए हत्थिजूहं महल्लं परिवसइ। तत्थ जूहवई जाए जाए गयकलहए विणासेइ। तत्थेगा करिणी आवन्नसत्ता चिंतेइ—जइ कहवि गयकलहओ जायइ मे तो एस जियइ त्ति काउं लंगंती ओसरइ। जूहाहिवेण जूहं छुब्भइ, पुणो ओसरइ, ताहे बीयतइयदिवसे जूहेण

मिलइ। ताए एगं रिसिआसमपयं दिट्ठं, सा तत्थ लीणा, संवणिया य अणाए रिसओ। सा पसूया गयकलहयं। सो तेहिं रिसिकुमारेहिं सहिओ आरामे सिंचइ, **सेयणउ** त्ति से णामं कयं। वयत्थो सो जाओ, जूहं दट्ठूण जूहवइं हंतूण जूहवई जाओ। गंतूण य तेण सो आसमो विणासिओ, मा अन्नावि काबि एवं काहि त्ति। ताहे ते रिसओ रुसिआ पुप्फफलगहियहत्था **सेणियस्स** रण्णो पासं उवगया, कहियं च णेहिं—एरिसओ सव्वलक्खणसंपन्नो गंधहत्थी **सेयणओ** नाम वणे चिट्ठइ। गंतूण गहिओ **सेणिएण**। आणिऊण बद्धो खंभे। ते य तावसा आगंतूण उप्पासिंति—किह ते सोंडीरया? पत्तं च तए अविणयस्स फलं। सो तं सोऊणं आसुरुत्तो धाविओ खंभं भंजिऊण ताण पिट्ठओ। ते हयविहए य करेंतो पत्तो अरन्नं, भग्गा पुणो तयासमा। पुणो **सेणिओ** हत्थिगहणाय गओ। सो य हत्थी देवयापरिग्गहितो ताहे(ए) ओहिणा आभोइयं—जहा अवस्सं घेप्पइ, ताहे ताए सो भन्नइ—पुत्त! वरं ते अप्पा दंतो न य सि परेहिं दम्मंतो वंधणेहिं वहेहि य। सो एवं भणिओ सयमेव रत्तीए गंतूण आलाणखंभमस्सिओ। यथाऽस्य स्वयं दमनाद् महागुणस्तथा मुक्त्यर्थिनोऽपि विशिष्टनिर्जरातः, इतरथा त्वकामनिर्जरणान्न तथेति सूत्रार्थः ॥ १६ ॥ विनयान्तरमाह—

**पडिणीयं च वुद्धाणं, वाया अदु व कम्मुणा। आवी वा जइ वा रहस्से, नेव कुज्जा कयाइ वि ॥ १७॥**

**व्याख्या**—प्रत्यनीकं—प्रतिकूलं, चः—पूरणे, चेष्टितमिति गम्यते। वुद्धानां—आचार्याणां वाचा—किं त्वमपि किञ्चिद् जानीषे? इत्येवंरूपया, विपरीतप्ररूपणायां प्रेरितस्त्वयैवैतदित्थमस्माकं प्ररूपितमित्याद्यात्मिकया वा गिरा, अथवा कर्मणा—संस्तारकातिक्रमणकरचरणसंस्पर्शादिना, आविः—जनसमक्षं, यदि वा रहस्ये—विविक्तोपाश्रयादौ, नेति—निषेधे, एव—अवधारणे, स च—"शत्रोरपि गुणा ग्राह्या दोषा वाच्या गुरोरपि।" इति कुमतनिराकरणार्थः। कुर्यात्—विदध्यात् कदाचित्—परुषभाषणादावपीति सूत्रार्थः ॥ १७ ॥ विनयमेवाह—

**न पक्खओ न पुरओ, नेव किचाण पिट्ठओ । न जुंजे ऊरुणा ऊरुं, सयणे ण पडिस्सुणे ॥ १८ ॥**

व्याख्या—न पक्षतो–दक्षिणादिपक्षमाश्रित्य, उपविशेदिति शेषः, तथोपवेशने तत्पङ्क्तिसमावेशतस्तत्साम्याधानेनाऽविनयाभावाद् गुरोरपि वक्रावलोकने स्कन्धकन्धरादिवाधासंभवात् । न पुरतो–अग्रतः, तत्र वन्दकजनस्य गुरुवदनाऽनवलोकादिना अप्रीतिभावात् । नैव कृत्यानां–कृतिकर्मार्हाणां गुरूणां पृष्ठतः–पृष्ठमाश्रित्य, द्वयोरपि मुखाऽदर्शने तथाविधरसवत्ताभावात् । न युञ्ज्याद्–न संघट्टयेदत्यासन्नोपवेशनादिभिरूरुणा–आत्मीयेन उरुं–गुरुसम्बन्धिनं, तथाकरणे कृत्याविनयसद्भावात् । उपलक्षणं चैतत् शेषाङ्गस्पर्शपरिहारस्य । शयने–शय्यायां शयित आसीनो वेति शेषः, किम् ? इत्याह—न प्रतिशृणुयात् । किमुक्तं भवति ?—शय्यागतो गुरुणाऽऽकारित उक्तो वा कृत्यं प्रति न तथास्थित एवाऽवज्ञया कुर्म एवमित्यादिवचनतः प्रतिजानीयात्, किन्तु गुरुवचनसमनन्तरमेव संभ्रान्तचेता विनयविरचिताञ्जलिः समीपमागम्य पादपतनपुरस्सरमनुगृहीतोऽहमिति मन्यमानो भगवन् ! इच्छामोऽनुशिष्टिमिति वदेदिति सूत्रार्थः ॥ १८ ॥ तथा—

**नेव पल्हत्थियं कुज्जा, पक्खपिंडं व संजए । पाए पसारए वा वि, ण चिट्ठे गुरुणंतिए ॥ १९ ॥**

व्याख्या—नैव पर्यस्तिकां–जानुजङ्घोपरि वस्त्रवेष्टनरूपां कुर्यात्, पक्षपिण्डं वा–बाहुद्वयकायपिण्डनात्मकं संयतः–साधुः, तथा पादौ प्रसारयेद् वापि नैव । वा–समुच्चये । अपि–किं पुनरित इतो विक्षिपेदिति दर्शनार्थः । अन्यच्च न तिष्ठेत्–नाऽऽसीत गुरूणामन्तिके–प्रक्रमादतिसन्निधौ, किन्तूचितदेश एव, अन्यथाऽविनयदोषसंभवात् । उपलक्षणं चैतदुपष्टम्भादीनामिति सूत्रार्थः ॥ १९ ॥ तथा—

**आयरिएहिं वाहिंतो, तुसिणीओ ण कयाइ वि । पसायपेही णियागट्ठी, उवचिट्ठे गुरुं सया ॥ २० ॥**

व्याख्या—आचार्यैः-गुरुभिः 'वाहिंतो' त्ति व्याहृतः-शब्दितस्तुष्णीकः-तुष्णींशीलो न कदाचिदपि-ग्लानाद्यवस्थायामपि भवेदिति गम्यते। किञ्च—"[1]धन्नाण चेव गुरुणो, आदेसं देंति गुणमहोयहिणो। चंदणरसो अउन्नाण निवडए नेय अंगम्मि ॥ १ ॥" इति चिन्तयन् प्रसादप्रेक्षी-प्रसादोऽयं यदन्यसद्भावेऽपि मामादिशन्ति गुरव इति प्रसादाकाङ्क्षी, नियोगार्थी-मोक्षार्थी उपतिष्ठेत्-मस्तकेन वन्द इति वदन् सविनयमुपसर्पेद् गुरुं सदा-सर्वदेति सूत्रार्थः ॥ २० ॥

**आलवंते लवंते वा, ण निसिज्जा कयाइ वि। चइऊण आसणं धीरो, जओ जत्तं पडिस्सुणे ॥ २१ ॥**

व्याख्या—आलपति-सकृद् वदति, लपति वा-वारंवारं गुराविति गम्यते, न निषीदेत्-न निषण्णो भवेत् कदाचिदपि-व्याख्यानादिना व्याकुलतायामपि, किन्तु त्यक्त्वा-अपहाय आसनं-पादपुञ्छनादि धीरो-बुद्धिमान् यतः-यत्नवान् 'जत्तं' ति प्राकृतत्वाद् विन्दुलोपे तकारस्य च द्वित्वे यद् गुरव आदिशन्ति तत् प्रतिशृणुयात्-अवश्यंविधेयतयाऽभ्युपगच्छेदिति सूत्रार्थः ॥ २१ ॥

**आसणगओ न पुच्छेज्जा, नेव सेज्जागओ कयाइ वि। आगम्मुक्कुडुओ संतो, पुच्छिज्जा पंजलिउडो २२**

व्याख्या—आसनगतः-आसनाऽऽसीनो न पृच्छेत् सूत्रादिकमिति गम्यते। नैव शय्यागतः-संस्तारकस्थितः, तथाविधाऽवस्थां विनेत्युपस्कारः, कदाचिदपि-बहुश्रुतत्वेऽपि। किमुक्तं भवति ?-बहुश्रुतेनाऽपि संशये सति प्रष्टव्यम्, पृच्छताऽपि च नाऽवज्ञया, सदा गुरुविनयस्याऽनतिक्रमणीयत्वात्। तथा चागमः-[2]जहाहिअग्गी जलणं नमंसे, नाणाहुईमंत-

---

१ धन्येभ्यश्चैव गुरव आदेशं ददति गुणमहोदधयः। चंदनरसोऽपुण्यानां निपतति नैवाऽङ्गे ॥ १ ॥

२ यथाऽऽहिताग्निर्ज्वलनं नमस्यति नानाहुतिमन्त्रपदाभिषिक्तम्। एवमाचार्यमुपतिष्ठेतानन्तज्ञानोपगतोऽपि सन् ॥ १ ॥

पयामिन्तिं । एवायरियं उवचिट्ठएज्जा, अणंतनाणोवगओऽवि संतो ॥ १ ॥ किं तर्हि कुर्यात् ? इत्याह—आगम्य-
गुरुन्निकमेलोत्कुटुकः-मुक्ताऽऽसनः, कारणतः पादपुञ्छनादिगतः सन् पृच्छेत्, सूत्रादिकमिति गम्यते । प्राञ्जलिपुटः-
प्रकृष्टाञ्जलिपुट इति सूत्रार्थः ॥ २२ ॥ ईदृशस्य शिष्यस्य गुरुणा यत् कृत्यं तदाह—

**एवं विणयजुत्तस्स, सुत्तं अत्थं च तदुभयं । पुच्छमाणस्स सीसस्स, वागरेज्ज जहासुयं ॥ २३ ॥**

व्याख्या—एवं-इत्युक्तप्रकारेण विनययुक्तस्य-विनयान्वितस्य सूत्रं-कालिकोत्कालिकादि अर्थञ्च-तस्यैवाऽभिधेयं तदुभयं-सूत्राऽर्थोभयं पृच्छतो-ज्ञातुमिच्छतः शिष्यस्य-स्वयं दीक्षितस्योपसंपन्नस्य वा व्यागृणीयात्-व्याकुर्याद् यथा-नेन प्रकारेण श्रुतं-आकर्णितं गुरुभ्यः सकाशादिति गम्यते, न तु स्वबुद्ध्यैवोत्प्रेक्षितमित्यभिप्रायः । अनेन च—आयारे सुय विणए, विक्खिवणे चेव होइ बोधव्वे । दोसस्स य णिग्घाए विणए चउहेस पडिवत्ती ॥ १ ॥ इति चतुर्विधाचार्य-विनयान्तर्गतस्य "सुत्तं अत्थं च तहा हियकर नीसेसयं च वाएइ । एसो चउविहो खलु सुयविणओ होइ बोद्धव्वो ॥ २ ॥ मुत्तं गाहेइ उज्जुत्तो अत्थं च सुणावए पयत्तेणं । जं जस्स होइ जोग्गं परिणामगमाइ तं तु सुयं ॥ ३ ॥ निस्सेसम-परिसेसं जाव समत्तं तु ताव वाएइ । एसो सुयविणओ खलु, निद्दिट्ठो पुव्वसूरीहिं ॥ ४ ॥" इत्यागमाऽभिहितस्य श्रुत-विनयस्याऽभिधानं कृतमिति सूत्रार्थः ॥ २३ ॥ पुनः शिष्यस्य वाग्विनयमाह—

---

१ आचारे श्रुते विनय विक्षेपणे चैव भवति बोद्धव्य. । दोषस्य च निर्घाते विनये चतुर्धैषा प्रतिपत्तिः ॥ १ ॥
२ सूत्रमर्थं च तथा हितकर निःशेषं च वाचयति । एष चतुर्विध. खलु, श्रुतविनयो भवति बोद्धव्य. ॥ २ ॥
३ सूत्रं ग्राहयत्युद्युक्तोऽर्थं च श्रावयति प्रयत्नेन । यद् यस्य भवति योग्यं परिणामकादि तत्तु श्रुतम् ॥ ३ ॥
४ निःशेषमपरिशेषं यावत्समाप्तं तु तावद्वाचयति । एष श्रुतविनयः खलु निर्दिष्ट. पूर्वसूरिभिः ॥ ४ ॥

**मुसं परिहरे भिक्खू, न य ओहारिणिं वदे । भासादोसं परिहरे, मायं च वज्जए सया ॥ २४ ॥**

व्याख्या—मृषेति—असत्यं भूतनिह्नवादि परिहरेत्—"धर्महानिरविश्वासो, देहार्थव्यसनं तथा। असत्यभाषिणां निन्दा, दुर्गतिश्चोपजायते ॥ १ ॥" इति विभाव्य सर्वप्रकारमपि त्यजेद् भिक्षुः न च—नैवाऽवधारिणीं—गम्यमानत्वाद्वाचं गमिष्याम एवेत्येवमाद्यवधारणात्मिकां वदेत्—भाषेत, यतः—[1]अन्नह परिचिंतिज्जइ, कज्जं परिणमइ अन्नहा चेव । विहिवसयाण जियाणं मुहुत्तमेत्तं पि बहुविग्घं ॥ २ ॥ किं बहुना ? भाषादोषं असत्यभाषणादिकं सावद्याऽनुमोदनादिकं च परिहरेत् । मायां चशब्दात् क्रोधादींश्च मृषाहेतून् वर्जयेत् सदा—सर्वकालम् । दृश्यते हि वणिगादीनां मायादिभ्यः क्रयिकागमनादौ 'युष्माकमस्माकं चाऽन्वयेन स्वाजन्यमतो यथा गृहीतमेव गृह्णातु, भवतु, अलं मे त्वदीयलाभकेन, अन्यः कोऽपि मां रूपकमेकं विढपयिष्यति' इत्याद्यलीकभाषणमिति सूत्रार्थः ॥ २४ ॥ किञ्च—

**न लवेज्ज पुट्ठो सावज्जं, ण निरट्ठं न मम्मयं । अप्पणट्ठा परट्ठा वा उभयस्संतरेण वा ॥ २५ ॥**

व्याख्या—न लपेत्—न वदेत् पृष्टः—केनाऽपि सावद्यं—सपापं, न निरर्थं—निःप्रयोजनं निरभिधेयं वा, यथा—एष वन्ध्यासुतो याति, खपुष्पकृतशेखरः । मृगतृष्णांभसि स्नातः, शशशृङ्गधनुर्धरः ॥ १ ॥ न—नैव मर्मगं—मर्मवाचकं वचनमिति शेषः, अतिसंक्लेशोत्पादकत्वादस्य । आह च—तहेव काणं काण त्ति, पंडगं पंडग त्ति वा । वाहियं वाऽवि रोगि त्ति, तेणं चोरे त्ति नो वए ॥ २ ॥ तथा—[2]मम्मं जम्मं कम्मं, तिन्नि वि एयाइं परिहरिज्जासि । मा मम्माइसु विद्धो, मारेज्ज परं

१ अन्यथा परिचिन्त्यते कार्यं परिणमत्यन्यथा चैव । विधिवशगानां जीवानां मुहूर्त्तमात्रमपि बहुविघ्नम् ॥ १ ॥
२ मर्म जन्म कर्म त्रीण्यप्येतानि परिहरेः । मा मर्मादिषु विद्धो मारयेत् परं म्रियेत वा ॥ २ ॥

मरिता या ॥ ३ ॥ आत्मार्थं—स्वप्रयोजनं, परार्थं वा—परप्रयोजनम्, उभयस्य—आत्मनः परस्य च प्रयोजन इति गम्यम्, अन्तरेण वा—विना वा प्रयोजनमेवेति सूत्रार्थः ॥ २५ ॥ इत्थं स्वगतदोषपरिहारमभिधायोपाधिकृतदोषपरिहारमाह—

**समरेसु अगारेसु, संधिसु य महापहे। एगो एगित्थीए सद्धिं, नेव चिट्ठे न संलवे ॥ २६ ॥**

व्याख्या—समरेषु—खरकुटीषु, तथा च **चूर्णिकृत्**—'समरं नाम जत्थ लोहारा हेट्ठाकम्मं करेंति'[1]। नीचास्पदानामुपलक्षणमेतत्। अगारेषु—गृहेषु गृहसंधिषु—गृहद्वयापान्तरालेषु महापथे—राजपथादौ, एकः—असहायः एकस्त्रिया सार्धं—सह नेव तिष्ठेत्—नैवोर्ध्वस्थानस्थो भवेत्, न सलपेत्—न तयैव सह संभाषं कुर्यात्। अत्यन्तदुष्टतोद्भावनपरं चैकग्रहणम्, अन्यथा ससहायस्याऽपि ससहाययाऽपि स्त्रिया सहाऽवस्थानं संभाषणं चैवंविधास्पदेषु दोषायैव, प्रवचनमालिन्यादिदोषसंभवात्। उक्तञ्च—मात्रा स्वस्रा दुहित्रा वा, न विविक्तासनो भवेत्। बलवानिन्द्रियग्रामः, पण्डितोऽप्यत्र मुह्यति ॥ १ ॥ इति सूत्रार्थः ॥ २६ ॥ कदाचित् स्खलिते च गुरुभिः शिक्षितो यत् कुर्यात् तदाह—

**जं मे बुद्धाऽणुसासंति, सीएण फरुसेण वा। मम लाभु त्ति पेहाए, पयओ तं पडिस्सुणे ॥ २७ ॥**

व्याख्या—यन्मां बुद्धा अनुशासन्ति—शिक्षयन्ति, शीतेन—उपचाराच्छीतलेनाऽऽह्लादकेनेत्यर्थः, परुषेण वा—कर्कशेन वचसेति गम्यते, मम लाभः—अप्राप्तार्थप्राप्तिरूपोऽयं यन्मामनाचारकारिणममी शासन्तीति प्रेक्षया—एवंविधबुद्ध्या, प्रयतः—प्रयत्नवांस्तत्—अनुशासनं प्रतिशृणुयात्—विधेयतया अङ्गीकुर्यादिति सूत्रार्थः ॥ २७ ॥ किमिह परत्र चाऽत्यन्तोपकारि गुरुवचनमपि कस्यचिदनिष्टं स्याद् येनैवमुपदिश्यते इत्याह—

---

1 समरं नाम यत्र लोहकाराः अधःकर्म कुर्वन्ति।

अणुसासणमोवायं, दुक्कडस्स य चोयणं । हियं तं मन्नए पन्नो, वेस्सं होइ असाहुणो ॥ २८ ॥

व्याख्या—अनुशासनं–शिक्षणं 'ओवायं' ति उपाये–मृदुपरुषभाषणादौ भवमौपायं, दुःकृतस्य च–कुत्सिताचरितस्य च चोदनं–प्रेरणं हा किमिदमाचरितमित्यादिरूपं गुरुकृतमिति दृश्यं, हितं–इहपरलोकोपकारि तत्–अनुशासनादि मन्यते प्राज्ञः–प्रज्ञावान् । द्वेष्यं–द्वेषोत्पादकं भवत्यसाधोः–असाधुभावस्य तत् । अनेनासाधोर्गुरुवचनमप्यनिष्टं भवतीत्युक्तमिति सूत्रार्थः ॥ २८ ॥ अमुमेवार्थं व्यक्तीकुर्वन्नाह—

हियं विगयभया बुद्धा, फरुसं पि अणुसासणं । वेस्सं तं होइ मूढाणं, खंतिसोहिकरं पदं ॥ २९ ॥

व्याख्या—हितं–पथ्यं विगतभयाः–इहलोकपरलोकादानाकस्मादाजीविकामरणाश्लोकभयरहिता बुद्धाः–अवगततत्त्वा मन्यन्त इति शेषः, परुषमप्यनुशासनं गुरुविहितमिति दृश्यं । द्वेष्यं तत्–अनुशासनं भवति मूढानां अज्ञानां, क्षान्तिः–क्षमा शुद्धिः–आशयशुद्धता तत्करम्, उपलक्षणत्वान्मार्दवार्जवादिकरमपि, क्षान्त्यादिहेतुत्वाद् गुर्वनुशासनस्य, पदं–ज्ञानादिगुणानां स्थानम् । यतः—सद्बोधं विदधाति हन्ति कुमतिं मिथ्यादृशं बाधते, धत्ते धर्ममतिं तनोति परमे संवेगनिर्वेदने । रागादीन् विनिहन्ति नीतिममलां पुष्णाति हन्त्युत्पथं, यद्वा किं न करोति सद्गुरुमुखादभ्युद्गता भारती ॥ १ ॥ इति सूत्रार्थः ॥ २९ ॥ पुनर्विनयमेवाह—

आसणे उवचिट्ठेज्जा, अणुच्चे अकुए थिरे । अप्पुत्थाई णिरुत्थाई, निसीज्जा अप्पकुक्कुई ॥ ३० ॥

व्याख्या—आसने–पीठादौ वर्षासु ऋतुबद्धे तु पादपुंछने उपविशेत् । अनुच्चे–द्रव्यतो नीचे भावतः स्वल्पमूल्यादौ गुर्वासनादिति गम्यते। अकुचे–अस्पन्दमाने, न तु तिनिशफलकवत् किञ्चिचलति तस्य श्रृङ्गाराऽङ्गत्वात् । स्थिरे–समपाद-

प्रविष्टितया निश्चले, अन्यथा सत्त्वविराधनासंभवात् । ईदृशेऽप्यासनेऽनुत्थायी–प्रयोजनेऽपि न पुनः पुनरुत्थानशीलः, निरुत्थायी–निमित्तं विना नोत्थानशीलः, उभयत्राऽन्यथाऽनवस्थितत्वात् । एवंविधश्च किम् ? इत्याह–निषीदेत्–आसीत, 'अप्पकुक्कुई' अल्पस्पन्दनः–करादिभिरल्पमेव चलन्निति सूत्रार्थः ॥ ३० ॥ संप्रत्येषणाविषयं विनयमाह—

**कालेण निक्खमे भिक्खू, कालेण य पडिक्कमे । अकालं च विवज्जेत्ता, काले कालं समायरे ॥ ३१ ॥**

व्याख्या—काले–प्रस्तावे, सप्तम्यर्थे तृतीया, निष्क्रामेत्–गच्छेद् भिक्षुः, अकाले निर्गमे आत्मक्लामनादिदोषसंभवात् । तथा काले च प्रतिक्रामेत्–प्रतिनिवर्त्तेत, भिक्षाटनादिति शेषः । इदमुक्तं भवति—अलाभे अल्पं मया लब्धं न लब्धमिति वा लाभार्थी नाटन्नेव तिष्ठेत्, आह च—'अलाभो त्ति न सोइज्जा तवो त्ति अहियासए'[1] । किमित्येवम् ? अत आह—अकालं च–तत्तत्क्रियाकाण्डाऽसमयं चेति यस्माद् विवर्ज्य काले–प्रस्तावे कालं–तत्तत्कालोचितं प्रत्युपेक्षणाद्यनुष्ठानं समाचरेत्–कुर्यात्, यतः—'कालम्मि कीरमाणं, किसिकम्मं बहुफलं जहा होइ । इय सव्वा चिय किरिया, नियनियकालम्मि विन्नेया[2] ॥ १ ॥ इति सूत्रार्थः ॥ ३१ ॥ निर्गतश्च यत् कुर्यात् तदाह—

**परिवाडीए न चिट्ठेज्जा, भिक्खू दत्तेसणं चरे । पडिरूवेण एसित्ता, मियं कालेण भक्खए ॥ ३२ ॥**

व्याख्या—परिपाट्यां–पङ्क्त्यां भोक्तुमुपविष्टपुरुषसम्बन्धिन्यां न तिष्ठेद् भिक्षार्थं नासीत, अप्रीत्यदृष्टकल्याणतादिदोषसंभवात् । किञ्च भिक्षुर्दत्तं–दानं तस्मिन् गृहिणा दीयमाने एषणा–तद्गतदोषान्वेषणात्मिका दत्तैषणा तां चरेत्–आसेवेतेति, अनेन ग्रहणैषणोक्ता । किं विधाय दत्तैषणां चरेत् ? प्रतिरूपेण–प्रतिबिम्बं चिरन्तनमुनीनां यद् रूपं तेन पतद्ग्रहादिधारणा-

---

१ अलाभ इति न शोचेत् तप इत्यध्यासीत । २ काले क्रियमाणं कृषिकर्म बहुफलं यथा भवति । इति सर्वैव क्रिया, निजनिजकाले विज्ञेया ॥ २ ॥

**अणुसासणमोवायं, दुक्कडस्स य चोयणं । हियं तं मन्नए पन्नो, वेस्सं होइ असाहुणो ॥ २८ ॥**

**व्याख्या**—अनुशासनं–शिक्षणं 'ओवायं' ति उपाये–मृदुपरुषभाषणादौ भवमौपायं, दुःकृतस्य च–कुत्सिताचरितस्य च चोदनं–प्रेरणं हा किमिदमाचरितमित्यादिरूपं गुरुकृतमिति दृश्यं, हितं–इहपरलोकोपकारि तत्–अनुशासनादि मन्यते प्राज्ञः–प्रज्ञावान् । द्वेष्यं–द्वेषोत्पादकं भवत्यसाधोः–असाधुभावस्य तत् । अनेनासाधोर्गुरुवचनमप्यनिष्टं भवतीत्युक्तमिति सूत्रार्थः ॥ २८ ॥ अमुमेवार्थं व्यक्तीकुर्वन्नाह—

**हियं विगयभया बुद्धा, फरुसं पि अणुसासणं । वेस्सं तं होइ मूढाणं, खंतिसोहिकरं पदं ॥ २९ ॥**

**व्याख्या**—हितं–पथ्यं विगतभयाः–इहलोकपरलोकादानाकस्मादाजीविकामरणाश्लोकभयरहिता बुद्धाः–अवगततत्त्वा मन्यन्त इति शेषः, परुषमप्यनुशासनं गुरुविहितमिति दृश्यं । द्वेष्यं तत्–अनुशासनं भवति मूढानां अज्ञानां, क्षान्तिः–क्षमा शुद्धिः–आशयशुद्धता तत्करम्, उपलक्षणत्वान्मार्दवार्जवादिकरमपि, क्षान्त्यादिहेतुत्वाद् गुर्वनुशासनस्य, पदं–ज्ञानादिगुणानां स्थानम् । यतः—सद्बोधं विदधाति हन्ति कुमतिं मिथ्यादृशं बाधते, धत्ते धर्ममतिं तनोति परमे संवेगनिर्वेदने । रागादीन् विनिहन्ति नीतिममलां पुष्णाति हन्त्युत्पथं, यद्वा किं न करोति सद्गुरुमुखादभ्युद्गता भारती ॥ १ ॥ इति सूत्रार्थः ॥ २९ ॥ पुनर्विनयमेवाह—

**आसणे उवचिट्ठेज्जा, अणुच्चे अकुए थिरे । अप्पुत्थाई णिरुत्थाई, निसीज्जा अप्पकुक्कुई ॥ ३० ॥**

**व्याख्या**—आसने–पीठादौ वर्षासु ऋतुबद्धे तु पादपुंछने उपविशेत् । अनुच्चे–द्रव्यतो नीचे भावतः स्वल्पमूल्यादौ गुर्वासनादिति गम्यते । अकुचे–अस्पन्दमाने, न तु तिनिशफलकवत् किञ्चिचलति तस्य शृङ्गाराङ्गत्वात् । स्थिरे–समपाद-

प्रतिदिनतया निश्चले, अन्यथा सत्त्वविराधनासंभवात् । ईदृशेऽप्यासनेऽज्ञोत्थायी—प्रयोजनेऽपि न पुनः पुनरुत्थानशीलः, निरुद्धगामी—निमित्तं विना नोत्थानशीलः, उभयत्राऽन्यथाऽनवस्थितत्वात् । एवंविधश्च किम् ? इत्याह—निषीदेत्—आसीत, 'अप्पकुक्कुई' अल्पस्पन्दनः—करादिभिरल्पमेव चलन्निति सूत्रार्थः ॥ ३० ॥ सम्प्रत्येषणाविषयं विनयमाह—

**कालेण निक्खमे भिक्खू, कालेण य पडिक्कमे । अकालं च विवज्जेत्ता, काले कालं समायरे ॥ ३१ ॥**

व्याख्या—काले—प्रस्तावे, सप्तम्यर्थे तृतीया, निष्क्रामेत्—गच्छेद् भिक्षुः, अकाले निर्गमे आत्मक्लामनादिदोषसंभवात् । तथा काले च प्रतिक्रामेत्—प्रतिनिवर्त्तेत, भिक्षाटनादिति शेषः । इदमुक्तं भवति—अलाभे अल्पं मया लब्धं न लब्धमिति वा लाभार्थी नाटन्नेव तिष्ठेत्, आह च—'अलाभो त्ति न सोइज्जा तवो त्ति अहियासए' । किमित्येवम् ? अत आह—अकालं च—तत्तत्क्रियाकाण्डाऽसमयं चेति यस्माद् विवर्ज्य काले—प्रस्तावे कालं—तत्तत्कालोचितं प्रत्युपेक्षणाद्यनुष्ठानं समाचरेत्—कुर्यात्, यतः—'कालम्मि कीरमाणं, किसिकम्मं बहुफलं जहा होइ । इय सव्व च्चिय किरिया, नियनियकालम्मि विन्नेया ॥ १ ॥ इति सूत्रार्थः ॥ ३१ ॥ निर्गतश्च यत् कुर्यात् तदाह—

**परिवाडीए न चिट्ठेज्जा, भिक्खू दत्तेसणं चरे । पडिरूवेण एसित्ता, मियं कालेण भक्खए ॥ ३२ ॥**

व्याख्या—परिपाट्यां—पङ्क्त्यां भोक्तुमुपविष्टपुरुषसंबन्धिन्यां न तिष्ठेद् भिक्षार्थं नासीत, अप्रीत्यदृष्टकल्याणतादिदोपसंभवात् । किञ्च भिक्षुर्दत्तं—दानं तस्मिन् गृहिणा दीयमाने एषणा—तद्गतदोषान्वेषणात्मिका दत्तैषणा तां चरेत्—आसेवेतेति, अनेन ग्रहणैषणोक्ता । किं विधाय दत्तैषणां चरेत् ? प्रतिरूपेण—प्रतिबिम्बं चिरन्तनमुनीनां यद् रूपं तेन पतद्ग्रहादिधारणा-

१ अलाभ इति न शोचेत् तप इत्यध्यासीत । २ काले क्रियमाणं कृषिकर्म बहुफलं यथा भवति । इति सर्वैव क्रिया, निजनिजकाले विज्ञेया ॥ २ ॥

त्मकेन सकलान्यधार्मिकविलक्षणेन न तु "वस्त्रं छत्रं छात्रं पात्रं यष्टिं च चर्चयेद्भिक्षुः । वेषेण परिकरेण च कियताऽपि विना न भिक्षाऽपि ॥ १ ॥" इत्यादिवचनाऽऽकर्णनाद् विभूपणात्मकेन एपित्वा–गवेपयित्वा, अनेन च गवेषणोक्ता । ग्रासैपणामाह— मितं–परिमितं, अमितभोजनात् स्वाध्यायविघातादिवहुदोपसभवात्, कालेन—"[1]नमोक्कारेण पारित्ता, करित्ता जिणसंथवं । सज्झायं पट्ठवित्ता णं, वीसमेज्ज खणं मुणी ॥ ३ ॥" इत्याद्यागमोक्तप्रस्तावेनाऽद्रुताऽविलम्बितरूपेण वा भक्षयेद्–भुञ्जीतेति सूत्रार्थः ॥ ३२ ॥ भिक्षाचर्यां कुर्वता पुराप्रविष्टाऽन्यभिक्षुकसंभवे यत् कृत्यं तदाह—

**नाइदूरमणासन्ने, नन्नेसिं चक्खुफासओ । एगो चिट्ठेज्ज भत्तट्ठं, लंघित्ता तं नऽइक्कमे ॥ ३३ ॥**

व्याख्या—'नाइदूरं' ति विभक्तिव्यत्ययाद् नाऽतिदूरे–विप्रकर्षवति देशे, तत्र निर्गमाऽनवगमादेषणाशुद्ध्यसंभवाच्च । तथा नासन्ने–प्रस्तावान्नाऽतिनिकटे तत्र पुराप्रविष्टाऽपरभिक्षुकाऽप्रीतिसंभवात् । नाऽन्येषां–भिक्षुकाऽपेक्षया अपरेषां गृहस्थानां, चक्षुःस्पर्शे–सप्तम्यर्थे तस्, दृष्टिगोचरे, तिष्ठेदिति सर्वत्र योज्यम् । किन्तु विविक्तप्रदेशे यथा गृहिणो न विदन्ति, यदुतैष भिक्षुकनिःक्रमणं प्रतीक्षत इति । एकः—ममाऽमी भिक्षाचर्याविघ्नं कुर्वन्तीति तदुपरि द्वेपरहितो भक्तार्थं–भोजननिमित्तं 'लंघित्ते' त्ति उल्लङ्घ्य तमिति–भिक्षुकं नाऽतिक्रामेत्, तदप्रीत्यपवादादिसंभवात् । इह च मितं कालेन भक्षयेदिति भोजनविधिमभिधाय यत् पुनर्भिक्षाटनाऽभिधानं तद् ग्लानादिनिमित्तं स्वयं वा बुभुक्षावेदनीयमसहिष्णोः पुनर्भ्रमणमपि न दोषायेति ज्ञापनार्थम् । उक्तञ्च—[2]जइ तेण न संथरे । तओ कारणमुप्पन्ने भत्तपाणं गवेसए ॥ १ ॥ इति सूत्रार्थः ॥ ३३ ॥ पुनस्तद्गतमेव विधिमाह—

---

१ नमस्कारेण पारयित्वा कृत्वा जिनसंस्तवम् । स्वाध्याय प्रस्थाप्य विश्राम्येत् क्षण मुनि. ॥ ३ ॥ २ यदि तेन न संस्तरेत् । तत. कारण उत्पन्ने, भक्तपान गवेषयेत् ।

**नाइउच्चे व णीए वा, णासन्ने नाइदूरओ । फासुयं परकडं पिंडं, पडिगाहेज्ज संजए ॥ ३४ ॥**

व्याख्या—नात्युच्चे–प्रासादोपरिभूमिकादौ नीचे वा–भूमिगृहादौ, तत्रोत्क्षेपनिक्षेपनिरीक्षणाऽसंभवात् दायकाऽपायसंभवाच्च । यद्वा नाऽत्युच्चः–ऊर्ध्वीकृतकन्धरतया द्रव्यतो भावतोऽहोऽहं लब्धिमानिति मदाध्मातमानसः, नीचोऽत्यन्ताऽवनतकन्धरो द्रव्यतो भावतस्तु न मयाऽद्य किञ्चित् कुत्रचिदवाप्तमिति दैन्यवान् । उभयत्र वा समुच्चये । तथा नासन्ने–नाऽतिदूरे प्रदेशे स्थित इति गम्यते । यथायोगं जुगुप्साशङ्कैषणाशुद्ध्यसंभवादयो दोषाः । प्रासुकं-सहज–संसक्तिजजन्तुरहितं, परकृतं–परेण गृहिणाऽऽत्मार्थं परार्थञ्च कृतं निर्वर्त्तितं पिण्डं–आहारं प्रतिगृह्णीयात्–स्वीकुर्यात् संयतः–यतिरिति सूत्रार्थः ॥ ३४ ॥ पुनर्ग्रासैषणाविधिमाह—

**अप्पपाणेऽप्पबीयम्मि, पडिच्छन्नं ति संवुडे । समयं संजए भुंजे, जयं अप्परिसाडियं ॥ ३५ ॥**

व्याख्या—अल्पशब्दोऽभाववाची, ततश्चाल्पप्राणे–अवस्थिताऽऽगन्तुकजङ्गमप्राणिविरहिते उपाश्रयादाविति गम्यते । अल्पबीजे–शाल्यादिबीजवर्जिते, उपलक्षणत्वात् सकलस्थावरजन्तुविकले । प्रतिच्छन्ने–उपरिप्रावरणाऽन्विते, अन्यथा संपातिमसत्त्वसंपातसंभवात् । संवृते–पार्श्वतः कटकुड्यादिना सङ्कटद्वारे, अटव्यां कुडङ्गादिषु वा, अन्यथा दीनादियाचने दानादानयोः पुण्यबन्धप्रद्वेषादिदोषदर्शनात् । समकं–अन्यैः सह न त्वेकाक्येव रसलम्पटतया समूहाऽसहिष्णुतया वा । आह च–साहवो तो चियत्तेणं, निमतेज्ज जहक्कमं । जइ तत्थ केइ इच्छिज्जा, तेहिं सद्धिं तु भुंजए ॥ १ ॥ गच्छस्थित-

---

१ साधून् ततः प्रीत्या निमन्त्रयेत् यथाक्रमम् । यदि तत्र केचिदिच्छेयुस्तैः सार्धं तु भुञ्जीत ॥ १ ॥

सामाचारी चेयं । संयतः—साधुः भुञ्जीत—अश्नीयात 'जयं' ति यतमानः—सुरसुर-चवचव क-सुरुडुक-कुरुडुक-मुरुडुकादि-
शब्दानकुर्वन् 'अप्परिसाडियं' परिसाटरहितमिति सूत्रार्थः ॥ ३५ ॥ यदुक्तम्—यतमान इति तत्र वाग्यतनामाह—

**सुकडं ति सुपक्कं ति, सुच्छिन्नं सुहडे मडे। सुणिट्ठिए सुलट्ठि त्ति, सावज्जं वज्जए मुणी ॥ ३६ ॥**

व्याख्या—सुकृतं—सुष्ठु निर्वर्त्तितमन्नादि, सुपक्वं—घृतपूर्णादि, इतिः—उभयत्रोपदर्शने, सुच्छिन्नं—शाकपत्रादि, सुहृतं—सूपविलेपिकाऽऽदिनाऽमत्रकादेर्घृतादि, सुमृतं—घृताद्येव सक्तुसूपादौ, सुनिष्ठितं—सुष्ठु निष्ठां—रसप्रकर्षात्मिकां गतं, सुलष्टं—शोभनमोदनादि, अखण्डोज्ज्वलसुस्वादुसिक्थत्वादिना इत्येवंप्रकारमन्यदपि सावद्यं वर्जयेद् मुनिः । यद्वा सुष्ठु कृतं यदनेनाऽरातेः प्रतिकृतं, सुपक्वं पूर्ववत्, सुच्छिन्नोऽयं न्यग्रोधद्रुमादिः, सुहृतं कदर्यस्य धनं चौरादिभिः, सुमृतोऽयं प्रत्यनीकधिग्वर्णादिः, सुनिष्ठितोऽयं प्रासादादिः, सुलष्टोऽयं करितुरगादिरिति सामान्येनैव सावद्यं वचो वर्जयेद् मुनिः । निरवद्यं तु सुकृतमनेन धर्मध्यानादि, सुपक्वमस्य वचनविज्ञानादि, सुच्छिन्नं स्नेहनिगडादि, सुहृतोऽयमुत्प्रव्राजयितुकामेभ्यो निजकेभ्यः शैक्षकः, सुमृतमस्य पण्डितमरणेन, सुनिष्ठितोऽयं साध्वाचारे, सुलष्टोऽयं दारको व्रतग्रहणस्येत्यादिरूपं । कारणतो वा प्रयत्नपक्वमित्यादि वदेदपीति सूत्रार्थः ॥ ३६ ॥ संप्रति विनीतेतरयोरुपदेशदाने गुरोर्यद् भवति तद् दर्शयितुमाह—

**रमए पंडिए सासं, हयं भद्दं व वाहए। बालं सम्मइ सासंतो, गलिअस्सं व वाहए ॥ ३७ ॥**

व्याख्या—रमते—अभिरतिमान् भवति पण्डितान्—विनीतविनेयान् शासन्—आज्ञापयन् प्रमादस्खलिते शिक्षयन् वा गुरुरिति शेषः । हयमिव—अश्वमिव भद्रं—कल्याणावहं वाहकः—अश्वंदमः । बालमज्ञं श्राम्यति—खिद्यते शासन्, स हि सकृदुक्त एव कृत्येषु न प्रवर्त्तते, ततश्चेदं कुरु इदञ्च मा इति पुनः पुनस्तच्छासनेन खिद्यते । गल्यश्वमिव वाहक इति सूत्रार्थः ॥ ३७ ॥ गुरुशिक्षणे बालस्याऽभिसन्धिमाह—

**खड्डया मे चवेडा मे, अक्कोसा य वहा य मे। कल्लाणमणुसासंतो, पावदिट्ठि त्ति मन्नइ ॥ ३८॥**

व्याख्या—'खड्डुकाः' टक्कराः 'मे' मम 'चपेटाः' करतलघाता मे 'आक्रोशाश्च' निष्ठुरभाषणानि मे 'वधाश्च' दण्डादिघाता मे अनुशासननिति प्रक्रमः। कल्याणं "अणुसासंतु" त्ति अनुशास्यमानः 'पापदृष्टिः' प्रक्रमात् कुशिष्यः 'इति' एवं मन्यत इति सूत्रार्थः ॥ ३८ ॥ विनीताभिसन्धिमाह—

**पुत्तो मे भाय नाइ त्ति, साहू कल्लाण मन्नइ। पावदिट्ठी उ अप्पाणं, सासं दासं व मन्नइ ॥ ३९॥**

व्याख्या—इवार्थस्य गम्यमानत्वात् सुब्व्यत्ययाच्च पुत्रमिव भ्रातरमिव ज्ञातिमिव "मे" त्ति मां अयमाचार्योऽनुशास्तीति गम्यते, 'इति' एवं 'साधुः' शिष्यः कल्याणं मन्यते। स हि विवेचयति शिष्यः—सौहार्ददेष मां शास्ति, दुर्विनीतत्वे हि मम किमस्य परिहीयते? ममैव त्वर्थभ्रंश इति। बालस्त्वेवं किं न मन्यते? इत्याह—'पापदृष्टिस्तु' कुशिष्यः पुनः आत्मानं "सास" त्ति प्राकृतत्वाच्छास्यमानं दासमिव मन्यते, यथैष दासवद् मामाज्ञापयतीति सूत्रार्थः ॥ ३९ ॥ विनयसर्वस्वमुपदेष्टुमाह—

**न कोवए आयरियं, अप्पाणं पि न कोवए। बुद्धोवघाई न सिया, न सिया तोत्तगवेसए ॥ ४० ॥**

व्याख्या—न 'कोपयेत्' कोपोपेतं कुर्याद् आचार्यम् उपलक्षणत्वादपरमपि विनयार्हम् आत्मानमपि गुरुभिरतिपरुषभाषणादिनाऽनुशिष्यमाणं न कोपयेत्। यतः—मासोपवासनिरतोऽस्तु तनोतु सत्यं, ध्यानं करोतु विदधातु बहिर्निवासम्। ब्रह्मव्रतं धरतु भैक्षरतोऽस्तु नित्यं, रोषं करोति यदि सर्वमनर्थकं तत् ॥ १ ॥ कथञ्चित् सकोपतायामपि 'बुद्धोपघाती' 'आचार्योपघातकृत्' 'न स्याद्' न भवेत्, तथा न स्यात् तुद्यते—व्यथ्यतेऽनेनेति तोत्रं—द्रव्यतः प्राजनको

सामाचारी चेयं । संयतः—साधुः भुञ्जीत—अश्नीयात 'जयं' ति यतमानः—सुरसुर-चवचव क-सुरुडुक-कुरुडुक-सुरुडुकादि-शब्दानकुर्वन् 'अप्परिसाडियं' परिसाटरहितमिति सूत्रार्थः ॥ ३५ ॥ यदुक्तम्—यतमान इति तत्र वाग्यतनामाह—

**सुकडं ति सुपक्कं ति, सुच्छिन्नं सुहडे मडे। सुणिट्ठिए सुलट्ठि त्ति, सावज्जं वज्जए मुणी ॥ ३६ ॥**

**व्याख्या**—सुकृतं—सुष्ठु निर्वर्त्तितमन्नादि, सुपक्वं—घृतपूर्णादि, इतिः—उभयत्रोपदर्शने, सुच्छिन्नं—शाकपत्रादि, सुहृतं—सूपविलेपिकाऽऽदिनाऽमत्रकादेर्घृतादि, सुमृतं—घृताद्येव सक्तुसूपादौ, सुनिष्ठितं—सुष्ठु निष्ठां—रसप्रकर्षात्मिकां गतं, सुलष्टं—शोभनमोदनादि, अखण्डोज्वलसुस्वादुसिक्थत्वादिना इत्येवंप्रकारमन्यदपि सावद्यं वर्जयेद् मुनिः । यद्वा सुष्ठु कृतं यदनेनाऽरातेः प्रतिकृतं, सुपक्वं पूर्ववत्, सुच्छिन्नोऽयं न्यग्रोधद्रुमादिः, सुहृतं कदर्यस्य धनं चौरादिभिः, सुमृतोऽयं प्रत्यनीकधिग्वर्णादिः, सुनिष्ठितोऽयं प्रासादादिः, सुलष्टोऽयं करितुरगादिरिति सामान्येनैव सावद्यं वचो वर्जयेद् मुनिः । निरवद्यं तु सुकृतमनेन धर्मध्यानादि, सुपक्वमस्य वचनविज्ञानादि, सुच्छिन्नं स्नेहनिगडादि, सुहृतोऽयमुत्प्रव्राजयितुकामेभ्यो निजकेभ्यः शैक्षकः, सुमृतमस्य पण्डितमरणेन, सुनिष्ठितोऽयं साध्वाचारे, सुलष्टोऽयं दारको व्रतग्रहणस्येत्यादिरूपं । कारणतो वा प्रयत्नपक्वमित्यादि वदेदपीति सूत्रार्थः ॥ ३६ ॥ संप्रति विनीतेतरयोरुपदेशदाने गुरोर्यद् भवति तद् दर्शयितुमाह—

**रमए पंडिए सासं, हयं भद्दं व वाहए। बालं सम्मइ सासंतो, गलिअस्सं व वाहए ॥ ३७ ॥**

**व्याख्या**—रमते—अभिरतिमान् भवति पण्डितान्—विनीतविनेयान् शासन्—आज्ञापयन् प्रमादस्खलिते शिक्षयन् वा गुरुरिति शेषः । हयमिव—अश्वमिव भद्रं—कल्याणावहं वाहकः—अश्वंदमः । बालमज्ञं श्राम्यति—खिद्यते शासन्, स हि सकृदुक्त एव कृत्येषु न प्रवर्त्तते, ततश्चेदं कुरु इदञ्च मा इति पुनः पुनस्तच्छासनेन खिद्यते । गल्यश्वमिव वाहक इति सूत्रार्थः ॥ ३७ ॥ गुरुशिक्षणे बालस्याऽभिसन्धिमाह—

**खड्डया मे चवेडा मे, अक्कोसा य वहा य मे। कल्लाणमणुसासंतो, पावदिट्ठि त्ति मन्नइ ॥ ३८॥**

व्याख्या—'खड्डुकाः' टकाराः 'मे' मम 'चपेटाः' करतलघाता मे 'आक्रोशाश्च' निष्ठुरभाषणानि मे 'वधाश्च' दण्डादिघाता मे अनुशासनमिति प्रक्रमः। कल्याणं "अणुसासंतु" त्ति अनुशास्यमानः 'पापदृष्टिः' प्रक्रमात् कुशिष्यः 'इति' एवं मन्यत इति सूत्रार्थः ॥ ३८ ॥ विनीताभिसन्धिमाह—

**पुत्तो मे भाय नाइ त्ति, साहू कल्लाण मन्नइ। पावदिट्ठी उ अप्पाणं, सासं दासं व मन्नइ ॥ ३९॥**

व्याख्या—इवार्थस्य गम्यमानत्वात् सुब्व्यत्ययाच्च पुत्रमिव भ्रातरमिव ज्ञातिमिव "मे" त्ति मां अयमाचार्योऽनुशास्तीति गम्यते, 'इति' एव 'साधुः' शिष्यः कल्याणं मन्यते। स हि विवेचयति शिष्यः—सौहार्ददेव मां शास्ति, दुर्विनीतत्वे हि मम किमस्य परिहीयते? ममैव स्वार्थभ्रंश इति। बालस्त्वेवं किं न मन्यते? इत्याह—'पापदृष्टिस्तु' कुशिष्यः पुनः आत्मानं "सास" ति प्राकृतत्वाच्छास्यमानं दासमिव मन्यते, यथैष दासवद् मामाज्ञापयतीति सूत्रार्थः ॥ ३९ ॥ विनयसर्वस्वमुपदेष्टुमाह—

**न कोवए आयरियं, अप्पाणं पि ण कोवए। बुद्धोपघाई ण सिया, ण सिया तोत्तगवेसए ॥ ४० ॥**

व्याख्या—न 'कोपयेत्' कोपोपेतं कुर्याद् आचार्यम् उपलक्षणत्वादपरमपि विनयार्हम् आत्मानमपि गुरुभिरतिपरुषभाषणादिनाऽनुशिष्यमाणं न कोपयेत्। यतः—मासोपवासनिरतोऽस्तु तनोतु सत्यं, ध्यानं करोतु विदधातु बहिर्निवासम्। ब्रह्मव्रतं धरतु भैक्षरतोऽस्तु नित्यं, रोषं करोति यदि सर्वमनर्थकं तत् ॥ १ ॥ कथञ्चित् सकोपतायामपि 'बुद्धोपघाती' 'आचार्योपघातकृत्' 'न स्याद्' न भवेत्, तथा न स्यात् तुद्यते—व्यथ्यतेऽनेनेति तोत्रं—द्रव्यतः प्राजनको

भावतस्तु दोषाविर्भावकं वचनमेव तद्गवेषकः—किमहममीषां जात्यादिदूषणं वच्मीति मार्गकः प्रक्रमाद् गुरूणाम् ॥

यदुक्तं "बुद्धोपघाती न स्यात्" तत्रोदाहरणम्—केइ आयाराइअट्ठविहगणिसंपइसंपउत्ता जुगप्पहाणा बहुस्सुया पगईए उवसंता आयरिया अनिययविहारेण विहरिउकामा वि परिहीणजंघाबला एगम्मि सन्निवेसे वुड्ढावासेण ठिया। तत्थ सावगा 'इमेहिं भगवंतेहिं संपइ तित्थं सणाहं' ति चिंतिऊण ते वयोवत्थासमुचिएहिं निद्धमहुराऽऽहारेहिं ओसहवत्थाईहि य पइदिणं सवायरेण पडियरंति। तेसि सीसा गुरुकम्मयाए अजोग्गयाए सुगुरुसंजोगस्स मंदयाए गुणाणुरागस्स "तिण्हं दुप्पडियारं, तंजहा—अम्मापिउस्स भट्टिस्स धम्मायरियस्स।" इमं आगमवयणमपरिभाविंता चिंतंति—'केच्चिरं कालं एस अजंगमो अम्हेहिं चारपक्खित्तेहिं व परिपालियव्वो ? ता केणइ उवाएण अणसणं गेण्हावेमो इमं' ति सावयगिहेहिंतो न किंचि पाउग्गमोसहाइ वा गेण्हंति। निव्वंधेण सावएहिं गिण्हाविज्जंता भणंति—संलेहणं अम्हं आयरिया कुणंति, अओ अंतपंतमाहारं भुंजंति तवं च कुव्वंति। आयरियाणं पुरओ भणंति—किं करेमो अम्हे ? जइ एरिसाण वि तुम्हं आगमधराणं चिरावत्थाणेणं निविन्ना निव्विवेयत्तणओ मंदधम्मा न दिंति किंचि सोहणं। सावया साविया वि 'सूरिणो संलेहणं कुणंति' त्ति सोऊणं मन्नुभरनिब्भरमाणसा सूरिसयासमुवगम्म सविसाया सगग्गयक्खरं भणंति—भयवं! सयलभुवणभावावभासमाणेहिं तिहुयणचिंतामणीहिं चिरं परमपयमुवगएहिं तित्थयरेहिं तुम्हेहिं चेव चिट्ठंतेहि सणाहं भुवणमाभाइ, तो किमयंडे चेव तुम्हे संलेहणं काउमाढत्ता ?। न य 'इमेसिं अम्हे निव्वेयहेउ' त्ति सुविणे वि चिंतियव्वं, जओ सिरट्ठिया वि तुम्हे न भारकरा अम्हं, एएसि वा साहूणं। इमं च सोऊण इंगियवियाणएहिं अवगयं सूरीहिं—'मम सिस्सजणविलसियमेयं, ता किं इमिणा एएसि अप्पीइहेउणा निव्वेयनिबंधणेण पाणधारणेण ? न खलु धम्मत्थिणा कस्सइ अप्पत्तियमुप्पायणीयं भयवंतमहावीरोदाहरणमवगच्छंतेणं।' इइ चिंतिऊण अदसिय-

वियारमेव भणियं—'किंगिरं अजंगमेहिं अम्हेहिं तुब्भे साहुणो य उवरोहणीया ? ता वरं उत्तमपुरिसाणुचरियं उत्तमट्ठमेव पडिवज्जामो' त्ति महुरवयणेहिं तेसिं सठविय भत्तं पच्चक्खायं। सावएहिं महंता अधिई कइ त्ति ॥ इत्येवं बुद्धोपघाती न स्यादिति सूत्रार्थः ॥४०॥ एवं तावत् 'आचार्यं न कोपयेत्' इत्युक्तम्। कथञ्चित् कुपिताय यत् कृत्यं तदाह—

**आयरियं कुवियं नच्चा, पत्तिएण पसादए। विज्झविज्जा पंजलिउडो, वदेज्जा ण पुणो त्ति य ॥४१॥**

व्याख्या—'आचार्यम्' गुरुं 'कुपितं' सकोपं अननुशासनादिभिः—"पुंरिसज्जाए वि तहा विणीयविणयम्मि नत्थि अभिओगो। सेसम्मि उ अभिओगो जणवयजाए जहा आसे ॥ १ ॥" इत्यागमात् कृतबहिःकोपं वाऽदृष्टिदानादिना 'ज्ञात्वा' अवगम्य "पत्तिएणं" ति प्रीत्या साम्नैव प्रियवचोभाषणादिना न भेददण्डाद्युपदर्शनेन 'प्रसादयेत्' प्रसादं ग्राहयेत्। एतदेवाह—'विध्यापयेत्' कथञ्चिदुदीरितकोपाऽनलमप्युपशमयेत् 'प्राञ्जलिपुटः' कृतकरकुड्मलः। इत्थं कायिकं मानसं च विध्यापनोपायमभिधाय वाचिकं वक्तुमाह—'वदेच्च' ब्रूयाच्च, चशब्दो भिन्नक्रमः, न पुनरिति। कथंचित् कृतकोपमपि विध्यापयेत् वदेच्च, यथा—भगवन्! प्रमादाचरितमिदं मम क्षमितव्यम्, न पुनरित्थमाचरिष्यामीति सूत्रार्थः ॥ ४१ ॥

सम्प्रति यथा निरपराधतया आचार्यकोप एव न स्यात् तथाऽऽह—

**धम्मज्जियं च ववहारं, बुद्धेहाऽऽयरियं सया। तमायरंतो ववहारं, गरहं नाऽभिगच्छइ ॥४२॥**

व्याख्या—यत्तदोर्नित्याभिसम्बन्धात् सुब्व्यत्ययाच्च धर्मेण—क्षान्त्यादिना अर्जितः—उपार्जितः, न हि क्षान्त्यादिधर्मविरहित इमं प्राप्नोति। 'चः' पूरणे, यः 'व्यवहारः' प्रत्युपेक्षणादिर्यतिकर्त्तव्यतारूपः 'बुद्धैः' अवगततत्त्वैः 'आचरितः'

---

१ "पुरुषजातेऽपि तथा विनीतविनये नास्त्यभियोग। शेषे त्वभियोगो, जनपदजाते यथाऽश्वे ॥ १ ॥"

सेवितः 'सदा' सर्वकालं तमाचरन् 'व्यवहारं' विशेषेणापहारकारिणम्, अर्थापत्त्या पापकर्मणः 'गर्हां' अविनीतोऽयमित्येवंविधां निन्दां 'नाभिगच्छति' न प्राप्नोति यतिरिति गम्यत इति सूत्रार्थः ॥ ४२ ॥ किं बहुना ?—

**मणोगतं वक्कगतं, जाणित्ताऽऽयरियस्स उ । तं परिगिज्झ वायाए, कम्मुणा उववायए ॥ ४३ ॥**

**व्याख्या**—मनसि–चित्ते गतं–स्थितं मनोगतम् तथा वाक्यगतं कृत्यमिति शेषः 'ज्ञात्वा' बुद्ध्वा 'आचार्यस्य' गुरोः, तुशब्दः कायगतकृत्यपरिग्रहार्थः, तं मनोगतादि 'परिगृह्य' अङ्गीकृत्य 'वाचा' वचसा इदमित्थं करोमीत्यादि, केन? 'कर्मणा' क्रियया तन्निर्वर्त्तनात्मिकया 'उपपादयेत्' विदधीतेति सूत्रार्थः ॥४३॥ स चैवंविनीतविनयतया यादृक् स्यात् तदाऽऽह—

**वित्ते अचोइए निच्चं, खिप्पं हवइ सुचोदए । जहोवइट्ठं सुकयं, किचाइं कुवई सया ॥ ४४ ॥**

**व्याख्या**—'वित्तः' विनीतविनयतयैव सकलगुणाश्रयतया प्रतीतः, "अचोइउ" त्ति यथा हि बलवद्विनीतधुर्यः प्रतोदोत्क्षेपमपि न सहेत कुतोऽधःपतनम्? एवमयमनुक्त एव प्रतिप्रस्तावं गुरुकृत्येषु प्रवर्त्तते अतः 'अचोदितः' अप्रेरितः 'नित्यं' सदा न कदाचिदेव । स्वयं प्रवर्त्तमानोऽपि प्रेरितोऽनुशयवानपि स्यादिति कदाशङ्कापनोदायाऽऽह—'क्षिप्रं' शीघ्रं भवति सति 'सुचोदके' शोभने प्रेरयितरि गुराविति गम्यते, 'यथोपदिष्टं' उपदिष्टानतिक्रमेण 'सुकृतं' सुष्ठुकृतं यथा भवति एवं कृत्यानि 'करोति' निर्वर्त्तयति 'सदा' सर्वदेति सूत्रार्थः ॥ ४४ ॥ सम्प्रत्युपसंहर्त्तुमाह—

**नच्चा नमइ मेहावी, लोए कित्ती से जायइ । भवइ किचाणं सरणं, भूयाणं जगई जहा ॥ ४५ ॥**

**व्याख्या**—'ज्ञात्वा' अनन्तरोक्तमखिलमध्ययनार्थमवगम्य 'नमति' तत्तत्कृत्यकरणं प्रति प्रह्वीभवति 'मेधावी' मर्यादावर्त्ती । तद्गुणं वक्तुमाह—लोके 'कीर्त्तिः' 'सुलब्धमस्य जन्म, निस्तीर्णरूपो भवोदधिरनेन' इत्यादिका 'से' तस्य 'जायते'

प्रादुर्भवति । तथा स एव भवति 'कृत्यानां' उचितानुष्ठानानां कलुषान्तःकरणवृत्तिभिरविनीतविनेयैरतिदूरमुत्सादितानां 'शरणं' आश्रयः, 'भूतानां' प्राणिनां 'जगती' पृथ्वी यथेति सूत्रार्थः ॥ ४५ ॥ ननु विनयः पूज्यप्रसादनफलः, ततोऽपि च किमवाप्यते ? इत्याह—

**पुज्जा जस्स पसीयंति, संबुद्धा पुव्वसंथुया । पसन्ना लाभइस्संति, विउलं अट्ठियं सुयं ॥ ४६ ॥**

व्याख्या—'पूज्याः' आचार्यादयः 'यस्य' शिक्षकस्य 'प्रसीदन्ति' सन्तुष्यन्ति 'संबुद्धाः' सम्यगवगततत्त्वाः, पूर्वं—वाचनादिकालादारतो न तु वाचनादिकाल एव, तत्कालविनयस्य कृतप्रतिक्रियारूपत्वेन तथाविधप्रसादाजनकत्वात्, संस्तुताः—विनयविषयत्वेन परिचिताः सम्यक् स्तुता वा सद्भूतगुणोत्कीर्त्तनादिभिः पूर्वसंस्तुताः, 'प्रसन्नाः' सप्रसादाः 'लाभयिष्यन्ति' प्रापयिष्यन्ति, 'विपुलं' विस्तीर्णं 'अर्थः'—मोक्षः स एव प्रयोजनमस्येत्यार्थिकं 'श्रुतं' अङ्गोपाङ्गादिभेदमागमम्, अनेन पूज्यप्रसादस्यानन्तरफलं श्रुतमुक्तं, व्यवहितफलं तु मुक्तिरिति सूत्रार्थः ॥ ४६ ॥ सम्प्रति श्रुतावाप्तौ तस्यैहिकं फलमाह—

**स पुज्जसत्थे सुविणीयसंसए, मणोरुई चिट्ठइ कम्मसंपया ।**
**तवोसमायारिसमाहिसंवुडे, महज्जुई पंचवयाइँ पालिया ॥ ४७ ॥**

व्याख्या—'स' इति शिष्यः प्रसादितगुरोरधिगतश्रुतः 'पूज्यशास्त्रः' श्लाघ्यशास्त्रः विनीतस्य हि शास्त्रं विशेषेण सर्वत्र पूज्यते । सुष्ठु—अतिशयेन विनीतः—अपनीतः प्रसादितगुरुणैव शास्त्रपरमार्थसमर्पणेन संशयः—सूक्ष्मपदार्थविषयः सन्देहो यस्य स सुविनीतसंशयः, मनसः—चेतसः प्रस्तावाद् गुरुसम्बन्धिनो रुचिः—अभिलाषोऽस्मिन्निति मनोरुचिः 'तिष्ठति' आस्ते, विनयाधिगतशास्त्रो हि न कथञ्चिद् गुरूणामप्रीतिहेतुर्भवति । कया हेतुभूतया मनोरुचिः ? कर्म—क्रिया दशविधचक्रवालसामाचारीप्रभृतियतिकर्त्तव्यता तस्याः संपत् संपन्नता कर्मसंपत् तया । तपसः—अनशनादेः सामाचारी—समा-

सेवितः 'सदा' सर्वकालं तमाचरन् 'व्यवहारं' विशेषेणापहारकारिणम्, अर्थापत्त्या पापकर्मणः 'गर्हां' अविनीतोऽयमित्येवंविधां निन्दां 'नाभिगच्छति' न प्राप्नोति यतिरिति गम्यत इति सूत्रार्थः ॥ ४२ ॥ किं बहुना ?—

**मणोगतं वक्कगतं, जाणित्ताऽऽयरियस्स उ । तं परिगिज्झ वायाए, कम्मुणा उववायए ॥ ४३ ॥**

**व्याख्या**—मनसि–चित्ते गतं–स्थितं मनोगतम् तथा वाक्यगतं कृत्यमिति शेषः 'ज्ञात्वा' बुद्ध्वा 'आचार्यस्य' गुरोः, तुशब्दः कायगतकृत्यपरिग्रहार्थः, तं मनोगतादि 'परिगृह्य' अङ्गीकृत्य 'वाचा' वचसा इदमित्थं करोमीत्यादि, केन ? 'कर्मणा' क्रियया तन्निर्वर्त्तनात्मिकया 'उपपादयेत्' विदधीतेति सूत्रार्थः ॥४३॥ स चैवंविनीतविनयतया यादृक् स्यात् तदाऽऽह—

**वित्ते अचोइए निच्चं, खिप्पं हवइ सुचोदए । जहोवइट्ठं सुकयं, किच्चाइं कुवई सया ॥ ४४ ॥**

**व्याख्या**—'वित्तः' विनीतविनयतयैव सकलगुणाश्रयतया प्रतीतः, "अचोइउ" त्ति यथा हि बलवद्विनीतधुर्यः प्रतोदोत्क्षेपमपि न सहेत कुतोऽधःपतनम् ? एवमयमनुक्त एव प्रतिप्रस्तावं गुरुकृत्येषु प्रवर्त्तते अतः 'अचोदितः' अप्रेरितः 'नित्यं' सदा न कदाचिदेव । स्वयं प्रवर्त्तमानोऽपि प्रेरितोऽनुशयवानपि स्यादिति कदाशङ्कापनोदायाऽऽह—'क्षिप्रं' शीघ्रं भवति सति 'सुचोदके' शोभने प्रेरयितरि गुराविति गम्यते, 'यथोपदिष्टं' उपदिष्टानतिक्रमेण 'सुकृतं' सुष्ठुकृतं यथा भवति एवं कृत्यानि 'करोति' निर्वर्त्तयति 'सदा' सर्वदेति सूत्रार्थः ॥ ४४ ॥ सम्प्रत्युपसंहर्त्तुमाह—

**नच्चा नमइ मेहावी, लोए कित्ती से जायइ । भवइ किच्चाणं सरणं, भूयाणं जगई जहा ॥ ४५ ॥**

**व्याख्या**—'ज्ञात्वा' अनन्तरोक्तमखिलमध्ययनार्थमवगम्य 'नमति' तत्तत्कृत्यकरणं प्रति प्रह्वीभवति 'मेधावी' मर्यादावर्त्ती । तद्गुणं वक्तुमाह—लोके 'कीर्त्तिः' 'सुलब्धमस्य जन्म, निस्तीर्णरूपो भवोदधिरनेन' इत्यादिका 'से' तस्य 'जायते'

प्रादुर्भवति । तथा स एव भवति 'कृत्यानां' उचितानुष्ठानानां कलुषान्तःकरणवृत्तिभिरविनीतविनेयैरतिदूरमुत्सादितानां 'शरणं' आश्रयः, 'भूतानां' प्राणिनां 'जगती' पृथ्वी यथेति सूत्रार्थः ॥ ४५ ॥ ननु विनयः पूज्यप्रसादनफलः, ततोऽपि न किमवाप्यते ? इत्याह—

**पुज्जा जस्स पसीयंति, संबुद्धा पुव्वसंथुया । पसन्ना लाभइस्संति, विउलं अट्ठियं सुयं ॥ ४६ ॥**

**व्याख्या**—'पूज्याः' आचार्यादयः 'यस्य' शिक्षकस्य 'प्रसीदन्ति' सन्तुष्यन्ति 'संबुद्धाः' सम्यगवगततत्त्वाः, पूर्वं—वाचनादिकालादारतो न तु वाचनादिकाल एव, तत्कालविनयस्य कृतप्रतिक्रियारूपत्वेन तथाविधप्रसादाजनकत्वात्, संस्तुताः—विनयविषयत्वेन परिचिताः सम्यक् स्तुता वा सद्भूतगुणोत्कीर्त्तनादिभिः पूर्वसंस्तुताः, 'प्रसन्नाः' सप्रसादाः 'लाभयिष्यन्ति' प्रापयिष्यन्ति, 'विपुलं' विस्तीर्णं 'अर्थः'—मोक्षः स एव प्रयोजनमस्येत्यार्थिकं 'श्रुतं' अङ्गोपाङ्गादिभेदमागमम्, अनेन पूज्यप्रसादस्यानन्तरफलं श्रुतमुक्तं, व्यवहितफलं तु मुक्तिरिति सूत्रार्थः ॥ ४६ ॥ सम्प्रति श्रुतावाप्तौ तस्यैहिकं फलमाह—

**स पुज्जसत्थे सुविणीयसंसए, मणोरुई चिट्ठइ कम्मसंपया ।**
**तवोसमायारिसमाहिसंवुडे, महज्जुई पंचवयाइँ पालिया ॥ ४७ ॥**

**व्याख्या**—'स इति शिष्यः प्रसादितगुरोरधिगतश्रुतः 'पूज्यशास्त्रः' श्लाघ्यशास्त्रः विनीतस्य हि शास्त्रं विशेषेण सर्वत्र पूज्यते । सुष्ठु—अतिशयेन विनीतः—अपनीतः प्रसादितगुरुणैव शास्त्रपरमार्थसमर्पणेन संशयः—सूक्ष्मपदार्थविषयः संदेहो यस्य स सुविनीतसंशयः, मनसः—चेतसः प्रस्तावाद् गुरुसम्बन्धिनो रुचिः—अभिलापोऽस्मिन्निति मनोरुचिः 'तिष्ठति' आस्ते, विनयाधिगतशास्त्रो हि न कथञ्चिद् गुरूणामप्रीतिहेतुर्भवति । कया हेतुभूतया मनोरुचिः ? कर्म—क्रिया दशविधचक्रवालसामाचारीप्रभृतियतिकर्त्तव्यता तस्याः सपत् संपन्नता कर्मसंपन् तया । तपसः—अनशनादेः सामाचारी—समा-

चरणं समाधिः—चेतसः स्वास्थ्यं ताभ्यां संवृतः—निरुद्धाश्रवः तपःसामाचारीसमाधिसंवृतः । महती द्युतिः—तपस्तेजो यस्य स तथा भवतीति गम्यते । किं कृत्वा ? 'पंचव्रतानि' प्राणातिपातविरमणादीनि 'पालयित्वा' निरतिचारं संस्पृश्येति सूत्रार्थः ॥ ४७ ॥ पुनरस्यैवैहिकमामुष्मिकं च फलं विशेषेणाह—

**स देवगंधव्वमणुस्सपूइए, चइत्तु देहं मलपंकपुव्वयं ।**
**सिद्धे वा हवइ सासए, देवे वाऽप्परए महिड्ढिए त्ति बेमि ॥ ४८ ॥**

**व्याख्या**—'सः' तादृग्विनीतविनयः देवैः—वैमानिकज्योतिष्कैः गन्धर्वैश्च—गन्धर्वनिकायोपलक्षितैर्व्यन्तरभवनपतिभिः मनुष्यैः—महाराजादिभिः पूजितः—अर्चितो देवगन्धर्वमनुष्यपूजितः, 'त्यक्त्वा' अपहाय 'देहं' शरीरं "मलपंकपुव्वयं" ति मलपङ्कौ—रक्तशुक्रे तत्पूर्वकं—तत्प्रथमकारणम्, सिद्धो वा भवति 'शाश्वतः' सर्वकालावस्थायी, न तु परपरिकल्पिततीर्थनिकारतः पुनरिहागमवान् । सावशेषकर्मवांस्तु देवो वा भवति, 'अल्परजाः' प्रतनुबध्यमानकर्मा, महती—विकुर्वणादिरूपा तृणाग्रादपि हिरण्यकोटिरित्यादिरूपा वा ऋद्धिरस्य महर्द्धिकः । उक्तञ्च—"छउमत्थसंजयाणं, उववाउक्कोसओ उ सव्वट्ठे । सोहम्मम्मि जहन्नो अविराहियसंजयाणं तु ॥ १ ॥" 'इतिः' परिसमाप्तौ, ब्रवीमि गणधराद्युपदेशेन न तु स्वोत्प्रेक्षयेति ॥४८॥

## ॥ इत्युत्तराध्ययनटीकायां विनयश्रुताख्यं प्रथममध्ययनम् ॥

१ "छद्मस्थसंयताना उपपात उत्कृष्टतस्तु सर्वार्थे । सौधर्मे जघन्योऽविराधितसंयताना तु ॥ १ ॥"

# अथ द्वितीयं परीषहाध्ययनम् ।

व्याख्यातं विनयश्रुताख्यं प्रथममध्ययनम्, इदानीं द्वितीयमारभ्यते । अस्य चायमभिसम्बन्धः—इहानन्तराध्ययने विनयः सप्रपञ्च उक्तः, स च किं स्वस्थावस्थैरेव समाचरितव्यः ? उत परीषहमहासैन्यव्याकुलितमनोभिरपि ? उभयावस्थैरपीति ब्रूमः । अथ क एते परीषहाः ? इत्यनेन सम्बन्धेनाऽऽयातस्यास्य परीषहाऽध्ययनस्य व्याख्या प्रस्तूयते । तस्य चेदमादिसूत्रम्—

**सुयं मे आउसं! तेणं भगवया एवमक्खायं—इह खलु बावीसं परीसहा समणेणं भगवया महावीरेणं कासवेणं पवेइया, जे भिक्खू सोच्चा नच्चा जिच्चा अभिभूय भिक्खायरियाए परिव्वयंतो पुट्ठो नो विहण्णेज्जा ॥**

व्याख्या—'श्रुतम्' आकर्णितं 'मे' मया, 'आयुष्मन्!' इति शिष्यामन्त्रणम्, इदञ्च **सुधर्मस्वामी जम्बूस्वामिनं** प्रत्याह—'तेने'ति त्रिजगत्प्रतीतेन 'भगवता' अष्टमहाप्रातिहार्यरूपसमग्रैश्वर्यादियुक्तेन 'एवं' अमुना वक्ष्यमाणप्रकारेण 'आख्यात' सकलजन्तुभाषाभिव्याप्त्या कथितम् । उक्तञ्च—देवा दैवीं नरा नारीं, शवराश्चापि शावरीम् । तिर्यञ्चोऽपि हि तैरश्चीं, मेनिरे भगवद्गिरम् ॥ १ ॥ किमाख्यातम्? अत आह—'इहेव' प्रवचने खलुशब्दस्यावधारणार्थत्वाद् द्वाविंशतिः परीषहाः सन्तीति गम्यते । यदि वा "आवसंतेणं" ति मयेत्यस्य विशेषणम्, ततः 'आवसता' आगमोक्तमर्यादया वसता

गुरुकुलवास इति गम्यते, अनेन गुरुकुलवास एव सर्वथा वस्तव्यमित्याह । उक्तञ्च—"नाणस्स होइ भागी, थिरयरओ दंसणे चरित्ते य । धन्ना आवकहाए, गुरुकुलवासं न मुंचंति ॥ २ ॥" यदुक्तं 'भगवताऽऽख्यातं द्वाविंशतिः परीषहाः सन्ति' इति तत्र किं भगवताऽन्यतः पुरुषविशेषात् स्वतो वा अवगताः ? इत्याह—'श्रमणेन' तपस्विना 'भगवता' महावीरेण वर्द्धमानस्वामिना 'काश्यपेन' काश्यपगोत्रेण "पवेइय" त्ति सूत्रत्वात् प्रकर्षेणोत्पन्नकेवलज्ञानतया स्वयं साक्षात्कारित्वलक्षणेन ज्ञाताः । ते च कीदृशाः ? इत्याह—यान् परीषहान् 'भिक्षुः' साधुः 'श्रुत्वा' आकर्ण्य गुर्वन्तिक इति गम्यते, 'ज्ञात्वा' यथावदवबुध्य 'जित्वा' पुनः पुनरभ्यासेन परिचितान् विधाय 'अभिभूय' सर्वथा तत्सामर्थ्यमुपहत्य 'भिक्षाचर्यायां' भिक्षाटने 'परिव्रजन्' समन्ताद् विचरन् 'स्पृष्टः' आश्लिष्टः प्रक्रमात् परीषहैरेव, 'नो' नैव 'विनिहन्येत' संयमशरीरोपघातेन विनाशं प्राप्नुयात्, उदीर्यन्ते हि भिक्षाटने प्रायः परीषहा इति तद्ग्रहणम् । उक्तञ्च—"भिक्खायरियाए बावीसं परीसहा उदीरिज्जंति" इति । उक्त उद्देशः, पृच्छामाह—

**कयरे ते खलु बावीसं परीसहा समणेणं भगवया महावीरेणं कासवेणं पवेइया ।**
**जे भिक्खू सोच्चा णच्चा जिच्चा अभिभूय भिक्खायरियाए परिव्वयंतो पुट्ठो णो विहण्णेज्जा ? ॥**

व्याख्या—'कतरे' किंनामानः 'ते' अनन्तरसूत्रोद्दिष्टाः, 'खलुः' वाक्यालङ्कारे, शेषं प्राग्वदिति । निर्देशमाह—

**इमे खलु ते बावीसं परीसहा समणेणं भगवया महावीरेणं कासवेणं पवेइया ।**
**जे भिक्खू सोच्चा णच्चा जिच्चा अभिभूय भिक्खायरियाए परिव्वयंतो पुट्ठो णो विहण्णेज्जा ॥**

---

१ "ज्ञानस्य भवति भागी, स्थिरतरको दर्शने चारित्रे च । धन्या यावत्कथं, गुरुकुलवासं न मुञ्चन्ति ॥ २ ॥"

व्याख्या—'इमे' अनन्तरं वक्ष्यमाणत्वाद् हृदि परिवर्त्तमानतया प्रत्यक्षाः 'ते' इति ये त्वया पृष्टाः, शेषं प्राग्वत्।

**तंजहा—दिगिंछापरीसहे १ पिवासापरीसहे २ सीअपरीसहे ३ उसिणपरीसहे ४ दंसमसय-परीसहे ५ अचेलपरीसहे ६ अरइपरीसहे ७ इत्थीपरीसहे ८ चरिआपरीसहे ९ णिसीहिआपरी-सहे १० सिज्जापरीसहे ११ अक्कोसपरीसहे १२ वहपरीसहे १३ जायणापरीसहे १४ अलाभपरीसहे १५ रोगपरीसहे १६ तणफासपरीसहे १७ जल्लपरीसहे १८ सक्कारपुरक्कारपरीसहे १९ पण्णापरी-सहे २० अण्णाणपरीसहे २१ दंसणपरीसहे २२ ॥**

व्याख्या—'तद्यथा' इत्युपन्यासार्थः। दिगिंछा—देशीपरिभाषया बुभुक्षा, सैवात्यन्तव्याकुलताहेतुरप्यसंयमभीरुतया आहारपाकप्रासुकानेषणीयभुक्तिवाञ्छाविनिवर्त्तनेन परि—समन्तात् सह्यत इति परीषहो दिगिंछापरीषहः। पिपासा—तृष्णा सैव परीषहः पिपासापरीषहः, एवमन्यत्राऽपि। नवरं शीतं—शीतस्पर्शः, उष्णं—निदाघादितापात्मकं, दंशमशकाः—प्रतीताः यूकाद्युपलक्षणं चैते, अचेलं—चेलाभावो जिनकल्पिकादीनाम् अन्येषां तु भिन्नम् अल्पमूल्यञ्च चेलमप्यचेलम्, रतिः—संयमविषया धृतिः तद्विपरीता त्वरतिः, स्त्री—रामा सैव तद्गतरागहेतुगतिविभ्रमेङ्गिताकारविलोकनेऽपि तदभिलाषनिवर्त्तनेन परीषह्यमाणत्वात् परीषहः स्त्रीपरीषहः, चर्या—ग्रामानुग्रामविहरणात्मिका, नैषेधिकी—श्मशानादिका स्वाध्यायभूमिः, शय्या—उपाश्रयः, आक्रोशः—असत्यभाषणात्मकः, वधः—ताडनं, याचना—प्रार्थना, अलाभः—अभिलषितविषयाऽप्राप्तिः, रोगः— कुष्ठादिरूपः, तृणस्पर्शः—दर्भादिस्पर्शः, जल्लः—मलः, सत्कारः—वस्त्रादिभिः पूजनं पुरस्कारः—अभ्युत्थानाऽऽसनादिसंपादनम्, प्रज्ञा—स्वयंविमर्शपूर्वको वस्तुपरिच्छेदः, ज्ञानं—मत्यादि तदभावस्तु

२१ अज्ञानं, २२ दर्शनं—सम्यग्दर्शनं तदेव क्रियादिवादिनां विचित्रमतश्रवणेऽपि सम्यक् परिषह्यमाणं परीषहो दर्शनपरीषहः ॥ इत्थं नामतः परीषहानभिधाय तानेव स्वरूपतोऽभिधित्सुः सम्बन्धार्थत्वमाह—

**परीसहाणं पविभत्ती, कासवेणं पवेइया । तं भे उदाहरिस्सामि, आणुपुव्विं सुणेह मे ॥ १ ॥**

**व्याख्या**—'परीषहाणाम्' अनन्तरोक्तानां 'प्रविभक्तिः' पृथक्स्वरूपतारूपः प्रविभागः 'काश्यपेन' महावीरेण 'प्रवेदिता' प्ररूपिता, तां "भे" भवतां 'उदाहरिष्यामि' प्रतिपादयिष्यामि 'आनुपूर्व्या' क्रमेण शृणुत 'मे' मम प्रक्रमादुदाहरत इति सूत्रार्थः ॥ १ ॥ इह चाशेषपरीषहाणां क्षुत्परीषह एव दुःसहः, उक्तञ्च—"पंथसमा नत्थि जरा, दारिद्दसमो य परिभवो नत्थि । मरणसमं नत्थि भयं, खुहासमा वेयणा नत्थि ॥ १ ॥" इति आदितस्तमाह—

**दिगिंछापरिगए देहे, तवस्सी भिक्खू थामवं । ण छिंदे ण छिंदावए, न पए न पयावए ॥ २ ॥**

**व्याख्या**—'दिगिंछापरिगते' क्षुधाव्याप्ते 'देहे' शरीरे सति 'तपस्वी' विकृष्टाष्टमादितपोऽनुष्ठानवान् 'भिक्षुः' यतिः 'स्थामवान्' संयमे बलवान् न छिन्द्यात् स्वयं, न छेदयेदन्यैः फलादिकमिति शेषः; तथा न पचेत्, न चाऽन्यैः पाचयेत्, उपलक्षणत्वाच्च नान्यं छिन्दन्तं पचन्तं वाऽनुमन्येत, तत एव न स्वयं क्रीणीयाद् नाऽपि क्रापयेदन्यैः न चापरं क्रीणन्तमनुमन्येत, क्षुत्पीडितोऽपि न नवकोटिशुद्धिबाधां विधत्त इतिभाव इति सूत्रार्थः ॥ २ ॥ किञ्च—

**कालीपव्वंगसंकासे, किसे धमणिसंतए । मायन्ने असणपाणस्स, अदीणमणसो चरे ॥ ३ ॥**

१ पथः समा नास्ति जरा, दारिद्र्यसमश्च परिभवो नास्ति । मरणसमं नास्ति भयं, क्षुधासमा वेदना नास्ति ॥ १ ॥

व्याख्या—"कालीपव्वंगसंकासे" त्ति प्राकृतत्वात् 'कालीपर्वसंकाशाङ्गः' तपःकर्पिततया काकजङ्घापर्वसदृशबाहुजङ्घाद्यङ्गः, अत एव 'कृशः' कृशतनुः, 'धमनीसन्ततः' शिराव्याप्तः, एवंविधावस्थोऽपि 'मात्रज्ञः' परिमाणवेदी नातिलौल्यादधिकोपभोगी, कस्य? इति आह—अशनम्–ओदनादि पानं–सौवीरादि तयोः समाहारेऽशनपानं तस्य 'अदीनमनाः' अनाकुलचित्तः 'चरेत्' संयममार्गे यायात्। इदमुक्तं भवति—अतिबाधितोऽपि क्षुधा नवकोटीशुद्धमप्याहारमवाप्य न लौल्यतोऽतिमात्रोपभोजी तदप्राप्तौ वा न दैन्यवानित्येवं क्षुत्परीषहः सोढो भवतीति सूत्रार्थः ॥३॥

उदाहरणमत्र—तेणं कालेणं तेणं समएणं उज्जेणीए नयरीए हत्थिमित्तो नाम गाहावई। तस्सऽच्चंतवल्लहा भज्जा अयंडे चेव कालं गया। तओ सो 'अहो! असारया संसारस्स, अणिच्चया जीवलोयस्स, खणभंगुरत्तणं पियसंजोगस्स, धम्मो चेवेत्थ सरणं' ति वेरग्गमुवगओ हत्थिभूइनामेण दारगेण सह पव्वइओ। ते य अन्नया कयाइ उज्जेणीओ साहूहिं समं भोगकडं नयरं पत्थिया। अडविमज्झे य वच्चंतो सो खंतो पायतले विद्धो खयकाए, वेयणाए न सक्केइ पयं पि गंतुं, भणिया य तेण साहुणो—वच्चह तुब्भे, नित्थरह कंतारं, अहयं महादुक्खेण अभिभूओ न तरामि गंतुं, पच्चक्खामि एत्थेव भत्तं। साहूहिं भणियं—वहिस्सामो वारएण तुमं अम्हे, मा करेसु विमायं ति, गिलाणवेयावच्चमेवेत्थ पवयणे सारं, "जो गिलाणं जाणइ सो मं दंसणेणं पडिवज्जइ" त्ति भगवंतवयणाओ। तेण भणियं—'एवमेयं, तहावि कालपत्तो चेव अहं, ता मा तुब्भे निरत्थयं मम वहणेण परिकिलिस्सह, मा मगरसतावगुद्यहह' त्ति भणिऊण खामिऊण य साहुणो कयमणसणं। लग्गिऊण निब्बंधेण न जुत्तमेत्थ बहुसावगाऽऽनद्दयपउरे अरन्ने चिरमवत्थाणं ति पेसिया सव्वे साहुणो। ठिओ अप्पणा एगाए गिरिकंदराए। पट्ठिया साहुणो। खुड्डओ संतयमोहेण निच्छइ गंतुं। सो तेहिं बला नीओ। जाहे दूरं गओ ताहे वीसंभेऊण साहुणो सव्वे

पच्चोनियत्तो आगओ खंतयसगासं । खंतगेण भणियं—हा ! न सोहणं कयं जं तुममेत्थमागओ, मरिहिसि तुमं पि छुहाइपरवसो । खुड्डगेण भणियं—जं होइ तं होउ, मए तुह सयासे चिट्ठियव्वं । सो वि थेरो तद्दिवसं चेव वेयणट्टो पंचनमोक्कारपरो समाहीए कालगओ । खुड्डओ न चेव जाणइ कालगयं । सो देवलोए उववन्नो । पच्छा तेण ओही पउत्ता—किं मया दत्तं वा चिन्नं वा तवाइ ? जाव सरीरं पेच्छइ खुड्डयं च । सो खुड्डगस्स अणुकंपाए तं चेव सरीरमणुपविसित्ता खुड्डगेण सह उल्लवेइ, भणियं च—पुत्त ! वच्च भिक्खाए । सो भणइ—कहिं ? । तेण भन्नइ—एएसु धवत्तग्गोहाइपायवेसु तन्निवासिणो जणा तव भिक्खं दाहिंति । 'तह' त्ति भणिउं सो गओ धम्मलाभेइ रुक्खहेट्ठेसु । तओ सालंकारो हत्थो निग्गच्छिउं भिक्खं देइ । एवं दिवसे दिवसे भिक्खं गिण्हंतो अच्छिओ, जाव ते साहुणो तम्मि देसे दुब्भिक्खे जाए पुणो वि उज्जेणिदेसमागच्छंता तेणेव मग्गेण आगया बीए संवच्छरे, जाव ते तं खुड्डग पेच्छंति । पुच्छिओ वत्तं भणइ, खंतो वि अच्छइ । कहिओ य भिक्खालाभो, गया साहुणो, जाव सुक्कं सरीरगं पेच्छंति, नायं—देवेण होइऊण अणुकंपा कयल्लिया होहि त्ति—खंतेण अहियासिओ परीसहो न खुड्डेण । अहवा खुड्डगेण वि अहियासिओ, जओ न तस्स एवं भावो—जहा हं न लहिस्सामि भिक्खं, तओ फलाइं गिण्हिस्सं । पच्छा सो साहूहिं खुड्डओ नीओ । यथा च ताभ्यामयं परीषहः सोढस्तथा साम्प्रतं मुनिभिरपि सोढव्य इति तात्पर्यार्थः । उक्तः क्षुत्परीषहः ॥ एनं च विषहमानस्य न्यूनकुक्षितया एषणीयाऽऽहारार्थं पर्यटतः श्रमादेः पिपासा स्यात् सा च सम्यक् सोढव्येति तत्परीषहमाह—

**तओ पुट्ठो पिवासाए, दोगुंछी लज्जसंजए । सीओदगं न सेवेज्जा, वियडस्सेसणं चरे ॥ ४ ॥**

**व्याख्या**—'ततः' क्षुत्परीषहात् 'स्पृष्टः' अभिद्रुतः पिपासया 'जुगुप्सी' सामर्थ्यादनाचारस्य जुगुप्सकः लज्जायां—संयमे सम्यग् यतते लज्जासंयतः 'शीतोदकं' स्वरूपस्थजलं 'न सेवेत' न पानादिना भजेत, किन्तु "वियडस्स" त्ति विकृतस्य

प्रतिना विकारं प्रापितस्य 'एषणाम्' एषणासमितिं 'चरेत्' पुनः पुनः सेवेत । किमुक्तं भवति ?—एकवारमेषणाया अशुद्धावपि न पिपासातिरेकतोऽनेषणीयं गृह्णीयात्तामुल्लङ्घयेदिति सूत्रार्थः ॥ ४ ॥ किञ्च—

**छिन्नावाएसु पंथेसु, आउरे सुपिवासिए । परिसुक्कमुहदीणे, तं तितिक्खे परीसहं ॥ ५ ॥**

व्याख्या—'छिन्नापातेषु' अपगतजनसञ्चारेषु 'पथिषु' मार्गेषु गच्छन्निति गम्यते, 'आतुरः' अत्यन्ताकुलतनुः, किमिति ? यतः सुष्ठु—अतिशयेन पिपासितः—तृषितः सुपिपासितः, परिशुष्कमुखः—विगतनिष्ठीवनतयाऽनार्द्रवदनः स चासावदीनश्च परिशुष्कमुखादीनः, 'तं' तृट्परीषहं 'तितिक्षेत' सहेत । अयमर्थः—विविक्तदेशस्थोऽप्यत्यन्तपिपासातोऽस्वास्थ्यमुपगतोऽपि च नोक्तविधिमुल्लङ्घयेत् ततः पिपासापरीषहोऽध्यासितो भवतीति सूत्रार्थः ॥ ५ ॥

दृष्टान्तमाह—उज्जेणी नयरी, तत्थ **धणमित्तो** नाम वाणियओ, तस्स पुत्तो **धणसम्मो** नाम । सो **धणमित्तो** पुत्तेण सह पव्वइओ । अन्नया य ते साहू विहरंता मज्झण्हसमए **एलगच्छपुरपहे** पट्ठिया । सो वि खुड्डओ तिसाए अभिभूओ भणिय भणियमेइ । सो वि से खंतओ सिणेहाणुरागेण पच्छओ एइ । साहुणो वि पुरओ वच्चंति । अन्तरा य नई समावडिया । खंतएण भणियं—एहि पुत्त !, पियसु पाणियं, नित्थरेसु आवइं, पच्छा आलोएज्जासि । सो न इच्छइ । खंतो नई उत्तिन्नो, चिंतेइ य—'ओसरामि मणागं जावेस खुड्डओ पाणियं पियइ, मा ममाऽऽसंकाए न पाहि' त्ति एगते पडिच्छइ, जाव खुड्डो पत्तो नईं । दढधयाए सत्तसारयाए ण पीयं । अन्ने भणंति—'अईव वाहिओ हं तं पियामि पाणियं, पच्छा गुरुमूले पायच्छित्तं पडिवज्जिस्सामि' त्ति उक्खित्तो जलंजली । अह से चिंता जाया—कहमेए जलगए जीवे पियामि ? । जओ—एगम्मि उदगबिंदुम्मि, जे जीवा जिणवरेहिं पन्नत्ता । ते पारेवयमेत्ता,

1 एगम्मि उदगबिन्दू, जे जीवा जिनवरैः प्रज्ञप्ताः । ते पारापतमात्राः, जम्बूद्वीपे न मायेयु ॥ १ ॥

पच्चोनियत्तो आगओ खंतयसगासं। खंतगेण भणियं—हा ! न सोहणं कयं जं तुममेत्थमागओ, मरिहिसि तुमं पि छुहाइपरव्वसो। खुड्डगेण भणियं—जं होइ तं होउ, मए तुह सयासे चिट्ठियव्वं। सो वि थेरो तद्दिवसं चेव वेयणट्टो पंचनमोक्कारपरो ससमाहीए कालगओ। खुड्डओ न चेव जाणइ कालगयं। सो देवलोए उववन्नो। पच्छा तेण ओही पउत्ता—किं मया दत्तं वा चिन्नं वा तवाइ ? जाव सरीरं पेच्छइ खुड्डयं च। सो खुड्डगस्स अणुकंपाए तं चेव सरीरमणुपविसित्ता खुड्डगेण सह उल्लवेइ, भणियं च—पुत्त ! वच्च भिक्खाए। सो भणइ—कहिं ?। तेण भन्नइ—एएसु धवनग्गोहाइपायवेसु तन्निवासिणो जणा तव भिक्खं दाहिंति। 'तह' त्ति भणिउं सो गओ धम्मलाभेइ रुक्खहेट्ठेसु। तओ सालंकारो हत्थो निग्गच्छिउं भिक्खं देइ। एवं दिवसे दिवसे भिक्खं गिण्हंतो अच्छिओ, जाव ते साहुणो तम्मि देसे दुब्भिक्खे जाए पुणो वि उज्जेणिदेसमागच्छंता तेणेव मग्गेण आगया बीए संवच्छरे, जाव ते तं खुड्डग पेच्छंति। पुच्छिओ वत्तं भणइ, खंतो वि अच्छइ। कहिओ य भिक्खालाभो, गया साहुणो, जाव सुक्कं सरीरगं पेच्छंति, नायं—देवेण होइऊण अणुकंपा कयल्लिया होहि त्ति—खंतेण अहियासिओ परीसहो न खुड्डेण। अहवा खुड्डगेण वि अहियासिओ, जओ न तस्स एवं भावो—जहा हं न लहिस्सामि भिक्खं, तओ फलाइं गिण्हिस्सं। पच्छा सो साहूहिं खुड्डओ नीओ। यथा च ताभ्यामयं परीषहः सोढस्तथा साम्प्रतं मुनिभिरपि सोढव्य इति तात्पर्यार्थः। उक्तः क्षुत्परीषहः ॥ एनं च विषहमानस्य न्यूनकुक्षितया एषणीयाऽऽहारार्थं पर्यटतः श्रमादेः पिपासा स्यात् सा च सम्यक् सोढव्येति तत्परीषहमाह—

**तओ पुट्ठो पिवासाए, दोगुंछी लज्जसंजए। सीओदगं न सेवेज्जा, वियडस्सेसणं चरे ॥ ४ ॥**

**व्याख्या**—'ततः' क्षुत्परीषहात् 'स्पृष्टः' अभिद्रुतः पिपासया 'जुगुप्सी' सामर्थ्यादनाचारस्य जुगुप्सकः लज्जायां—संयमे सम्यग् यतते लज्जासंयतः 'शीतोदकं' स्वरूपस्थजलं 'न सेवेत' न पानादिना भजेत, किन्तु "वियडस्स" त्ति विकृतस्य

मत्पानेना विकारं प्रापितस्य 'एषणाम्' एषणासमितिं 'चरेत्' पुनः पुनः सेवेत । किमुक्तं भवति ?—एकवारमेषणायां
अशुद्धावपि न पिपासातिरेकतोऽनेषणीयं गृह्णीयादुल्लङ्घयेदिति सूत्रार्थः ॥ ४ ॥ किञ्च—

**छिन्नावाएसु पंथेसु, आउरे सुपिवासिए । परिसुक्कमुहद्दीणे, तं तितिक्खे परीसहं ॥ ५ ॥**

व्याख्या—'छिन्नापातेषु' अपगतजनसञ्चारेषु 'पथिषु' मार्गेषु गच्छन्निति गम्यते, 'आतुरः' अत्यन्ताकुलतनुः, किमि-
ति ? यतः सुष्ठु—अतिशयेन पिपासितः—तृषितः सुपिपासितः, परिशुष्कमुखः—विगतनिष्ठीवनतयाऽनार्द्रवदनः स चासाव-
दीनश्च परिशुष्कमुखादीनः, 'तं' तृट्परीषहं 'तितिक्षेत' सहेत । अयमर्थः—विविक्तदेशस्थोऽप्यत्यन्तपिपासातोऽस्वास्थ्य-
मुपगतोऽपि न नोक्तविधिमुल्लङ्घयेत् ततः पिपासापरीषहोऽध्यासितो भवतीति सूत्रार्थः ॥ ५ ॥

दृष्टान्तमाह—उज्जेणी नयरी, तत्थ धणमित्तो नाम वाणियओ, तस्स पुत्तो धणसम्मो नाम । सो धणमित्तो
पुत्तेण सह पव्वइओ । अन्नया य ते साहू विहरंता मज्झण्हसमए एलगच्छपुरपहे पट्ठिया । सो वि खुड्डओ तिसाए
अभिभूओ भणियं भणियमेइ । सो वि से खंतओ सिणेहाणुरागेण पच्छओ एइ । साहुणो वि पुरओ वच्चंति । अन्तरा
य नई समावडिया । खंतएण भणियं—एहि पुत्त !, पियसु पाणियं, नित्थरेसु आवइं, पच्छा आलोएज्जासि । सो न
इच्छइ । खंतो नई उत्तिन्नो, चिंतेइ य—'ओसरामि मणागं जावेस खुड्डओ पाणियं पियइ, मा ममाऽऽसकाए न पाहि'
त्ति एगते पडिच्छइ, जाव खुड्डो पत्तो नइं । दढधयाए सत्तसारयाए ण पीयं । अन्ने भणंति—'अईव वाहिओ हं तं
पियामि पाणियं, पच्छा गुरुमूले पायच्छित्तं पडिवज्जिस्सामि' त्ति उक्खित्तो जलंजली । अह से चिंता जाया—
कहमेए जीवे पियामि ? । जओ—एकम्मि उदगबिंदुम्मि, जे जीवा जिणवरेहिं पन्नत्ता । ते पारेवयमेत्ता,

१ एकस्मिन्नुदकबिन्दौ, ये जीवा जिनवरैः प्रज्ञप्ताः । ते पारापतमात्राः, जम्बूद्वीपे न मायेयुः ॥ १ ॥

जंबुद्दीवे ण माएज्जा ॥ १ ॥ जत्थ[1] जलं तत्थ वणं, जत्थ वणं तत्थ निच्छिओ तेऊ । तेऊ वाउसहगओ, तसा य पच्चक्खया चेव ॥ २ ॥ तो[2] हंतूण परप्पाणे, अप्पाणं जो करेइ सप्पाणं । अप्पाणं दिवसाणं, कएण नासेइ सप्पाणं ॥ ३ ॥ अइसंविग्गेण न पीयं, उत्तिन्नो नइं, आसाए छिन्नाए नमोक्कारं झायंतो सुहपरिणामो कालगओ देवेसु उववन्नो । ओही पउत्तो जाव खुड्डुगसरीरं पासइ, तहिमणुपविट्ठो खंतमणुगच्छइ । खंतो वि 'एइ' त्ति पत्थिओ । पच्छा देवेण अणुकंपाए साहूण गोकुलाणि विउव्वियाणि । साहू वि तासु वइगासु तक्काईणि गिण्हंति । एवं वइयापरंपरएण जणवयं पत्ता । पच्छिमाए वइयाए देवेण विंटिया पम्हुसाविया[3] जाणावणनिमित्तं । एगो य साहू नियत्तो तयवत्थं पेच्छइ विंटियं, नत्थि वइया । आगंतूण साहियं तेण । पच्छा नायं तेहिं 'सादिव्वं' ति, एत्थंतरे देवेण साहू वंदिया, खंतो न वंदिओ । तेहिं पुच्छिओ—किमेयं न वंदसि ? । तओ सव्वं परिकहेइ नियवइयरं, भणइ य—अहं एएण परिचत्तो, वयलोवेण दोग्गईए भायणं कओ आसि 'तुममेयं पाणियं पियाहि' त्ति जंपंतेण । जइ तं पाणियं पियंतो तो संसारं भमंतो । देवो पडिगओ । एवमहियासियव्वं ॥ उक्तः पिपासापरीषहः । क्षुत्पिपासासहनकदर्थिततनोर्नितरां शीतकाले शीतसंभव इति तत्परीषहमाह—

**चरंतं विरयं लूहं, सीतं फुसइ एगया । नाइवेलं मुणी गच्छे, सोचा णं जिणसासणं ॥ ६ ॥**

व्याख्या—'चरन्तं' ग्रामानुग्रामं मुक्तिपथे वा व्रजन्तं 'विरतं' सावद्ययोगाद् निवृत्तं "लूहं" ति स्नानस्निग्धभोजनादि-

---

१ यत्र जलं तत्र वन, यत्र वनं तत्र निश्चितं तेजः । तेजो वायुसहगतं, त्रसाश्च प्रत्यक्षका एव ॥ २ ॥
२ तस्माद्धत्वा परप्राणान्, आत्मानं यः करोति सप्राणम् । अल्पानां दिवसानां, कृते नाशयति स्वात्मानम् ॥ ३ ॥
३ विसारिता । ४ देवका अनुग्रह—सान्निध्यम् ।

परिहरेण रूक्षं 'शीतं' हिमं 'स्पृशति' अभिद्रवति 'एकदा' शीतकालादौ । ततः किम्? 'न' नैव 'अतिवेलं' वेलां—स्वाध्यायादिमर्यादात्मिकामतिक्रम्य 'शीतेनाभिभूतोऽहम्' इति 'मुनिः' साधुः 'गच्छेत्' स्थानान्तरमभिसर्पेत्, श्रुत्वा "णमि"ति वाक्यालङ्कारे 'जिनशासनं' जिनागमं 'अन्यो जीवोऽन्यश्च देहः, तीव्रतराश्च नरकादिषु शीतवेदनाः प्राणिभिरनुभूतपूर्वाः' इत्यादिकमिति सूत्रार्थः ॥ ६ ॥ अन्यच्च—

**न मे निवारणं अत्थि, छवित्ताणं न विज्जइ । अहं तु अग्गिं सेवामि, इइ भिक्खू न चिंतए ॥७॥**

व्याख्या—न 'मे' मम 'निवारणं' शीतवातादेर्निवारकं सौधादि 'अस्ति' विद्यते, "छवित्ताणं" त्वक्त्राणं वस्त्रकम्बलादि न विद्यते, अतोऽहं 'तुः' पुनरर्थः, तद्भावना चेयं—येषां निवारणं छवित्राणं वा समस्ति ते किमित्यभिमन्येयुः? अहं तु तदभावादत्राणस्तत् किमन्यत् करोमि? इत्यग्निं सेवे इति भिक्षुः 'न चिन्तयेत्' न ध्यायेत् । चिन्तानिषेधेन सेवनं दूरापास्तमिति सूत्रार्थः ॥ ७ ॥

उदाहरणमाह—**रायगिहे** नयरे चत्तारि वयंसा वाणियगा सहवड्डिया । ते **भद्दबाहुस्स** अंतिए धम्मं सुच्चा पव्वइया । ते सुय बहुयं अहिज्जित्ता दढसत्ता एगल्लविहारपडिमं पडिवन्ना । ते य समावत्तीए विहरंता पुणो वि **रायगिहं** नयरं संपत्ता । हेमंतो य तया वट्टइ । जो य केरिसो?—वाइंति दंतवीणं, दरिद्दिणो जत्थ कंपिरसरीरा । सव्वसिलीभूयजला, जायंति सरा वि रयणीसु ॥ १ ॥ जत्थ अइसीयमारुयनिहया सउणाइणो विणस्संति । पुप्फफलदलसमिद्धा, सुक्कंति दुमा वि सहस त्ति ॥ २ ॥ ते य भिक्खायरियं काउं तइयाए पोरिसीए पडिनियत्ता । तेसिं च **वेभारगिरिं**तेण गंतव्वं । तत्थेगस्स गिरिगुहादारे

---

१ वादयन्ति दन्तवीणां, दरिद्रिणो यत्र कम्प्रशरीराः । सर्वशिलीभूतजलानि, जायन्ते सरांस्यपि रजनीषु ॥ १ ॥

२ यत्रातिशीतमारुतनिहताः शकुनादिका विनश्यन्ति । पुष्पफलदलसमृद्धाः, शुष्यन्ति द्रुमा अपि सहसेति ॥ २ ॥

चरिमा पोरिसी ओगाढा । सो तत्थेव ठिओ । बीयस्स णयरुज्जाणे, तइयस्स उज्जाणसमीवे, चउत्थस्स नयरब्भासे चेव, ते तत्थेव ठिया । तेसिं कप्पो एस—जत्थ चरिमा पोरिसी ओगाहइ तत्थेव पडिमाए ठाइयव्वं । तत्थ जो गिरिगुहब्भासे तस्स निरायं सीयं । सो गिरिमारुएण वेविरसरीरो वि मंदरो व्व मणसा निप्पकंपो सम्मं सहंतो रयणीए पढमे चेव जामे कालगओ । उज्जाणत्थो वीए, उज्जाणसमीवत्थो तइए, जो नगरब्भासे तस्स नगरुण्हाए न तहा सीयं, तेण स चउत्थे जामे कालगओ । सव्वे वि देवलोगे उववन्ना । एवमन्नेहिं वि सम्ममहियासेयव्वं, जहा तेहिं अहियासियं ॥ इदानीं शीतविपक्षमुष्णमिति यदि वा शीतकाले शीतं तदनन्तरं ग्रीष्मे उष्णमिति तत्परीषहमाह—

**उसिणप्परियावेणं, परिदाहेण तज्जिए । घिंसु वा परितावेणं, सायं नो परिदेवए ॥ ८ ॥**

**व्याख्या**—उष्णम्—उष्णस्पर्शवद् भूरेणुशिलादि तत्परितापेन तथा 'परिदाहेन' बहिःस्वेदमलाभ्यां वह्निना वा अन्तश्च तृष्णाजनितदाघस्वरूपेण 'तर्जितः' अत्यन्तपीडितः तथा ग्रीष्मे वाशब्दात् शरदि वा 'परितापेन' रविकिरणादिजनितेन तर्जित इति योज्यम्, 'सातं' सुखं प्रतीति शेषः, 'नो परिदेवेत्' 'हा ! कदा शीतकालः शीतांशुकरकलापादयो वा मम सुखोत्पादकाः संपत्स्यन्ते ?' इति न प्रलपेदिति सूत्रार्थः ॥ ८ ॥ उपदेशान्तरमाह—

**उण्हाहितत्तो मेहावी, सिणाणं नो वि पत्थए । गायं नो परिसिंचिज्जा, ण वीएज्जा य अप्पयं ॥९॥**

**व्याख्या**—उष्णाभितप्तः 'मेधावी' मर्यादावर्त्ती 'स्नानं' जलाभिषेकं "नो वि पत्थए" त्ति 'नो' नैव 'प्रार्थयेदपि' अभिलषेदपि । किं पुनः कुर्यात् ?, अपेः भिन्नक्रमत्वात् तथा 'गात्रं' देहं 'नो परिषिञ्चेत्' न सूक्ष्मोदकविन्दुभिरार्द्रीकुर्यात्, न वीजयेच्च तालवृन्तादिना, अल्पकमपि किं पुनर्बहु ? स्वार्थे क इति सूत्रार्थः ॥ ९ ॥

उदाहरणमाह—तगरा नाम नयरी, तत्थ अरहमित्तो नामाऽऽयरिओ । तस्स समीवे दत्तो नाम वाणियगो भद्दाए भारियाए पुत्तेण य अरहन्नएण सद्धिं पव्वइओ । सो तं खुड्डगं पुत्तनेहेण न कयाइ भिक्खाए हिंडावेइ । पडमालियाईहिं किमिच्छिएण पोसेइ । साहूणं अप्पत्तियं—किमेस एवं पोसिज्जइ ?, किं समत्थो वि भिक्खं न हिंडइ ? । तहा वि दक्खिन्नेण न तरंति किंचि भणिउं । अन्नया खंतो भवियव्वयावसेण कालगओ । अद्धिइं पगओ नुइओ साहूहिं दो तिन्नि दिवसाइं दाउं भिक्खस्स ओयारिओ । तया य खरो निदाहो वट्टइ । सो सुकुमालसरीरो उवरिं उण्हेण डज्झंतो पस्सेयतण्हाभिभूओ घरच्छायाए वीसमंतो दिट्ठो पउत्थवइयाए धणड्ढवणियभारियाए । 'उरालसुकुमालसरीरो' त्ति काउं तीसे तहिं अज्झोववाओ जाओ । चेडीमुहेण सद्दाविओ आगओ सो पुच्छिओ तीए—किं मग्गसि ? । तेण भणियं—भिक्खं, तो तीए चिंतियं—जं इच्छसि घेत्तुं जे, पुव्विं तं आमिसेण गिण्हाहि । आमिसपासनिवद्धो, काही कज्जमकज्जं या ॥ १ ॥ इइ परिभावितीए दिन्ना पहाणमोयगा पज्जत्तीए । अवलोइओ ससणिद्धाए दिट्ठीए भणिओ य—कीस तुमे दुक्करं वयं गहियं ? । भणइ—सुहनिमित्तं । सा भणइ—ता मए भावाणुरत्ताए समं भोगे भुंजाहि, अलं ते दरिद्ददुब्भगकढिणसरीरजणोचियाए इमाए कट्ठकिरियाए, पच्छिमवए करेज्जासु पव्वज्जं । सो एवमुवसग्गिज्जंतो उण्हेण तज्जिओ पडिभग्गो । पडिवन्नं तव्वयणं । उक्तञ्च—दृष्टाश्चित्रेऽपि चेतांसि, हरन्ति हरिणीदृशः । किं पुनस्ताः स्मितस्मेरविभ्रमभ्रमितेक्षणाः ? ॥ २ ॥ भोगं भुंजंतो चिट्ठइ । साहूहिं सव्वत्थ सव्वायरेण गविट्ठो न दिट्ठो 'अप्पसागारियं पविट्ठो' त्ति । माया वि पुत्तपउत्तिं अयाणंती अइमोहेण उम्मत्तिया जाया । अरहन्नयं विलवंती चेइवंदवेढिया उवहसिज्जमाणा कुंटगलोएण अणुकंपिज्जंती धम्मियजणेण भमइ तियचउक्कचच्चरादिसु । जं जं पासइ तं तं भणइ—दिट्ठो ते कत्थइ

1 यदिच्छसि ग्रहीतुं, पूर्वं तद् आमिषेण गृहाण । आमिषपाशनिबद्धः, करिष्यति कार्यमकार्यं वा ॥ १ ॥ 2 आहारफलादिभोज्यवस्तुना ।

अरहन्नओ[1] । एवं विलवंती रुयंती जं किंचि दट्ठुं 'एस **अरहन्नउ**' त्ति हरिसमुव्वहंती दिट्ठा अन्नया तेण ओलोयणगएण **अरहन्नएण** पच्चभिन्नाया । तयवत्थं पेच्छिऊण संवेगमुवगओ । चिंतियं च णेण—अहो मे अहन्नया ! अहो मे अकज्जकारित्तणं ! जं एरिसम्मि वसणे पाडिया जणणी, वयलोवेणं संसारभायणं कओ अप्पा । **किञ्च**—हियंए जिणाण आणा, चरियं मम एरिसं अहन्नस्स । एयं आलप्पालं, अव्वो दूरं विसंवयइ ॥ ३ ॥ तहेव ओयरित्ता पाएसु पडिओ, बाहोल्ललोयणेणं सगग्गयक्खरं भणियं—**अंबे !** एस अहं कुलफुंसणो मायाए उव्वेयकारओ दुप्पुत्तो तुह **अरहन्नगो** त्ति । पेच्छिऊण जाया समासत्थचित्ता । पुच्छिओ वइयरं । निवेइओ तेण जहट्ठिओ । तीए भणियं—पुत्त ! पव्वयाहि पुणो, मा खंडियवओ संसारं भमिहिसि । सो भणइ—**अंब !** पावकम्मो अहं न तरामि संजमं काउं, जइ परमणसणं करेमि । ताए भन्नइ—एवं करेहि । मा असंजओ होउ तुच्छविसयसुहहेउमणंतं दुक्खसंघायमावज्जसु । **किञ्च**—वरं प्रवेष्टुं ज्वलितं हुताशनं, न चापि भग्नं चिरसंचितं व्रतम् । वरं हि मृत्युः सुविशुद्धकर्मणो, न चापि शीलस्खलितस्य जीवितम् ॥ ३ ॥ पच्छा सो सव्वं सावज्जं जोगं पच्चक्खित्ता कयदुक्कडगरिहो खामियसयलसत्तो कयचउसरणगमणो वोसिरियसव्वसंगो पुणो पुणो कयपंचनमोक्कारो काऊणमणसणं सुहज्झाणोवगओ तत्तसिलाए पाओवगमणेणं ठिओ मुहुत्तेण सुकुमालसरीरो नवणीयपिंडो व्व उण्हेण विलीणो गओ सुरलोयं । पुव्विं तेण नाहियासियं । पच्छा अहियासियं । एवमन्नेहिं अहियासियव्वं ॥ उष्णं ग्रीष्मे तदनन्तरं वर्षा, तत्र च दंशमशकसंभव इति तत्परीषहमाह—

**पुट्ठो य दंसमसएहिं, समरेव महामुणी । नागो संगामसीसे वा, सूरो अभिहणे परं ॥ १० ॥**

**व्याख्या**—'स्पृष्टः' अभिद्रुतः चः पूरणे, 'दंशमशकैः' उपलक्षणत्वाद् यूकादिभिश्च, "समरेव" त्ति सम एव उपकार्य-

1 हृदये जिनानामाज्ञा, चरित्रं ममेदृशमधन्यस्य । एतदालजालमहो दूरं विसंवदते ॥ २ ॥

प्राकृतलक्षणत्वाद् विसर्जनीयस्य रेफः, महामुनिः । किम्? इत्याह—'नाग इव' करीव वाशब्दस्य
पकारिषु तुल्यचित्त एव 'अभिहन्यात्' जयेत् 'परं' शत्रुम् । अयमभि-
प्रायार्थस्तात्र सम्बन्धात, 'संग्रामशिरसि' रणमस्तके 'शूरः' पराक्रमवान् 'अभिहन्यात्' जयेत् 'परं' शत्रुम् । अयमभि-
प्रायः—यथा शूरः करी शरैस्तुद्यमानोऽपि तदगणनया रणशिरसि शत्रुं जयति एवमयमपि दंशादिभिरुपद्रूयमाणोऽपि
भावशत्रुं क्रोधादिकं जयेदिति सूत्रार्थः ॥ १० ॥ कथं जयेद् भावशत्रुम्? इत्याह—

**न संतसे न वारिज्जा, मणं पि ण पओसए । उवेहे न हणे पाणे, भुंजंते मंस-सोणियं ॥ ११ ॥**

न 'वारयेत्' निषेधेत दंशादीनेव तुदतो मा भूदन्तराय
व्याख्या—'न संत्रसेत्' नोद्विजेद् दंशादिभ्य इति गम्यते । न 'वारयेत्' निषेधेत दंशादीनेव तुदतो मा भूदन्तराय
इति । 'मनः' चित्तं तदपि आस्तां वचनादि 'न प्रदूषयेत्' न प्रदुष्टं कुर्यात् किन्तु "उवेहे"त्ति 'उपेक्षेत' औदासीन्येन पश्येद्
अत एव न हन्यात् 'प्राणान्' प्राणिनः 'भुञ्जानान्' आहारयतो मांसशोणितम् । अपि चासंज्ञिन एते आहारार्थिनश्च
भोज्यमेतेषां मच्छरीरं बहुसाधारणं यदि भक्षयन्ति किमत्र प्रद्वेषेण? इति विचिन्तयेदिति सूत्रार्थः ॥ ११ ॥

उदाहरणञ्च—चंपाए नयरीए जियसत्तुस्स रन्नो पुत्तो समणभद्दो जुवराया धम्मघोसस्स अंतिए धम्मं सोच्चा
निव्विन्नकामभोगो पव्वइओ । अहिज्जियसुत्तो दढसत्तयाए एगल्लविहारपडिमं पडिवन्नो । अन्नया हिट्ठाभूमीए विहरंतो
सरयकाले अडवीए पडिम ठिओ रत्तीए मसएहिं खज्जइ । अउला वेयणा जाया । सो ते ण पमज्जइ चिंतेइ य—केवइ-
यमेयं दुक्खं?, पत्तोऽणंतगुणं नरएसु होज्जा । तथाहि—शृगालवृकरूपैश्च, चित्रकाऽऽकारधारकैः । आक्षेपत्रोटित-
स्नायुर्भज्यन्ते रुधिरोक्षिताः ॥ १ ॥ श्वरूपैः कोलरूपैश्च, नारका भयविह्वलाः । खण्डशः प्रविलुप्यन्ते, क्रन्दन्तः शबला-
दिभिः ॥ २ ॥ काकगृध्रादिरूपैश्च, लोहतुण्डैर्बलान्वितैः । विनिकृष्टाक्षिजिह्वान्त्रा, विचेष्टन्ते महीतले ॥ ३ ॥ प्राणोपक्रमणै-

घोरैर्दुःखैरेवंविधैरपि । आयुष्यक्षपिते नैव, म्रियन्ते दुःखभागिनः ॥ ४ ॥ तथा—अन्नं[1] इमं सरीरं, अन्नो जीवो त्ति एव कयबुद्धी । दुक्खकरं जीव ! तुमं, छिंद ममत्तं सरीरम्मि ॥ ५ ॥ इमं भाविंतो सम्मं सहइ त्ति पीयसोणिओ रत्तिं चेव कालगओ । एवमहियासियव्वं ॥ इति दंशमशकपरीषहः ॥ अधुनाऽचेलः सन् तुद्यमानो दंशमशकैर्वस्त्राद्यन्वेषणपरो न स्यादित्यचेलपरीषहमाह—

**परिजुन्नेहिं वत्थेहिं, होक्खामि त्ति अचेलए । अदुवा सचेलए होक्खं, इति भिक्खू न चिंतए ॥ १२ ॥**

**व्याख्या**—'परिजीर्णैः' दुर्बलैः 'वस्त्रैः' कल्पादिभिः "होक्खामि" त्ति भविष्यामि 'अचेलकः' चेलकविकलः अल्पदिनभावित्वादेषाम्, इतिशब्दस्यात्र सम्बन्धात् 'इति' एतद् भिक्षुर्न चिन्तयेद् इति योगः । अथवा सचेलको भविष्यामि, परिजीर्णवस्त्रं हि मां दृष्ट्वा कश्चिच्छ्राद्धः सुन्दरतराणि वस्त्राणि दास्यति इति भिक्षुर्न चिन्तयेत् । इदमुक्तं भवति—न जीर्णचेलोऽन्यचेललाभासंभावनया दैन्यं लाभसंभावनया वा प्रमोदं गच्छेदिति सूत्रार्थः ॥ १२ ॥ इत्थं स्थविरकल्पिकमाश्रित्याचेलकपरीषह उक्तः ॥ सम्प्रति सामान्यतस्तमेवाह—

**एगया अचेलए होइ, सचेले यावि एगया । एयं धम्महियं नच्चा, नाणी णो परिदेवए ॥ १३ ॥**

**व्याख्या**—'एकदा' जिनकल्पिकाद्यवस्थायां सर्वथा चेलाभावेन जीर्णादिवस्त्रतया वा अचेलको भवति सचेलश्च 'एकदा' स्थविरकल्पिकाद्यवस्थायाम् । ततः किम् ? इत्याह—'एतत्' इत्यवस्थौचित्येन सचेलत्वमचेलत्वं च 'धर्महितं' साधुधर्मोपकारकं 'ज्ञात्वा' अवबुध्य, तत्राचेलकत्वस्य धर्महितत्वमल्पप्रत्युपेक्षणादिभिः । **यथोक्तम्**—पंचहिं ठाणेहिं पुरिम-

१ अन्यदिदं शरीरमन्यो जीव इत्येवंकृतबुद्धिः । दुःखकरं जीव ! त्वं छिंद्धि ममत्वं शरीरे ॥ ५ ॥

नयन्तीति मन्दाः । अथवा मन्दबुद्धित्वात् मन्दगमनत्वाद्वा 'मन्दाः' स्त्रियः ता एव स्पर्शप्रधानत्वात् स्पर्शाः । ततश्च मन्दाश्च स्पर्शाः बहूनां—कामिनां लोभनीयाः—गृद्धिजनकाः । 'चः' समुच्चये । स्पर्शाः प्राग्वद् बहून् लोभयन्ति—विमोहयन्ति बहुलोभनीयाः । अनेनात्याक्षेपकत्वमुक्तम् । अपेर्गम्यमानत्वात् 'तथाप्रकारेष्वपि' बहुलोभनीयेष्वपि मृदुस्पर्शमधुररसादिषु 'मनः' चित्तं 'न कुर्यात्' न निवेशयेत् । एवं च पूर्वसूत्रेण द्वेषस्य परिहार उक्तः, अनेन च रागस्य । स तु कथं भवति ? अत आह—'रक्षयेत्' निवारयेत् 'क्रोधं' रोषम्, 'विनयेत्' अपनयेत् 'मानम्' अहङ्कारम्, 'मायां' परवञ्चनबुद्धिरूपां 'न सेवेत' न कुर्यात्, 'प्रजह्यात्' परित्यजेत् 'लोभम्' अभिष्वङ्गस्वभावम्, तथा च क्रोधमानयोर्द्वेषात्मकत्वात् मायालोभयोश्च रागरूपत्वात् तन्निग्रह एव तत्परिहृतिरिति भावनीयमिति सूत्रद्वयार्थः ॥ ११–१२ ॥ सम्प्रति यदुक्तम्—"तम्हा समुट्ठाय पहाय कामे" इत्यादि, तत् कदाचित् चरकादिष्वपि भवेत् इत्याह—

**जे संखया तुच्छ परप्पवाई, ते पिज्जदोसाणुगया परज्झा ।**
**एए अहम्मु त्ति दुगुंछमाणो, कंखे गुणे जाव सरीरभेए ॥ १३ ॥ त्ति बेमि ॥**

व्याख्या—'ये' इति अनिर्दिष्टस्वरूपाः, 'संस्कृताः' इति न तात्त्विकशुद्धिमन्तः किन्तूपचितवृत्तयः, अत एव 'तुच्छाः' यदृच्छाभिधायितया निस्साराः 'परप्रवादिनः' परतीर्थिकाः, ते किम् ? इत्याह—प्रेमद्वेषानुगताः । तथाहि—सर्वथा संवादिनि भगवद्वचसि स्वकदाग्रहकरणं न रागद्वेषाभ्यां विनेति भावनीयम् । अत एव "परज्झा" 'परवशाः' रागद्वेषग्रस्ततया तत्तन्त्राः । यदि त एवंविधाः ततः किम् ? इत्याह—एते अधर्महेतुत्वात् अधर्माः 'इति' अमुनोल्लेखेन 'जुगुप्समानः' उन्मार्गयायिनोऽमी इति तत्स्वरूपमवधारयन् न तु निन्दन्, निन्दायाः सर्वत्र निषेधात् ।

उक्तञ्च—"सुट्ठु वि उज्जममाणं, पंचेव करेंति रित्तयं समणं। अप्पथुई परनिंदा, जिब्भोवत्था कसाया य ॥ १ ॥
सतेहि असतेहिं, परस्स किं जंपिएहि दोसेहिं ?। अत्थो जसो न लब्भइ, सो य अमित्तो कओ होइ ॥२॥"

एवंविधश्च किं कुर्यात् ? इत्याह—'काङ्क्षेत्' अभिलषेत् 'गुणान्' सम्यग्दर्शनचारित्रात्मकान् भगवदागमाभिहितान्, कियन्तं कालम् ? इत्याह—'यावच्छरीरभेदः' देहपृथग्भावः मरणमिति यावत्। अनेन इहैव समुत्थानं कामप्रहाणादि च तत्त्वतः, अन्यत्र तु संवृतिमात्रमित्युक्तम् इति सूत्रार्थः ॥ १३ ॥ 'इतिः' परिसमाप्तौ ब्रवीमीति पूर्ववत् ॥

विषय-कषायानां परिहारः।

॥ इति श्रीनेमिचन्द्रसूरिविनिर्मितायां सुखबोधायां उत्तराध्ययनसूत्र-लघुटीकायां असंस्कृताख्यं चतुर्थमध्ययनं समाप्तम् ॥

1 "सुष्ठ्वपि उद्यच्छन्तं, पञ्चैव कुर्वन्ति रिक्तकं श्रमणम्। आत्मस्तुतिः परनिन्दा, जिह्वोपस्था कषायाश्च ॥ १ ॥ सद्भिरसद्भिश्च परस्य किं जल्पितैर्दोषैः ?। अर्थो यशो न लभ्यते स चामित्र कृतो भवति ॥ २ ॥" 2 जैनेष्वेव।

# अथ अकाममरणीयाख्यं पञ्चममध्ययनम् ।

उक्तं चतुर्थमध्ययनम् । साम्प्रतम् अकाममरणीयाख्यं पञ्चममारभ्यते । तस्य चायमभिसम्बन्धः—'अनन्तराध्ययने "काङ्क्षेद् गुणान् यावच्छरीरभेदः" इत्यभिदधता मरणं यावदप्रमादो वर्णितः, ततो मरणकालेऽप्यप्रमादो विधेयः । स च मरणविभागपरिज्ञानत एव भवति । ततो हि बालमरणादि हेयं हीयते, पण्डितमरणादि चोपादेयमुपादीयते । तथा चाऽप्रमत्तता जायते' इति अनेन सम्बन्धेनाऽऽयातमिदमिति, अतोऽस्य प्रारम्भे मरणविभागो निर्युक्तिकृताऽभिहितः सङ्क्षेपतस्तावदुच्यते । तत्र सप्तदश मरणानि भवन्ति, अतस्तान्याह—

सप्तदशधा मरणविधिविभागः ।

"[1]आवीइ [2]ओहि [3]अंतिय, [4]वलायमरणं [5]वसट्टमरणं च । [6]अंतोसल्लं [7]तब्भव, [8]बालं तह [9]पंडियं [10]मीसं ॥ १ ॥
[11]छउमत्थमरण [12]केवलि [13]वेहायस [14]गिद्धपिट्ठमरणं च । मरणं [15]भत्तपरिन्ना, [16]इंगिणी [17]पाओवगमणं च ॥ २ ॥
सत्तरस विहाणाइं, मरणे गुरुणो कहंति गुणकलिया । तेसिं नामविभत्तिं, वोच्छामि अहाणुपुव्वीए ॥ ३ ॥"

**व्याख्या**—तत्र **अवीचिमरणम्**—वीचिः–विच्छेदः तदभावाद् अवीचिः–नारकतिर्यङ्नरामराणामुत्पत्तिसमयात् प्रभृति निजनिजायुष्कर्मदलिकानामनुसमयमनुभवनात् विचटनम् १ ।

**अवधिमरणम्**—मर्यादामरणम्, यानि नारकादिभवनिबन्धनतयाऽऽयुष्कर्म्मदलिकानि अनुभूय म्रियते, मृतो वा यदि पुनस्तान्येवाऽनुभूय मरिष्यति तदा तद् द्रव्याऽवधिमरणम् । सम्भवति हि गृहीतोज्झितानामपि कर्म्मदलिकानां ग्रहणं परिणामवैचित्र्यात्, एवं क्षेत्रादिष्वपि भावनीयम् २ ।

॥ ९९ ॥

अन्तिकमरणम्—यानि नरकाद्यायुष्कतया कर्म्मदलिकान्यनुभूय म्रियते, मृतो वा न पुनस्तान्यनुभूय मरिष्यति । एवं शेषाण्यपि वाच्यम् ३ ।

वलन्मरणमाह—संजमजोगविसन्ना, मरन्ति जे तं वलायमरणं तु । भग्नव्रतपरिणतीनां व्रतिनामेवैतत् ४ ।

वशार्त्तमाह—इंदियविसयवसगया मरंति जे तं वसट्टं तु । दीपशिखावलोकनाकुलितपतङ्गवत् ५ ।

अन्तःशल्यमाह—"लज्जाए गारवेण य, बहुस्सुयमएण वा वि दुच्चरियं । जे न कहिंति गुरूणं, न हु ते आराहगा हुंति ॥१॥ गारवपंकनिबुड्डा अइआरं जे परस्स न कहेंति । दंसणनाणचरित्ते, ससल्लमरणं भवे तेसिं ॥ २ ॥" पुनर्गौरवाभिधानम् गौरवाऽतिदुष्टताख्यापनार्थम् । परस्येति आचार्यादेः । एतस्यैव फलमाह—"एयं ससल्लमरणं, मरिऊण महब्भए तह दुरंते । सुइरं भमंति जीवा, दीहे संसारकंतारे ॥ १ ॥" ६ ।

तद्भवमरणमाह—"मोत्तुं अकम्मभूमिय, नरतिरिए सुरगणे य नेरइए । सेसाणं जीवाणं, तब्भवमरणं तु केसिंचि ॥ १ ॥" तुशब्दोऽपि संख्येयवर्षायुषामेवेति विशेषख्यापकः ७ ।

बाल-पण्डित-मिश्रमरणान्याह—"अविरयमरणं बालं, मरणं विरयाण पंडियं होइ । जाणाहि बाल-पंडियमरणं पुण देसविरयाणं ॥ १ ॥" ८–९–१० ।

---

१ "लज्जया गौरवेण च, बहुश्रुतमदेन वापि दुश्चरितम् । ये न कथयन्ति गुरुभ्यो, न खलु ते आराधका भवन्ति ॥ १ ॥ गौरवपङ्कनिमग्ना, अतिचारं ये परस्य न कथयन्ति । दर्शन-ज्ञान-चारित्रे, सशल्यमरणं भवेत् तेषाम् ॥ २ ॥"

२ "एतत् सशल्यमरणं, मृत्वा महाभये तथा दुरन्ते । सुचिरं भ्रमन्ति जीवा, दीर्घे संसारकान्तारे ॥ १ ॥"

३ "मुक्त्वाऽकर्मभूमिजान्, नरतिरश्च सुरगणांश्च नैरयिकान् । शेषाणां जीवानां, तद्भवमरणं तु केषाञ्चित् ॥ १ ॥"

४ "अविरतमरणं बालं, मरणं विरतानां पण्डितं भवति । जानीहि बाल-पण्डितमरणं पुनर्देशविरतानाम् ॥ १ ॥"

सप्तदशधा मरणविधिविभागः ।

एवं चरणद्वारेण बालादिमरणत्रयमभिधाय ज्ञानद्वारेण **छद्मस्थमरण-केवलिमरणे** आह—"[1]मणपज्जवोहिनाणी, सुय-मइणाणी मरंति जे समणा । छउमत्थमरणमेयं, केवलिमरणं तु केवलिणो ॥ १ ॥" ११–१२ ।

**वैहायस-गृध्रपृष्ठमरणे** अभिधातुमाह—"[2]गिद्धाइभक्खणं गि-द्धपिट्ठ उब्बंधणाइ वेहासं । एए दोन्नि वि मरणा, कारणजाए अणुन्नाया ॥ १ ॥" न तु निष्कारणे, यतो भणितम्—"[3]भावियजिणवयणाणं ममत्तरहियाण नत्थि हु विसेसो । अप्पाणम्मि परम्मि य, तो वज्जे पीडमुभओ वि ॥ १ ॥" अत एव च भक्तपरिज्ञादिषु पीडापरिहाराय सलेखनाविधिरुक्तः । उक्तञ्च—"[4]चत्तारि विचित्ताइं, विगईनिज्जूहियाइँ चत्तारि । संवच्छरे य दुन्नि वि, एगंतरियं च आयामं ॥१॥" इत्यादि । अनुज्ञाकारणं त्वनयोर्दर्शनमालिन्यपरिहारादि, **उदायिनृपाऽनुमृततथाविधाऽऽचार्यवत्** १३–१४ ।

साम्प्रतमन्त्यमरणत्रयमाह—"[5]भत्तपरिन्ना इंगिणि, पाउवगमणं च तिन्नि मरणाइं । कन्नस-मज्झिम-जेट्ठा, धिइ-संघयणेण उ विसिट्ठा ॥१॥" 'कन्नस' त्ति कनिष्ठम् । "[6]भत्तपरिन्नामरणं, चउव्विहाऽऽहारचायनिप्पन्नं । नियमा सप्पडिकम्मं, सव्वत्थ वि विगयसंगस्स ॥१॥" "[7]इंगियदेसम्मि ठिओ, चउव्विहाहारवज्जिओ धीमं । उव्वत्तणाइ कारइ, नऽन्नेण उ इंगिणीमरणं ॥१॥"

---

१ "मन.पर्यव-अवधिज्ञानिन', श्रुतमतिज्ञानिनो मरन्ति ये श्रमणाः । छद्मस्थमरणमेतत्, केवलिमरणं तु केवलिनः ॥१॥" २ "गृध्रादिभक्षणं गृध्रपृष्ठं उद्बन्धनादि वैहायसम् । एते द्वे अपि मरणे, कारणजातेऽनुज्ञाते ॥ १ ॥" ३ "भावितजिनवचनानां, ममत्वरहितानां नास्ति खलु विशेषः । आत्मनि परस्मिंश्च, ततो वर्जयेत् पीडामुभयतोऽपि ॥ १ ॥" ४ "चत्वारि विचित्राणि, निर्यूढविकृतीनि चत्वारि । संवत्सरे च द्वे अपि, एकान्तरितं च आचाम्लम् ॥ १ ॥" ५ "भक्तपरिज्ञा इङ्गिनी, पादपोपगमनं च त्रीणि मरणानि । कनिष्ठ-मध्यम-ज्येष्ठानि, धृति-संहननाभ्यां तु विशिष्टानि ॥ १ ॥" ६ "भक्तपरिज्ञामरणं, चतुर्विधाऽऽहारत्यागनिष्पन्नम् । नियमात् सप्रतिकर्म, सर्वत्रापि विगतसङ्गस्य ॥१॥" ७ "इङ्गितदेशे स्थितः, चतुर्विधाऽऽहारवर्जितो धीमान् । उद्वर्त्तनादि कारयति, नाऽन्येन तु इङ्गिनीमरणम् ॥ १ ॥"

"निगल निप्पडिकम्मो, निक्खिवए जं जहिं जहा अंगं। एयं पाओवगमं, नीहारिं वा अनीहारिं ॥ १ ॥ पाओवगमं भणियं, सम विसमो पायवो व्व जह पडिओ। नवरं परप्पओगा, कपेज्ज जहा फलतरु व्व ॥२॥" यद्यपि त्रितयमप्येतत्—"धीरेण वि मरियव्वं, काउरिसेण वि अवस्स मरियव्वं। तम्हा अवस्समरणे, वरं खु धीरत्तणे मरिउं ॥ १ ॥ ससाररंगमज्झे, धीवलसन्नद्धबद्धकच्छाओ। हंतूण मोहमल्लं, हरामि आराहणपडागं ॥ २ ॥" इति शुभाऽऽशयवानेव प्रतिपद्यते, फलमपि च वैमानिकता-मुक्तिलक्षणं समानम्, तथा चोक्तम्—"एयं पच्चक्खाणं, अणुपालेऊण सुविहिओ सम्मं। वेमाणिओ य देवो, हविज्ज अहवा वि सिज्झेज्जा ॥ १ ॥" तथापि विशिष्ट-विशिष्टतर-विशिष्टतमधृतिमतामेव च तत्प्रातिरिति कनिष्ठत्वादिस्तद्विशेष उच्यते। तथा हि—भक्तपरिज्ञामरणमार्यिकादीनामप्यस्ति। यत उक्तम्—"सव्वा वि य अज्जाओ, सव्वे वि य पढमसंघयणवज्जा। सव्वे वि देसविरआ, पच्चक्खाणेण उ मरंति ॥१॥" अत्र हि प्रत्याख्यानं भक्तपरिज्ञोक्ता। इंगिनीमरणं तु विशिष्टतरधृतिमतामेव सम्भवतीत्यार्यिकानिषेधत एवाऽवसीयते। पादपोपगमनं तु नान्यैव विशिष्टतमधृतिमतामेव, ततश्च वज्रऋषभनाराचसंहननिनामेवैतत्। उक्तं हि—"पढमम्मि य संघयणे, वट्टंते सेलकुड्डसामाणे। तेसिं पि य वोच्छेओ, चोद्दसपुव्वीण वोच्छेए ॥ १ ॥" १५–१६–१७। इत्युक्तो **मरणविधिविभागः**।

सप्तदशधा मरणविधिविभागः।

---

१ "निश्चलो निष्प्रतिकर्मा निक्षिपति यद्यत्र यथाऽङ्गम्। एतत्पादपोपगमनं निर्हारं वाऽनिर्हारम् ॥ १ ॥ पादपोपगमनं भणितं, समो विषमो वा पादप इव यथा पतितः। नवरं परप्रयोगात्, कम्पेत यथा फलतरुवत् ॥ २ ॥" २ "धीरेणापि मर्त्तव्यं, कापुरुषेणाप्यवश्यं मर्त्तव्यम्। तस्मादवश्यमरणे, वरमेव धीरत्वेन मर्त्तुम् ॥ १ ॥ संसाररङ्गमध्ये धृतिबलसन्नद्धबद्धकक्षः। हत्वा मोहमल्लं, हराम्याराधनापताकाम् ॥ २ ॥" ३ "एतत्प्रत्याख्यानमनुपाल्य सुविहितः सम्यक्। वैमानिको वा देवो, भवेदथवाऽपि सिध्येत् ॥ १ ॥" ४ "सर्वा अपि चाऽऽर्याः, सर्वेऽपि च प्रथमसंहननवर्जाः। सर्वेऽपि देशविरताः, प्रत्याख्यानेनैव म्रियन्ते ॥ १ ॥" ५ "प्रथमे च संहनने, वर्त्तमाने शैलकुड्यसमाने। तस्यापि च व्युच्छेदश्चतुर्दशपूर्विणां व्युच्छेदे ॥ १ ॥"

विशेषार्थस्तु बृहट्टीकातोऽवसेयः । "एत्थं पुण अहिगारो, णायव्वो होइ मणुयमरणेणं । मोत्तुं अकाममरणं, सकाममरणेण मरियव्वं ॥ १ ॥" साम्प्रतं सूत्रमनुगम्यते—

**अन्नवम्मि महोहम्मि, एगे तिन्ने दुरुत्तरं । तत्थ एगे महापन्ने, इमं पण्हमुदाहरे ॥ १ ॥**

**व्याख्या**—अर्णव इव अर्णवः—अदृष्टपरपारतया भव एव तस्मिन्, महान् ओघः—प्रवाहो भवपरम्परात्मको यस्मिन् स महौघः तत्र, 'एकः' रागद्वेषादिसहभावरहितः, तीर्ण इव 'तीर्णः' तीरप्राप्त इत्यर्थः, "दुरुत्तरं" ति विभक्तिव्यत्ययात् 'दुरुत्तरे' दुःखोत्तारे । तत्र 'एकः' तथाविधतीर्थकरनामकर्मोदयादनुत्तरावाप्तविभूतितया अद्वितीयः, स हि एकदा एक एव भरते सम्भवति । महती—निरावरणतया अपरिमाणा प्रज्ञा—केवलज्ञानात्मिका संवित् विद्यतेऽस्य स तथा 'इमम्' अनन्तरवक्ष्यमाणं 'प्रश्नं' प्रष्टव्यार्थरूपम् "उदाहरे" उदाहृतवानिति सूत्रार्थः ॥ १ ॥ यदुदाहृतवांस्तदाह—

**संतिमे अ दुवे ठाणा, अक्खाया मारणंतिया । अकाममरणं चेव, सकाममरणं तहा ॥ २ ॥**

**व्याख्या**—"संती"ति वचनव्यत्ययेन स्तः—विद्येते 'इमे' प्रत्यक्षे, 'चः' पूरणे, 'द्वे' द्विसंख्ये, तिष्ठन्त्यनयोर्जन्तव इति स्थाने 'आख्याते' पुरातनतीर्थकृद्भिरपि कथिते, मरणमेवान्तः—निजनिजायुपः पर्यन्तो मरणान्तस्तस्मिन् भवे मारणान्तिके । ते एव नामत उपदर्शयति—'अकाममरणं' वक्ष्यमाणस्वरूप, 'चः' समुच्चये, 'एवे'ति पूरणे, 'सकाममरणं' वक्ष्यमाणस्वरूपमेव तथेति सूत्रार्थः ॥ २ ॥ केषां पुनरिमे ? कियद्वारा वा ? इत्यत आह—

**वालाणं अकामं तु, मरणं असइं भवे । पंडियाणं सकामं तु, उक्कोसेण सइं भवे ॥ ३ ॥**

१ "अत्र पुनरधिकारो, ज्ञातव्यो भवति मनुजमरणेन । मुक्त्वाऽकाममरण, सकाममरणेन मर्त्तव्यम् ॥ १ ॥"

व्याख्या—बाला इव बालाः सदसद्विवेकविकलतया तेषाम् "तु" त्ति तुशब्दस्यैवकारार्थत्वाद् अकाममेव मरणम् 'असकृत्' वारंवार भवेत्, ते हि विषयाभिष्वङ्गतो मरणमनिच्छन्त एव म्रियन्ते, तत एव च भवाटवीमटन्ति। 'पण्डितानां' चारित्रवतां सह कामेन—अभिलाषेण वर्त्तत इति 'सकामं' सकाममिव सकाम, मरणं प्रति असत्रस्तत्वात् तदसत्रस्ततरैवोत्सवभूतत्वात् तादृशां मरणस्य। तथा च वाचकः—"सञ्चिततपोधनानां, नित्यं व्रतनियमसंयमरतानाम्। उत्सवभूतं मन्ये, मरणमनपराधवृत्तीनाम् ॥१॥" न तु परमार्थतस्तेषां सकामत्वम्, मरणाभिलापस्यापि निषिद्धत्वात्। उक्तं हि—"मा मा हु विचिंतिज्जा, जीवामि चिरं मरामि य लहुं ति। जइ इच्छसि तरिउ जे, ससारमहोयहिमपारं ॥१॥" ति। 'तुः' पूर्वापेक्षया विशेषद्योतकः। तत्र 'उत्कर्षेण' इत्युत्कर्षोपलक्षितं केवलिसम्बन्धीत्यर्थः। अकेवलिनो हि संयमजीवितं दीर्घमिच्छेयुरपि, मुक्त्यवाप्तिः इतः स्यादिति। केवलिनस्तु तदपि नेच्छन्ति, आस्तां भवजीवितमिति तन्मरणस्योत्कर्षेण सकामता, 'सकृत्' एकवारमेव भवेत्। जघन्येन तु शेषचारित्रिणः सप्ताऽष्ट वा वारान् भवेदित्याकूतमिति सूत्रार्थः ॥३॥

यदुक्तं—'इमे द्वे स्थाने' तत्राऽऽद्यं तावदाह—

**तत्थिमं पढमं ठाणं, महावीरेण देसियं। कामगिद्धे जहा बाले, भिसं कूराइं कुव्वइ ॥ ४ ॥**

व्याख्या—'तत्रे'ति तयोः अकाममरण-सकाममरणाख्ययोः स्थानयोर्मध्ये 'इदम्' अनन्तरमभिधास्यमानरूपं 'प्रथमम्' आद्यं स्थानं 'महावीरेणे'ति चरमतीर्थकृता, 'तत्रैको महाप्रज्ञः' इति मुकुलितोक्तेरभिव्यक्तार्थमेतत्, 'देशितं' प्ररूपितम्। किं तत्? इत्याह—कामेषु—इच्छामदनात्मकेषु गृद्धः—अभिकाङ्क्षावान् कामगृद्धः, 'यथे'ति उपदर्शनार्थः, 'बालः' उक्तरूपः 'भृशम्' अत्यर्थं 'क्रूराणि' रौद्राणि कर्माणीति गम्यते, तानि च प्राणव्यपरोपणादीनि "कुव्वइ" त्ति 'करोति'

अकाममरणस्वरूपम्।

१ "मा मैव विचिन्तयेत्, जीवामि चिरं म्रिये च लघु इति। यदीच्छसि तरीतु, संसारमहोदधिमपारम् ॥१॥"

क्रियया अभिनिर्वर्त्तयति, शक्तावशक्तावपि क्रूरतया तन्दुलमत्स्यवद् मनसा कृत्वा च तानि प्रक्रमाद् अकाम एव म्रियते इति सूत्रार्थः ॥ ४ ॥ इदमेव ग्रहणवाक्यं प्रपञ्चयितुमाह—

**जे गिद्धे कामभोगेसु, एगे कूडाय गच्छइ। ण मे दिट्ठे परे लोए, चक्खुदिट्ठा इमा रई ॥५॥**

**व्याख्या**—'यः' इति अनिर्दिष्टस्वरूपः गृद्धः 'कामभोगेषु' कामौ च–शब्दरूपाख्यौ भोगाश्च–स्पर्शरसगन्धाख्यास्तेषु, 'एकः' कश्चिदिति क्रूरकर्मा सः 'कूटाय गच्छति' कूटं–द्रव्यतो मृगादिबन्धनं भावतो मिथ्याभाषणादि तस्मै गच्छति–अनेकार्थत्वात् प्रवर्त्तते। स हि मांसादिलोलुपतया मृगादिबन्धनान्यारभते, मिथ्याभाषणादीनि वा सेवते, प्रेरितश्च कैश्चिद् वदति—'न मे' इति न मया 'दृष्ट.' अवलोकितः 'परलोकः' भूतभाविजन्मात्मकः। कदाचिद्विषयरतिरप्येवंविधैव स्याद् अत आह—(ग्रंथ ४०००) 'चक्षुर्दृष्टा' चक्षुषा दृष्टा 'इयम्' एषा 'रतिः' कामासेवनजनिता चित्तप्रह्लत्तिः। तस्यायमाशयः—कथं दृष्टपरित्यागतोऽदृष्टपरिकल्पनयाऽऽत्मानं विप्रलम्भेयम्? इति सूत्रार्थः ॥ ५ ॥

पुनस्तदाशयमेव व्यञ्जयितुमाह—

**हत्थागया इमे कामा, कालिया जे अणागया। को जाणइ परे लोए?, अत्थि वा नत्थि वा पुणो ॥६॥**

**व्याख्या**—'हस्तागताः' हस्तप्राप्ताः स्वाधीनतया 'इमे' प्रत्यक्षोपलभ्यमानाः 'कामाः' शब्दादयः। 'कालिकाः' अनिश्चितकालान्तरप्राप्तयः 'ये' 'अनागताः' भाविजन्मसम्बन्धिनः। कथं पुनरमी अनिश्चितप्राप्तयः? इत्याह—पुनःशब्दस्य व्यवहितसम्बन्धात् कः पुनर्जानाति? नैव कश्चिद्, यथा—परलोकोऽस्ति नास्ति वा?। अथ चास्याऽऽशयः—सन्दिग्धे हि परलोके क इव हस्तगतान् कामान् अपहाय कालिककामार्थं यतेतेति सूत्रार्थः ॥ ६ ॥ अन्यस्तु कथञ्चिदुत्पादितपरलोकप्रत्ययोऽपि कामान् परिहर्त्तुमशक्नुवन्निदमाह—

जणेण सर्द्धि होक्खामि, इति बाले पगब्भइ । कामभोगाणुरागेणं, केसं संपडिवज्जइ ॥ ७ ॥

व्याख्या—'जनेन' लोकेन 'सार्द्धं' सह भविष्यामि । किमुक्तं भवति ?—बहुर्जनो भोगाऽऽसक्ती तदहमपि तद्गतिं गमिष्यामि, न हि इयान् जनोऽज्ञ इति । 'बाल:' अज्ञः 'प्रगल्भते' धार्ष्ट्यमवलम्बते, अलीकवाचालतया च स्वयं नष्टः परानपि नाशयति, न विवेचयति—यथा किमुन्मार्गप्रस्थितेनाविवेकिना जनेन बहुनाऽपि प्रमाणीकृतेन विवेकिनः ?, स्वकृतकर्मफलभुजो हि जन्तवः । स चैवं कामभोगानुरागेण 'क्लेशम्' इह परत्र च विविधबाधात्मकं 'सम्प्रतिपद्यते' प्राप्नोतीति । उक्तञ्च—"वरि विसु भुंजिउ मं विसय, एक्कसि विसिण मरंति । नर विसयाऽऽमिसमोहिया, बहुसो नरइ पडंति ॥ १ ॥"[1] इति सूत्रार्थः ॥ ७ ॥ यथा च कामभोगानुरागेण क्लेशं सम्प्रतिपद्यते तथा वक्तुमाह—

तत्तो से दंडं समारभइ, तसेसु थावरेसु य । अट्ठाए य अणट्ठाए, भूयग्गामं विहिंसइ ॥ ८ ॥

व्याख्या—'ततः' कामानुरागात् 'सः' धार्ष्ट्यवान् 'दण्डं' मनोदण्डादि 'समारभते' प्रवर्त्तयति 'त्रसेषु' द्वीन्द्रियादिषु 'स्थावरेषु च' पृथिव्यादिषु । अर्थः-प्रयोजनं वित्तावाप्त्यादिः तदर्थम्-अर्थाय, चस्य व्यवहितसम्बन्धाद् अनर्थाय च—यदात्मनः सुहृदादेर्वा नोपयुज्यते । ननु किमित्थमपि कश्चिद्दण्डं समारभते ? आरभत एव तथाविधपशुपालवत् । तत्र च सम्प्रदायः—

यथैकः पशुपालः प्रतिदिनं मध्याह्नगते रवौ अजासु महान्यग्रोधतरुसमाश्रितासु तत्थुत्ताणओ निवन्नो धणुहियाबलेण अजोद्गीर्णगोलास्थिभिस्तस्य पत्राणि छिद्रीकुर्वंस्तिष्ठति । एवं तेन स वटपादपः प्रायः सछिद्रपत्रीकृतः । अन्यया तत्थेगो

1 "परं निंब भुक्त मा विषया, एकशो विषेण म्रियन्ते । नरा विषयाऽऽमिषमोहिता बहुशो नरके पतन्ति ॥ १ ॥"

अकाममरणस्वरूपम् ।

अकाममरणस्वरूपम् ।

व्याख्या—"तओ" त्ति तकः 'ततो वा' दण्डारम्भणाद्युपार्जितमलतः स्पृष्टः, केन ? 'आतङ्केन' आशुघातिना शूलविसूचिकादिरोगेण, 'ग्लानः' मन्दः 'परितप्यते' बहिरन्तश्च खिद्यते । 'प्रमीतः' इति प्रकर्षेण त्रस्तः, कुतः ? "परलोयस्स" त्ति परलोकात् सुब्व्यत्ययेन पञ्चम्यर्थे षष्ठी । किमिति ? क्रियत इति कर्म्म–क्रिया तदनुप्रेक्षत इत्येवंशीलः कर्म्मानुप्रेक्षी, यत इति गम्यते । कस्य ? आत्मनः, स हिंसाऽलीकभाषणादिकामात्मचेष्टां चिन्तयन् 'न किञ्चित् मया शुभमाचरितं किन्तु सदैवाजरामरवत् चेष्टितम्' इति चिन्तयन् चेतसि आतङ्कगतः खिद्यते । भवति हि विषयाकुलितचेतसोऽपि प्रायः प्राणोपरमसमयेऽनुतापः । तथा चाहुः—"[1]कीरंति जाइं जोव्व–णमएण अवियारिऊण कज्जाइं । वयपरिणामे सरियाइं ताइं हियए खुडुक्कंति ॥ १ ॥" ११ ॥ अमुमेवार्थं व्यक्तीकर्त्तुमाह—

**सुया मे नरए ठाणा, असीलाणं च जा गई । बालाणं कूरकम्माणं, पगाढा जत्थ वेयणा ॥ १२ ॥**

व्याख्या—'श्रुतानि' आकर्णितानि 'मे' मया नरके 'स्थानानि' कुम्भीवैतरण्यसिपत्रवनादीनि । तत्किमियताऽपि परितप्यते ? इत्याह—'अशीलानाम्' असदाचाराणां या 'गतिः' नरकादिका सा च श्रुता, कीदृशानाम् ? 'बालानाम्' अज्ञानां 'क्रूरकर्म्मणां' हिंस्र-मृषाभाषकादीनां 'प्रगाढाः' प्रकर्षवत्यः 'यत्र' यस्यां गतौ 'वेदनाः' शीतोष्णशाल्मल्याश्लेषणादयः । तदयमस्याशयः—ममैवंविधानुष्ठानस्य एवंविधैव गतिरिति सूत्रार्थः ॥ १२ ॥

**तत्थोववाइयं ठाणं, जहा मे तमणुस्सुयं । आहाकम्मेहि गच्छंतो, सो पच्छा परितप्पइ ॥ १३ ॥**

व्याख्या—'तत्रे'ति नरकेषु उपपाते भवं औपपातिकं 'स्थानं' स्थितिः 'यथा' येन प्रकारेण भवतीति शेषः, 'मे' मया 'तत्' इत्यनन्तरोक्तपरामर्शे 'अनुश्रुतम्' अवधारितं गुरुभिरुच्यमानमिति शेषः । औपपातिकमिति च ब्रुवतोऽस्याऽ-

१ "क्रियन्ते यानि यौवन-मदेनाविचार्य्य कार्याणि । वयःपरिणामे स्मृतानि, तानि हृदये खटत्कुर्वन्ति ॥ १ ॥"

यमाशयः—यदि गर्भजत्वं भवेद् भवेदपि तदवस्थायां छेदभेदादिनारकदुःखान्तरम्, औपपातिकत्वे तु अन्तर्मुहूर्त्तानन्तरमेव तथाविधवेदनोदय इति कुतस्तदनन्तरसम्भवः ?। तथा चाऽऽह—"आहाकम्मेहिं" ति 'यथाकर्म्मभिः' गमिष्यमाणगत्यनुरूपैः तीव्रतीव्रतराद्यनुभावान्वितैः कर्म्मभिः 'गच्छन्' यान् तदनुरूपमेव स्थानं, 'सः' इति बालः 'पश्चात्' इति आयुषि हीयमाने 'परितप्यते' यथा 'धिङ् मामसदनुष्ठायिनम्, किमिदानीं मन्दभाग्यः करोमि ?' इत्यादि शोचत इति सूत्रार्थः ॥१३॥

अकामसरणस्वरूपम्।

अमुमेवार्थं दृष्टान्तद्वारेण द्रढयन्नाह—

**जहा सागडिओ जाणं, समं हेचा महापहं। विसमं मग्गमोइन्नो, अक्खे भग्गम्मि सोयइ ॥१४॥**

व्याख्या—यथा 'शाकटिकः' गन्त्रीवाहकः "जाणं" ति 'जानन्' अवबुध्यमानः 'समम्' उपलादिरहितं 'हित्वा' त्यक्त्वा 'महापथं' विषममार्गम् 'अवतीर्णः' गन्तुं प्रवृत्तः 'अक्षे' धुरि 'भग्ने' खण्डिते शोचति 'धिङ् मे परिज्ञानं यज्जानन्नपि इत्थमपायमवाप्तवान्' इति सूत्रार्थः ॥ १४ ॥ सम्प्रत्युपनयमाह—

**एवं धम्मं विउक्कम्म, अहम्मं पडिवज्जिया। बाले मच्चुमुहं पत्ते, अक्खे भग्गे व सोयइ ॥ १५ ॥**

व्याख्या—'एवम्' इति शाकटिक इव 'धर्म्मं' सदाचारात्मकं 'व्युत्क्रम्य' विशेषेणोल्लङ्घ्य 'अधर्म्मं' धर्मप्रतिपक्षं हिंसादिकं 'प्रतिपद्य' अभ्युपगम्य 'बालः' अज्ञः 'मृत्युमुखं' मरणगोचरं 'प्राप्तः' गतः अक्षे भग्ने इव शोचति। किमुक्तं भवति ?—यथा अक्षभङ्गे शाकटिकः शोचति तथाऽयमपि मरणात्मकं फलमनुभवन् आत्मानमनुशोचति, हा ! किमेतन्मयाऽनुष्ठितम् ? इति सूत्रार्थः ॥ १५ ॥ शोचनानन्तरञ्च किमसौ करोति ? इत्याह—

**तओ से मरणंतम्मि, बाले संतस्सई भया। अकाममरणं मरइ, धुत्ते वा कलिणा जिए ॥ १६ ॥**

व्याख्या—'ततः' इत्यातङ्कोत्पत्तौ यच्छोचनमुक्तं तदनन्तरं "से" त्ति स मरणमेवान्तो मरणान्तस्तस्मिन् उपस्थिते

रायपुत्तो दाइयधाडिओ तत्थागओ। पेच्छए तस्स वडस्स सव्वाणि पत्ताणि छिड्डियाणि। तेण सो पसुपालओ पुच्छिओ—केणेयाणि छिद्दीकयाणि ?। तेण भन्नइ—मया एयाणि क्रीडापूर्वं छिद्रीकृतानि। तेण सो बहुणा दव्वजाएण विलोभेउं भन्नइ—सक्केसि जस्स हं भणामि तस्स अच्छीणि छिड्डेउं ?। तेण भन्नइ—जइ अब्भासत्थो होइ तो सक्केमि। तेण स नयरं नीओ। रायमग्गसन्निविट्ठे घरे ठविओ। तस्स रायपुत्तस्स भाया राया। सो तेण मग्गेण अस्सवाहणियाए निज्जाइ। तेण भन्नइ—एयस्स अच्छीणि पाडेहि त्ति। तेण गोलियधणुहएण तस्स निग्गच्छमाणस्स दो वि अच्छीणि पाडियाणि। पच्छा सो रायपुत्तो राया जाओ। तेण सो पसुपालो भन्नइ—ब्रूहि, वरं किं ते प्रयच्छामि ?। तेण भन्नइ—मज्झ तमेव गामं देहि। तेण सो दिन्नो। पच्छा तेणं तम्मि पच्चंतगामे उच्छू रोविओ तुंबीओ य। निप्पन्नेसुं तुंबएसु गुडसद्धयं तुबयं भुक्त्वा गायति स्म—"अट्टमट्टं पि सिक्खिज्जा, सिक्खियं न निरत्थयं। अट्टमट्टप्पसाएण, खज्जए गुलतुंबयं ॥१॥"[1] तेण ताणि वडपत्ताणि अणट्ठाए छिड्डियाणि, अच्छीणि पुण अट्ठाए पाडियाणि। 'दण्डं समारभते' इत्युक्तम् तत्किमसौ आरम्भमात्र एवावतिष्ठते ? इत्याह—"भूयगामं" ति भूताः–प्राणिनस्तेषां ग्रामः–समूहस्तं विविधैः प्रकारैः हिनस्ति–व्यापादयति। अनेन दण्डत्रयव्यापार उक्त इति सूत्रार्थः ॥ ८ ॥ किमसौ कामभोगानुरागेणैतावदेव कुरुते उताऽन्यदपि ? इत्याह—

**हिंसे बाले मुसावाई, माइल्ले पिसुणे सढे। भुंजमाणे सुरं मंसं, सेयमेयं ति मन्नइ ॥ ९ ॥**

**व्याख्या**—हिंसनशीलः 'हिंस्रः' अनन्तरोक्तनीत्या, तथैवंविधः सन्नसौ 'बालः' उक्तरूपः, 'मृषावादी' इति अलीकभाषणशीलः, "माइल्ल" त्ति 'मायी' परवञ्चनोपायचित्तत्वात्, 'पिशुनः' परदोषोद्घाटकः, 'शठः' तत्तन्नेपथ्यादिकरणतोऽन्यथाभूतमात्मानमन्यथा दर्शयति मण्डिकचौरवत्, अत एव च भुञ्जानः 'सुरां' मद्यं 'मांसं' पिशितं 'श्रेयः' प्रशस्यम्

१ "अट्टमट्टमपि शिक्षेत शिक्षितं न निरर्थकम्। अट्टमट्टप्रसादेन खाद्यते गुडतुम्बकम् ॥ १ ॥"

एतदिति मन्यते। उपलक्षणत्वाद्भापते च—'न मांसभक्षणे दोषो, न मद्ये न च मैथुने।' इत्यादि। तदनेन मनसा वचसा कायेन वा मत्तत्वमस्योक्तमिति सूत्रार्थः ॥ ९ ॥ पुनस्तद्वक्तव्यतामेवाह—

**कायसा वयसा मत्ते, वित्ते गिद्धे य इत्थिसु। दुहओ मलं संचिणइ, सिसुणागो व्व मट्टियं ॥१०॥**

व्याख्या—"कायस" त्ति सूत्रत्वात् 'कायेन' शरीरेण 'वचसा' वाचा उपलक्षणत्वात् मनसा च 'मत्तः' दृप्तः। तत्र कायेन मत्तः मदान्धगजवत्, यतस्ततः प्रवृत्तिमान् यद्वा 'अहो! अहं बलवान् रूपवांश्च' इति चिन्तयन्। वचसा स्वगुणान् ख्यापयन् 'अहो! अहं सुस्वरः' इत्यादि वा चिन्तयन्। मनसा च मदाध्मातचेताः 'अहोऽहमवधारणाशक्तिमान्' इति वा मन्वानः। 'वित्ते' द्रविणे 'गृद्धः' गृद्धिमान्। चशब्दः भिन्नक्रमः, ततः स्त्रीषु च गृद्धः। तत्र 'वित्ते गृद्धः' इति अदत्तादानपरिग्रहोपलक्षणम्, तद्भावभावित्वात् तयोः। 'स्त्रीषु गृद्धः' इत्यनेन मैथुनाऽऽसेवित्वमुक्तम्, स हि 'स्त्रियः संसारसर्वस्वभूताः' इति मन्यते। तथा च तद्वचः—'सत्यं वच्मि हितं वच्मि, सारं वच्मि पुनः पुनः। अस्मिन्नसारे संसारे, सारं सारङ्गलोचनाः ॥ १ ॥' तदभिरतिमांश्च मैथुनासेवी एव भवति। स एवंविधः किम्? इत्याह—"दुहओ" त्ति द्विधा—द्वाभ्यां रागद्वेषात्मकाभ्यां बहिरन्तःप्रवृत्त्यात्मकाभ्यां वा प्रकाराभ्यां 'मलम्' अष्टप्रकारं कर्म्म 'सञ्चिनोति' बध्नाति। क इव किम्? इत्याह—'शिशुनागः' गण्डूपदः—अलस इत्यर्थः, स इव मृत्तिकाम्। स हि स्निग्धतनुतया बही रेणुभिरेव गुण्ड्यते, तामेव चाश्नीते इति बहिरन्तश्च द्विधाऽपि मलमुपचिनोति तथाऽयमपि। एतद्दृष्टान्ताभिधाने त्वयमभिप्रायः—यथाऽसौ बहिरन्तश्च उपचितमलः खरतरदिवाकरकरनिकरसंस्पर्शतः शुष्यन्निहैव क्लिश्यति विनाशं चाऽऽप्नोति तथाऽयमप्युचितमल आयुःक्षयिकर्मवशत इहैव जन्मनि क्लिश्यति विनश्यति चेति सूत्रार्थः ॥ १० ॥ अमुमेवार्थं व्यक्तीकर्त्तुमाह—

**तओ पुट्ठो आयंकेणं, गिलाणो परितप्पइ। पभीओ परलोयस्स, कम्माणुप्पेही अप्पणो ॥ ११ ॥**

अकाममरणस्वरूपम्।

व्याख्या—"तओ" त्ति तकः 'ततो वा' दण्डारम्भणाद्युपार्जितमलतः स्पृष्टः, केन? 'आतङ्केन' आशुघातिना शूलविसूचिकादिरोगेण, 'ग्लानः' मन्दः 'परितप्यते' बहिरन्तश्च खिद्यते । 'प्रभीतः' इति प्रकर्षेण त्रस्तः, कुतः? "परलोयस्स" त्ति परलोकात् सुब्व्यत्ययेन पञ्चम्यर्थे षष्ठी । किमिति? क्रियत इति कर्म्म—क्रिया तदनुप्रेक्षत इत्येवंशीलः कर्म्मानुप्रेक्षी, यत इति गम्यते । कस्य? आत्मनः, स हिंसाऽलीकभाषणादिकामात्मचेष्टां चिन्तयन् 'न किञ्चित् मया शुभमाचरितं किन्तु सदैवाजरामरवत् चेष्टितम्' इति चिन्तयन् चेतसि आतङ्कगतः खिद्यते । भवति हि विषयाकुलितचेतसोऽपि प्रायः प्राणोपरमसमयेऽनुतापः । तथा चाहुः—"कीरंति जाइं जोव्व–णमएण अवियारिऊण कज्जाइं । वयपरिणामे सरियाइं ताइं हियए खुडुक्कंति ॥ १ ॥" ११ ॥ अमुमेवार्थं व्यक्तीकर्त्तुमाह—

**सुया मे णरए ठाणा, असीलाणं च जा गई । बालाणं कूरकम्माणं, पगाढा जत्थ वेयणा ॥ १२ ॥**

व्याख्या—'श्रुतानि' आकर्णितानि 'मे' मया नरके 'स्थानानि' कुम्भीवैतरण्यसिपत्रवनादीनि । तत्किमियताऽपि परितप्यते? इत्याह—'अशीलानाम्' असदाचाराणां या 'गतिः' नरकादिका सा च श्रुता, कीदृशानाम्? 'बालानाम्' अज्ञानां 'क्रूरकर्म्मणां' हिंस्र-मृषाभाषकादीनां 'प्रगाढाः' प्रकर्षवत्यः 'यत्र' यस्यां गतौ 'वेदनाः' शीतोष्णशाल्मल्याश्लेषणादयः । तदयमस्याशयः—ममैवंविधानुष्ठानस्य एवंविधैव गतिरिति सूत्रार्थः ॥ १२ ॥

**तत्थोववाइयं ठाणं, जहा मे तमणुस्सुयं । आहाकम्मेहि गच्छंतो, सो पच्छा परितप्पइ ॥ १३ ॥**

व्याख्या—'तत्रे'ति नरकेषु उपपाते भवं औपपातिकं 'स्थानं' स्थितिः 'यथा' येन प्रकारेण भवतीति शेषः, 'मे' मया 'तत्' इत्यनन्तरोक्तपरामर्शे 'अनुश्रुतम्' अवधारितं गुरुभिरुच्यमानमिति शेषः । औपपातिकमिति च ब्रुवतोऽस्याऽ-

१ "क्रियन्ते यानि यौवन-मदेनाविचार्य्य कार्याणि । वय.परिणामे स्मृतानि, तानि हृदये खटत्कुर्वन्ति ॥ १ ॥"

यमाशयः—यदि गर्भजत्वं भवेद् भवेदपि तदवस्थाया छेदभेदादिनारकदुःखान्तरम्, औपपातिकत्वे तु अन्तर्मुहूर्त्तानन्तरमेव तथाविधवेदनोदय इति कुतस्तदनन्तरसम्भवः ? । तथा चाऽऽह—"आहाकम्मेहिं" ति 'यथाकर्म्मभिः' गमिष्यमाणगत्यनुरूपैः तीव्रतीव्रतराद्यनुभावान्वितैः कर्म्मभिः 'गच्छन्' यान् तदनुरूपमेव स्थानं, 'सः' इति बालः 'पश्चात्' इति आयुषि हीयमाने 'परितप्यते' यथा 'धिङ् मामसदनुष्ठायिनम्, किमिदानीं मन्दभाग्यः करोमि ?' इत्यादि शोचत इति सूत्रार्थः ॥१३॥ अमुमेवार्थं दृष्टान्तद्वारेण द्रढयन्नाह—

**जहा सागडिओ जाणं, समं हेचा महापहं । विसमं मग्गमोइन्नो, अक्खे भग्गम्मि सोयइ ॥१४॥**

व्याख्या—यथा 'शाकटिकः' गन्त्रीवाहकः "जाणं" ति 'जानन्' अवबुध्यमानः 'समम्' उपलादिरहितं 'हित्वा' त्यक्त्वा 'महापथं' विषममार्गम् 'अवतीर्णः' गन्तुं प्रवृत्तः 'अक्षे' धुरि 'भग्ने' खण्डिते शोचति 'धिङ् मे परिज्ञानं यज्जानन्नपि इत्थमपायमवाप्तवान्' इति सूत्रार्थः ॥ १४ ॥ सम्प्रत्युपनयमाह—

**एवं धम्मं विउक्कम्म, अहम्मं पडिवज्जिया । बाले मच्चुमुहं पत्ते, अक्खे भग्गे व सोयइ ॥ १५ ॥**

व्याख्या—'एवम्' इति शाकटिक इव 'धर्म्मं' सदाचारात्मकं 'व्युत्क्रम्य' विशेषेणोल्लङ्घ्य 'अधर्म्मं' धर्मप्रतिपक्षं हिंसादिकं 'प्रतिपद्य' अभ्युपगम्य 'बालः' अज्ञः 'मृत्युमुखं' मरणगोचरं 'प्राप्तः' गतः अक्षे भग्ने इव शोचति । किमुक्तं भवति ?—यथा अक्षभङ्गे शाकटिकः शोचति तथाऽयमपि मरणात्मकं फलमनुभवन् आत्मानमनुशोचति, हा ! किमेतन्मयाऽनुष्ठितम् ? इति सूत्रार्थः ॥ १५ ॥ शोचनानन्तरञ्च किमसौ करोति ? इत्याह—

**तओ से मरणंतम्मि, बाले संतस्सई भया । अकाममरणं मरइ, धुत्ते वा कलिणा जिए ॥ १६ ॥**

व्याख्या—'ततः' इत्यातङ्कोत्पत्तौ यच्छोचनमुक्तं तदनन्तरं "से" त्ति स मरणमेवान्तो मरणान्तस्तस्मिन् उपस्थिते

अकाममरणस्वरूपम् ।

इति शेषः, 'बालः' रागाद्याकुलितचित्तः 'संत्रस्यति' समुद्विजते बिभेतीति यावत्। कुतः? 'भयात्' नरकगतिगमनसाध्वसात्, अनेनाकामत्वमुक्तम्। स च किमेवं बिभ्यन् मरणाद् विमुच्यते उत न? इत्याह—अकामस्य–अनिच्छतो मरणम् अकाममरणं तेन, सूत्रे चाऽऽर्षत्वात् द्वितीया, 'म्रियते' प्राणान् त्यजति, नरकं चाऽसौ गच्छति, तत्र च शोचति। क इव कीदृशः सन्? 'धूर्त्त इव' द्यूतकार इव, वाशब्दस्योपमार्थत्वात्, 'कलिना' एकेन अक्रमाद् दायेन जितः। यथा हि अयमेकेन दायेन जितः सन्नात्मानं शोचति तथा असावपि इत्वरैर्विपाककटुभिः सङ्क्लेशबहुलैर्मनुजभोगैर्दिव्यसुखं हारितः शोचति दुःखी सन्निति सूत्रार्थः ॥ १६ ॥ प्रस्तुतमेवार्थं निगमयितुमाह—

अकाममरणस्वरूपम्।

**एयं अकाममरणं, बालाणं तु पवेइयं। इत्तो सकाममरणं, पंडियाणं सुणेह मे ॥ १७ ॥**

व्याख्या—'एतत्' अनन्तरमेव दुष्कृतकर्मणां परलोकाद्बिभ्यतां यन्मरणमुक्त तद् अकाममरणं बालानामेव, तुशब्दस्यैवकारार्थत्वात्, 'प्रवेदितं' प्रकर्षेण प्रतिपादितं तीर्थकरगणधरादिभिरिति गम्यते। पण्डितमरणप्रस्तावनार्थमाह—''इत्तो'' त्ति 'इतः' अकाममरणादनन्तरं 'सकाममरणं' पण्डितानां सम्बन्धि 'शृणुत' आकर्णयत 'मे' मम कथयत इत्युपस्कार इति सूत्रार्थः ॥ १७ ॥ यथाप्रतिज्ञातमाह—

**मरणं पि सपुन्नाणं, जहा मे तमणुस्सुयं। विप्पसन्नमणाघायं, संजयाणं वुसीमओ ॥ १८ ॥**

व्याख्या—'मरणमपि' आस्तां जीवितमित्यपिशब्दार्थः, भवतीति गम्यते, 'सपुण्यानां' पुण्यवतां, किं सर्वमपि? न इत्याह—'यथा' येन प्रकारेण 'मे' मम कथयत इति गम्यते, 'तदि'ति उपक्षेपसूत्रोपात्तम् 'अनुश्रुतम्' अवधारितं भवद्भिरिति शेषः। विविधैर्भावनादिभिः प्रकारैः प्रसन्नाः–मरणेऽपि अपगतमोहतया अनाकुलचेतसो विप्रसन्नाः तत्सम्बन्धि मरणमपि विप्रसन्नम्। न विद्यते आघातः तथाविधयतनयाऽन्यप्राणिनामात्मनश्च विधिवत्संलिखितशरीरतया यस्मिंस्तद्

॥१०५॥

अनागतम्। केषां पुनरिदम्? उच्यते—'संयतानां' सम्यक्पापोपरतानां चारित्रिणामित्यर्थः, "वुसीमउ" त्ति आर्षत्वाद् 'वश्यवतां' वश्यानि—आयत्तानि प्रक्रमाद् इन्द्रियाणि विद्यन्ते येषां ते वश्यवन्तः तेषाम्, एतच्चार्थात् पण्डितमरणमेव। ततोऽयमर्थः—यथैतत् संयतानां वश्यवतां विप्रसन्नमनाघातं च भवति तथा नाऽन्यप्राणिनाम्। उक्तञ्च—कालें सुपत्तदाणं, सम्मत्तविसुद्धी वोहिलाभं च। अंते समाहिमरणं, अभवजीवा न पावंति ॥ १ ॥ विशिष्टयोग्यतावतामेव तत्प्राप्तिरिति सूत्रार्थः ॥ १८ ॥ तथा चाह—

सकाममरणस्वरूपम्।

**न इमं सव्वेसु भिक्खूसु, ण इमं सव्वेसु गारिसु। नाणासीला य गारत्था, विसमसीला य भिक्खुणो ॥**

व्याख्या—'न' नैव 'इदं' पण्डितमरणं सर्वेषु 'भिक्षुषु' परदत्तोपजीविषु व्रतिष्वित्यर्थः; नेदं सर्वेषु 'अगारिषु' गृहिषु, सर्वचारित्रिणामेव तत्सम्भवात्, तथात्वे च तेषामपि तत्त्वतो यतित्वात्। यथा चैतदेवं तथोपपत्तित आह—'नानाशीलाः' अनेकविधव्रता अगारस्थाः, तेषां हि देशैकरूपं शीलम्, देशरूपस्य तस्यानेकधाऽभिधानात्। 'विषमशीलाश्च' विसदृशशीलाश्च भिक्षवः, नहि सर्वेऽप्यनिदानिनोऽविकलचारित्रिणो वा तत्कालं म्रियन्ते जिनमतप्रतिपन्ना अपि, तीर्थान्तरीयास्तु दूरोत्सारिता एव। तेषु हि गृहिणस्तावद् अत्यन्तनानाशीला एव, यतः केचित् 'गृहाश्रमप्रतिपालनमेव महाव्रतमि'ति प्रतिपन्नाः, "गृहाश्रमपरो धर्मो, न भूतो न भविष्यति। पालयन्ति नराः शूराः, क्लीबाः पाखण्डमाश्रिताः ॥ १ ॥" इतिवचनात्। अन्ये तु 'सप्त शिक्षापदशतानि गृहिणां व्रतम्' इत्याद्यनेकधैव ब्रुवते। भिक्षवोऽप्यत्यन्तविषमशीला एव, यतस्तेषु केषाञ्चित् पञ्चयमनियमात्मकं व्रतमिति दर्शनम्, अपरेषां कन्दमूलफलाशितैव इति विसदृशशीलता। न च तेषु कश्चिद्-विकलचारित्रसम्भव इति सर्वत्र पण्डितमरणाभाव इति सूत्रार्थः ॥ १९ ॥ विषमशीलतामेव भिक्षूणां समर्थयितुमाह—

1 "काले सुपात्रदान, सम्यक्त्वविशुद्धिर्बोधिलाभश्च। अन्ते समाधिमरण, अभव्यजीवा न प्राप्नुवन्ति ॥ १ ॥"

**संति एगेहि भिक्खूहिं, गारत्था संजमुत्तरा । गारत्थेहि य सव्वेहिं, साहवो संजमुत्तरा ॥ २० ॥**

**व्याख्या**—'सन्ति' विद्यन्ते 'एकेभ्यः' कुप्रवचनेभ्यः भिक्षुभ्यः "गारत्थ" त्ति सूत्रत्वाद् अगारस्थाः संयमेन–देशविरत्यात्मकेन 'उत्तराः' प्रधानाः संयमोत्तराः । कुप्रवचनभिक्षवो हि जीवास्तिक्यादपि बहिष्कृताः सर्वथा अचारित्रिणश्चेति कथं न सम्यग्दृशो देशचारित्रिणो गृहिणः तेभ्यः संयमोत्तराः सन्तु ? । एवं सति अगारस्थेष्वेव तदस्तु इत्यत आह—'अगारस्थेभ्यश्च सर्वेभ्यः' इति अनुमतिवर्ज्जसर्वोत्तमदेशविरतिप्राप्तेभ्योऽपि साधवः संयमोत्तराः परिपूर्णसंयमत्वात् तेषाम् । अत्र वृद्धसम्प्रदायः—

एगो सावगो साहुं पुच्छइ—सावगाणं साहूणं किमंतरं ? । साहुणा भन्नइ—सरिसव-मंदरंतरं । तओ सो आउलीहूओ पुणो पुच्छइ—कुलिंगि-सावगाणं किमंतरं ? । तेण भन्नइ—तमेव सरिसव-मंदरं ति । तओ समासासिओ । जओ भणियं—"देसिक्कदेसविरया, समणाणं सावगा सुविहियाणं । जेसिं परपासंडा, सइमं पि कलं न अग्घंति ॥ १ ॥"[1] तदनेन तेषां चारित्राभावदर्शनेन पण्डितमरणाभाव एव समर्थित इति सूत्रार्थः ॥ २० ॥ ननु कुप्रवचनभिक्षवोऽपि विचित्रलिङ्गधारिण एवेति कथं तेभ्योऽगारस्थाः संयमोत्तराः ? अत आह—

**चीराऽजिणं निगिणिणं, जडी संघाडि मुंडिणं । एयाणि वि न तायंति, दुस्सीलं परियागयं ॥२१॥**

**व्याख्या**—चीराणि च–चीवराणि अजिनं च–मृगादिचर्म्म चीराजिनम्, "निगिणिणं" ति सूत्रत्वात् नाग्न्यं "जडि" त्ति भावप्रधानत्वाद् निर्देशस्य जटित्वम्, 'सङ्घाटी' वस्त्रसंहतिजनिता, "मुंडिणं" ति यत्र शिखाऽपि स्वसमयतः छिद्यते तत् प्राग्वत् मुण्डित्वम् । 'एतान्यपी'ति निजनिजप्रक्रियाविरचितव्रतिवेषरूपाणि लिङ्गान्यपि, किं पुनर्गार्हस्थ्यम् इत्यपिशब्दार्थः, किम् ?

१ "देशैकदेशविरताः, श्रमणानां श्रावकाः सुविहितानाम् । येषां परपाषण्डाः, शततमामपि कलां नार्घन्ति ॥ १ ॥"

सकाममरण-स्वरूपम्।

ग्नाह—नैव त्रायन्ते भवात् दुष्कृतकर्म्मणो वेति गम्यते। कीदृशम्? 'दुःशीलं' दुराचारं "परियागयं" ति 'पर्यायगतं' प्रव्रज्यापर्यायमात्रम्, आर्षत्वाच्च यकारस्यैकस्य लोपः। न हि कषायकलुषचेतसो बहिर्वेषवृत्तिरतिकष्टहेतुरपि नरकादिकुगतिनिवारणायाऽलम्। ततो न लिङ्गधारणं वैशिष्ट्यहेतुरिति सूत्रार्थः ॥२१॥ आह—कथं गृहाद्यभावेऽप्यमीषां दुर्गतिः? इत्युच्यते—

**पिंडोलए व दुस्सीलो, णरगाओ ण मुच्चइ। भिक्खाए वा गिहत्थे वा, सुव्वए कमई दिवं॥ २२॥**

व्याख्या—वाशब्दोऽपिशब्दार्थः, ततश्च 'पिण्डावलगकोऽपि' स्वकीयाहाराभावतो भैक्ष्यसेव्यपि, आस्तां गृहादिमान्, दुःशीलः 'नरकात्' स्वकर्मोपस्थापितात् सीमन्तकादेर्न मुच्यते। अत्र चोदाहरणं तथाविधद्रमकः। तत्र च सम्प्रदायः—

रायगिहे नयरे एगो पिंडोलओ उज्जाणियाए विणिग्गए जणे भिक्खं हिंडइ। न य तस्स किंचि केणइ दिन्नं। ततो पउट्ठचित्तो सो तेसिं वेभारपव्वयकडगसन्निविट्ठाण पव्वओवरिं चडिऊण महइमहालियं सिलं चालेइ। 'एएसिं उवरि पाडेमि' त्ति रोद्दज्झाई विच्छुट्टिऊण तओ सिलाओ निवडिओ सिलातले संचुन्नियसव्वकाओ य मरिऊण अप्पइट्ठाणे नरए समुप्पन्नो।

तर्हि किमत्र तत्त्वतः सुगतिहेतुः? इत्याह—"भिक्खाए व" त्ति भिक्षामत्ति—भक्षयति भिक्षादः, वा विकल्पे, अनेन यतिरुक्तः, गृहे तिष्ठति गृहस्थः स वा, शोभनं निरतिचारतया सम्यग्भावाऽनुगततया च व्रतं—शीलं व्रतपालनात्मकमस्येति सुव्रतः 'क्रामति' गच्छति 'दिवं' देवलोकम्। मुख्यतो मुक्तिहेतुत्वेऽपि व्रतपरिपालनस्य दिवं क्रामतीत्यभिधानं जघन्यतोऽपि देवलोकप्राप्तिरिति ख्यापनार्थम्। उक्तं हि—"अविराहियसामण्ण-स्स साहुणो सावगस्स य जहण्णो। उववाओ सोहम्मे, भणिओ तेलुक्कदंसीहिं॥ १॥" अनेन व्रतपालनमेव तत्त्वतः सुगतिहेतुरित्युक्तमिति सूत्रार्थः॥ २२॥

यद्व्रतयोगाद् गृहस्थोऽपि दिवं क्रामति तद्व्रतमाह—

---

१ "अविराधितश्रामण्यस्य, साधोः श्रावकस्य च जघन्येन। उपपातः सौधर्मे, भणितस्त्रैलोक्यदर्शिभिः॥ १॥"

दशभेदं 'तपः' द्वादशविधं भिक्षादा वा गृहस्था वा, प्राकृतत्वाद् वचनव्यत्ययः । ये शान्त्या—उपशमेन परिनिर्वृताः—विध्यातकपायानलाः शान्तिपरिनिर्वृता इति सूत्रार्थः ॥ २८ ॥ एतच्चाकर्ण्य मरणेऽपि यथाभूता महात्मानो भवन्ति तथा चाऽऽह—

**तेसिं सोच्चा सपुज्जाणं, संजयाणं वुसीमओ । ण संतसंति मरणंते, सीलमंता बहुस्सुया ॥ २९ ॥**

व्याख्या—'तेपाम्' अनन्तराभिहितस्वरूपाणां यतीनां 'श्रुत्वा' आकर्ण्य उक्तरूपस्थानावाप्तिमिति शेषः, 'सत्पूज्यानां' सतां पूजार्हाणां 'संयतानां' संयमवतां वश्यवतां प्राग्वत्, 'न संत्रसन्ति' न उद्विजन्ते, क ?—मरणान्ते, 'शीलवन्तः' चारित्रिणः 'बहुश्रुताः' आगमश्रवणावदातीकृतमतयः । इदमुक्तं भवति—य एवाविदितधार्म्मिकगतयोऽनुपार्जितधर्म्माणश्च त एव मरणाद् उद्विजन्ते, यथा—कासाभिर्मृत्वा गन्तव्यम् ? । उपार्जितधर्माणस्तु धर्म्मफलमवगच्छन्तो नोद्विजन्ते । यदुक्तम्—"चरितो निरुपक्लिष्टो, धर्म्मो हि मयेति निर्वृतः स्वस्थः । मरणादपि नोद्विजते, कृतकृत्योऽस्मीति धर्मात्मा ॥ १ ॥" "सुगहियतवपत्थयणा, विसुद्धसम्मत्त-नाण-चारित्ता । मरणं ऊसवभूयं, मन्नंति समाहियप्पाणो ॥ २ ॥"[1] इति सूत्रार्थः ॥ २९ ॥ इत्थं सकामाऽकाममरणस्वरूपमभिधाय शिष्योपदेशमाह—

**तुलिया विसेसमादाय, दयाधम्मस्स खंतिए । विप्पसीएज्ज मेहावी, तहाभूएण अप्पणा ॥ ३० ॥**

व्याख्या—'तोलयित्वा' परीक्ष्य बालपण्डितमरणे, ततश्च विशेषं तयोरेव 'आदाय' गृहीत्वा 'दयाधर्म्मस्य च' यतिधर्म्मस्य, चस्य गम्यमानत्वात्, 'विशेष' शेपधर्म्मातिशायित्वलक्षणम् आदाय 'क्षान्त्या' क्षमया करणभूतया 'विप्रसीदेत्' प्रसन्नतां भजेत् न तु कृतद्वादशवर्षसंलेखनतथाविधतपस्विवत् निजाङ्गुलिभङ्गादिना कषायितामवलम्बेत 'मेधावी' मर्यादावर्त्ती, 'तथाभूतेन' यथैव मरणकालात् प्राग् अनाकुलचेता अभूत् मरणकालेऽपि तथावस्थितेन आत्मना उपलक्षित इति सूत्रार्थः ॥ ३० ॥ विप्रसन्नश्च यत्कुर्यात् तदाह—

१ "सुगृहीततप.पथ्यदना, विशुद्धसम्यक्त्व-ज्ञान-चारित्रा· । मरणमुत्सवभूत, मन्यन्ते समाहितात्मान. ॥ २ ॥"

**तओ काले अभिप्पेए, सड्ढी तालीसमंतिए। विणएज्ज लोमहरिसं, भेदं देहस्स कंखए ॥ ३१ ॥**

व्याख्या—'ततः' कषायोपशमानन्तरं 'काले' मरणकाले 'अभिप्रेते' अभिरुचिते, कदा च मरणमभिप्रेतम्? यदा योगा नोत्सर्पन्ति "सड्ढि" त्ति श्रद्धावान् 'तादृश' भयोत्थं 'अन्तिके' समीपे गुरूणामिति गम्यते, 'विनयेत्' अपनयेत् 'रोमहर्षं' रोमात्रं 'हा! मम मरणं भविष्यति' इत्यभिप्रायजं, किञ्च 'भेदं' विनाशं देहस्य काङ्क्षेत्, त्यक्तपरिकर्मतया न तु मरणाऽऽशंसया, वर्जनीयत्वादस्या इति सूत्रार्थः ॥ ३१ ॥ निगमयितुमाह—

**अह कालम्मि संपत्ते, आघायाय समुस्सयं। सकाममरणं मरइ, तिण्हमण्णयरं मुणी॥३२॥त्ति बेमि॥**

व्याख्या—'अथ' मरणाभिप्रायानन्तरं 'काले' मरणकाले 'सम्प्राप्ते' "निप्फाइया य सीसा, सउणी जह अंडयं पयत्तेणं। बारसमवच्छरियं, अह सलेहं ततो करइ ॥ १ ॥" इत्यादिना क्रमेण समायाते, "आघायाय" त्ति 'आघाताय' संलेखनादिक्रमेण विनाशाय, सुब्व्यत्ययात् 'समुच्छ्रयस्य' अन्तः कार्मणशरीरस्य बहिरौदारिकस्य, किं कुर्यात्? इत्याह—सकामम्-साभिलापस्य मरणं सकाममरणं तेन म्रियते, 'त्रयाणा' भक्तपरिज्ञेङ्गिनीपादपोपगमनानामन्यतरेण, सूत्रत्वात् सर्वत्र विभक्तिव्यत्ययः, 'मुनिः' तपस्वी इति सूत्रार्थः ॥ ३२ ॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥

**इति श्रीनेमिचन्द्रसूरिविनिर्मितायां सुखबोधायां उत्तराध्ययनसूत्रलघुटीकायां अकाममरणीयाख्यं पञ्चममध्ययनं समाप्तम् ॥**

१ "निष्पादिताश्च शिष्याः, शकुनिर्यथाऽण्डकं प्रयत्नेन। द्वादशसांवत्सरिकमथ, संलेखं ततः करोति ॥ १ ॥"

शिष्योपदेशः।

**अगारिसामाइयंगाइं, सड्ढी काएण फासए । पोसहं दुहओ पक्खं, एगराइं न हावए ॥ २३ ॥**

**व्याख्या**—अगारिणः–गृहिणः सामायिकं–सम्यक्त्व-श्रुत-देशविरतिरूपं तस्याङ्गानि–निःशङ्कता-कालाध्ययना-ऽणुव्रतादिरूपाणि अगारिसामायिकाङ्गानि "सड्ढि" त्ति सूत्रत्वात् श्रद्धा–रुचिरस्याऽस्तीति श्रद्धावान् कायेनेत्युपलक्षणत्वात् मनसा वाचा च 'स्पृशति' सेवते । 'पौषधम्' आहारपौषधादि "दुहओ पक्खं" ति प्राकृतत्वाद् द्वयोरपि सितेतररूपयोः पक्षयोः चतुर्दशीपौर्णमास्यादिषु तिथिषु "एगराइं" ति अपेर्गम्यमानत्वाद् एकरात्रिमपि, उपलक्षणत्वाच्च एकदिनमपि, "न हावए" त्ति न हापयति । रात्रिग्रहणं च दिवा व्याकुलतया कर्त्तुमशक्नुवन् रात्रावपि पौषधं कुर्यात् । इह च देशविरतिसामायिकाङ्गत्वेनैव सिद्धे यदस्य भेदेनोपादानं तदादरख्यापनार्थमदुष्टमेवेति सूत्रार्थः ॥ २३ ॥ प्रस्तुतमेवार्थमुपसंहर्त्तुमाह—

**एवं सिक्खासमावन्ने, गिहवासे वि सुव्वए । मुच्चइ छविपव्वाओ, गच्छे जक्खसलोगयं ॥ २४ ॥**

**व्याख्या**—'एवम्' अमुनोक्तेन न्यायेन शिक्षया–व्रताऽऽसेवनात्मिकया समापन्नः शिक्षासमापन्नः गृहवासेऽपि आस्तां प्रव्रज्यापर्याय इत्यपिशब्दार्थः, 'सुव्रतः' शोभनव्रतो मुच्यते । कुतः ? छविश्च–त्वक् पर्वाणि च–जानुकूर्परादीनि छविपर्व तद्योगाद् औदारिकशरीरमपि छविपर्व ततः । तदनन्तरं च 'गच्छेत्' यायाद् यक्षाः–देवाः, समानो लोकोऽस्येति सलोकस्तद्भावः सलोकता, यक्षैः सलोकता यक्षसलोकता ताम्, इयं च देवगतावेव भवति इत्यर्थाद् देवगतिमिति । अनेन च पण्डितमरणावसरे प्रसङ्गतो बालपण्डितमरणमुक्तमिति सूत्रार्थः ॥ २४ ॥ साम्प्रतं प्रस्तुतमेव पण्डितमरणं फलोपदर्शनद्वारेणाह—

**अह जे संवुडे भिक्खू, दोण्हमन्नयरे सिया । सव्वदुक्खप्पहीणे वा, देवे वा वि महिड्ढिए ॥ २५ ॥**

**व्याख्या**—'अथे'ति उपप्रदर्शने, 'यः' इत्यनिर्दिष्टनिर्देशे, 'संवृतः' इति पिहितसमस्ताऽऽश्रवद्वारः 'भिक्षु'रिति भावभिक्षुः स च द्वयोः 'अन्यतरः' एकतरः स्यात् । तदाऽऽह—सर्वाणि–अशेषाणि यानि दुःखानि–क्षुत्पिपासेष्टवियोगाऽनिष्ट-

सकाममरणस्वरूपम् ।

संयोगादीनि तैः प्रकर्षेण—पुनरनुत्पत्त्यात्मकेन हीनः—रहितः सर्वदुःखप्रहीणः स्यादिति सम्बन्धः, स च सिद्ध एव । ततः स वा स्याद् देवो वा, 'अपिः' सम्भावने, सम्भवति हि संहननादिवैकल्यतो मुक्त्यनवाप्तौ देवोऽपि स्यादिति, कीदृक् ?—महर्द्धिक इति सूत्रार्थः ॥ २५ ॥ यत्र चासौ देवो भवति तत्र कीदृशा आवासाः ? कीदृशाश्च देवाः ? इत्याह—

**उत्तराइं विमोहाइं, जुइमंताणुपुव्वसो । समाइन्नाइँ जक्खेहिं, आवासाइं जसंसिणो ॥ २६ ॥**

**दीहाउया इड्ढिमंता, समिद्धा कामरूविणो । अहुणोववन्नसंकासा, भुज्जो अच्चिमालिप्पभा ॥२७॥**

व्याख्या—'उत्तराः' उपरिवर्त्तिनोऽनुत्तरविमानाख्याः, [1]विमोहा इव 'विमोहाः' अल्पवेदादिमोहनीयोदयतया, 'द्युतिमन्तः' दीप्तिमन्तः, "अणुपुव्वसो" त्ति अनुपूर्वतः क्रमेण विमोहादिविशेषणविशिष्टाः, सौधर्म्मादिषु ह्यनुत्तरविमानाऽवसानेषु पूर्वपूर्वापेक्षया प्रकर्षवन्त्येव विमोहत्वादीनि । 'समाकीर्णाः' व्याप्ताः 'यक्षैः' देवैः आवासाः, प्राकृतत्वात् नपुंसकलिङ्गता । देवास्तु तत्र 'यशस्विनः' श्लाघान्विताः, 'दीर्घायुषः' चिरजीविनः, 'ऋद्धिमन्तः' सम्पदुपेताः, 'समृद्धाः' अतिदीप्ताः, 'कामरूपिणः' अभिलापानुरूपरूपविधायिनः, अनुत्तरेष्वपि तच्छक्तियुक्तत्वात् । 'अधुनोपपन्नसङ्काशाः' प्रथमोत्पन्नदेवतुल्याः, अनुत्तरेषु हि वर्णद्युत्यादि आयुस्तुल्यमेव भवति । 'भूयोऽर्चिमालिप्रभाः' प्रभूताऽऽदित्यदीप्तयो न तु केवलादित्यस्य तादृशी द्युतिरस्तीति सूत्रार्थः ॥ २६–२७ ॥ उपसंहर्त्तुमाह—

**ताणि ठाणाणि गच्छंति, सिक्खित्ता संजमं तवं । भिक्खाए वा गिहत्थे वा, जे संतिपरिनिव्वुडा ॥२८॥**

व्याख्या—'तानि' अभिहितस्वरूपाणि 'स्थानानि' आवासान् 'गच्छन्ति' यान्ति 'शिक्षित्वा' अभ्यस्य 'संयमं' सप्त-

---

[1] अथवा मोहो द्विधा—द्रव्यतोऽन्धकारो भावतश्च मिथ्यादर्शनादिः, स द्विविधोऽपि सततरत्नोद्योतित्वेन सम्यग्दर्शनस्यैव च तत्र सम्भवेन विगतो येषु ते विमोहा. ।

दशभेदं 'तपः' द्वादशविधं भिक्षादा वा गृहस्था वा, प्राकृतत्वाद् वचनव्यत्ययः । ये शान्त्या—उपशमेन परिनिर्वृताः—विध्यातकपायानलाः शान्तिपरिनिर्वृता इति सूत्रार्थः ॥ २८ ॥ एतच्चाकर्ण्य मरणेऽपि यथाभूता महात्मानो भवन्ति तथा चाऽऽह—

**तेसिं सोच्चा सपुज्जाणं, संजयाणं वुसीमओ । ण संतसंति मरणंते, सीलमंता बहुस्सुया ॥ २९ ॥**

व्याख्या—'तेषाम्' अनन्तराभिहितस्वरूपाणां यतीनां 'श्रुत्वा' आकर्ण्य उक्तरूपस्थानावाप्तिमिति शेषः, 'सत्पूज्यानां' सतां पूजार्हाणां 'संयतानां' संयमवतां वश्यवतां प्राग्वत्, 'न संत्रस्यन्ति' न उद्विजन्ते, क ?—मरणान्ते, 'शीलवन्तः' चारित्रिणः 'बहुश्रुताः' आगमश्रवणावदातीकृतमतयः । इदमुक्तं भवति—य एवाविदितधार्म्मिकगतयोऽनुपार्जितधर्म्माणश्च त एव मरणाद् उद्विजन्ते, यथा—कास्माभिर्मृत्वा गन्तव्यम् ? । उपार्जितधर्माणस्तु धर्म्मफलमवगच्छन्तो नोद्विजन्ते । यदुक्तम्—"चरितो निरुपक्लिष्टो, धर्म्मो हि मयेति निर्वृतः स्वस्थः । मरणादपि नोद्विजते, कृतकृत्योऽस्मीति धर्मात्मा ॥ १ ॥" "[1]सुगहियतवपत्थयणा, विसुद्धसम्मत्त-नाण-चारित्ता । मरणं ऊसवभूयं, मन्नंति समाहियप्पाणो ॥ २ ॥" इति सूत्रार्थः ॥ २९ ॥ इत्थं सकामाऽकाममरणस्वरूपमभिधाय शिष्योपदेशमाह—

**तुलिया विसेसमादाय, दयाधम्मस्स खंतिए । विप्पसीएज्ज मेहावी, तहाभूएण अप्पणा ॥ ३० ॥**

व्याख्या—'तोलयित्वा' परीक्ष्य बालपण्डितमरणे, ततश्च विशेषं तयोरेव 'आदाय' गृहीत्वा 'दयाधर्म्मस्य च' यतिधर्म्मस्य, चस्य गम्यमानत्वात्, 'विशेष' शेषधर्म्मातिशायित्वलक्षणम् आदाय 'क्षान्त्या' क्षमया करणभूतया 'विप्रसीदेत्' प्रसन्नतां भजेत् न तु कृतद्वादशवर्षसलेखनतथाविधतपस्विवत् निजाङ्गुलिभङ्गादिना कषायितामवलम्बेत 'मेधावी' मर्यादावर्त्ती, 'तथाभूतेन' यथैव मरणकालात् प्राग् अनाकुलचेता अभूत् मरणकालेऽपि तथावस्थितेन आत्मना उपलक्षित इति सूत्रार्थः ॥ ३० ॥ विप्रसन्नश्च यत्कुर्यात् तदाह—

---

१ "सुगृहीततपःपथ्यदना, विशुद्धसम्यक्त्व-ज्ञान-चारित्राः । मरणमुत्सवभूतं, मन्यन्ते समाहितात्मानः ॥ २ ॥"

**तओ काले अभिप्पेए, सड्ढी तालीसमंतिए । विणएज्ज लोमहरिसं, भेदं देहस्स कंखए ॥ ३१ ॥**

व्याख्या—'ततः' कषायोपशमानन्तरं 'काले' मरणकाले 'अभिप्रेते' अभिरुचिते, कदा च मरणमभिप्रेतम्? यदा योगा नोत्सर्पन्ति "सड्ढि" त्ति श्रद्धावान् 'तादृश' भयोत्थं 'अन्तिके' समीपे गुरूणामिति गम्यते, 'विनयेत्' अपनयेत् 'रोमहर्षं' रोमाञ्चं 'हा! मम मरण भविष्यति' इत्यभिप्रायजं, किञ्च 'भेद' विनाश देहस्य काङ्क्षेत्, त्यक्तपरिकर्मतया न तु मरणाऽऽशंसया, वर्जनीयत्वादस्या इति सूत्रार्थः ॥ ३१ ॥ निगमयितुमाह—

**अह कालम्मि संपत्ते, आघायाय समुस्सयं । सकाममरणं मरइ, तिण्हमण्णयरं मुणी ॥ ३२ ॥ त्ति बेमि ॥**

व्याख्या—'अथ' मरणाभिप्रायानन्तरं 'काले' मरणकाले 'सम्प्राप्ते' "निप्फाइया य सीसा, सउणी जह अंडयं पयत्तेणं । बारससंवच्छरियं, अह सलेहं ततो करइ ॥ १ ॥" इत्यादिना क्रमेण समायाते, "आघायाय" त्ति 'आघाताय' संलेखनादिक्रमेण विनाशाय, सुब्व्यत्ययात् 'समुच्छ्रयस्य' अन्तः कार्मणशरीरस्य बहिरौदारिकस्य, किं कुर्यात्? इत्याह—सकामस्य-साभिलाषस्य मरणं सकाममरणं तेन म्रियते, 'त्रयाणा' भक्तपरिज्ञेङ्गिनीपादपोपगमनानामन्यतरेण, सूत्रत्वात् सर्वत्र विभक्तिव्यत्ययः, 'मुनिः' तपस्वी इति सूत्रार्थः ॥ ३२ ॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥

**इति श्रीनेमिचन्द्रसूरिविनिर्मितायां सुखबोधायां उत्तराध्ययनसूत्रलघु-टीकायां अकाममरणीयाख्यं पञ्चममध्ययनं समाप्तम् ॥**

१ "निष्पादिताश्च शिष्याः, शकुनिर्यथाऽण्डकं प्रयत्नेन । द्वादशसांवत्सरिकमथ, सलेखं ततः करोति ॥ १ ॥"

# अथ षष्ठं क्षुल्लकनिर्ग्रन्थीयमध्ययनम् ।

उक्तं पञ्चममध्ययनम् । साम्प्रतं क्षुल्लकनिर्ग्रन्थीयाख्यं षष्ठमारभ्यते । अस्य चायमभिसम्बन्धः—'अनन्तराध्ययने मरणविभक्तिरुक्ता । तत्रापि चानन्तरं पण्डितमरणम्, तच्च "विरयाणं पंडियं वेति" त्ति वचनात् विरतानामेव । न चैते विद्याचरणविकला इति तत्स्वरूपमनेनोच्यते' इत्यनेन सम्बन्धेनाऽऽयातमिदम् । विद्याचरणे च निर्ग्रन्थगुणाविति निर्ग्रन्थस्वरूपं तावत् किञ्चिदुच्यते—"पुलाग-बकुस-कुसीला, नियंठ-सिणायगा य नायव्वा । एएसिं पंचण्ह वि, होइ विभासा इमा कमसो ॥ १ ॥ होइ पुलाओ दुविहो, लद्धिपुलाओ तहेव इयरो य । लद्धिपुलाओ संघाइकज्जे इयरो उ पंचविहो ॥ २ ॥ 'लद्धिपुलाओ' जस्स देविंदरिद्धिसरिसा रिद्धी, सो सिंगणाइयकज्जे समुप्पन्ने चक्कवट्टिं पि सबलवाहणं चुन्नेउं समत्थो । 'इयरो' त्ति 'आसेवणापुलाओ' पुलागो नाम असारो, जहा धन्नेसु पलंजी । सो पंचविहो—नाणे[1] दंसण[2] चरणे[3], लिंगे अहसुहुमए य नायव्वो । नाणे दंसण चरणे, तेसिं तु विराहण असारो ॥ ३ ॥ लिंगपुलाओ अन्नं, निक्कारणओ करेइ सो लिंगं । मणसा अकप्पियाई निसेवओ होइ अहसुहुमो ॥ ४ ॥" शरीरोपकरणविभूपाऽनुवर्त्तिनः ऋद्धियशस्कामाः सातगौरवाश्रिताः अविविक्तपरिवाराः छेद-शबलचारित्रयुक्ताः निर्ग्रन्थाः 'बउसा' भन्नंति । यदुक्तम्—"सरीरे उवगरणे

१ "पुलाक-बकुश-कुशीला, निर्ग्रन्थ-स्नातकौ च ज्ञातव्याः । एतेषां पञ्चानामपि, भवति विभाषा इय क्रमशः ॥१॥ भवति पुलाको द्विविधो, लब्धिपुलाकस्तथैव इतरश्च । लब्धिपुलाकः सङ्घादिकार्ये इतरस्तु पञ्चविधः ॥ २ ॥ लब्धिपुलाकः—यस्य देवेन्द्रर्द्धिसदृशी ऋद्धिः, स शृङ्गनादितकार्ये समुत्पन्ने चक्रवर्त्तिनमपि सबलवाहनं चूरयितुं समर्थः । इतर इति—आसेवनापुलाकः, पुलाको नाम—असारः, यथा धान्येषु पलञ्जी । स पञ्चविधः—ज्ञाने दर्शने चरणे, लिङ्गे यथासूक्ष्मश्च ज्ञातव्यः । ज्ञाने दर्शने चरणे, तेषां तु विराधना असार. ॥ ३ ॥ लिङ्गपुलाकोऽन्यं, निष्कारणतः करोति स लिङ्गं । मनसा अकल्पिकादिनिपेवको भवति यथासूक्ष्मः ॥४॥" २ "शरीरे उपकरणे च, बाकुशिकत्वं

पञ्चनिर्ग्रन्थ-वक्तव्यता ।

देसे सव्वे सरीरम्मि ॥ १ ॥ आभोगमणाभोगे, संवुड असंवुडे
य, ...ममक्खायं । सुक्किलवत्थाइधरे,
...सुहुमे । सो दुविहो वी वउसो, पंचविहो होइ नायव्वो ॥ २ ॥ आभोगे जाणंतो, करेइ दोसं तहा अणाभोगे ।
मूलुत्तरेहिं संवुडो, विवरीयमसंवुडो होइ ॥ ३ ॥ अच्छि मुह मज्जमाणो, होइ अहासुहुमओ तहा वउसो । पडिसेवणा
...कसाए, होइ कुसीलो दुहा एसो ॥ ४ ॥ नाणे दंसण चरणे, तवे य अहसुहुमए य बोद्धव्वे । पडिसेवणाकुसीलो, पंच-
विहो ऊ मुणेयव्वो ॥ ५ ॥ नाणाई उवजीवइ, अहसुहुमो अह इमो मुणेयव्वो । साइज्जंतो रागं, वच्चइ एसो तवच्चरणी
॥ ६ ॥ एमेव कसायम्मि वि, पंचविहो होइ ऊ कुसीलो य । कोहेणं विज्जाई, पउंजए एव माणाई ॥ ७ ॥ एमेव दंस-
णम्मि वि, सावं पुण देइ ऊ चरित्तम्मि । मणसा कोहाईणि उ, करेइ अह सो अहासुहुमो ॥ ८ ॥ कसाएहिं नाणाईणि
विराहेइ त्ति कसायकुसीलो । 'नियंठो' अब्भिंतरबाहिरगंथनिग्गओ, सो उवसंतकसाओ खीणकसाओ वा अंतोमुहुत्तका-

---

द्विधा समाख्यातम् । शुक्लवस्त्रादिधरो, देशे सर्वे शरीरे ॥ १ ॥ आभोग अनाभोग', संवृतोऽसंवृतो यथासूक्ष्मः । स द्विविधोऽपि बकुश',
पञ्चविधो भवति ज्ञातव्यः ॥ २ ॥ आभोगः जानन्, करोति दोष तथा अनाभोगः । मूलोत्तरैः संवृतो, विपरीतोऽसंवृतो भवति ॥ ३ ॥
अक्षिणी मुख मृजन्, भवति यथासूक्ष्मकस्तथा बकुशः । प्रतिसेवनायां कषाये, भवति कुशीलो द्विधा एषः ॥४॥ ज्ञाने दर्शने चरणे, तपसि च
यथासूक्ष्मश्च बोद्धव्यः । प्रतिसेवनाकुशीलः, पञ्चविधस्तु ज्ञातव्यः ॥ ५ ॥ ज्ञानादि उपजीवति, यथासूक्ष्मोऽथाऽयं ज्ञातव्यः । सादयन्
रागं, व्रजति एष तपश्चरणी ॥६॥ एवमेव कषायेऽपि, पञ्चविधो भवति तु कुशीलश्च । क्रोधेन विद्यादि, प्रयुङ्क्ते एवं मानादि ॥७॥ एवमेव
दर्शनेऽपि, शाप पुनर्ददाति तु चारित्रे । मनसा क्रोधादीनि तु, करोति अथ स यथासूक्ष्मः ॥ ८ ॥ कषायैर्ज्ञानादीनि विराधयति इति
कषायकुशीलः । 'निर्ग्रन्थ' आभ्यन्तरबाह्यग्रन्थनिर्गत', स उपशान्तकषायः क्षीणकषायो वा अन्तर्मुहूर्त्तकालिकः । मोहनीयादिघातिचतु-
...कर्मापगत. स्नातको भण्यते । पुलाक-बकुश-प्रतिसेवनाकुशीलाः द्वयोः समायिक-च्छेदोपस्थापनीयसंयमयोर्भवेयुः । कषायकुशीलो द्वयोः

पञ्चनिर्ग्रन्थवक्तव्यता ।

लिओ । मोहणिज्जाइघाइचउकम्मावगओ सिणाओ भन्नइ । पुलाक-बकुश-प्रतिसेवनाकुशीलाः दोसु सामाइय-छेदोवट्ठाव-
णियसंजमेसु होज्जा । कसायकुसीलो दोसु परिहारविसुद्धि-सुहुमसंपराइएसु इति सम्प्रदायः ।

प्रज्ञप्तिस्त्वाह—"[1]कसायकुसीले णं पुच्छा, सामाइयसंजमे होज्जा जाव सुहुमसंपरायसंजमे वा होज्जा, नो अह-
क्खायसजमे हुज्जा । नियंठा सिणायगा य एए दो वि अहक्खायसंजमे" । पुलाग-वउस-पडिसेवणाकुसीला उक्कोसेणं
अभिन्नदसपुव्वधरा । कषायकुशील-निर्ग्रन्थौ चतुर्दशपूर्वधरौ । जघन्येन पुलाकस्य श्रुतम् आचारवस्तु नवमपूर्वे, बकुश-
कुशील-निर्ग्रन्थानां तु अष्टौ प्रवचनमातरः । स्नातकः श्रुतापगतः केवली । प्रतिसेवना तु प्रज्ञप्त्यभिप्रायेण—"[2]पुलाए
णं पुच्छा, जाव मूलगुणे पडिसेवमाणे पंचण्हं आसवाणं अन्नयरं पडिसेवेज्जा, उत्तरगुणे पडिसेवेज्जमाणे दसविहस्स
पच्चक्खाणस्स अन्नयरं पडिसेवेज्जा" । "[3]वउसे णं पुच्छा, जाव नो मूलगुणपडिसेवए होज्जा, उत्तरगुणपडिसेवए होज्जा ।"
"[4]पडिसेवणाकुसीले जहा पुलाए" । कषायकुशील-निर्ग्रन्थ-स्नातकानां प्रतिसेवना नास्तीति विस्तरस्त्वेषां बृहट्टीकातोऽवसेय
इति ॥ साम्प्रत सूत्रमनुस्त्रियते—

**जावंतऽविज्जा पुरिसा, सव्वे ते दुक्खसंभवा । लुप्पंति बहुसो मूढा, संसारम्मि अणंतए ॥ १ ॥**

---

परिहारविशुद्धि-सूक्ष्मसंपरायिकयो. इति सम्प्रदाय । १ "कषायकुशीलः पृच्छा, सामायिकसंयमे भवेत् यावत् सूक्ष्मसंपरायसंयमे वा भवेत् न यथाख्यातसंयमे भवेत् । निर्ग्रन्थाः स्नातकाश्च एतौ द्वावपि यथाख्यातसंयमे" । पुलाक-बकुश–प्रतिसेवनाकुशीलाः उत्कृष्टेन अभिन्नदशपूर्वधराः । २ "पुलाक. पृच्छा, यावत् मूलगुणान् प्रतिसेवमानः पञ्चानां आश्रवाणां अन्यतरं प्रतिसेवेत, उत्तरगुणान् प्रति-सेवमानः दशविधस्य प्रत्याख्यानस्य अन्यतर प्रतिसेवेत" । ३ "बकुश. पृच्छा, यावत् न मूलगुणप्रतिसेवक. भवेत्, उत्तरगुणप्रति-सेवकः भवेत्" । ४ "प्रतिसेवनाकुशीलः यथा पुलाक." ।

व्याख्या—'यावन्तः' यत्परिमाणाः न विद्यते विद्या—तत्त्वज्ञानात्मिका येषां तेऽविद्याः 'पुरुषाः' नराः 'सर्वे' अखिलाः ते, दुःखस्य सम्भवः—उत्पत्तिर्येषु ते दुःखसम्भवाः। एवंविधाः सन्तः किम्? इत्याह—'लुप्यन्ते' दारिद्र्यादिभिर्बाध्यन्ते। 'बहुशः' अनेकशः 'मूढाः' हिताऽहितविवेचनं प्रति असमर्थाः 'संसारे' भवे 'अनन्तके' अविद्यमानान्ते। अनेन निर्ग्रन्थ-स्वरूपज्ञापनार्थं तद्विपक्ष उक्त इति भावनीयमिति सूत्रार्थः ॥ १ ॥ इह चाऽयमुदाहरणसम्प्रदायः—

एगो गोहो अभग्गसेहरो अईवदोगच्चेण बाहिओ। किसिकम्माइं करेतस्स वि तस्स न किंचि फलइ। ततो वेरग्गेण निग्गओ गेहाओ लग्गो पुहई हिंडिउं। कुणइ अणेगधणोवज्जणोवाए परं न किंचि सपज्जइ। भणियं च—"धम्मविहूणु जाउ जहिं भावउ, सयलत्थ वि पर पेक्खइ आवइ। धम्मवंतु नरु जहिं जहि गच्छइ, तहिं तहिं सुंदर सोक्खइं पेच्छइ ॥१॥ वाहउ हलु हिंडावइ गड्डउ, करइ कुकम्मु सया वि स वड्डउ। सेव करइ वाणिज्जि पयट्टइ, धम्मविहूणु तहा वि न लट्टइ ॥ २ ॥" तओ सो निरत्थयपरिब्भमणेण निव्विन्नो पुणरवि घरं जओ नियत्तो। एगम्मि गामे देवकुलियाए रत्तिं वासोवगओ। जाव पेच्छइ ताव देवकुलियाए एगो पुरिसो निग्गओ चित्तघडहत्थगओ। सो एगपासे ठाइऊण तं चित्तघडं पूइऊण भणइ—लहुं मे परमरमणिज्जं वासहरं सज्जेहि। तेण तक्खणामेव कयं। एवं सयणा-ऽऽसण-धण-भत्त-परियण-भोगसाहणाइ कारिओ। एवं ज जं भणइ तं तं करेइ चित्तघडो, जाव रमणीहिं सद्धिं भोगे भुंजइ, जाव पभाए पडिसाहरइ। तेण गोहेण सो दिट्ठो। पच्छा सो चिंतेइ—किं मज्झ बहुएण परिभमिएण? एयं चेव ओलग्गामि। सो तेण ओलग्गिओ। विणएणं आराहिओ भणइ—कि करेमि?। तेण भन्नइ—अहं मंदभग्गो दोगच्चेण कयत्थिओ

१ "धर्मविहीनो यातु यत्र भावयति, सर्वत्रापि परा प्रेक्षते आपदम्। धर्मवान् नरो यत्र यत्र गच्छति, तत्र तत्र सुन्दराणि सौख्यानि प्रेक्षते ॥१॥ वाहयति हलं हिण्डयति शकटं, करोति कुकर्म सदापि स महत्। सेवां करोति वाणिज्ये प्रयतते, धर्मविहीनस्तथापि न लष्टामपि ॥२॥"

शेपालङ्काराणां स्वर्णादीनां च । 'पशवः' अजैडकादयः । दासाश्च–गृहजातादयः पोरुसं ति सूत्रत्वात् पौरुषेयं च–पुरुषसमूहो दासपौरुषेयम् । सर्वमेव 'एतत्' अनन्तरोक्तं 'त्यक्त्वा' हित्वा संयमं परिपाल्येत्यभिप्रायः कामरूपी भविष्यसि, इहैव वैक्रियकरणाद्यनेकलब्धियोगात् परत्र च देवभवाऽवाप्तेरिति सूत्रार्थः ॥५॥ पुनः सत्यस्वरूपमेव विशेपत आह—

**थावरं जंगमं चेव, धणं धण्णं उवक्खरं । पच्चमाणस्स कम्मेहिं, नालं दुक्खाउ मोयणे ॥ ६ ॥**

व्याख्या—सुगमा । नवरं 'स्थावरं' गृहारामादि, 'जङ्गमं' मनुष्यगवादि, 'उपस्करं' गृहोपकरणं, शेपं स्पष्टमिति सूत्रार्थः ६

**अज्झत्थं सव्वओ सव्वं, दिस्स पाणे पियायए । न हणे पाणिणो पाणे, भयवेराओ उवरए ॥७॥**

व्याख्या—"अज्झत्थं" ति सूत्रत्वात् 'अध्यात्मस्थम्' अध्यात्मं–चित्तं तस्मिंस्तिष्ठतीत्यध्यात्मस्थं, तच्चेह प्रस्तावात् सुखादि 'सर्वतः' इष्टसंयोगाऽनिष्टविप्रयोगादिहेतुभ्यो जातमिति गम्यते । 'सर्वं' निरवशेपं 'दृष्ट्वा' प्रियत्वादिस्वरूपेणाऽवधार्य, चस्य गम्यमानत्वात् 'प्राणांश्च' प्राणिनश्च 'प्रियात्मकान्' प्रिय आत्मा येषां तान्, बहुहिरण्यकोटिमूल्येनाऽभयकुमाराऽलब्धयवमात्रकालेयदृष्टान्तेन दृष्ट्वा न हन्यात् प्राणिनः 'प्राणान्' इन्द्रियादीन्, प्राणिन इति जातौ एकवचनम् । कीदृशः सन् ? इत्याह—भयं च प्रतीतं वैरं च–प्रद्वेषो भयवैरं तस्मात् 'उपरतः' निवृत्तः सन्निति सूत्रार्थः ॥ ७ ॥

इत्थं प्राणातिपातलक्षणाश्रवनिरोधमभिधाय शेपाश्रवनिरोधमाह—

**आदाणं णरयं दिस्स, नायइज्ज तणामवि । दोगुंछी अप्पणो पाते, दिन्नं भुंजेज्ज भोयणं ॥ ८ ॥**

व्याख्या—आदीयत इति 'आदानं' धनधान्यादि, नरकहेतुत्वात् नरकं दृष्ट्वा 'नाऽऽददीत' न गृह्णीत–न स्वीकुर्यात्, "तणामवि" त्ति तृणमपि आस्तां हिरण्यादिकं, कथं तर्हि प्राणधारणम् ? इत्याह—जुगुप्सते आत्मानमाहारमन्तरेण धर्मधुराधरणाक्षममित्येवंशीलो जुगुप्सी, आत्मनः सम्बन्धिनि 'पात्रे' भाजने दत्तं गृहस्थैरिति गम्यते, भुञ्जीत 'भोज-

नम्' आहार न तु गृहस्थपात्रे बहुदोषसम्भवात् । यदुक्तम्—"पच्छाकम्मं पुरेकम्मं, सिया तत्थ ण कप्पइ । एय-मट्ठं न भुजंति, निग्गंथा गिहिभायणे ॥ १ ॥" अनेन परिग्रहात्मकाऽऽश्रवनिरोध उक्तः, तदेवं "तन्मध्यपतितः तद्ग्रहणेन गृह्यते" इति न्यायात, मृषावादा-ऽदत्तादानमैथुनात्मकाऽऽश्रवत्रयनिरोध उक्त इति सूत्रार्थः ॥ ८ ॥ एवं पञ्चाश्रवविरमणात्मके संयम उक्ते यथा परे विप्रतिपद्यन्ते तथा दर्शयितुमाह—

**इहमेगे उ मन्नंति, अप्पचक्खाय पावगं । आयारियं विदित्ता णं, सव्वदुक्खा विमुच्चइ ॥ ९ ॥**

व्याख्या—'इह' जगति 'एके' केचन कुतीर्थिकाः 'तुः' पुनरर्थे, 'मन्यन्ते' अभ्युपगच्छन्ति यथा 'अप्रत्याख्याय' अनिराकृत्य 'पापकं' प्राणातिपातादिविरतिम् अकृत्वैव "आयारियं" ति 'आचारिकं' निजनिजाऽऽचारभवमनुष्ठानमेव तत् 'विदित्वा' यथावत् ज्ञात्वा 'सर्वदुःखात्' शारीरमानसाद् विमुच्यते । एवं सर्वत्र ज्ञानमेव मुक्त्यङ्गम्, न चैतच्चारु, नहि रोगिण इवौषधादिपरिज्ञानतो भावरोगेभ्यः ज्ञानावरणादिकर्म्मभ्यो महाव्रतात्मकपञ्चाङ्गोपलक्षितक्रियामननुष्ठाय मुक्तिः । ते नैवमनालोचयन्तो भवदुःखाऽऽकुलिता वाचालतयैवाऽऽत्मानं स्वस्थयन्ति । तथा चाह—

**भणंता अकरंता य, बंधमोक्खपइन्निणो । वायाविरियमेत्तेणं, समासासंति अप्पयं ॥ १० ॥**

व्याख्या—'भणन्तः' प्रतिपादयन्तः प्रक्रमात् ज्ञानमेव मुक्त्यङ्गमिति, अकुर्वन्तश्च मुक्त्युपायमनुष्ठानम्, बन्धमोक्षयोः प्रतिज्ञा—अभ्युपगमो बन्धमोक्षप्रतिज्ञा तद्वन्तः अस्ति बन्धः अस्ति मोक्ष इत्येवं वादिन एव केवलं न तु तथाऽनुष्ठायिनः, वाग्वीर्यम्—वचनशक्तिः वाचालतेति यावत् तदेवाऽनुष्ठानशून्यं वाग्वीर्यमात्रं तेन 'समाश्वासयन्ति' ज्ञानादेव वयं मुक्तियायिन इति स्वस्थयन्त्यात्मानमिति सूत्रार्थः ॥ १० ॥ यथैतत् न चारु तथा स्वत एवाह—

१ "पश्चात्कर्म पुरःकर्म, स्यात्तत्र न कल्पते । एतदर्थं न भुञ्जन्ति, निर्ग्रन्था गृहिभाजने ॥ १ ॥"

पञ्चाश्रव-वक्तव्यता ।

पञ्चनिर्ग्रन्थ-वक्तव्यता ।

न मन्तुष्टः प्रजापतिः । भूयोऽप्यपत्यदानेन, ददाति गलशृङ्खलाम् ॥ १ ॥" त एव तीव्रमोहोदयादिहेतुतया जातीनाम्—एकेन्द्रियादिजातीनां पन्थानः—तत्प्रापकत्वात् मार्गाः पाशजातिपथास्तान् 'बहून्' प्रभूतान् अविद्यानां विप्लुतिहेतून् । किम् ? इत्याह—'आत्मना' स्वयं न तु परोपरोधादिना सद्भ्यः—जीवेभ्यो हितः 'सत्यः' संयमः तं एषयेत् । एषयंश्च सत्यं कि नु कुर्याद् ? इत्याह—'मैत्रीं' मित्रभावं 'भूतेषु' पृथिव्यादिजन्तुषु 'कल्पयेत्' कुर्यादिति सूत्रार्थः ॥ २ ॥ अपरञ्च—

**माया पिया ण्हुसा भाता, भज्जा पुत्ता य ओरसा। नालं ते मम ताणाय, लुप्पंतस्स सकम्मुणा॥३॥**
**एयमट्ठं सपेहाए, पासे समितदंसणे । छिंद गेहिं सिणेहं च, ण कंखे पुव्वसंथवं ॥ ४ ॥**

व्याख्या—तत्राऽऽद्यसूत्रपूर्वार्द्धं स्पष्टम् । नवर 'स्नुषा' वधूः, पुत्राश्च 'औरसाः' उरसि भवाः—स्वयमुत्पादिताः 'नाऽलं' न समर्थाः 'ते' मात्रादयो मम 'त्राणाय' रक्षणाय 'लुप्यमानस्य' छिद्यमानस्य स्वकर्मणा । भणिय च—"पिई-माइ-भाउ-भगिणी-भज्जा-पुत्ताण जं कए कुणइ । पावं तस्स विवागं, भुंजइ इक्कलओ दुक्खी ॥१॥" 'एतम्' अमुं पूर्वोक्तमर्थं 'स्वप्रेक्षया' स्वबुद्ध्या 'पश्येत्' अवधारयेत् । शमितम्—उपशमित दर्शनं—प्रस्तावान्मिथ्यात्वात्मकं येन सः 'शमितदर्शनः' सम्यग्दृष्टिः सन् "छिंद" त्ति सूत्रत्वात् छिन्द्यात् 'गृद्धिं' विषयाऽभिकाङ्क्षां 'स्नेहं च' स्वजनादिषु प्रेम 'न' नैव 'काङ्क्षेत्' अभिलषेत, 'पूर्वसंस्तवं' पूर्वपरिचयम् एकग्रामोषित इत्यादिकम्, यतो न कश्चिदिह परत्र वा त्राणाय दुःखसम्भवे धर्म्मं विनेति भाव इति सूत्रद्वयार्थः ॥ ३–४ ॥ अमुमेवार्थं विशेषतोऽनूद्याऽस्यैव फलमाह—

**गवासं मणिकुंडलं, पसवो दासपोरुसं । सव्वमेयं चइत्ता णं, कामरूवी भविस्ससि ॥ ५ ॥**

व्याख्या—गावश्चाश्वाश्च गवाश्वं, तथा मणयश्च—मरकतादयः कुण्डलानि च प्रतीतानि मणिकुण्डलं, उपलक्षणमेतत्

१ "पितृ मातृ भ्रातृ-भगिनी-भार्या-पुत्राणां यत्कृते करोति । पाप तस्य विपाकं, भुङ्क्ते एकाकी दुःखी ॥ १ ॥"

शेपालङ्काराणां स्वर्णादीनां च । 'पशवः' अजैडकादयः । दासाश्च—गृहजातादयः पोरुसं ति सूत्रत्वात् पौरुषेयं च—पुरुषसमूहो दासपौरुषेयम् । सर्वमेव 'एतत्' अनन्तरोक्तं 'त्यक्त्वा' हित्वा संयमं परिपाल्येत्यभिप्रायः कामरूपी भविष्यसि, इहैव वैक्रियकरणाद्यनेकलब्धियोगात् परत्र च देवभवाऽवाप्तेरिति सूत्रार्थः ॥५॥ पुनः सत्यस्वरूपमेव विशेपत आह—

**थावरं जंगमं चेव, धणं धण्णं उवक्खरं । पच्चमाणस्स कम्मेहिं, नालं दुक्खाउ मोयणे ॥ ६ ॥**

**व्याख्या**—सुगमा । नवरं 'स्थावरं' गृहारामादि, 'जङ्गमं' मनुष्यगवादि, 'उपस्करं' गृहोपकरणं, शेपं स्पष्टमिति सूत्रार्थः ६

**अज्झत्थं सव्वओ सव्वं, दिस्स पाणे पियायए । न हणे पाणिणो पाणे, भयवेराओ उवरए ॥७॥**

**व्याख्या**—"अज्झत्थं" ति सूत्रत्वात् 'अध्यात्मस्थम्' अध्यात्मं—चित्तं तस्मिंस्तिष्ठतीत्यध्यात्मस्थं, तच्चेह प्रस्तावात् सुखादि 'सर्वतः' इष्टसयोगाऽनिष्टविप्रयोगादिहेतुभ्यो जातमिति गम्यते । 'सर्वं' निरवशेपं 'दृष्ट्वा' प्रियत्वादिस्वरूपेणाऽवधार्य, चस्य गम्यमानत्वात् 'प्राणांश्च' प्राणिनश्च 'प्रियात्मकान्' प्रिय आत्मा येपां तान्, वहुहिरण्यकोटिमूल्येनाऽभयकुमाराद्युपलब्धयवमात्रकालेयदृष्टान्तेन दृष्ट्वा न हन्यात् प्राणिनः 'प्राणान्' इन्द्रियादीन्, प्राणिन इति जातौ एकवचनम् । कीदृशः सन् ? इत्याह—भयं च प्रतीतं वैरं च—प्रद्वेषो भयवैरं तस्मात् 'उपरतः' निवृत्तः सन्निति सूत्रार्थः ॥ ७ ॥

इत्थं प्राणातिपातलक्षणाश्रवनिरोधमभिधाय शेपाश्रवनिरोधमाह—

**आदाणं णरयं दिस्स, नायइज्ज तणामवि । दोगुंछी अप्पणो पाते, दिन्नं भुंजेज्ज भोयणं ॥ ८ ॥**

**व्याख्या**—आदीयत इति 'आदानं' धनधान्यादि, नरकहेतुत्वात् नरकं दृष्ट्वा 'नाऽऽददीत' न गृह्णीत—न स्वीकुर्यात्, "तणामवि" त्ति तृणमपि आस्तां हिरण्यादिकं, कथं तर्हि प्राणधारणम् ? इत्याह—जुगुप्सते आत्मानमाहारमन्तरेण धर्मधुराधरणाक्षममित्येवंशीलो जुगुप्सी, आत्मनः सम्वन्धिनि 'पात्रे' भाजने दत्तं गृहस्थैरिति गम्यते, भुञ्जीत 'भोज-

नम्' आहारं न तु गृहस्थपात्रे बहुदोषसम्भवात् । यदुक्तम्—"पच्छाकम्मं पुरेकम्मं, सिया तत्थ ण कप्पइ । एय-मट्ठं न भुजंति, निग्गथा गिहिभायणे ॥ १ ॥"[1] अनेन परिग्रहात्मकाऽऽश्रवनिरोध उक्तः, तदेवं "तन्मध्यपतितः तद्ग्रहणेन गृह्यते" इति न्यायात्, मृषावादा-ऽदत्तादानमैथुनात्मकाऽऽश्रवत्रयनिरोध उक्त इति सूत्रार्थः ॥ ८ ॥ एवं पञ्चाश्रवविरमणात्मके संयम उक्ते यथा परे विप्रतिपद्यन्ते तथा दर्शयितुमाह—

**इहमेगे उ मन्नंति, अप्पचक्खाय पावगं । आयारियं विदित्ता णं, सव्वदुक्खा विमुच्चइ ॥ ९ ॥**

व्याख्या—'इह' जगति 'एके' केचन कुतीर्थिकाः 'तुः' पुनरर्थे, 'मन्यन्ते' अभ्युपगच्छन्ति यथा 'अप्रत्याख्याय' अनिराकृत्य 'पापकं' प्राणातिपातादिविरतिम् अकृत्वैव "आयारियं" ति 'आचारिकं' निजनिजाऽऽचारभवमनुष्ठानमेव तत् 'विदित्वा' यथावत् ज्ञात्वा 'सर्वदुःखात्' शारीरमानसाद् विमुच्यते । एवं सर्वत्र ज्ञानमेव मुक्त्यङ्गम्, न चैतच्चारु, नहि रोगिण औषधादिपरिज्ञानतो भावरोगेभ्यः ज्ञानावरणादिकर्म्मभ्यो महाव्रतात्मकपञ्चाङ्गोपलक्षितक्रियामननुष्ठाय मुक्तिः । ते नैवमनालोचयन्तो भवदुःखाऽऽकुलिता वाचालतयैवाऽऽत्मानं स्वस्थयन्ति । तथा चाह—

**भणंता अकरंता य, बंधमोक्खपइन्निणो । वायाविरियमेत्तेणं, समासासंति अप्पयं ॥ १० ॥**

व्याख्या—'भणन्त.' प्रतिपादयन्तः प्रक्रमात् ज्ञानमेव मुक्त्यङ्गमिति, अकुर्वन्तश्च मुक्त्युपायमनुष्ठानम्, बन्धमोक्षयोः प्रतिज्ञा–अभ्युपगमो बन्धमोक्षप्रतिज्ञा तद्वन्तः अस्ति बन्धः अस्ति मोक्ष इत्येवं वादिन एव केवलं न तु तथाऽनुष्ठायिनः, वाग्वीर्यम्–वचनशक्तिः वाचालतेति यावत् तदेवाऽनुष्ठानशून्यं वाग्वीर्यमात्रं तेन 'समाश्वासयन्ति' ज्ञानादेव वय मुक्तिगामिन इति स्वस्थयन्त्यात्मानमिति सूत्रार्थः ॥ १० ॥ यथैतत् न चारु तथा स्वत एवाह—

१ "पश्चात्कर्म पुरःकर्म, स्यात्तत्र न कल्पते । एतदर्थं न भुञ्जन्ति, निर्ग्रन्था गृहिभाजने ॥ १ ॥"

पञ्चनिर्ग्रन्थ-वक्तव्यता ।

तयाऽपि आस्तामन्यदा, एवं सति शरीरधारणमप्ययुक्तम्, तद्धारणे सति आकाङ्क्षासम्भवात्, अत आह—पूर्वं–पूर्वकालभावि यत् कर्म तत्क्षयार्थं इदं 'देहं' शरीरं 'समुद्धरेत्' उचिताऽऽहारादिभोगतः परिपालयेत्, तद्धारगस्य शुद्धिहेतुत्वात् । यदुक्तम्—"सव्वत्थ संजमं सं-जमाउ अप्पाणमेव रक्खिज्जा । मुचइ अइवायाओ, पुणो वि सोही न याविरई ॥ १ ॥" ततः शरीरोद्धरणमपि निरभिष्वङ्गतयैव विधेयमिति सूत्रार्थः ॥ १४ ॥ यथा च देहपालनेऽपि नाभिष्वङ्गः तथा दर्शयितुमाह—

**विविच कम्मुणो हेउं, कालकंखी परिव्वए । मातं पिंडस्स पाणस्स, कडं लद्धूण भक्खए ॥ १५ ॥**

व्याख्या—'विविच्य' पृथक्कृत्य 'कर्म्मणः' ज्ञानावरणादेः 'हेतुम्' उपादानकारणं मिथ्यात्वाविरत्यादि, कालम्–अनुष्ठानप्रस्तावं काङ्क्षत्येवंशीलः कालकाङ्क्षी परिव्रजेदिति पूर्ववत् 'मात्रां' यावत्या संयमनिर्वाहस्तावतीं ज्ञात्वेति गम्यते, 'पिण्डस्य' ओदनादेः 'पानस्य च' आयामादेः, खाद्यस्वाद्यानुपादानं यतेः प्रायस्तत्परिभोगासम्भवात् । 'कृतम्' आत्मार्थमेव निर्वर्त्तितं गृहिभिरिति गम्यते । प्रक्रमात् पिण्डादिकमेव 'लब्ध्वा' प्राप्य 'भक्षयेत्' अभ्यवहरेदिति सूत्रार्थः ॥ १५ ॥ कदाचिद् भुक्तशेषं धारयितुमभिष्वङ्गसम्भवः स्यादित्याह—

**सन्निहिं च ण कुवेज्जा, लेवमायाए संजए । पक्खी पत्तं समादाय, निरवेक्खो परिव्वए ॥ १६ ॥**

व्याख्या—'सन्निधिम्' अन्यदिनभोजनार्थं भक्तादिस्थापनं न कुर्वीत । 'चः' पूर्वापेक्षया समुच्चये । 'लेपमात्रया'[2] यावता पात्रमुपलिप्यते तावत्परिमाणमपि सन्निधिं न कुर्वीत आस्तां बहु, 'संयतः' यतिः । किमेवं पात्राद्युपकरणसन्निधिरपि न

१ "सर्वत्र संयम संयमादात्मानमेव रक्षेत् । मुच्यतेऽतिपातात्, पुनरपि शोधिर्न चाविरतिः ॥ १ ॥"
२ "ईषदर्थे क्रियायोगे, मर्यादायां परिच्छदे । परिमितौ धने चेति, मात्राशब्द. प्रकीर्त्तित. ॥ १ ॥"

कर्तव्यः ? इत्याह—पक्षीव पक्षी, "पत्त" त्ति 'पात्रं' पतद्ग्रहादिभाजनम् उपलक्षणत्वात् शेषोपकरणं च, 'समादाय' गृहीत्वा परिव्रजेदिति सम्बन्धः । यथा पक्षी पक्षसञ्चयं गृहीत्वा गच्छति एवमसावपि इत्यर्थः, 'निरपेक्षः' निरभिलाषः तथा च प्रतिदिनं संयमपलिमन्थभीरुतया पात्रादिसन्निधिकरणे न दोष इति सूत्रार्थः ॥ १६ ॥ यदुक्तं निरपेक्षः परिव्रजेदिति तद् अभिव्यक्तीकर्तुमाह—

**एसणासमिए लज्जू, गामे अणियओ चरे । अप्पमत्तो पमत्तेहिं, पिंडपायं गवेसए ॥ १७ ॥**

व्याख्या—एषणायाम्-उत्पादनग्रहणग्रासविषयायां समितः-उपयुक्तः एषणासमितः, अनेन निरपेक्षत्वमुक्तम् । "लज्जु" त्ति लज्जा-संयमस्तद्वान् ग्रामे उपलक्षणत्वाद् नगरादौ च 'अनियतः' अनियतवृत्तिः 'चरेत्' विहरेत्, अनेनापि निरपेक्षता एवोक्ता । चरंश्च किं कुर्यात् ? इत्याह—अप्रमत्तः 'प्रमत्तेभ्यः' गृहस्थेभ्यः, ते हि विषयादिप्रमादसेवनात् प्रमत्ता उच्यन्ते, 'पिण्डपातं' भिक्षां गवेषयेदिति सूत्रार्थः ॥ १७ ॥ इत्थं प्रसक्तानुप्रसक्त्या संयमस्वरूपमुक्तम्, तदुक्तौ च निर्ग्रन्थस्वरूपम्, सम्प्रत्यत्रैवाऽऽदरोत्पादनार्थमाह—

**एवं से उदाहु अणुत्तरनाणी, अणुत्तरदंसी अणुत्तरनाणदंसणधरे ।**
**अरहा नायपुत्ते भगवं, वेसालीए वियाहिए ॥ १८ ॥ त्ति बेमि ॥**

व्याख्या—'एवम्' अमुना प्रकारेण "से" इति 'सः' भगवान् "उदाहु" त्ति उदाहृतवान् । 'अनुत्तरज्ञानी' सर्वोत्कृष्टज्ञानवान्, गौरखवद् मत्वर्थीयः, अन्यथा बहुव्रीहिरेव स्यादत्र । तथा अनुत्तरं-सर्वोत्कृष्टं पश्यतीत्यनुत्तरदर्शी, सामान्यविशेषग्राहितया च दर्शनज्ञानयोर्भेदः । यत उक्तम्—"जं सामन्नगहणं, दंसणमेयं विसेसियं नाणं" ति ।

१ पतन्तं त्रायत इति पत्रं पक्षसञ्चयः । २ "यत्सामान्यग्रहणं दर्शनमेतत् विशेषितं ज्ञानम् ।"

पञ्चज्ञानमन्थ-वक्तव्यता ।

**ण चित्ता तायए भासा, कुओ विज्जाणुसासणं । विसन्ना पावकम्मेहिं, बाला पंडियमाणिणो ११**

व्याख्या—'न' नैव 'चित्रा' प्राकृतसंस्कृतादिरूपा, 'त्रायते' रक्षति पापेभ्य इति गम्यते, 'भाषा' वचनात्मिका । स्यादेतत् 'अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः' इत्यघोरादिमन्त्रात्मिका वाक् त्राणाय भविष्यतीत्याह—कुतो विद्या–विचित्रमन्त्रात्मिका तस्या अनुशासनं–शिक्षणं विद्याऽनुशासनं त्रायते पापात्? न कुतोऽपि, तन्मात्रादेव मुक्तौ शेषानुष्ठानवैयर्थ्यप्रसङ्गादिति भावः । अत एव ये त्राणाय इति वदन्ति ते यादृशाः तदाह—विविधं सन्नाः–मग्ना विषण्णाः 'पापकर्म्मसु' हिंसाद्यनुष्ठानेषु सततकारितयेति भावः । कुतस्त एवंविधाः? इत्याह—'बालाः' रागद्वेषाकुलिताः 'पण्डितमानिनः' आत्मानं पण्डितं मन्यमाना इति सूत्रार्थः ॥ ११ ॥ साम्प्रतं सामान्येनैव मुक्तिपरिपन्थिनां दोषदर्शनायाऽऽह—

**जे केइ सरीरे सत्ता, वन्ने रूवे य सव्वसो । मणसा काय वक्केणं, सव्वे ते दुक्खसंभवा ॥ १२ ॥**

व्याख्या—ये केचित् शरीरे 'सक्ताः' लालनाऽभ्यञ्जनोद्वर्त्तनस्नानादितत्परिचेष्टायां वद्धाग्रहा न तु इदमनुसरन्ति—"तहँ तह लालिउ निच्चकालु जोडिउ रुच्चंतइ, खलु जिव थक्कइ चलिवि वंठ जं जीवि चलंतइ । दड्ढसरीरह तासु रे सिजण ! पाउ म किज्जउ, धडहड जीविउ जाइ चित्तु परलोयह दिज्जउ ॥ १ ॥" अन्नं च—"सुट्ठु वि लट्ठं पुट्ठ, देहं जीएण वज्जियमवस्सं । होही छारुकुरुडं, किमिपुंजं साणभक्खं च ॥ १ ॥" तथा 'वर्णे' गौरत्वादिके, 'रूपे च' सौन्दर्ये, चशब्दात् स्पर्शादिषु सक्ताः, "सव्वसो" त्ति सूत्रत्वात् 'सर्वथा' स्वयंकरणकारणादिभिः सर्वैः प्रकारैः, 'मनसा' कथं वयमुपचित-

१ "तथा तथा लालित नित्यकालं योजितं रोचमाने, खल इव तिष्ठति चलित्वा वण्ठ यद् जीवे चलति । दग्धशरीरस्य तस्य [कृते] रे सुजन ! पापं मा क्रियतां, धडधड जीवित याति चित्तं परलोकाय दीयताम् ॥१॥"

२ सुष्ठु अपि लष्टं पुष्टं, देहं जीवेन वर्जितमवश्यम् । भविष्यति क्षारावकर कृमिपुञ्जं श्वानभक्ष्यं च ॥ १ ॥"

पञ्चनिर्ग्रन्थ-वक्तव्यता।

शरीरा वर्णादिमन्तश्च भविष्यामः ?, 'कायेन' रसायनाद्युपयोगेन, 'वाक्येन' वचसा रसायनादिप्रश्नात्मकेन, 'सर्वे' निरवशेषाः 'ते' ज्ञानादेव मुक्तिरित्यादिवादिनः 'दुःखसम्भवाः' इहान्यजन्मनि च दुःखभाज इति सूत्रार्थः ॥ १२ ॥ यथैवैते दुःखभाजनं तथा दर्शयन्नुपदेशसर्वस्वमाह—

**आवण्णा दीहमद्धाणं, संसारम्मि अणंतए। तम्हा सव्वदिसं पस्स, अप्पमत्तो परिव्वए ॥ १३ ॥**

व्याख्या—'आपन्नाः' प्राप्ताः 'दीर्घम्' अनाद्यनन्तं अध्वानमिव 'अध्वानम्' उत्पत्तिप्रलयरूपम् एकत्रावस्थितेरभावात्। 'संसारे' चतुर्गतिके 'अनन्तके' अपर्यवसाने "तम्ह" त्ति यस्मादेवमेते मुक्तिपरिपन्थिनो दुःखसम्भवाः तस्मात्, "सव्वदिस" ति सर्वदिशः—प्रस्तावाद् अशेषभावदिशः, ताश्च पृथिव्याद्यष्टादशभेदाः। उक्तञ्च—"पुढवि-जल-जलण-वाया, मूला खंध-ऽग्ग-पोरबीया य। बितिचउपणिंदितिरिया, नारया देवसंघाया ॥ १ ॥ सम्मुच्छिम-कम्मा-ऽकम्म-भूमिगनरा तहंतरद्दीवा। भावदिसा दिस्सइ जं, संसारी निययमेयाहिं ॥ २ ॥" पश्यन् 'अप्रमत्तः' प्रमादरहितो यथैतेपामेकेन्द्रियाणीनां विराधना न भवति तथा 'परिव्रजेः' संयमाध्वनि यायाः सुशिष्य[1] इति सूत्रार्थः ॥ १३ ॥ यथा चाऽप्रमत्तेन प्रव्रजितव्यं तथा दर्शयितुमाह—

**बहिया उड्ढमादाय, नाऽवकंखे कयाइ वि। पुव्वकम्मक्खयट्ठाए, इमं देहं समुद्धरे ॥ १४ ॥**

व्याख्या—"बहिय" त्ति 'बहिः' बहिर्भूतं भवादिति गम्यते, 'ऊर्द्धम्' सर्वोपरिस्थितम् अर्थात् मोक्षम् 'आदाय' गृहीत्वा यथेनार्थं यतितव्यमिति निश्चित्य 'नावकाङ्क्षेत्' विषयादिकं नाऽभिलषेत् 'कदाचिदपि' उपसर्गपरीषहाऽऽकुलित-

---

१ "पृथिवी-जल-ज्वलन-वाता', मूला-स्कन्धा-ऽग्र-पर्वबीजानि च। द्वि त्रि-चतु:-पञ्चेन्द्रियतिर्यञ्चश्च नारका देवसङ्घाता. ॥ १ ॥ सम्मूर्च्छिम-कर्मा-ऽकर्म-भूमिगनरा-ऽन्तरद्वीपा। भावदिश दृश्यते यत्, संसारी नियतमेताभिः ॥ २ ॥"

तयाऽपि आस्तामन्यदा, एवं सति शरीरधारणमप्ययुक्तम्, तद्धारणे सति आकाङ्क्षासम्भवात्, अत आह—पूर्वं–पूर्वकालभावि यत् कर्म तत्क्षयार्थं इदं 'देहं' शरीरं 'समुद्धरेत्' उचिताऽऽहारादिभोगतः परिपालयेत्, तद्धारणस्य शुद्धिहेतुत्वात्। यदुक्तम्—"[1]सव्वत्थ संजमं सं-जमाउ अप्पाणमेव रक्खिज्जा। मुच्चइ अइवायाओ, पुणो वि सोही न याविरई ॥ १ ॥" ततः शरीरोद्धरणमपि निरभिष्वङ्गतयैव विधेयमिति सूत्रार्थः ॥ १४ ॥ यथा च देहपालनेऽपि नाभिष्वङ्गः तथा दर्शयितुमाह—

**विविच कम्मुणो हेउं, कालकंखी परिव्वए। मातं पिंडस्स पाणस्स, कडं लद्धूण भक्खए ॥ १५ ॥**

व्याख्या—'विविच्य' पृथक्कृत्य 'कर्मणः' ज्ञानावरणादेः 'हेतुम्' उपादानकारणं मिथ्यात्वाविरत्यादि, कालम्–अनुष्ठानप्रस्तावं काङ्क्षत्येवंशीलः कालकाङ्क्षी परिव्रजेदिति पूर्ववत् '[2]मात्रां' यावत्या संयमनिर्वाहस्तावतीं ज्ञात्वेति गम्यते, 'पिण्डस्य' ओदनादेः 'पानस्य च' आयामादेः, खाद्यस्वाद्यानुपादानं यतेः प्रायस्तत्परिभोगासम्भवात्। 'कृतम्' आत्मार्थमेव निर्वर्त्तितं गृहिभिरिति गम्यते। प्रक्रमात् पिण्डादिकमेव 'लब्ध्वा' प्राप्य 'भक्षयेत्' अभ्यवहरेदिति सूत्रार्थः ॥ १५ ॥ कदाचिद् भुक्तशेषं धारयितुमभिष्वङ्गसम्भवः स्यादित्याह—

**सन्निहिं च ण कुव्वेज्जा, लेवमायाए संजए। पक्खी पत्तं समादाय, निरवेक्खो परिव्वए ॥ १६ ॥**

व्याख्या—'सन्निधिम्' अन्यदिनभोजनार्थं भक्तादिस्थापनं न कुर्वीत। 'चः' पूर्वापेक्षया समुच्चये। 'लेपमात्रया' यावता पात्रमुपलिप्यते तावत्परिमाणमपि सन्निधिं न कुर्वीत आस्तां बहु, 'संयतः' यतिः। किमेवं पात्राद्युपकरणसन्निधिरपि न

१ "सर्वत्र संयम संयमादात्मानमेव रक्षेत्। मुच्यतेऽतिपातात्, पुनरपि शोधिर्न चाविरतिः ॥ १ ॥"
२ "ईषदर्थे क्रियायोगे, मर्यादायां परिच्छदे। परिमितौ धने चेति, मात्राशब्द. प्रकीर्त्तित. ॥ १ ॥"

कर्तव्यः ? इत्याह—पक्षीव पक्षी, "पत्त" त्ति 'पात्रं' पतद्ग्रहादिभाजनम् उपलक्षणत्वात् शेषोपकरणं च, 'समादाय' गृहीत्वा परिव्रजेदिति सम्बन्धः। यथा पक्षी पक्षसञ्चयं गृहीत्वा गच्छति एवमसावपि इत्यर्थः, 'निरपेक्षः' निरभिलापः तया च प्रतिदिनं संयमपलिमन्थभीरुतया पात्रादिसन्निधिकरणे न दोष इति सूत्रार्थः ॥ १६ ॥ यदुक्तं निरपेक्षः परिव्रजेदिति तद् अभिव्यक्तीकर्त्तुमाह—

**एसणासमिए लज्जू, गामे अणियओ चरे। अप्पमत्तो पमत्तेहिं, पिंडपायं गवेसए ॥ १७ ॥**

व्याख्या—एषणायाम्–उत्पादनग्रहणग्रासविषयायां समितः–उपयुक्तः एषणासमितः, अनेन निरपेक्षत्वमुक्तम्। "लज्जु" त्ति लज्जा–संयमस्तद्वान् ग्रामे उपलक्षणत्वाद् नगरादौ च 'अनियतः' अनियतवृत्तिः 'चरेत्' विहरेत्, अनेनापि निरपेक्षता एवोक्ता। चरंश्च किं कुर्यात् ? इत्याह—अप्रमत्तः 'प्रमत्तेभ्यः' गृहस्थेभ्यः, ते हि विषयादिप्रमादसेवनात् प्रमत्ता उच्यन्ते, 'पिण्डपातं' भिक्षां गवेषयेदिति सूत्रार्थः ॥ १७ ॥ इत्थं प्रसक्तानुप्रसक्त्या संयमस्वरूपमुक्तम्, तदुक्तौ च निर्ग्रन्थस्वरूपम्, सम्प्रत्यत्रैवाऽऽदरोत्पादनार्थमाह—

**एवं से उदाहु अणुत्तरनाणी, अणुत्तरदंसी अणुत्तरनाणदंसणधरे।**
**अरहा नायपुत्ते भगवं, वेसालीए वियाहिए ॥ १८ ॥ त्ति वेमि ॥**

व्याख्या—'एवम्' अमुना प्रकारेण "से" इति 'सः' भगवान् "उदाहु" त्ति उदाहृतवान्। 'अनुत्तरज्ञानी' सर्वोत्कृष्टज्ञानवान्, गौरखवद् मत्वर्थीयः, अन्यथा बहुव्रीहिरेव स्यादत्र। तथा अनुत्तरं–सर्वोत्कृष्टं पश्यतीत्यनुत्तरदर्शी, सामान्यविशेषग्राहितया च दर्शनज्ञानयोर्भेदः। यत उक्तम्—"जं सामन्नगहणं, दंसणमेयं विसेसियं नाणं" ति।

१ पतन्त आगत इति पत्रं पक्षसञ्चय.। २ "यत्सामान्यग्रहणं दर्शनमेतत् विशेषित ज्ञानम्।"

पञ्चनिर्ग्रन्थवक्तव्यता।

जहेगो ऊरणगो पाहुणनिमित्तं पोसिज्जइ। सो य पीणियसरीरो सुण्हाओ हरिद्दादिकयंगराओ कयकन्नचूलओ। कुमारगा वि य णं नाणाविहेहिं कीडाविसेसेहिं कीलाविंति। तं च वच्छगो एवंलालिज्जमाणं दट्ठूण माऊए नेहेण गोवियं दोहएण य तयणुकंपाए मुक्कमवि खीरं न पिबइ रोसेण। ताए पुच्छिओ भणइ—अम्मो! एस नंदियगो सव्वेहिं एएहिं अम्ह सामिसालेहिं इट्ठेहिं जवसजोग्गासणेहिं तदुवओगेहि य अलंकारविसेसेहिं अलंकारिओ पुत्त इव परिपालिज्जइ, अहं तु मंदभग्गो सुक्काणि तणाणि कयाइ लभामि, ताणि वि न पज्जत्तगाणि, एवं पाणियं पि, न य मं कोइ लालेइ। ताए भन्नइ—पुत्त! "आउरचिन्नाइं एयाइं, जाइं चरइ नंदिओ। सुक्कतणेहिं लाढाहिं, एयं दीहाउलक्खणं ॥ १ ॥" जहा आउरो मरिउकामो जं मग्गइ पत्थं वा अपत्थं वा तं से दिज्जइ, एवं सो नंदिओ मारिज्जिहिइ जया तया पेच्छिहिसि इति सूत्रार्थः ॥ १ ॥ ततोऽसौ कीदृशो जातः? किं च कुरुते? इत्याह—

**तओ से पुट्ठे परिवूढे, जायमेए महोदरे। पीणिए विउले देहे, आएसं परिकंखए ॥ २ ॥**

**व्याख्या**—'ततः' इत्योदनादिदानाद् हेतौ पञ्चमी, 'सः' इत्युरभ्रः 'पुष्टः' उपचितमांसतया पुष्टिभाक्, 'परिवृढः' प्रभुः समर्थ इति यावत्, 'जातमेदाः' उपचितचतुर्थधातुः अत एव 'महोदरः' बृहज्जठरः, 'प्रीणितः' तर्पितः यथासमयमुपढौकिताऽऽहारादिभिरेव च हेतुभिः 'विपुले' विशाले 'देहे' शरीरे सति आदेशं परिकाङ्क्षतीव 'परिकाङ्क्षति' इच्छतीति सूत्रार्थः ॥ २ ॥ स किमेवं चिरस्थायी स्यात्? इत्याह—

**जाव ण एइ आएसे, ताव जीवइ से दुही। अह पत्तम्मि आएसे, सीसं छेत्तूण भुज्जइ ॥ ३ ॥**

**व्याख्या**—'यावदि'ति कालावधारणम्, 'ने'ति न आयाति आदेशस्तावत् 'जीवति' प्राणान् धारयति 'सः' उरभ्रः

१ "आतुरचिह्नानि एतानि, यानि चरति नन्दिकः। शुष्कतृणैर्यापनीयैः, एतत् दीर्घायुर्लक्षणम् ॥ १ ॥"

"दुहि" त्ति वध्यमण्डनमिवाऽस्यौदनदानादीनि तत्त्वतो दुःखमेव तदस्यास्तीति दुःखी । "अह पत्तम्मि आएस" 'अथ' अनन्तरं 'प्राप्ते' आगते आदेशे 'शिरः' मस्तकं तत् 'छित्त्वा' द्विधाविधाय भुज्यते, तेनैव स्वामिना प्राहुणकसहितेनेति शेषः ।

सम्प्रति सम्प्रदायशेषमनुस्त्रियते—ततो सो वच्छगो तं नंदियं पाहुणएसु आगएसु वहिज्जमाणं दट्ठुं तिसिओ वि माऊए थणं नाभिलसइ भएण । ताए भन्नइ—किं पुत्त ! भयभीओ सि ? नेहेण पण्हुयं पि मं न पियसि । तेण भन्नइ—अम्म ! कओ मे थणाभिलासो ? नणु सो वराओ नंदियओ अज्ज केहिं पि पाहुणगेहिं आगएहिं ममं अग्गओ विनिग्गयजीहो विलोलनयणो विस्सरं रसंतो अत्ताणो असरणो मारिओ, तब्भया कओ मे पाउमिच्छा ? । तओ ताए भन्नइ—पुत्त ! नणु तया चेव ते कहियं, जहा—"आउरचिन्नाइं एयाइं ।" एस तेसिं विवागो अणुप्पत्तो । एस दिट्ठंतो इति सूत्रार्थः ॥ ३ ॥ इत्थं दृष्टान्तमभिधाय तमेवानुवदन् दार्ष्टान्तिकमाह—

**जहा खलु से उरब्भे, आएसाए समीहिए । एवं बाले अहम्मिट्ठे, ईहई णरयाउयं ॥ ४ ॥**

व्याख्या—'यथा' येन प्रकारेण 'खलु' निश्चये 'सः' इति प्रागुक्तरूप उरभ्रः 'आदेशाय' आदेशार्थे 'समीहितः' कल्पितः सन् यथाऽयमस्मै भविष्यत्यादेशं परिकाङ्क्षतीत्यनुवर्त्तते । 'एवम्' अमुनैव न्यायेन 'बालः' अज्ञः 'अधर्मिष्ठः' अतिशयेनाधर्म्मः 'ईहते' वाञ्छति तदनुकूलाऽऽचारतया 'नरकायुष्कं' नरकजीवितमिति सूत्रार्थः ॥ ४ ॥ उक्तमेवार्थं प्रपञ्चयन्नाह—

**हिंसे बाले मुसावाई, अद्धाणम्मि विलोवए । अन्नऽदत्तहरे तेणे, माई कन्नुहरे सढे ॥ ५ ॥**

**इत्थीविसयगिद्धे य, महारंभपरिग्गहे । भुंजमाणे सुरं मंसं, परिवूढे परंदमे ॥ ६ ॥**

**अयकक्करभोई य, तुंदिल्ले चियलोहिए । आउयं नरए कंखे, जहाऽऽएसं व एलए ॥ ७ ॥**

दार्ष्टान्तिक-
योजना ।

अनुत्तरे ज्ञानदर्शने युगपदुपयोगाभावेऽपि लब्धिरूपतया धारयतीत्यनुत्तरज्ञानदर्शनधरः, पूर्वविशेषणाभ्यामुपयोगस्य ज्ञानदर्शनयोर्भिन्नकालता उक्ता, ततश्च मा भूदुपयोगवद् लब्धिद्वयमपि भिन्नकालभावीति व्यामोह इत्युपदिश्यते अनुत्तरज्ञानदर्शनधर इति न पौनरुक्त्यम् । 'अर्हन्' तीर्थकृत्, ज्ञातः—उदारक्षत्रियः स चेह सिद्धार्थस्तत्पुत्रः—वर्त्तमानतीर्थाधिपतिः, 'भगवान्' समग्रैश्वर्यादिमान्, विशालाः—शिष्या यशःप्रभृतयो वा गुणा विद्यन्ते यस्य स वैशालिकः "वियाहिय" त्ति 'व्याख्याता' सदेवमनुजायां पर्षदि धर्मस्य कथयिता, इति ब्रवीमीति पूर्ववत् ॥ १९ ॥

॥ इति श्रीनेमिचन्द्रसूरिविरचितायां सुखबोधायां उत्तराध्ययनसूत्र-
लघुटीकायां क्षुल्लकनिर्ग्रन्थीयं षष्ठमध्ययनं समाप्तम् ॥

# अथ औरभ्रीयाख्यं सप्तममध्ययनम् ।

उरभ्रदृष्टान्तः ।

व्याख्यातं क्षुल्लकनिर्ग्रन्थीयं षष्ठमध्ययनम् । साम्प्रतमौरभ्रीयं सप्तममारभ्यते । अस्य चायमभिसम्बन्धः—'इहानन्तराध्ययने निर्ग्रन्थत्वमुक्तम्, तच्च रसगृद्धिपरिहारादेव जायते, स च विपक्षेऽपायदर्शनात्, तच्च दृष्टान्तोपन्यासद्वारेणैव परिस्फुटं भवतीति रसगृद्धिदोपदर्शकोरभ्रादिदृष्टान्तप्रतिपादकमिदमारभ्यते' इत्यनेन सम्बन्धेनाऽऽयातमिदमध्ययनम् । अत्र चोरभ्रादिदृष्टान्तपञ्चकमभिधेयम् । यदाह निर्युक्तिकृत्—"ओरब्भे कागिणी अंबए य ववहारे सायरे चेव । पंचेए दिट्ठंता, ओरब्भीयम्मि अज्झयणे ॥ १ ॥"[1] तत्रोरभ्रदृष्टान्ताभिधायकमिहादिसूत्रम्—

**जहाऽऽएसं समुद्दिस्स, कोइ पोसेज्ज एलयं । ओयणं जवसं देज्जा, पोसिज्जा वि सयंगणे ॥ १ ॥**

व्याख्या—'यथे'त्युदाहरणोपन्यासे, आदिश्यते–आज्ञाप्यते विविधव्यापारेषु परिजनोऽस्मिन्नायाते इत्यादेशः–अभ्यर्हितः प्राघुर्णकस्तं 'समुद्दिश्य' आश्रित्य—यथाऽसौ समेष्यति समागतश्चैनं भोक्ष्यते इति 'कश्चित्' परलोकापायनिरपेक्षः 'पोषयेत्' पुष्टं कुर्यात् 'एलकम्' ऊरणकम्, कथम्? इत्याह—'ओदनं' भक्तम्, तद्योग्यशेषान्नोपलक्षणमेतत्, 'यवसं' मुद्गमाषादि 'दद्यात्' तदग्रतो ढौकयेत्, तत एव पोषयेत् । पुनर्वचनमादरख्यापनाय, 'अपिः' सम्भावने, सम्भाव्यते एवंविधः गुरुकर्मेति । 'स्वकाङ्गणे' स्वकीयगृहप्राङ्गणे, अन्यत्र नियुक्तकाः कदाचिन्नौदनादि दास्यन्तीति स्वकाङ्गण इत्युक्तम् । इहोदाहरणं सम्प्रदायादवसेयम्—

---

१ "उरभ्र काकिनी आम्रकं च व्यवहारः सागरश्चैव । पञ्चैते दृष्टान्ता, औरभ्रीये अध्ययने ॥ १ ॥"

जहेगो ऊरणगो पाहुणनिमित्तं पोसिज्जइ । सो य पीणियसरीरो सुण्हाओ हरिद्दादिकयंगराओ कयकन्नचूलओ । कुमारगा वि य णं नाणाविहेहिं कीडाविसेसेहिं कीलाविंति । तं च वच्छगो एवंलालिज्जमाणं दट्ठूण माऊए नेहेण गोवियं दोहएण य तयणुकंपाए मुक्कमवि खीरं न पिबइ रोसेण । ताए पुच्छिओ भणइ—अम्मो ! एस नंदियगो सव्वेहिं एएहिं अम्ह सामिसालेहिं इट्ठेहिं जवसजोग्गासणेहिं तदुवओगेहि य अलंकारविसेसेहिं अलंकारिओ पुत्त इव परिपालिज्जइ, अहं तु मंदभग्गो सुक्काणि तणाणि कयाइ लभामि, ताणि वि न पज्जत्तगाणि, एवं पाणियं पि, न य मं कोइ लालेइ । ताए भन्नइ—पुत्त ! "ओउरचिन्नाइं एयाइं, जाइं चरइ नंदिओ । सुक्कतणेहिं लाढाहिं, एयं दीहाउलक्खणं ॥ १ ॥" जहा आउरो मरिउकामो जं मग्गइ पत्थं वा अपत्थं वा तं से दिज्जइ, एवं सो नंदिओ मारिज्जिहिइ जया तया पेच्छिहिसि इति सूत्रार्थः ॥ १ ॥ ततोऽसौ कीदृशो जातः ? किं च कुरुते ? इत्याह—

**तओ से पुट्ठे परिवूढे, जायमेए महोदरे । पीणिए विउले देहे, आएसं परिकंखए ॥ २ ॥**

**व्याख्या**—'ततः' इत्योदनादिदानाद् हेतौ पञ्चमी, 'सः' इत्युरभ्रः 'पुष्टः' उपचितमांसतया पुष्टिभाक्, 'परिवृढः' प्रभुः समर्थ इति यावत्, 'जातमेदाः' उपचितचतुर्थधातुः अत एव 'महोदरः' बृहज्जठरः, 'प्रीणितः' तर्पितः यथासमयमुपढौकिताऽऽहारादिभिरेव च हेतुभिः 'विपुले' विशाले 'देहे' शरीरे सति आदेशं परिकाङ्क्षतीव 'परिकाङ्क्षति' इच्छतीति सूत्रार्थः ॥ २ ॥ स किमेवं चिरस्थायी स्यात् ? इत्याह—

**जाव ण एइ आएसे, ताव जीवइ से दुही । अह पत्तम्मि आएसे, सीसं छेत्तूण भुज्जइ ॥ ३ ॥**

**व्याख्या**—'यावदि'ति कालावधारणम्, 'ने'ति न आयाति आदेशस्तावत् 'जीवति' प्राणान् धारयति 'सः' उरभ्रः

१ "आतुरचिह्नानि एतानि, यानि चरति नन्दिकः । शुष्कतृणैर्लोपनीयैः, एतद् दीर्घायुर्लक्षणम् ॥ १ ॥"

"दुहि" त्ति वध्यमण्डनमिवाऽस्यौदनदानादीनि तत्त्वतो दुःखमेव तदस्यास्तीति दुःखी । "अह पत्तम्मि आएसे" 'अथ' अनन्तरं 'प्राप्ते' आगते आदेशे 'शिरः' मस्तकं तत् 'छित्त्वा' द्विधाविधाय भुज्यते, तेनैव स्वामिना प्राहुणकसहितेनेति शेषः ।

दार्ष्टान्तिक-योजना ।

सम्प्रति सम्प्रदायशेषमनुस्त्रियते—ततो सो वच्छगो तं नंदियं पाहुणएसु आगएसु वहिज्जमाणं दट्ठुं तिसिओ वि माऊए थणं नाभिलसइ भएण । ताए भन्नइ—किं पुत्त ! भयभीओ सि ? नेहेण पण्हुयं पि मं न पियसि । तेण भन्नइ—अम्म ! कओ मे थणाभिलासो ? नणु सो वराओ नंदियओ अज्ज केहिं पि पाहुणगेहिं आगएहिं ममं अग्गओ विनिग्गय-जीहो विलोलनयणो विस्सरं रसंतो अत्ताणो असरणो मारिओ, तब्भया कओ मे पाउमिच्छा ? । तओ ताए भन्नइ—पुत्त ! नणु तया चेव ते कहियं, जहा—"आउरचिन्नाइं एयाइं ।" एस तेसिं विवागो अणुप्पत्तो । एस दिट्ठंतो इति सूत्रार्थः ॥ ३ ॥ इत्थं दृष्टान्तमभिधाय तमेवानुवदन् दार्ष्टान्तिकमाह—

**जहा खलु से उरब्भे, आएसाए समीहिए । एवं बाले अहम्मिट्ठे, ईहई नरयाउयं ॥ ४ ॥**

व्याख्या—'यथा' येन प्रकारेण 'खलु' निश्चये 'सः' इति प्रागुक्तरूप उरभ्रः 'आदेशाय' आदेशार्थं 'समीहितः' कल्पितः सन् यथाऽयमसौ भविष्यत्यादेशं परिकाङ्क्षतीत्यनुवर्त्तते । 'एवम्' अमुनैव न्यायेन 'बालः' अज्ञः 'अधर्मिष्ठः' अतिशयेनाधर्म्मः 'ईहते' वाञ्छति तदनुकूलाऽऽचारतया 'नरकायुष्कं' नरकजीवितमिति सूत्रार्थः ॥ ४ ॥ उक्तमेवार्थं प्रपञ्चयन्नाह—

**हिंसे बाले मुसावाई, अद्धाणम्मि विलोवए । अन्नऽदत्तहरे तेणे, माई कन्नुहरे सढे ॥ ५ ॥**

**इत्थीविसयगिद्धे य, महारंभपरिग्गहे । भुंजमाणे सुरं मंसं, परिवूढे परंदमे ॥ ६ ॥**

**अयकक्करभोई य, तुंदिल्ले चियलोहिए । आउयं नरए कंखे, जहाऽऽएसं व एलए ॥ ७ ॥**

**जहा कागिणीए हेउं, सहस्सं हारए नरो । अपत्थं अंबयं भोचा, राया रज्जं तु हारए ॥ ११ ॥**

व्याख्या—'यथे'त्युदाहरणोपन्यासार्थः, 'काकिण्याः' रूपकाशीतितमभागरूपायाः "हेउं" ति 'हेतोः' कारणात् 'सहस्रं' दशशतात्मकं कार्षापणानामिति गम्यते 'हारयेत्' नाशयेत् 'नरः' पुरुषः । अत्रोदाहरणसम्प्रदायः—

एगो दमगो । तेण वित्तिं करिंतेण सहस्सं काहावणाण अज्जियं। सो तं गहाय सत्थेण समं सगिहं पत्थिओ । तेण भोयणनिमित्तं रूवगो कागिणीहिं भिन्नो । दिणे दिणे कागिणीए भुंजइ । तस्स य अवसेसा एगा कागिणी सा विस्सारिया । सत्थे पहाविए सो चिंतेइ—'मा मे रूवगो भिंदियव्वो होहि' त्ति नउलगं एगत्थ गोवेउं कागिणीनिमित्तं नियत्तो । सा वि कागिणी अन्नेण हडा । सो वि नउलओ अन्नेण दिट्ठो ठविज्जंतो, सो तं घेत्तूण नट्ठो । पच्छा सो घरं गओ सोचइ । एस दिट्ठंतो ॥

तथा अपथ्यमाम्रफलं 'भुक्त्वा' अभ्यवहृत्य 'राजा' नृपतिः 'राज्यं' पृथिवीपतित्वं 'तुः' अवधारणे भिन्नक्रमश्च, तेन हारयेदेव, सम्भवत्येव अस्याऽपथ्यभोजिनो राज्यहारणमित्यक्षरार्थः । भावार्थस्तु वृद्धसम्प्रदायादवसेयः । स चायम्—

जहा कस्सइ रन्नो अंबाजिन्नेण विसूइया जाया । सा तस्स वेज्जेहिं महया किच्छेण विचिकिच्छिया । भणिओ य—जइ पुणो अंबाणि खायसि तो विणस्सिसि । तस्स य पियाणि अईव अंबाणि । तेण सदेसे सव्वे उच्छाइया अंबया । अन्नया आसवाहणियाए निग्गओ सह अमच्चेण अस्सेण अवहरिओ । अस्सो दूरं गन्तूण परिस्संतो ठिओ । एगम्मि वणसंडे चूयच्छायाए अमच्चेण वारिज्जमाणो वि निविट्ठो । तस्स य हेट्ठे अंबाणि पडियाणि । सो ताणि परामुसइ, पच्छा अग्घाइ, पच्छा चक्खिउं निट्ठुहइ । अमच्चो वारेइ । पच्छा भक्खेउं मओ । इति सूत्रगर्भार्थः ॥ ११ ॥ इत्थं दृष्टान्तमभिधाय दार्ष्टान्तिकमाह—

**एवं माणुसगा कामा, देवकामाणमंतिए । सहस्सगुणिया भुज्जो, आउं कामा य दिव्विया ॥१२॥**

व्याख्या—'एवमि'ति काकिण्याम्रसदृशा मनुष्याणाममी मानुष्यकाः 'कामाः' विषयाः देवकामानाम् 'अन्तिके' समीपे । किमित्येवम्? अत आह—'सहस्रगुणिताः' सहस्रैस्ताडिता दिव्यकाः कामा इति सम्बन्धः, 'भूयः' बहून् वारान्, मनुष्यायुःकामाऽपेक्षया इति प्रक्रमः । अनेनैषामतिभूयस्त्वं सूचयन् कार्षापणसहस्रराज्यतुल्यतामाह । 'आयुः' जीवितं 'कामाश्च' शब्दादयः दिवि भवा दिव्यास्त एव दिव्यकाः, इह चादौ "देवकामाणमंतिए" त्ति काममात्रोपादानेऽपि "आउं कामा य दिव्विय" त्ति आयुषोऽप्युपादानं तत्रत्यायुरादीनामपि तदपेक्षयैवंविधत्वख्यापनार्थमिति सूत्रार्थः ॥ १२ ॥ मनुष्य-कामानामेव काकिण्याम्रफलोपमत्वं भावयितुमाह—

**अणेगवासाणउया, जा सा पन्नवओ ठिई । जाणि जीयंति दुम्मेहा, ऊणे वाससयाउए ॥ १३ ॥**

व्याख्या—वर्षाणां—वत्सराणां नयुतानि—संख्याविशेषा वर्षनयुतानि, प्राकृतत्वात् सकारस्याकारः । नयुताऽऽनयनोपायस्त्वयम्—चतुरशीतिवर्षलक्षाः पूर्वाङ्गम्, तच्च पूर्वाङ्गेन गुणितं पूर्वम्, पूर्वं चतुरशीतिलक्षाहतं नयुताङ्गम्, नयुताङ्गं चतुरशीतिलक्षाहतं नयुतमिति । अनेकानि च तानि वर्षनयुतानि च अनेकवर्षनयुतानि, प्राकृतत्वात् पुंस्त्वम् । का एवमुच्यते? इत्याह—'या से'ति प्रज्ञापकः शिष्यान् प्रत्याह—या सा भवतामस्माकं च प्रतीता, प्रज्ञानं प्रज्ञा—प्रकृष्टज्ञानं तद्वतः, न च क्रियाविकलं ज्ञानं प्रकृष्टं भवति, "तज्ज्ञानमेव न भवति, यस्मिन् रागादयः प्रकाशन्ते" इतिवचनात् । ततश्च प्रज्ञावतः—ज्ञानक्रियावतः 'स्थितिः' देवभवायूरूपा, अधिकृतत्वात् दिव्यकामाश्च । तानि च कीदृशानि? इत्याह—'यानि' अनेकवर्षनयुतानि दिव्यस्थितेर्दिव्यकामानां च विषयभूतानि 'जीयन्ते' हार्यन्ते तद्धेतुभूतानुष्ठानाऽनासेवनेनेति भावः, 'दुर्मेधसः' दुर्बुद्धयो विषयैर्जिता जन्तव इति गम्यते । कदा पुनर्दुर्मेधसो विषयैर्जीयन्ते? इत्याह—

१ यद्वाऽनेकानि वर्षनयुतानि येषु तान्यनेकवर्षनयुतानि उभयथाऽर्थतः पल्योपमसागरोपमाणीति यावत् ।

दार्ष्टान्तिकयोजना ।

व्याख्या—'हिंस्रः' स्वभावत एव प्राणिव्यपरोपणकृत्, 'बालः' अज्ञः, 'मृषावादी' अलीकभाषकः, 'अध्वनि' मार्गे 'विलोपकः' मोपकः—पथि गच्छतो जनान् सर्वस्वहरणतो लुण्ठति, अन्यैरदत्तं हरति 'अन्यादत्तहरः' ग्रामनगरादिषु चौर्यकृत्, 'स्तेनः' चौर्येणैवोपकल्पितवृत्तिः, 'मायी' वञ्चनैकचित्तः, 'कन्नुहरः' कस्यार्थं नु इति वितर्के हरिष्यामीत्यध्यवसायी, 'शठः' वक्राचारः ॥ ५ ॥ 'स्त्रीविषयगृद्धः' स्त्रीषु विषयेषु च अभिकाङ्क्षावान्, 'चः' समुच्चये, महान्—अपरिमितः आरम्भः—अनेकजन्तूपघातकृत् व्यापारः परिग्रहश्च—धान्यादिसञ्चयो यस्य स तथोक्तः, 'भुञ्जानः' अभ्यवहरन् 'सुरां' मदिराम्, 'मांसं' पिशितम्, 'परिवृढः' उपचितमांसशोणिततया तत्तत्क्रियासमर्थः, अत एव 'परंदमः' अन्येषां दमयिता ॥६॥ किञ्च—अजस्य—छागस्य कर्करं—यत् चनकवद् भक्ष्यमाणं कर्करायते तच्चेह प्रस्तावादतिपक्वं मांसं तद्भोजी, अत एव 'तुन्दिलः' जातबृहज्जठरः 'चितलोहितः' उपचितशोणितः, शेषधातूपलक्षणमेतत्, 'आयुः' जीवितं 'नरके' सीमन्तकादौ काङ्क्षति तद्योग्यकर्माऽऽरम्भितया। कमिव क इव ? इत्याह—"जहाऽऽएसं व एलए" त्ति आदेशमिव यथा एडकः—उक्तरूपः । इह च 'हिंसे'त्यादिना सार्द्धश्लोकेनाऽऽरम्भ उक्तः, 'भुञ्जमाणे'त्यादिना चार्द्धद्वयेन गृद्धिः, 'आयुरि'त्यादिना चार्द्धेन दुर्गतिगमनं प्रत्यपायरूपमिति सूत्रत्रयार्थः ॥ ७ ॥ इदानीं साक्षादैहिकापायप्रदर्शनायाऽऽह—

**आसणं सयणं जाणं, वित्तं कामाणि भुंजिया । दुस्साहडं धणं हेच्चा, बहुं संचिणिया रयं ॥ ८ ॥**

**तओ कम्मगुरू जंतू, पच्चुप्पन्नपरायणे । अए व आगयाएसे, मरणंतम्मि सोयइ ॥ ९ ॥**

व्याख्या—आसनं शयनं यानं भुक्त्वा इतिं सम्बन्धनीयम् । 'वित्तं' द्रव्यं 'कामान्' शब्दादीन् 'भुक्त्वा' उपभुज्य । दुःखेन संह्रियते—मील्यते स्म दुःसंहृतं 'धनं' द्रव्यम्, उक्तञ्च—"अर्थानामर्जने दुःखमर्जितानां च रक्षणे । नाशे दुःखं व्यये दुःखं, धिगर्थं दुःखभाजनम् ॥ १ ॥" 'हित्वा' द्यूताद्यसद्व्ययेन त्यक्त्वा, यदुक्तम्—"द्यूतेन मद्येन पणाङ्गनाभिस्तोयेन भूपेन



दार्ष्टान्तिकयोजना ।

दार्ष्टान्तिक-योजना।

हुताशनेन। मलिम्लुचेनाऽशहरेण नाशं, नीयेत वित्तं क्व धने स्थिरत्वम्? ॥१॥" 'बहु' प्रभूतं 'सञ्चित्य' उपार्ज्य 'रजः' अष्टप्रकारं कर्म 'ततः' तदनन्तरं 'कर्मगुरुः' कर्म्मभारितः 'जन्तुः' प्राणी प्रत्युत्पन्नं–वर्त्तमानं तस्मिन् परायणः–तन्निष्ठः प्रत्युत्पन्नपरायणः "एतावानेव लोकोऽयं, यावानिन्द्रियगोचरः।" इति नास्तिकमतानुसारितया परलोकनिरपेक्ष इति यावत्। "अए व्व" त्ति अजः–पशुः स चेह प्रक्रमादुरभ्रस्तद्वत्, "आगयाएसे" त्ति प्राकृतत्वाद् 'आगते' प्राप्ते आदेशे–प्राघुणके, एतेन प्रपञ्चितशिष्यविनेयाऽनुग्रहायोक्तमेव उरभ्रदृष्टान्तं स्मारयति। किम्? इत्याह—'मरणान्ते' प्राणपरित्यागात्मनि अवसाने शोचति। किमुक्तं भवति—यथाऽऽदेशे आगते उरभ्र उक्तनीत्या शोचति तथाऽयमपि 'धिग् मां विषयव्यामोहित उपार्जितगुरुकर्म्माणं, हा! क्वेदानीं मया गन्तव्यम्?' इत्यादि प्रलपतः खिद्यते, अत्यन्तनास्तिकस्यापि प्रायस्तदा शोकसम्भवादिति सूत्रद्वयार्थः ॥८॥९॥ अनेनैहिकोऽपाय उक्तः। सम्प्रति पारभविकमाह—

**तओ आउ परिक्खीणे, चुता देहा विहिंसगा। आसुरीयं दिसं बाला, गच्छंति अवसा तमं ॥१०॥**

व्याख्या—'ततः' शोचनानन्तरम् उपार्जितगुरुकर्म्माणः "आउ" त्ति आयुषि तद्भवसम्बन्धिनि जीविते 'परिक्षीणे' सर्वथा क्षयं गते, कथञ्चिदायुःक्षयस्याऽऽवीचीमरणेन प्रागपि सम्भवादेवमुच्यते, 'च्युताः' भ्रष्टाः 'देहात्' शरीरात् 'विहिंसकाः' विविधप्रकारैः प्राणिघातकाः "आसुरीयं" ति असुराः–रौद्रकर्मकारिण उच्यन्ते, तेषामियमासुरीया तां 'दिशं' भावदिशं नरकगतिमित्यर्थः, 'बालाः' अज्ञाः 'गच्छन्ति' यान्ति 'अवशाः' कर्मपरवशाः, सर्वत्र बहुवचननिर्देशो व्याप्तिख्यापनार्थः, यथा नैक एवंविधः किन्तु बहव इति। तमोयुक्तत्वात् तमः। उक्तं हि—"[1]णिच्चंधयारतमसा, ववगयगह-चंद-सूर-नक्खत्ता। नरया अणंतवियणा, अणिट्ठसद्दाइवसया य ॥१॥" इति सूत्रार्थः ॥१०॥ सम्प्रति काकिण्याम्रदृष्टान्तद्वयमाह—

१ नित्यान्धकारतमसो, व्यपगतग्रह-चन्द्र-सूर्य-नक्षत्राः। नरका अनन्तवेदनाः, अनिष्टशब्दादिवशगाश्च ॥१॥"

**जहा कागिणीए हेउं, सहस्सं हारए नरो । अपत्थं अंबयं भोच्चा, राया रज्जं तु हारए ॥ ११ ॥**

व्याख्या—'यथे'त्युदाहरणोपन्यासार्थः, 'काकिण्याः' रूपकाशीतितमभागरूपायाः "हेउं" ति 'हेतोः' कारणात् 'सहस्रं' दशशतात्मकं कार्षापणानामिति गम्यते 'हारयेत्' नाशयेत् 'नरः' पुरुषः । अत्रोदाहरणसम्प्रदायः—

एगो दमगो । तेण वित्तिं करिंतेण सहस्सं काहावणाण अज्जियं । सो तं गहाय सत्थेण समं सगिहं पत्थिओ । तेण भोयणनिमित्तं रूवगो कागिणीहिं भिन्नो । दिणे दिणे कागिणीए भुंजइ । तस्स य अवसेसा एगा कागिणी सा विस्सारिया । सत्थे पहाविए सो चिंतेइ—'मा मे रूवगो भिंदियव्वो होहि' त्ति नउलगं एगत्थ गोवेउं कागिणीनिमित्तं नियत्तो । सा वि कागिणी अन्नेण हडा । सो वि नउलओ अन्नेण दिट्ठो ठविज्जंतो, सो तं घेत्तूण नट्ठो । पच्छा सो घरं गओ सोचइ । एस दिट्ठंतो ॥

तथा अपथ्यमाम्रफलं 'भुक्त्वा' अभ्यवहृत्य 'राजा' नृपतिः 'राज्यं' पृथिवीपतित्वं 'तुः' अवधारणे भिन्नक्रमश्च, तेन हारयेदेव, सम्भवत्येव अस्याऽपथ्यभोजिनो राज्यहारणमित्यक्षरार्थः । भावार्थस्तु वृद्धसम्प्रदायादवसेयः । स चायम्—

जहा कस्सइ रन्नो अंबाजिन्नेण विसूइया जाया । सा तस्स वेज्जेहिं महया किच्छेण विचिकिच्छिया । भणिओ य—जइ पुणो अंबाणि खायसि तो विणस्सिसि । तस्स य पियाणि अईव अंबाणि । तेण सदेसे सव्वे उच्छाइया अंबया । अन्नया आसवाहणियाए निग्गओ सह अमच्चेण अस्सेण अवहरिओ । अस्सो दूरं गन्तूण परिस्संतो ठिओ । एगम्मि वणसंडे चूयच्छायाए अमच्चेण वारिज्जमाणो वि निविट्ठो । तस्स य हेट्ठे अंबाणि पडियाणि । सो ताणि परामुसइ, पच्छा अग्घाइ, पच्छा चक्खिउं निट्ठुहइ । अमच्चो वारेइ । पच्छा भक्खेउं मओ । इति सूत्रगर्भार्थः ॥ ११ ॥ इत्थं दृष्टान्तमभिधाय दार्ष्टान्तिकमाह—

**एवं माणुस्सगा कामा, देवकामाणमंतिए । सहस्सगुणिया भुज्जो, आउं कामा य दिव्विया ॥१२॥**

दार्ष्टान्तिक-योजना ।

व्याख्या—'एवमि'ति काकिण्याम्रसदृशा मनुष्याणाममी मानुष्यकाः 'कामाः' विषयाः देवकामानाम् 'अन्तिके' समीपे । किमित्येवम् ? अत आह—'सहस्रगुणिताः' सहस्रैस्ताडिता दिव्यकाः कामा इति सम्बन्धः, 'भूयः' बहून् वारान्, मनुष्यायुःकामाऽपेक्षया इति प्रक्रमः । अनेनैषामतिभूयस्त्वं सूचयन् कार्षापणसहस्रराज्यतुल्यतामाह । 'आयुः' जीवितं 'कामाश्च' शब्दादयः दिवि भवा दिव्यास्त एव दिव्यकाः, इह चादौ "देवकामाणमंतिए" त्ति काममात्रोपादानेऽपि "आउं कामा य दिव्विय" त्ति आयुषोऽप्युपादानं तत्रत्यायुरादीनामपि तदपेक्षयैवंविधत्वख्यापनार्थमिति सूत्रार्थः ॥ १२ ॥ मनुष्यकामानामेव काकिण्याम्रफलोपमत्वं भावयितुमाह—

**अणेगवासाणउया, जा सा पन्नवओ ठिई । जाणि जीयंति दुम्मेहा, ऊणे वाससयाउए ॥ १३ ॥**

व्याख्या—वर्षाणा—वत्सराणां नयुतानि—संख्याविशेषा वर्षनयुतानि, प्राकृतत्वात् सकारस्याकारः । नयुताऽऽनयनोपायस्त्वयम्—चतुरशीतिवर्षलक्षाः पूर्वाङ्गम्, तच्च पूर्वाङ्गेन गुणितं पूर्वम्, पूर्वं चतुरशीतिलक्षाहतं नयुताङ्गम्, नयुताङ्गं चतुरशीतिलक्षाहतं नयुतमिति । अनेकानि च तानि वर्षनयुतानि च अनेकवर्षनयुतानि, प्राकृतत्वात् पुंस्त्वम् । का एवगुण्यते ? इत्याह—'या से'ति प्रज्ञापकः शिष्यान् प्रत्याह—या सा भवतामस्माकं च प्रतीता, प्रज्ञानं प्रज्ञा—प्रकृष्टज्ञानं तद्वतः, न च क्रियाविकलं ज्ञानं प्रकृष्टं भवति, "तज्ज्ञानमेव न भवति, यस्मिन् रागादयः प्रकाशन्ते" इतिवचनात् । ततश्च प्रज्ञावतः—ज्ञानक्रियावतः 'स्थितिः' देवभवायूरूपा, अधिकृतत्वात् दिव्यकामाश्च । तानि च कीदृशानि ? इत्याह—'यानि' अनेकवर्षनयुतानि दिव्यस्थितेर्दिव्यकामानां च विषयभूतानि 'जीयन्ते' हार्यन्ते तद्धेतुभूतानुष्ठानाऽनासेवनेनेति भावः, 'दुर्मेधसः' दुर्बुद्धयो विषयैर्जिता जन्तव इति गम्यते । कदा पुनर्दुर्मेधसो विषयैर्जीयन्ते ? इत्याह—

१ यद्वाऽनेकानि वर्षनयुतानि येषु तान्यनेकवर्षनयुतानि उभयत्रार्थतः पल्योपमसागरोपमाणीति यावत् ।

ऊने वर्षशताऽऽयुषि, प्रभूते ह्यायुषि प्रमादेनैकदा हारितान्यपि पुनर्जीयेरन्, अस्मिंस्तु सङ्क्षिप्तायुषि एकदा हारितानि हारितान्येव, भगवतश्च वीरस्य तीर्थे प्रायो न्यूनवर्षशतायुष एव जन्तव इत्यर्थमुपन्यासः । अयं चात्र भावार्थः—अल्पं मनुष्याणामायुः विषयाश्चेति काकिण्याम्रफलोपमाः देवायुर्देवकामाश्चातिप्रभूततया कार्षापणसहस्रराज्यतुल्याः; ततो यथा द्रमको राजा च काकिण्याम्रफलकृते कार्षापणसहस्रं राज्यं च हारितवान्, एवमेतेऽपि दुर्मेधसोऽल्पतरमनुष्यायुःकामार्थे प्रभूतान् देवायुःकामान् हारयन्तीति सूत्रार्थः ॥ १३ ॥ सम्प्रति व्यवहारोदाहरणमाह—

**जहा य तिन्नि वणिया, मूलं घेत्तूण निग्गया । एगोऽत्थ लहइ लाहं, एगो मूलेण आगओ ॥१४॥**

व्याख्या—'यथे'ति प्राग्वत्, प्रतिपादितदृष्टान्तापेक्षया 'चः' समुच्चये, त्रयः 'वणिजः' प्रतीताः 'मूलं' राशिं नीवीमिति यावत्, गृहीत्वा 'निर्गताः' स्वस्थानात् स्थानान्तरं प्रति प्रस्थिताः प्राप्ताश्च समीहितस्थानम् । तत्र च गतानाम् 'एकः' वणिक्कलाकुशलः 'अत्र' एतेषु मध्ये 'लभते' प्राप्नोति 'लाभं' विशिष्टद्रव्योपचयलक्षणम्, 'एकः' तेष्वेवान्यतरः यस्तथा नातिनिपुणो नाप्यत्यन्तानिपुणः सः "मूलेण" त्ति मूलधनेन यावद् गृहाद् नीतं तावतैवोपलक्षितः 'आगतः' स्वस्थानं प्राप्त इति सूत्रार्थः ॥ १४ ॥ तथा—

**एगो मूलं पि हारित्ता, आगओ तत्थ वाणिओ । ववहारे उवमा एसा, एवं धम्मे वियाणह ॥१५॥**

व्याख्या—'एकः' अन्यतरः प्रमादपरो द्यूतमद्यादिषु अत्यन्तमासक्तचेताः 'मूलमपि' उक्तरूपं 'हारयित्वा' नाशयित्वा 'आगतः' प्राप्तः स्वस्थानमित्युपस्कारः । एवं सर्वत्रोदाहरणसूचायां सोपस्कारता द्रष्टव्या । 'तत्र' तेषु मध्ये वणिगेव वाणिजः । अत्र च सम्प्रदायः—

जहा एगस्स इब्भवाणियगस्स तिन्नि पुत्ता । तेण तेसिं बुद्धि-ववसाय-पुन्न-पउरिसपरिक्खणत्थं सहस्सं सहस्सं

कारावणाणं दिन्नं, भणिया य—एएणं ववहरिऊण एत्तिएण कालेण एज्जह । ते तं मूलं घेत्तूण निग्गया नयराओ पिहप्पिहेसु पट्टणेसु ठिया । तत्थेगेण चिंतियं—परिक्खणत्थं अम्हे ताएण पेसिया, ता मए पभूयदव्वोवज्जणेण ताओ आवज्जणीओ, असाहियपुरिसत्थो य पुरिसो चंचासमाणो चेव, ता नियनियकाले साहेयव्वा नरेण पुरिसत्था, अम्हं पुण अत्थोवज्जणस्स संपइ अवसरो । उक्तञ्च—"प्रथमे नार्जिता विद्या, द्वितीये नार्जितं धनम् । तृतीये न तपस्तप्तं, चतुर्थे किं करिष्यति ? ॥ १ ॥" एवं सो चिंतिय छायणभोयणमेत्तवओ जूयमज्जवेसाइवसणवज्जिओ विहीए ववहरमाणो विउललाभसपन्नो जाओ । वीएण चिंतियं—अत्थि अम्ह घरे पभूयं दव्वं, परं तमणुवज्जियमेव भुज्जमाणं अइरा निट्ठिज्जइ, ता मूलं रक्खेयव्वं वि । सो लाहयं भोयणच्छायणमल्लालंकाराइसु उवभुंजइ, मूलं रक्खंतो न य अब्भायरेण ववहरइ । तइओ चिंतेइ—आसत्तमकुलाओ अत्थि पज्जत्तमम्हं दव्वं, परं वुड्ढसहावयाए अत्थविलसणभएण अम्हे विदेसभागिणो कया ताएणं, ता सचमेयं—पंचासा वोलीणा, छड्डाणा नूण जंति पुरिसस्स । रूवाऽऽणा ववसाओ, हिरि सत्तोदारया चेव ॥ १ ॥ ता किं अत्थोवज्जणकिलेसेण ? । सो न किंचि ववहरइ, केवलं जूय-मज्ज-मंस-वेस-गंध-मल्ल-तंबोल-सरीरकिरियासु अप्पेणेव कालेण तं दव्वं निट्ठवियं । ते जहाभिहियकालम्मि सपुरमागया । तत्थ जो सो छिन्नमूलो सो सव्वस्स असामी जाओ कम्मयरो व्व उवचरिज्जइ । बीओ घरवावारे निउत्तो भत्तपोत्तसंतुट्ठो न दायव्वभोयव्वेसु ववसायति । तइओ घरवित्थरस्स सामी जाओ ॥ केई पुण भणंति—तिन्नि वाणियगा पत्तेयं ववहरंति । तत्थेगो छिन्नमूलो पेसत्तमुवगओ, केण वा संववहारं करेउ ? । अच्छिन्नमूलो पुणरवि वाणिज्जाए भवइ । इयरो वन्धुसहिओ मोयए । एस दिट्ठंतो ॥

सम्प्रति सूत्रमनुस्त्रियते—'व्यवहारे' व्यवहारविषया 'उपमा' दृष्टान्तः 'एषा' अनन्तरोक्ता 'एवं' वक्ष्यमाणन्यायेन 'धर्मे' धर्मविषयामेनामेवोपमां 'विजानीत' अवबुध्यध्वमिति सूत्रार्थः ॥ १५ ॥ कथम् ? इत्याह—

व्यवहार-दृष्टान्तः ।

धर्मविषया उपमा ।

**माणुसत्तं भवे मूलं, लाभो देवगई भवे । मूलच्छेएण जीवाणं, णरगतिरिक्खत्तणं धुवं ॥ १६ ॥**

**व्याख्या**—'मानुषत्वं' मनुजत्वं 'भवेत्' स्यात् मूलमिव 'मूलं' स्वर्गापवर्गात्मकतदुत्तरोत्तरलाभहेतुतया, तथा लाभ इव 'लाभः' मनुजगत्यपेक्षया विषयसुखादिभिर्विशिष्टत्वात् 'देवगतिः' देवत्वावाप्तिर्भवेत् । एवं च स्थिते किम् ? इत्याह—'मूलच्छेदेन' मनुष्यगतिहान्यात्मकेन 'जीवानां' प्राणिनां 'नरकतिर्यक्त्वं' नरकत्वं तिर्यक्त्वं च तद्गत्यात्मकं 'ध्रुवं' निश्चितम् । इहापि सम्प्रदायः—

तिन्नि संसारिणो सत्ता माणुस्सेसु भवेसु आगया । तत्थेगो संजमेण लद्धमद्दवज्जवाइगुणसंपन्नो मज्झिमारंभपरिग्गहजुत्तो कालं काऊण काहावणसहस्समूलत्थाणीयं तमेव माणुसत्तं पडिलभइ । वीओ पुण सम्मदंसणचरित्तगुणपरिसुट्ठिओ सरागसंजमेण लद्धलाभवणिओ व देवेसु उववन्नो । तइओ पुण "हिंसे बाले मुसावाई" इच्चेएहिं पुव्वभणिएहिं सावज्जजोगेहिं वट्टिउं छिन्नमूलवणिय इव नरगेसु तिरिएसु वा उववज्जइ त्ति सूत्रार्थः ॥ १६ ॥ यथा मूलच्छेदेन नारकतिर्यक्त्वप्राप्तिस्तथा स्वयं सूत्रकृदाह—

**दुहओ गती बालस्स, आवई वहमूलिया । देवत्तं माणुसत्तं च, जं जिए लोलया सढे ॥ १७ ॥**

**व्याख्या**—"दुहओ" त्ति 'द्विधा' द्विप्रकारा 'गतिः' सा च प्रक्रमात् नरकगतिः तिर्यग्गतिश्च 'बालस्य' रागद्वेषाभ्यामाकुलितस्य भवतीति गम्यते । तत्र च गतस्य "आवइ" त्ति आपत्, सा च कीदृशी ? वधः—विनाशो वा ताडनं मूलम्—आदिर्यस्याः सा तथा, मूलग्रहणात् छेदभेदातिभारारोपणादिपरिग्रहः । अनुभवन्ति हि नरकतिर्यक्षु जन्तवो विविधा वधाद्यापदः । उक्तञ्च—"छिज्जंति तिक्खसत्थेहिं, डज्झंते परमग्गिणा । सीउण्हेहिं विलिज्जंति, निप्पीलिज्जंति जंतए ॥ १ ॥[1]

१ "छिद्यन्ते तीक्ष्णशस्त्रैः, दह्यन्ते परमाग्निना । शीतोष्णैर्विलीयन्ते, निपील्यन्ते यन्त्रके ॥ १ ॥

…रया नरए घोरे, पावकम्माण कारया । अच्छिमीलणमेत्त पि, जत्थ सोक्खं ण विज्जए ॥ २ ॥ छिंदणं भिंदणं घोरं, वाहणं भारभंजणं । दमणंकणं च दाहं च, परोप्परविघायणं ॥ ३ ॥ सीउण्हखुप्पिवासाओ, ताडणावाहणाणि य । सहंते पावकम्मा उ, तिरिक्खा वेयणा बहू ॥ ४ ॥" किमित्येवम्? अत आह—'देवत्वं' देवभवं 'मानुषत्वं च' नरभवं 'यद्' यस्मात् 'जितः' हारितः "लोलयासढे" त्ति लोलता–पिशितादिलाम्पट्यं तद्व्याप्तत्वात् सोऽपि लोलतेत्युक्तः, शठः–विश्रम्भजनवञ्चकः । इह च लोलता पञ्चेन्द्रियवधाद्युपलक्षणम्, ततश्च नरकहेत्वभिधानमेतद् । यत उक्तम्—"महारंभयाए महापरिग्गहयाए कुणिमाहारेणं पंचिंदियवहेणं जीवा निरयाउयं कम्मं नियच्छंति ॥" शठ इत्यनेन तु शाठ्यमुक्तम्, तच्च तिर्यग्गतिहेतुः । उक्तञ्च—"मायातिर्यग्योनस्ये"ति । अयमत्राशयः—यतोऽयं बालो लोलतया शाठ्येन न देवत्वं मनुजत्वं च हारितः अतोऽस्य द्विधैव गतिरिति सूत्रार्थः ॥ १७ ॥ पुनर्मूलच्छेदमेव समर्थयितुमाह—

**तओ जिए सई होइ, दुविहं दुग्गइं गए । दुल्लभा तस्स उम्मग्गा, अद्धाए सुइरादवि ॥ १८ ॥**

व्याख्या—'ततः' देवत्वमनुजत्वजयात् "जिय" त्ति व्यवच्छेदफलत्वाद्वाक्यस्य जित एव "सइ" त्ति सदा भवति 'द्विविधां' द्विभेदां 'दुर्गतिं' दुष्टगतिं 'गतः' प्राप्तः । सदा जितत्वमेव व्यनक्ति—दुर्लभा 'तस्य' बालस्य "उम्मग्ग" त्ति सूत्रत्वात् 'उन्मज्जा' नारकतिर्यग्गतिनिर्गमनात्मिका, 'अद्धायां' काले–आगामिन्यां 'सुचिरादपि' अद्धाशब्देनैव कालाभिधानात् सुचिरशब्दः प्रभूतत्वमेवाह, ततोऽयमर्थः—अनागतायामद्धायां प्रभूतायामपि, बाहुल्यात् चेत्थ-

धर्मविषया उपमा ।

---

१ नारका नरके घोरे, पापकर्मणा कारकाः । अक्षिमीलनमात्रमपि, यत्र सौख्यं न विद्यते ॥२॥ छेदनं भेदनं घोरं, वहनं भारभञ्जनम् । दमनमङ्कनं च दाहं च, परस्परविघातनम् ॥३॥ शीतोष्णक्षुत्पिपासाः, ताडनावाहनानि च । सहन्ते पापकर्माणस्तु तिर्यञ्चो वेदना बह्वीः ॥४॥"

२ "महाऽऽरम्भतया महापरिग्रहतया मांसाहारेण पञ्चेन्द्रियवधेन जीवा नरकायुष्कं कर्म नियच्छन्ति ॥"

मुक्तम्, अन्यथा हि केचिद् एकभवेनैव तत उद्धृत्य मुक्तिमपि अवाप्नुवन्त्येवेति सूत्रार्थः ॥ १८ ॥ इत्थं पश्चानुपूर्व्यपि व्याख्याङ्गमिति पश्चादुक्तेऽपि मूलहारिणि प्रथममुपनयमुपदर्श्य मूलप्रवेशिन्यभिधातुमाह—

**एवं जिअं सपेहाए, तुलिया बालं च पंडियं । मूलियं ते पवेसंति, माणुसं जोणिमिंति जे ॥ १९ ॥**

व्याख्या—'एवम्' उक्तनीत्या 'जितं' देवत्वमनुजत्वे हारितं बालमिति प्रक्रमः, "सपेहाए" त्ति 'सम्प्रेक्ष्य' सम्यगालोच्य तथा 'तोलयित्वा' गुणदोषवत्तया परिभाव्य बालं पण्डितं च, चस्य भिन्नक्रमत्वात् 'मौलिकं' मूलधनं ते प्रवेशयन्ति, मूलप्रवेशकवणिक्सदृशाः त इत्यभिप्रायः । ये मानुषीं योनिं 'आयान्ति' आगच्छन्ति बालतापरिहारेण तदुचितपण्डितत्वमासेवमाना इति सूत्रार्थः ॥ १९ ॥ यथा मानुषीं योनिमायान्ति तथाऽऽह—

**वेमायाहिं सिक्खाहिं, जे नरा गिहिसुव्वया । उवेंति माणुसं जोणिं, कम्मसच्चा हु पाणिणो ॥ २० ॥**

व्याख्या—'विमात्राभिः' विविधपरिमाणाभिः 'शिक्षाभिः' प्रकृतिभद्रकत्वाद्यभ्यासरूपाभिः, उक्तञ्च—"[1]चउहिं ठाणेहिं जीवा मणुयाउयं बंधंति, तंजहा—पगइभद्दयाए पगइविणीययाए साणुक्कोसयाए अमच्छरिययाए" त्ति । ये 'नराः' पुरुषाः गृहिणश्च ते सुव्रताश्च—धृतसत्पुरुषव्रता गृहिसुव्रताः, सत्पुरुषव्रतं च—सदाचारानुल्लङ्घनादि । लौकिका अप्याहुः—
"विपद्युच्चैः स्थेयं पदमनुविधेयं हि महतां, प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम् । असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यस्तनुधनः, सतां केनोद्दिष्टं, विषममसिधाराव्रतमिदम् ॥ १ ॥" आगमविहितव्रतधारणं त्वमीषामसम्भवि, देवगतिहेतुतयैव तदभिधानात् । यत्तदोर्नित्याभिसम्बन्धात् ते किम् ? इत्याह—उपयान्ति मानुषीं योनिम्, किमित्येवम् ? अत आह—"कम्मसच्चा हु पाणिणो" त्ति 'हुः' यस्मात् सत्यानि—अवन्ध्यफलानि कर्माणि—ज्ञानावरणीयादीनि येषां ते सत्यकर्माणः प्राणिन इति सूत्रार्थः ॥ २० ॥ सम्प्रति लब्धलाभोपनयमाह—

१ "चतुर्भिः स्थानैर्जीवा मनुजायुर्बध्नन्ति, तद्यथा—प्रकृतिभद्रतया प्रकृतिविनीततया सानुक्रोशतया अमत्सरितयेति" ।

समुद्रदृष्टान्तः ।

**जेसिं तु विउला सिक्खा, मूलियं ते अइच्छिया । सीलवंता सविसेसा, अदीणा जंति देवयं ॥२१॥**

व्याख्या—'येषां तु' येषां पुनः 'विपुला' निःशङ्कितत्वादिदर्शनाचारादिविषयत्वेन विस्तीर्णा 'शिक्षा' ग्रहणाऽऽसेवनात्मिका अस्तीति गम्यते, 'मौलिकं' मूलधनभूतं मानुषत्वं ते "अइच्छिय" त्ति 'अतिक्रम्य' उल्लङ्घ्य 'शीलवन्तः' सदाचारवन्तः अविरतसम्यग्दृष्ट्यपेक्षया, महाव्रताऽणुव्रतादिमन्तश्च विरतिमदपेक्षया, तथा सह विशेषेण–उत्तरोत्तरगुणप्रतिपत्तिलक्षणेन वर्त्तन्त इति सविशेषाः, अत एव 'अदीनाः' 'कथं वयममुत्र भविष्यामः ?' इति वैक्लव्यरहिता यान्ति देवस्य भावो देवता सैव दैवतं तत्, साम्प्रतं विशिष्टसंहननाभावतो मुक्तिगतेरत्र व्यवच्छिन्नत्वाद् देवत्वमेव लाभ उक्तः । यत उक्तम्—"मण परमोहि पुलाए, आहारग खवग उवसमे कप्पे । संजमतिय केवलि सिज्झणा य जंबुम्मि वोच्छिन्ना ॥१॥"[1] इति सूत्रार्थः ॥ २१ ॥ प्रस्तुतमेवार्थं निगमयन्नुपदेशमाह—

**एवमदीणवं भिक्खुं, अगारिं च विजाणिया । कहं नु जिच्चमेलिक्खं, जिच्चमाणो ण संविदे ॥२२॥**

व्याख्या—'एवम्' अमुना प्रकारेण लाभान्वितम् 'अदैन्यवन्तं' दैन्यरहितं 'भिक्षुं' यतिम् 'अगारिणं च' गृहस्थं 'विज्ञाय' विशेषेण–तथाविधशिक्षावशाद् देवमनुजगतिगामित्वलक्षणेन ज्ञात्वा, 'कथं' केन प्रकारेण, न कथञ्चिदित्यर्थः, 'नु' इति वितर्के, "जिजं" ति सूत्रत्वात् 'जेयं' जेतव्यम् इन्द्रियादिभिः, "एलिक्खं" ति 'ईदृक्षं' देवत्वमनुजत्वलक्षणं 'जीयमानः' हार्यमाणः "न संविदे" त्ति प्राकृतत्वात् 'न संवित्ते' न जानीते ? अपि तु संवित्त एव, सविदानश्च यथा न जीयेत तथा यतेत इत्यभिप्राय इति सूत्रार्थः ॥ २२ ॥ समुद्रदृष्टान्तमाह—

**जहा कुसग्गे उदगं, समुद्देण समं मिणे । एवं माणुस्सगा कामा, देवकामाण अंतिए ॥ २३ ॥**

1 "मन. परमावधि. पुलाक., आहारकः क्षपकोपशमः कल्पः । संयमत्रिकं केवली सेधना च जम्बौ व्युच्छिन्नाः ॥ १ ॥"

व्याख्या—'यथे'ति दृष्टान्तोपन्यासे, 'कुशाग्रे' दर्भकोटौ 'उदकं' जलं 'समुद्रेण' समुद्रजलेन 'समं' तुल्यं 'मिनुयात्' परिच्छिन्द्यात्, एवं मानुष्यकाः कामा देवकामानाम् 'अन्तिके' समीपे । किमुक्तं भवति ?—यथा अज्ञः कश्चित् कुशाग्रे जलविन्दुमालोक्य समुद्रवत् मन्यते एवं मूढाश्चक्रवर्त्यादिमनुष्यकामान् दिव्यभोगोपमान् अध्यवस्यन्ति, तत्त्वतस्तु कुशाग्रजलविन्दुसमुद्रवत् मनुष्यदेवकामानां महदन्तरमिति सूत्रार्थः ॥ २३ ॥ उक्तमेवार्थं निगमयन्नुपदेशमाह—

दार्ष्टान्तिकयोजना ।

**कुसग्गमेत्ता इमे कामा, सन्निरुद्धम्मि आउए । कस्स हेउं पुराकाउं, जोगक्खेमं न संविदे ॥ २४ ॥**

व्याख्या—'कुशाग्रमात्राः' दर्भप्रान्तगताम्बुवद् अल्पा 'इमे' प्रत्यक्षाः 'कामाः' मनुष्यसम्बन्धिनः, तेऽपि न पल्योपमादिपरिमितौ द्राघीयसि आयुपि किन्तु 'सन्निरुद्धे' सङ्क्षिप्ते आयुषि, ततः "कस्स हेउं" ति प्राकृतत्वात् 'कं हेतुं' किं कारणं 'पुरस्कृत्य' आश्रित्य, अलब्धस्य लाभो योगः, लब्धस्य पालनं क्षेमः, अनयोः समाहारे योगक्षेमम्, कोऽर्थः ?—अप्राप्तविशिष्टधर्मप्राप्तिं प्राप्तस्य च पालनम्, 'न संवित्ते' न जानीते जन इति शेषः । तदसंवित्तौ हि विपयाभिष्वङ्ग एव हेतुः । मनुष्यविपयाश्च धर्मं प्राप्य दिव्यभोगापेक्षयैवंप्रायाः, ततस्तत्त्यागतो विपयाभिलापिणाऽपि धर्म्म एव यतितव्यमिति सूत्रार्थः ॥ २४ ॥ इत्थं दृष्टान्तपञ्चकमुक्तम् । तत्र च प्रथमम**उरभ्र**दृष्टान्तेन भोगानामायतौ अपायबहुलत्वमभिहितम् । आयतौ चापायवहुलमपि यन्न तुच्छं न तत् परिहर्तुं शक्यत इति **काकिण्याम्रफल**दृष्टान्ततः तत्तुच्छत्वम् । तुच्छमपि च लाभच्छेदात्मकव्यवहारज्ञतयाऽऽयव्ययतोलनाकुशल एव हातुं शक्त इति वणिग्व्यवहारोदाहरणम् । आयव्ययतोलनाऽपि च कथं कर्त्तव्येति **समुद्र**दृष्टान्तः । तत्र हि दिव्यकामानां समुद्रजलोपमत्वमुक्तम्, तथा च तदुपार्जनं महान् आयः अनुपार्जनं तु महान् व्यय इति तत्त्वतो दर्शितमेव भवति । इह च योगक्षेमासंवेदने कामानिवृत्त एव भवतीति तस्य दोपमाह—

**इह कामाणियट्टस्स, अत्तट्ठे अवरज्झइ । सोच्चा णेयाउयं मग्गं, जं भुज्जो परिभस्सइ ॥ २५ ॥**

व्याख्या—'इहे'ति मनुष्यत्वे जैनशासने वा प्राप्ते इति शेषः, कामेभ्यः अनिवृत्तः—अनुपरतः कामानिवृत्तस्तस्य आत्मनोऽर्थः 'आत्मार्थः' अर्थ्यमानतया स्वर्गादिः 'अपराध्यति' अनेकार्थत्वाद् धातूनां नश्यति, दुर्गतिगमनेनेति भावः। आह—विषयवाञ्छानिरोधिनि जिनागमे सति कथं कामानिवृत्तिसम्भवः? उच्यते—'श्रुत्वा' उपलक्षणत्वात् प्रतिपद्य च 'नैयायिकं' न्यायोपपन्नं 'मार्गं' सम्यग्दर्शनादिकं मुक्तिपथं 'यत्' यस्मात् 'भूयः' पुनः परिभ्रश्यति, कामानिवृत्तित इति शेषः। कोऽभिप्रायः?—यो जिनागमश्रवणात् कामनिवृत्तिं प्रतिपन्नोऽपि गुरुकर्म्मकत्वात् प्रतिपतति, ये तु श्रुत्वाऽपि न प्रतिपन्नाः, श्रवणं वा येषां नास्ति ते कामानिवृत्ता एवेति भाव इति सूत्रार्थः ॥२५॥ यस्तु कामेभ्यो निवृत्तस्तस्य गुणमाह—

**इह कामनियट्टस्स, अत्तट्ठे नावरज्झति। पूतिदेहनिरोहेणं, भवे देवे त्ति मे सुतं ॥ २६ ॥**

व्याख्या—इह कामेभ्यो निवृत्तः कामनिवृत्तस्तस्य 'आत्मार्थः' स्वर्गादिः 'न अपराध्यति' न भ्रश्यति, किं पुनरेवम्? यतः पूतिः—कुथितो देहः—अर्थात् औदारिकशरीरं तस्य निरोधः—अभावः पूतिदेहनिरोधस्तेन 'भवेत्' स्यात् प्राकृतत्वात् कामनिवृत्तः 'देवः' सौधर्मादिनिवासी सुरः, उपलक्षणत्वात् सिद्धो वा, 'इति' एतत् मया 'श्रुतम्' आकर्णितं परमगुरुभ्य इति गम्यते। अनेन स्वर्गाद्यवाप्तिरात्मार्थोनपराधे निमित्तमुक्तमिति सूत्रार्थः ॥ २६ ॥ ततश्च यदसौ आप्नोति तदाह—

**इड्ढी जुती जसो वन्नो, आउं सुहमणुत्तरं। भुज्जो जत्थ मणुस्सेसु, तत्थ से उववज्जइ ॥ २७ ॥**

व्याख्या—'ऋद्धिः' कनकादिसमुदायः, 'द्युतिः' शरीरकान्तिः, 'यशः' पराक्रमकृता प्रसिद्धिः, 'वर्णः' गाम्भीर्यादिगुणैः श्लाघा गौरत्वादि वा, 'आयुः' जीवितम्, 'सुखं' यथेप्सितविषयावाप्तौ आह्लादः, न विद्यते उत्तरं—प्रधानम् अस्मादित्यनुत्तरम्, इदं सर्वत्र योज्यते, 'भूयः' पुनः उत्तराण्येव तानि अस्य सम्भवन्ति 'यत्र' येषु मनुष्येषु 'तत्र' तेषु सः 'उपपद्यते' जायत इति सूत्रार्थः ॥ २७ ॥ एवं कामानिवृत्त्या यस्य आत्मार्थोऽपराध्यति स बाल इतरस्तु पण्डित इत्यर्थादुक्तम्। सम्प्रति पुनरनयोरेव साक्षात् स्वरूपं फलं चोपदर्शयन्नुपदेशमाह—

कामाऽनिवृत्तयोर्दोष-गुणौ।

बाल-पण्डितयोः स्वरूपं फलं च ।

**बालस्स पस्स बालत्तं, अहम्मं पडिवज्जिया । चिच्चा धम्मं अहम्मिट्ठे, णरए उववज्जइ ॥ २८ ॥**
**धीरस्स पस्स धीरत्तं, सव्वधम्माणुवत्तिणो । चिच्चा अहम्मं धम्मिट्ठे, देवेसु उववज्जई ॥ २९ ॥**
**तुलियाण बालभावं, अबालं चेव पंडिए । चइऊण बालभावं, अबालं सेवए मुणी ॥३०॥ त्ति बेमि ॥**

व्याख्या—'बालस्य' अज्ञस्य 'पश्य' अवधारय 'बालत्वम्' अज्ञत्वम् । किं तत् ? इत्याह—'अधर्म्मं' धर्म्मविपक्षं विषयासक्तिरूपं 'प्रतिपद्य' अभ्युपगम्य 'त्यक्त्वा' हित्वा 'धर्म्मं' विषयनिवृत्तिरूपं सदाचारं "अहम्मिट्ठे" त्ति प्राग्वत् 'नरके' सीमन्तकादौ उपलक्षणत्वादन्यत्र वा दुर्गतौ उत्पद्यते ॥ तथा धीः–बुद्धिस्तया राजत इति धीरः–बुद्धिमान् परीषहाद्यक्षोभ्यो वा धीरस्तस्य 'पश्य' प्रेक्षस्व 'धीरत्वं' धीरभावम्, सर्वं धर्म्मं–क्षान्त्यादिरूपम् अनुवर्त्तते–तदनुकूलाचारतया स्वीकुरुत इत्येवंशीलो यस्तस्य सर्वधर्म्मानुवर्त्तिनः, धीरत्वमाह—'त्यक्त्वा' हित्वा 'अधर्म्मं' विषयाभिरतिरूपमसदाचारम्, "धम्मिट्ठे" त्ति इष्टधर्म्मा देवेषु उपपद्यत इति । यतश्चैवमतो यद्विधेयं तदाह—'तोलयित्वे'ति प्राग्वत् 'बालभावं' बालत्वम् "अबालं" ति भावप्रधानत्वात् निर्देशस्य अबालत्वं 'चः' समुच्चये, "एवे"ति प्राकृतत्वाद् अनुस्वारलोपे 'एवम्' अनन्तरोक्तप्रकारेण 'पण्डितः' बुद्धिमान् त्यक्त्वा 'बालभावं' बालत्वं "अबालं" ति अबालत्वं 'सेवते' अनुतिष्ठति 'मुनिः' यतिरिति सूत्रत्रयार्थः ॥ २८–२९–३० ॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥ ७ ॥

**इति श्रीनेमिचन्द्रसूरिविरचितायां सुखबोधायां उत्तराध्ययनलघुटीकायामुरभ्रीयं सप्तममध्ययनं समाप्तम् ॥**

# अथाष्टमं कापिलीयमध्ययनम् ।

कपिलमुनेः चरित्रम् ।

व्याख्यातमुरश्रीयं सप्तममध्ययनम् । सम्प्रति कपिलमुनिप्रणीततया कापिलीयाख्यमष्टममारभ्यते । अस्य चायमभिसम्बन्धः—'अनन्तराध्ययने रसगृद्धेरपायबहुलत्वमभिधाय तत्त्याग उक्तः । स च निर्लोभस्यैव भवतीति इह निर्लोभत्वमुच्यते' इत्यनेन सम्बन्धेनाऽऽयातस्यास्याध्ययनस्य प्रस्तावनाय कपिलर्षिचरितमुच्यते । तत्र सम्प्रदायः—

तेण कालेणं तेणं समएणं कोसंबी नाम नयरी । जियसत्तू राया । कासवो बंभणो चोद्दसविज्जाठाणपारगो राइणो बहुमओ । वित्ती से उवकप्पिया । तस्स जसा नाम भारिया । तेसिं पुत्तो कविलो नाम । कासवो तम्मि कविले खुड्डलए चेव कालगओ । ताहे तम्मि मए तं पयं राइणा अन्नस्स मरुयगस्स दिन्नं । सो य आसेण छत्तेण य धरिज्जमाणेण वच्चइ । तं दट्ठूण जसा परुन्ना । कविलेण पुच्छिया । ताए सिट्ठं—जहा पिया ते एवंविहाए इड्ढीए निग्गच्छियाइओ, जेण सो विज्जासपन्नो । सो भणइ—अहं पि अहिज्जामि । सा भणइ—इह तुमं मच्छरेण न कोइ सिक्खावेइ, वच्च सावत्थीए नयरीए पियमित्तो इंददत्तो नाम माहणो सो तुमं सिक्खावेही । सो गओ सावत्थी, पत्तो य तस्समीवं, निवडिओ चलणेसु । पुच्छिओ—कओ सि तुमं ? । तेण जहावत्तं कहियं, विणयपुव्वयं च पंजलिउडेण भणियं—भयवं ! अहं विज्जत्थी तुम्हं तायनिव्विसेसाणं पायमूलमागओ, ता करेह मे विज्जाए अज्झावणेण पसाओ । उवज्झाएण वि पुत्तयसिणेहमुवहंतेण भणियं—वच्छ ! जुत्तो ते विज्जागहणुज्जमो, विज्जाविहीणो पुरिसो पसुणो निव्विसेसो होइ, इहपरलोए य विज्जा कल्लाणहेऊ, उक्तञ्च—"विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं, विद्या भोगकरी यशःसुखकरी विद्या

नमिराजर्षेः सौत्री-वक्तव्यता।

गपकुण्डलः स चासौ किरीटी च—मुकुटवान् ललितचपलकुण्डलकिरीटीति सूत्रार्थः ॥ ६० ॥ स शक्रेणैवमभिष्टूयमानः किमुत्सेकं कृतवान् उत न ? इत्याह—

**नमी नमेइ अप्पाणं, सक्खं सक्केण चोइओ। चइऊण गेहं वइदेही, सामन्ने पज्जुवट्ठिओ ॥ ६१ ॥**

व्याख्या—नमिः 'नमयति' स्वतत्त्वभावनया प्रह्वं करोति, कम् ? आत्मानं न तु उत्सेकं नयति। उक्तञ्च—"संतगुणकित्तणेण वि, पुरिसा लज्जंति जे महासत्ता। इयरे पुण अलियपसंसणे वि अंगे न मायंति ॥ १ ॥"[1] किम्भूतः सन् ? 'साक्षात्' प्रत्यक्षीभूय शक्रेण 'चोदितः' प्रेरितः त्यक्त्वा गेहं "वइदेहि" त्ति सूत्रत्वात् 'विदेही' विदेहजनपदाधिपः श्रामण्ये 'पर्युपस्थितः' उद्यतः, न तु तत्प्रेरणातोऽपि धर्मं प्रति विप्लुतोऽभूदिति सूत्रार्थः ॥ ६१ ॥ किमेष एवैवंविध उत अन्योऽपि ? इत्याह—

**एवं करेंति संबुद्धा, पंडिया पवियक्खणा। विणियट्टंति भोगेसु, जहा से णमी रायरिसि ॥ ६२ ॥**

**त्ति बेमि ॥**

व्याख्या—'एवमि'ति यथैतेन नमिना निश्चलत्वं कृतं तथाऽन्येऽपि कुर्वन्ति। कीदृशाः ?—'सम्बुद्धाः' अवगतजीवाऽजीवादितत्त्वाः 'पण्डिताः' सुनिश्चितशास्त्रार्थाः 'प्रविचक्षणाः' अभ्यासातिशयात् क्रियां प्रति प्रावीण्यवन्तः, तथाविधाश्च सन्तः किं कुर्वन्ति ? 'विनिवर्त्तन्ते' उपरमन्ति "भोगेसु" त्ति भोगेभ्यः, यथा स नमी राजर्षिस्तेभ्यो निवृत्तः, इति ब्रवीमीति पूर्ववदिति सूत्रार्थः ॥ ६२ ॥

**॥ इति श्रीनेमिचन्द्रसूरिविनिर्मितायां उत्तराध्ययनलघुटीकायां सुखबोधायां नमिप्रव्रज्याख्यं नवममध्ययनं समाप्तम् ॥**

---

१ "सद्गुणकीर्तनेनापि, पुरुषा लज्जन्ते ये महासत्त्वाः। इतरे पुनरलीकप्रशंसनेऽपि अङ्गे न मान्ति ॥ १ ॥"

# अथ द्रुमपत्रकं दशममध्ययनम् ।

व्याख्यातं नवममध्ययनम् । अधुना दशमं द्रुमपत्राख्यमारभ्यते । अस्य चायमभिसम्बन्धः—'इहानन्तराध्ययने धर्म्मचरणं प्रति निष्कम्पत्वमुक्तम्, तच्चानुशासनादेव भवतीति अनुशासनाभिधायकमिदमध्ययनम्' अनेन सम्बन्धेनाऽऽयातस्यास्याध्ययनस्य प्रस्तावनार्थं गौतममुद्दिश्येदं श्रीमन्महावीरेणाभिहितमिति **गौतम**वक्तव्यता तावदुच्यते—

तेणं कालेणं तेणं समएणं **पिट्ठिचंपा** नयरी। तत्थ **सालो** नाम राया। **महासालो** नाम जुवराया। तेसि **साल-महासालाणं** भगिणी **जसवई** । तीसे **पिढरो** भत्तारो । जसवईए अत्तओ **पिढरपुत्तो गागली** नाम कुमारो । अन्नया णं समणे भगवं **महावीरे** आइगरे तित्थयरे सयंसंबुद्धे जाव सिद्धिगइनामधेयं ठाणं संपाविउकामे, आगासगएणं छत्तेणं आगासगएणं सवरयणामएणं धम्मचक्केणं आगासगएणं फालियामएणं सीहासणेणं आगासगयाहिं कुंदेंदुसंखप्पगासाहिं चामराहिं पुरओ पकड्ढिज्जमाणेणं धम्मज्झएणं समंता मग्गओ विप्फुरंतेण य भामंडलेणं अणेगदेवकोडिसंपरिवुडे, चउद्दसीहिं समणसाहस्सीहिं छत्तीसाए अज्जियासाहस्सीहिं अणुगम्ममाणे, भवियकमलपडिबोहदिवायरे, भवजलहिपरमजाणवत्ते, लोयचिंतामणी, चोत्तीसातिसयसंपउत्ते, चंदो व्व सोमलेसे, सूरो व्व तवतेयसिरीए, मंदरो व्व निप्पकंपे, कुंजरो इव सोंडीरे, सीहो इव दुप्पधरिसे, गयणमिव निरुवलेवे, संखो इव निरंजणे, वायुरिव अप्पडिबद्धे, अट्ठसहस्सपुरिसलक्खणधरे, पुव्वाणुपुव्विं चरमाणे, गामाणुगामं दूइज्जमाणे, सुरविरइएहिं हेममएहिं नवहिं पउमेहिं चलणकमले ठवितो, अवि य—मग्गिल्लं मग्गिल्लं, पयाहिणाए उ ठाइ पयठाणे । दोहिं पउमेहिं पाया, मग्गेण य होंति सत्तऽन्ने ॥१॥ जेणेव **पिट्ठिचंपा** तेणेव उवागए उज्जाणम्मि समोसढे । **सालो महासाल**सहिओ महाविभूईए निग्गओ भयवओ वंदणवडियाए, तिक्खुत्तो

गौतमस्वामि-वक्तव्यता।

पयाहिणीकाऊण वंदिओ भयवं, उवविट्ठो धरणियले। कहिओ भगवया जीवदयाइओ धम्मो। वन्निया माणुसत्ताइया दुल्लहा धम्मसाहणसामग्गी। परूविया मिच्छत्ताइया कम्मबंधहेऊ। उवइट्ठाणि महारंभाइयाणि णरयगइकारणाणि। परूविओ जम्माइदुक्खपउरो संसारो। परूवियं कोहाइकसायाणं भवभमणहेउत्तणं। पयडिओ सम्मदंसणाइओ मोक्खमग्गो। इमं च सोऊण संवेगमुवगओ सालो भणइ—जं नवरं महासालं रज्जे ठावेमि ताव तुम्ह पायमूले गिण्हामि पव्वज्जं। पविट्ठो नयरिं, भणिओ महासालो—तुमं गेण्ह रज्जं, अहं पव्वयामि। तेण भणियं—अलं मे महारंभनिबंधणेण महामोहहेउणा विवेयपडिवक्खेण दोग्गइसहस्सदायगेणं अभिमाणमेत्तसुहेणं रज्जेणं, अहं पि संसारभउव्विग्गो भीओ जम्मणजरमरणाणं, ता जहा तुब्भे मम इहं मेढी पमाणं तहा पव्वइयस्स वि। ताहे गागलिं कंपिल्लाओ सद्दावेऊण तस्स पट्टो बद्धो, अभिसित्तो य राया जाओ। सो पुण तेसिं दो सिवियाओ कारेइ। जाव ते पव्वइया, सा भगिणी समणोवासिया जाया। तए णं ते समणा होंतगा एक्कारस्स अंगाइं अहिज्जिया। तए णं समणे भगवं महावीरे बहियाजणवयविहारेणं विहरइ। तेणं कालेणं तेणं समएणं रायगिहं णाम नयरं। तत्थ सामी समोसढो। पडिबोहिऊण भव्वसत्ते ततो निग्गओ चंपं जओ विहरिओ। ताहे साल-महासाला सामिं आपुच्छंति—अम्हे पिट्ठिचंपं वच्चामो जइ नाम ताण कोइ बुज्झेज्जा सम्मत्तं वा लभेज्जा। सामी वि जाणइ—जहा ताणि संबुज्झिहिंति। ताहे सामिणा तेसिं गोयमसामी बिइज्जओ दिन्नो। गोयमसामी पिट्ठिचंपं गओ। तत्थ समोसरणं। गागली पिढरो जसवई य निग्गयाणि। भगवं धम्मकहं कहेइ। तंजहा—भो भो भव्वसत्ता!, मा चिट्ठह विसयपसत्ता; अणेयदुहसयदारुणो संसारप्पबंधो, मा करेह एयम्मि पडिबंधो; किच्छेण माणुसत्ताइसामग्गी पाविज्जइ, अकयधम्माणं सा निप्फला संपज्जइ; चोल्लगाइदिट्ठंतेण पुणो दुलहा वन्निज्जइ, जओ अहम्मेण जीवो कुजोणीसु भामिज्जइ, असारमणिच्चं वित्तं, मा तम्मि मुज्झावह चित्तं; विरसावसाणा कामभोगा,

तप्पसत्ताणं जायंति पए पए वसणसोगा, संझब्भरागसरिसं जोव्वणं, मा करेह तम्मि उम्मत्तं मणं; खणदिट्ठनट्ठो इट्ठजणसंगो, मा करेह तम्मि गरुओ मणरंगो, कुसग्गजलबिंदुचंचलमाऊ, उज्जमह जिणिदपन्नत्तं धम्मं काउं; जिणिंदपन्नत्तो धम्मो चेवेत्थ सरणं, जो रक्खइ जम्मजरामरणं; देइ सयलसोक्खं, अइरेण पावेइ मोक्खं; वियरइ सुराऽसुररिद्धिं, करेइ सयलसमीहियसिद्धिं, आवईओ निवारेइ, संसारसायरमुत्तारेइ, ता सव्वहा पयट्टह धम्मे, मा रमह पावकम्मे । एयं च सोऊण ताणि पडिबुद्धाणि । ताहे **गागली** भणइ—जं नवरं अम्मापियरो आपुच्छामि जेट्ठपुत्तं च रज्जे ठवेमि ताव तुम्ह पायमूले गहेमि पव्वज्जं । ताणि आपुच्छियाणि भणंति—जइ तुमं संसारभउव्विग्गो परिच्चयसि घरवासं तो अम्हे वि । ताहे सो पुत्तं रज्जे ठवित्ता अम्मापिईहिं समं पव्वइओ । **गोयमसामी** ताणि घेत्तूण **चंपं** वच्चइ । तेसिं **साल-महासालाणं** पंथं वच्चंताणं हरिसो जाओ—जहा इमाइं संसारं उत्तारियाणि । एवं तेसिं सुहेण अज्झवसाणेण **केवलनाणं** उप्पन्नं । इयरेसिं पि चिंता जाया—जहा एएहिं अम्हे रज्जे ठावियाणि, पुणो ससाराओ य मोइयाणि । एवं चिंतंताणं सुहेणं अज्झवसाणेणं तिण्हं पि **केवलनाण**मुप्पन्नं । एवं ताणि उप्पन्ननाणाणि **चंपं** गयाणि, सामिं पयाहिणीकरेमाणाणि तित्थं पणमिऊण केवलिपरिसं पहावियाणि । **गोयमसामी** वि भगवं वंदिऊणं तिक्खुत्तो पाएसु पडिओ, उट्ठिओ भणइ—कहिं वच्चह ? एह तित्थयरं वंदह । ताहे सामी भणइ—मा गोयमा ! केवली आसाएहिं । ताहे आउट्टो खामेइ, संवेगं च गओ । तत्थ **गोयमसामिस्स** सम्मत्तमोहणीयकम्मोदयवसेण चिंता जाया 'मा णं न सेज्झेज्जामि' त्ति । इओ य देवाण संलावो वट्टइ—अज्ज भयवया वागरियं—जो **अट्ठावय**म्मि विलग्गइ चेइयाणि य वंदइ धरणिगोयरो ससत्तीए सो तेण भवग्गहणेणं सिज्झइ । ताहे सामी तस्स चित्तं जाणइ—तावसाण य संबोहणयं, एयस्स थिरया भविस्सइ त्ति दो वि कयाणि भविस्संति । सो वि सामिं आपुच्छइ—**अट्ठावयं** जामि ? त्ति । तओ भगवया

गौतमस्वामि-वक्तव्यता ।

भणिओ—वच्च अट्ठावयं चेइयाण वंदओ । तए णं भगवं हट्ठतुट्ठो वंदित्ता गओ । तत्थ य अट्ठावए जणवायं सोऊण तिन्नि तावसा पंचपंचसयपरिवारा पत्तेयं पत्तेयं ते 'अट्ठावयं विलग्गामो' त्ति तत्थ किलिस्संति कोडिन्नो दिन्नो सेवाली । जो सो कोडिन्नो सो चउत्थं चउत्थं काऊण पच्छा मूलकंदाणि आहारेइ सचित्ताणि, सो पढममेहलं विलग्गो । दिन्नो छट्ठं छट्ठेणं काऊण परिसडियपंडुपत्ताणि आहारेइ, सो बीयं मेहलं विलग्गो । सेवाली अट्ठमं अट्ठमं काऊण जो सेवालो मइलओ तं आहारेइ, सो तइयं मेहलं विलग्गो । एवं ते वि ताव किलिस्संति । भयवं च गोयमो ओरालसरीरो हुयवहतडियतरुणरविसरिसतेए । तं एरिसं एज्जंतं पेच्छित्ता ते भणंति—एस किर एत्थ थुल्लओ समणो विलग्गिहित्ति, जं अम्हे महातवस्सी सुक्का भुक्खा न तरामो विलग्गिउं । भयवं च गोयमो जंघाचारणलद्धीए लूयातंतुपुडगं पि नीसाए उप्पयइ, जाव ते पलोयंति 'एस आगओ त्ति, एसो अदंसणं गओ' त्ति ताहे ते विम्हिया जाया पसंसंति, अच्छंति य पलोयंता—'जइ उयरइ तो वयं एयस्स सीसा' एवं ते पडिच्छंता अच्छंति । गोयमसामी वि पत्तो नियनियवन्नप्पमाणजुत्ताहिं भरहचक्किणा कारावियाहिं चउवीसाए उसभाइजिणिंदपडिमाहिं समद्धासियं अट्ठावयगिरिसिहरसठियमाययणं । आगमभणियविहाणेण वंदियाइं चेइयाइं, कया य संथुई—'पढमपयासियनीई, पढमजिणो धम्मसारही पढमो । पढमो य महापुरिसो, अट्ठावयसंठिओ जयइ ॥ १ ॥ पणमामि विमलनाणं, सम-दम-खम-सच्च-दयगुणपहाणं । अवगयकम्मकलंकं, उसभजिणं तिहुयणमयंकं ॥ २ ॥ जो तुह नाह! नियच्छइ निम्मलु कमकमलु, नासइ तसु नीसेसु महंतु वि पावमलु । भत्तिभरेण नमंसइ जो वि य संथुणइ, सो सिरिउसभकरट्ठिउ सिद्धत्तणु कुणइ ॥ ३ ॥

1 यस्तव नाथ! पश्यति निर्मलं क्रमकमल, नश्यति तस्य निश्शेषो महानपि पापमलः ।
भक्तिभरेण नमस्यति योऽपि च संस्तौति, स श्रीऋषभकरस्थित सिद्धत्वं करोति ॥ ३ ॥

जगच्चितामणि! जगनाह! जगगुरु! जगरक्खण! जगबंधव! जगसत्थवाह! जगभाववियक्खण! । अट्ठावयसंठवियरूवकम्मट्ठकविणासण!, चउवीसं पि जिणवर! जयंतु अप्पडिहयसासण! ॥४॥ तओ—सासयमउलमणंतं, जम्मण-जर-मरण-रोय-तममुक्कं । मह नाह! मोक्खसोक्खं, संपज्जउ तुह पभावेणं ॥ ५ ॥' ति काऊणं पणिहाणं गंतूणुत्तरपुरत्थिमे दिसीभागे पुढविसिलापट्टए असोगवरपायवस्स अहे तं रयणिं वासाए उवागओ । इओ य सक्कस्स लोगपालो वेसमणो, सो वि **अट्ठावय**चेइयवंदओ आगओ । सो चेइयाणि वंदित्ता **गोयमसामिं** वंदइ । भयवं पि धम्मं कहेइ—धम्मो अत्थो कामो, पुरिसत्था तिन्नि होंति लोगम्मि । धम्माओ जेण इयरे, तम्हा धम्मो पहाणो उ ॥ १ ॥ धम्मो वि एत्थ सिज्झइ, देवाण जईण भत्तिराएण । ता तम्मि चेव पढमं, पयट्टियव्वं विसेसेणं ॥ २ ॥ देवो पुण एत्थ सो चेव जो सव्वन्नू सव्वदंसी अट्ठारसदोसेहि य वज्जिओ । **जओ भणियं**—"अन्नाण कोह मय माण, लोह माया रई य अरई य । निद्दा सोय अलियवयण, चोरिया मच्छर भया य ॥ १ ॥ पाणिवह पेम कीडापसंग हासा य जस्स इय दोसा । अट्ठारस वि पणट्ठा, नमामि देवाहिदेवं तं ॥ २ ॥" एवंविहो य भयवं तित्थयरो अरहओ, तस्स चेव भत्ती कायव्वा । सा य पूयावंदणाईहिं हवइ । पूयं पि पुप्फा-ऽऽमिस-थुइ-पडिवत्तिभेएण चउव्विहं पि जहासत्तीए कुज्जा । **जओ**—"उत्तमगुणबहुमाणो, पयमुत्तमसत्तमज्झयारम्मि । उत्तमधम्मपसिद्धी, पूयाए जिणवरिंदाणं ॥ १ ॥" वंदणं पि कायव्वं तिसंझं, तं पि य विहिणा आगमभणिएण । **भणियं च**—तिन्नि निसीही तिन्नि उ, पयाहिणा तिन्नि चेव य पणामा । तिविहा पूया य तहा, अवत्थतियभावणं चेव ॥ १ ॥ तिदिसिनिरिक्खणविरई, पयभूमिपमज्जणं च तिक्खुत्तो । वन्नाइतियं मुद्दातियं च तिविहं च पणिहाणं ॥ २ ॥ तिविहा पूया—पुप्फामिसथोत्तेहिं । अवत्थतियभावणा—छउमत्थ-केवलि-सिद्धत्तभावणा । वन्नाइतियं च—वन्नो अत्थो आलंवणं च ॥ तहा जइणो पुण ते चेव जे समसत्तुमित्ता समलेट्ठु-

गौतमस्वामि-वक्तव्यता ।

कंनणा पंचसमिया तिगुत्ता अममा अमच्छरा जिइंदिया जियकसाया निम्मलबंभचेरा सज्झायज्झाणुज्जया दुश्चरतवश्चरणरया अंताहारा पंताहारा लुक्खा भुक्खा निम्मससोणिया किसियंगा निरग्गिसरणा कुक्खिसंबला अनियममिक्खावित्तिणो त्ति । तेसिं अब्भुट्ठाण-अंजलिपग्गह-आसणदाणा-ऽभिग्गह-कियकम्म-सुस्सूसणा-ऽभिमुहगमणा-ऽणुगच्छण-पडिलाहण-कुसलमण-कुसलवयपवत्तणाईहिं कायव्वा भत्ती । एत्थंतरे वेसमणो चिंतेइ—एस भयवं एरिसे साहुगुणे वन्नेइ ?, अप्पणो य से इमा सरीरसुकुमारया जारिसा देवाण वि नत्थि, ता अंताहारा पंताहारा इचाइपरूवणाए विसवाइणिं चेट्ठं इमस्स सरीरागिई सूएइ । तं च तस्साकूयं नाणेण नाऊण भयवं 'मा अणेण अकुसलपरिणामेण एस दुल्लहबोहिओ हवउ' त्ति अणुसासणनिमित्तं मयमत्तहियरओ पुंडरियं नामऽज्झयणं परूवेइ—जहा पोक्खलावईविजए पुंडरिगिणी नयरी । नलिणीगुम्ममुज्जाणं । तत्थ णं महापउमे नाम राया होत्था । पउमावई देवी । ताणं दो पुत्ता पुंडणए कंडरिए य सुकुमारा जाव पडिरूवा । पुंडरिए जुवराया वि होत्था ।

तेणं कालेणं तेणं समएणं थेरा भगवंतो जाव नलिणिवणे उज्जाणे समोसढा, महापउमे निग्गए धम्मं सोच्चा भणइ—जं नवरं देवाणुप्पिया ! पुंडरियं कुमारं रज्जे ठवेमि ताव वयगहणेणं सफलीकरेमि मणुयत्तणं । अहासुहं मा पडिबंधं करेहि । एवं जाव पुंडरिए राया जाए जाव विहरइ, तते णं से कंडणए कुमारे जुवराया जाए । तते णं से पउमे राया पुंडरियं रायं आपुच्छइ । तते णं से पुंडरिए सिवियं नीणेइ । जाव पव्वइए णवरं चोद्दस पुव्वाइं अहिज्जइ । बहूहिं छट्ठ-ऽट्ठमहातवोवहाणेहिं बहूणि वासाणि सामण्णमणुपालेऊण मासियाए संलेहणाए सट्ठिं भत्ताइं झोसेत्ता जाव सिद्धो । अन्नया ते थेरा पुव्वाणुपुव्विं जाव पुंडरिगिणीए समोसढा । परिसा निग्गया । तए णं से पुंडरिए कंडरिएणं जुवरन्ना सद्धिं इमीसे कहाए लद्धट्ठे समाणे जाव गए धम्मकहाए जाव से पुंडरिए सावगधम्मं पडिवन्ने जाव पडिगए ।

तए णं से कंडरिए जुवराया थेराणं धम्मं सोचा हट्ठे जाव जहेयं तुब्भे वयह, जं नवरं देवाणुप्पियं पुंडरियं रायं आपुच्छामि, तते ण जाव पव्वयामि । अहासुहं पव्वयह । तए णं से कंडरिए जाव थेरे नमंसइ, नमंसित्ता अंतियाओ पडिनिक्खमइ, पडिनिक्खमित्ता तमेव चाउघंटं आसरहं दुरुहइ जाव पचोरुहइ, पचोरुहित्ता जेणेव पुंडरिए राया तेणेव उवागच्छइ, उवागच्छित्ता करयलपरिग्गहियं मत्थए अंजलिं कट्टु जाव पुंडरियं रायं एवं वयासी—एवं खलु मए देवाणुप्पिया ! थेराणं अंतिए जाव धम्मे निसंते, से य धम्मे अभिरुइए, तए णं अहं देवाणुप्पिया ! संसारभउव्विग्गो भीए जम्मणमरणाणं इच्छामि णं तुब्भेहि अणुन्नाए समाणे थेराणमंतिए जाव पव्वइत्तए । तए णं से पुंडरिए राया एवं वयासी—मा णं तुमं देवाणुप्पिया ! इयाणिं थेराणमंतिए जाव पव्वयाहि, अहं णं तुमं महया महया रायाभिसेएणं अभिसिंचामि । तए णं कंडरिए पुंडरियस्स रन्नो एयमट्ठं नो आढाइ नो परिजाणइ तुसिणीए संचिट्ठइ । तते णं से कंडरिए पुंडरियं रायं दोचं पि तचं पि एवं वयासी—इच्छामि णं देवाणुप्पिया ! जाव पव्वइत्तए त्ति । तए णं से पुंडरिए राया कंडरीयं कुमारं जाहे नो संचाएइ विसयाणुलोमाहिं बहूहिं आघवणाहिं जाव आघवित्तए वा ताहे विसयपडिकूलाहिं संजमभउव्वेगकरीहिं पन्नवेमाणो पन्नवेमाणो एवं वयासी—एवं खलु जाया ! निग्गंथे पावयणे सच्चे अणुत्तरे सव्वदुक्खाणं अंतकरे किंतु एयम्मि लोहमया इव जवा चावेयव्वा, वालुयाकवले इव भक्खियव्वे, गंगा इव महानई पडिसोयं गंतव्वा, महासमुद्दे इव भुयाहिं तरियव्वे, तिक्खखग्गधाराए व्व चंकमियव्वं, जओ असिधारं वयं चरेयव्वं, नो खलु कप्पइ जाया ! समणाणं निग्गंथाणं पाणाइवाए वा जाव मिच्छादंसणसल्ले वा आहाकम्मे वा जाव वीयभोयणे वा भोत्तए वा पायए वा, तुमं च णं जाया ! सुहसमुचिए नो चेव णं दुहसमुचिए, नालं सीयं, नालं उण्हं, नालं खुहा, नालं पिवासा, नालं चोरा, नालं वाला, नालं दंसा, नालं मसगा, नालं वातिय-पित्तिय-सिंभिय-सन्निवाइयविविहे रोगायंके, उच्चावए गामकंटए, बावीसं परीसहोवसग्गे आइण्णे सम्ममहि-

यासित्तए त्ति। तओ खलु जाया! अम्हे इच्छामो तुब्भं खणमवि विप्पओगं, तं अच्छाहि ताव जाया! अणुभवाहि रज्जसिरिं पच्छा पव्वइहिसि। तए णं से कंडरीए एवं वयासी—तहेव णं तं देवाणुप्पिया! जं णं तुब्भे वयह, किं पुण देवाणुप्पिया! निग्गंथे पावयणे कीवाणं कायराणं कापुरिसाणं इहलोयपडिबद्धाणं परलोयपरम्मुहाणं विसयतिसियाणं दुरणुचरे वीरजणस्स निच्छियस्स नो खलु एत्थं किंचि दुक्करं करणाए, तं इच्छामि णं देवाणुप्पिया! जाव पव्वइत्तए त्ति। तए णं कंडरियं पुंडरिए राया जाहे नो संचाएइ बहूहिं आघवणाहि य आघवित्तए वा ताहे अकामए चेव निक्खमणं अणुमन्नित्था। तए णं से पुंडरिए कोडुंबियपुरिसे सद्दावेइ, सद्दावेत्ता एवं वयासी—जहा महग्घं महरिहं निक्खमणमहिमं करेह जाव पव्वइओ। तओ सामाइयमाइयाइं एक्कारस अंगाइं अहिज्जइ, बहूहिं चउत्थ-छट्ठ-ऽट्ठमाईहिं तवोविहाणेहिं जाव विहरइ। अन्नया तस्स कंडरीयस्स अंतेहिं पंतेहि य जाव रोगायंके पाउब्भूए जाव दाहवक्कंतीए यावि विहरइ। तए णं से थेरा भगवंतो अन्नया कयाइ पुव्वाणुपुव्विं चरमाणा गामाणुगामं विहरमाणा पुंडरिगिणीए नयरीए नलिणिवणे समोसढा। तए णं से पुंडरीए राया इमीसे कहाए लद्धट्ठे समाणे जाव पज्जुवासइ। पत्थुया धम्मकहा भयवया। तए णं से पुंडरिए राया धम्मं सोच्चा जेणेव कंडरिए रायरिसी तेणेव उवागच्छइ, कंडरीयं वंदइ नमंसइ, कंडरीयस्स सरीरं सव्वाबाहं सरुयं पासइ २ जेणेव थेरा तेणेव उवागच्छइ, थेरे वंदइ, एवं वयासी—अहन्नं भंते! कंडरीयस्स अणगारस्स अहापवत्तेहिं तिगिच्छिएहिं फासुएसणिज्जेहिं ओसहभेसज्जभत्तपाणेहिं तिगिच्छं आउट्टामि, तुब्भे णं भंते! मम जाणसालासु समवसरह। तए णं थेरा पुंडरीयस्स रन्नो एयमट्ठं पडिसुणिंति २ जाव जाणसालासु विहरंति। तए णं से पुंडरीए कंडरीयस्स तिगिच्छं आउट्टेइ। तते णं तं मणुन्नं असणं ४ आहारंतस्स समाणस्स से रोगायंके खिप्पामेव उवसंते हट्ठे जाए आरोगे बलियसरीरे। तते णं से थेरा रायाणमापुच्छित्ता अब्भुज्जयविहारेण विहरंति। से रोगायंकाओ विप्पमुक्के वि समाणे

गोतमस्वामि-
वक्तव्यता।

तंसि मणुन्नंसि असणे ४ मुच्छिए जाव अज्झोववन्ने विविहे य पाणगंसि नो संचाएइ बहिया अब्भुज्जएणं विहारेणं विहरित्तए त्ति । तते णं से **पुंडरिए** इमीसे कहाए लद्धट्ठे समाणे जेणेव **कंडरीए** तेणेव उवागच्छइ २ **कंडरीयं** तिक्खुत्तो आयाहिणं पयाहिणं करेइ २ वंदइ २ एवं वयासी—धन्ने सि णं तुमं देवाणुप्पिया ! एवं संपुन्ने सि णं कयत्थे कयलक्खणे सुलद्धे णं तव देवाणुप्पिया ! माणुस्सए जम्मे जीवियफले, जन्नं तुमं रज्जं च जाव अंतेउरं च विच्छड्डेत्ता जाव पव्वइए । अहन्नं अहन्ने अकयपुन्ने, जण्णं माणुस्से भवे अणेगजाइ-जरा-मरण-रोग-सोग-सारीरमाणसकामदुक्खवसणसयाभिभूए अधुवे अणीइए असासए संझब्भरागसरिसे जलबुब्बुयसमाणे कुसग्गजलबिंदुसन्निभे सुविणगदंसणोवमे विज्जुलयाचंचले पुव्विं वा पच्छा वा अवस्सं विप्पजहियव्वे, तहा माणुस्सए सरीरगे दुक्खाययणे विविहवाहिसयसन्निकेए अट्ठियकट्ठुट्ठिए सिराण्हारुजालसंपिणद्धे मट्टियभंडो व्व दुव्वले असुइसंकिलिट्ठे अणिट्ठवियसव्वकालसंठप्पए जराघुणिए जज्जरघरे व्व सडणपडणविद्धंसणधम्मए पुव्विं वा पच्छा वा अवस्सं विप्पजहियव्वे, कामभोगेसु य माणुस्सएसु असासएसु वंतासवेसु एवं पित्त-खेल-सुक्क-सोणियासवेसु उच्चारपासवणखेलसिंघाणगविलीणेसु सुक्कसोणियसमुब्भवेसु अबुहजणनिसेविएसु साहुगरहणिज्जेसु अणंतसंसारवद्धणेसु कडुयविवागेसु अमुच्चमाणचुडलि व्व दुक्खाणुबंधेसु सिद्धिगमणविग्घेसु पुव्विं वा पच्छा वा अवस्सं विप्पजहियव्वेसु, तहा रज्जे हिरन्ने सुवन्ने य जाव सावएज्जे अग्गिसाहिए रायसाहिए मच्चुसाहिए दाइयसाहिए अधुवे अणिच्चिए असासए पुव्विं वा पच्छा वा अवस्सं विप्पजहियव्वे, गिद्धो मुच्छिओ अहं नो संचाएमि जाव पव्वइत्तए, तं धन्ने सि णं तुमं जाव सुलद्धे णं मणुयजम्मे जन्नं पव्वइए । तते णं से **कंडरीए पुंडरिएणं** एवं वुत्ते तुसिणीए संचिट्ठइ । तए णं **पुंडरिए** दोच्चं पि तच्चं पि एवं वयासी—धन्ने सि णं तुमं, अहं अहन्ने । तए णं से दोच्चं पि तच्चं पि एवं वुत्ते समाणे अकामए अवसव्वसे लज्जाए गारवेण य **पुंडरीयं** रायं आपुच्छइ, थेरेहिं सद्धिं बहियाजणवयविहारं विहरइ ।

तते णं से **कंडरिए** थेरेहिं सद्धिं किंचि कालं उग्गं उग्गेणं विहरेत्ता तओ पच्छा समणत्तणनिव्विण्णे समणत्तणनिब्भत्थिए समणगुणमुक्कजोगे थेराणमंतियाओ सणियं सणियं पच्चोसक्कइ। जेणे व **पुंडरिगिणी** नयरी जेणेव **पुंडरीयस्स** रन्नो भवणे जेणेव असोगवणिया जेणेव असोगवरपायवे जेणेव पुढविसिलापट्टए तेणेव उवागच्छइ २ जाव सिलापट्टयं दुरुहइ २ ओहयमणसंकप्पे जाव झियायइ। तए णं **पुंडरीयस्स** अम्मधाई तत्थागच्छइ, जाव तं तहा पासइ २ **पुंडरीयस्स** साहइ। से वि य णं अंतेउरपरियणसंपरिवुडे तत्थ गच्छइ २ तिक्खुत्तो आयाहिणपयाहिणं करेइ। जाव धन्ने सि णं सव्वं जाव तुसिणीए। तए णं **पुंडरीए** एवं वयासि—अट्ठो भंते! भोगेहिं?। हंता अट्ठो। तए णं कोडुंवियपुरिसे सद्दावेइ २ कलिकलुसेण व अहिसित्तो रायाभिसेएणं जाव रज्जं पसासेमाणे विहरइ। तए णं से **पुंडरीए** सयमेव पंचमुट्ठियं लोयं करेइ २ चाउज्जामं धम्मं पडिवज्जइ २ **कंडरीयस्स** आयारभंडगं सव्वं सुहसमुदयं पिव गेण्हइ २ इमं च अभिग्गहं गेण्हइ—कप्पइ मे थेराणं अंतिए धम्मं पडिवज्जेत्ता पच्छा आहारं आहारेत्तए त्ति कट्टु थेराभिमुहे निग्गए। **कंडरीएण** य तम्मि दिणे सुवहुपणीए आहारे अइकंखाए आहारिए। तए णं तस्स तं पणीयं पाणभोयणं आहारियस्स नो सम्मं परिणयं, वेयणा पाउब्भूया उज्जला विउला दुरहियासा। तते णं से मंतिसामंतेहिं अवहीरिए अकयपडियारे रज्जे य जाव अंतेउरे य मुच्छिए अज्झोववण्णे अट्टरुद्दज्झाणवसमुवगए अकामए कालं किच्चा सत्तमपुढवीए तेत्तीससागरोवमट्ठिईए नेरइए जाए। **पुंडरीए** वि य णं थेरे पप्प तेसि अंतिए दोच्चं पि चाउज्जामे धम्मे पडिवज्जइ। अट्ठमखमणपारणगंसि अदीणे जाव आहारेइ, तेण य कालाइक्कंतसीयललुक्खअरसविरसेण अपरिणएण वेयणा दुरहियासा जाया। तते णं से अधारणिज्जमिति कट्टु करयलपरिग्गहियं जाव अंजलिं कट्टु नमोत्थु णं अरहंताणं भगवंताणं जाव संपत्ताणं, नमोऽत्थु णं थेराणं भगवंताणं आयरियाणं धम्मोवएसयाणं, पुव्विं पि य णं मए थेराणं अंतिए सव्वे पाणाइवाए पच्चक्खाए जावज्जीवाए

गौतमस्वामि-वक्तव्यता।

जाव सव्वे अकरणिज्जे जोगे पच्चक्खाए, इयाणिं पि य णं तेसिं चेवभगवंताणं अंतिए सव्वं पाणाइवायं जाव सव्वं अकरणिज्जं जोगं पच्चक्खामि, जं पि य मे इमं सरीरगं जाव एयं पि चरिमेहिं ऊसासनीसासेहिं वोसिरामि त्ति । एवं आलोइयपडिक्कंते समाहिपत्ते कालमासे कालं किच्चा सव्वट्ठसिद्धे तेत्तीससागरोवमाऊ देवे जाए । ततो चइत्ता महाविदेहे सिज्झिहि त्ति ।

तं मा तुमं दुब्बलत्तं वलियत्तं वा गिण्हाहि, जओ सो कंडरीओ दुब्बलो वि अट्टदुहट्टवसट्टो सत्तमाए पुढवीए उववन्नो, पुंडरिओ पडिपुन्नगलकवोलो सव्वट्ठसिद्धे उववन्नो, एवं देवाणुप्पिया! वलिओ वा दुब्बलो वा अकारणं, एत्थ झाणनिग्गहो कायव्वो, झाणनिग्गहो परमं पमाणं । तत्थ वेसमणो 'अहो! भगवया आकूयं नायं' ति अईव संवेगमावन्नो वंदित्ता पडिगओ । तत्थ वेसमणस्स एगो सामाणिओ देवो, तेण पुंडरीयज्झयणमुग्गाहियं पंचसयाणि सम्मत्तं च पडिवन्नो त्ति । केई भणंति—जंभगो सो । ताहे भगवं कल्लं चेइयाइं वंदित्ता पच्चोरुहइ । ते तावसा भणंति—तुब्भे अम्हाणं आयरिया, अम्हे तुम्ह सीसा । सामी भणइ—तुम्ह य अम्ह य तिलोयगुरू आयरिया । ते भणंति—तुब्भ वि अन्नो आयरिओ? । ताहे सामी भगवओ गुणसंथवणं करेइ—जहा सव्वन्नू सव्वदंसी रूवसंपयाए अहरीकयभुवणो किंकरीकयसयलसुरासुरो सुरविरइयरयणमयसिंहासणोवविट्ठो सुरवरचालिज्जमाणचामरजुयलो उवरिधरियधवलछत्ततओ रयण-कणय-कलहोयमयपायारतियपरिवलइओ समणो भगवं महावीरो भवसत्ताण धम्मं वागरंतो संपयं चंपाए विहरइ सो अम्ह गुरू । इमं च सोऊण जाओ ताण महंतो परिओसो, वियलिओ कम्मगंठी, पावियं सम्मदंसणं, जाओ चरणपरिणामो, गहिया गोयमसमीवे पव्वज्जा । देवयाए लिंगाणि उवणीयाणि । ताहे भगवया सद्धिं वच्चंति, भिक्खावेला य जाया । भगवं भणइ—किं तुम्हे आणिज्जउ? । ते भणंति—पायसो । भगवं सव्वलद्धिसंपन्नो पडिग्गहं घयमहुसंजुत्तस्स पायसस्स भरेत्ता आगओ । ताहे भणइ—परिवाडीए ठाह । ते ठिया । भगवं च अक्खीण-

गहाणसिओ। ते धाया, सुट्ठुयरं आउट्टा। ताहे सयमाहारेइ। ताहे पुणरवि पट्ठिया। तेसिं च सेवालभक्खगाणं जेमंताणं चेव जाओ सुहपरिणामो, चिंतिउं च पवत्ता—अहो! अम्ह कुसलकम्मोदओ जं जाओ अणब्भवुट्ठिसरिसो समत्थ-सुयमहोयहिणा अणुरत्तगुणनिहिणा सिद्धिपुरिसत्थवाहेण **गोयमसामिणा** सद्धिं समागमो, संपत्ता सयंभुरमणपडियरयणं व सुदुल्लहा संसारसायरुत्तारणी जिणधम्मबोही, पत्तो तिहुयणचिंतामणी सयलजयजीववच्छलो भयवं **महावीर**सामी, तो णित्थिण्णो अम्हेहिं जम्म-जरा-मरण-रोय-सोयजलकल्लोलमालिओ भवजलही। एवमाइसंवेगभावणोवगयाण अपुव्वक-रणाइक्कमेण अद्धभुत्ते चेव तेसिं उप्पन्नं **केवलणाणं**। **दिन्नस्स** वग्गो भगवओ समीवे पत्तस्स छत्ताइछत्तं पेच्छमाणस्स पुव्ववन्नियसुहपरिणामेणं उववन्नं **केवलं**। **कोडिन्नस्स** वग्गो सामिं दट्ठूण उप्पन्नं। **गोयमसामी** पुरओ पकड्ढमाणो सामिं पयाहिणीकरेइ। ते वि केवलिपरिसं पहाविया। **गोयमसामी** भणइ—एह सामिं वंदह। सामी भणइ—गोयमा! मा केवली आसाएहिं। **गोयमसामी** आउट्टो मिच्छादुक्कडं करेइ। तओ **गोयमसामिस्स** सुट्ठुयरं अद्धिई जाया ताहे सामी गोयमं भणइ—देवाणं वयणं गिज्झं? उआहु जिणाणं?। **गोयमो** भणइ—जिणवराणं। तो कीस अद्धिइं करेसि?। ताहे सामी चत्तारि कडे पन्नवेइ, तंजहा—सुंबकडे, विदलकडे, चम्मकडे, कंबलकडे। ता तुमं **गोयमा!** ममोवरिं कंबलकडसमाणसिणेहाणुरागो, जओ—चिरसंसिट्ठोसि मे **गोयमा!**, चिरपरिचिओ सि मे **गोयमा!**, रागो पुण पसत्थेसु वि अहक्खायचारित्तलाभं पडिहणइ, न य अहक्खायमंतरेण केवलमुप्पज्जइ, केवलं सरागसंजमाणं साहूणं पसत्थरागो अपसत्थरागनिवारगत्तेण वीयरागहेउत्तणेण य अणुमओ। जओ—“अरहंतेसु य रागो, रागो साहूसु बंभयारीसु। एस पसत्थो रागो, अज्ज! सरागाण साहूणं ॥ १ ॥” तो मा विसायं गच्छसु, अइरेण चेव तुह खीण-रागस्स उप्पज्जिस्सइ केवलं, दो वि य अंते तुल्ला भविस्सामो। ताहे सामी **दुमपत्तयं** नामसज्झयणं पन्नवेइ—

गौतमस्वामि-वक्तव्यता।

इओ तुंबवणसन्निवेसे धणगिरी नाम गाहावई, सो य सड्ढो, सो य पव्वइउकामो। तस्स य मायापियरो वारिंति। पच्छा सो जत्थ जत्थ वारिंति तत्थ तत्थ विपरिणामेइ जहा अहं पव्वइउकामो। तस्स य तयणुरूवस्स गाहावइस्स धूया सुनंदा नाम। सा भणइ—ममं देह। ताहे सा दिन्ना। तीसे य भाया अज्जसमिओ नाम पुव्वपव्वइओ। तीसे य सुनंदाए कुच्छिंसि सो वेसमणसामाणिओ देवो चइऊण देवलोगाओ पुत्तत्ताए उववन्नो। ताहे भणइ धणगिरी—एस ते गब्भो विइज्जओ होहिइ। सो सीहगिरिस्स पासे पव्वइओ। इमो वि नवण्हं मासाणं दारगो जाओ। इत्यादि भगवद्वैरस्वामिकथा आवश्यकचूर्णितोऽवसेया। साम्प्रतं सूत्रमनुस्रियते—

**दुमपत्तए पंडुयए जहा, निवडइ राइगणाण अच्चए।**
**एवं मणुयाण जीवियं, समयं गोयम! मा पमायए॥ १॥**

**व्याख्या**—द्रुमः-वृक्षस्तस्य पत्रं-पर्णं तदेव द्रुमपत्रकं "पंडुयए" त्ति आर्षत्वात् पाण्डुरकं कालपरिणामतः तथाविधरोगादेर्वा प्राप्तवलक्षभावं 'यथा' येन प्रकारेण 'निपतति' शिथिलवृन्तवन्धनत्वाद् भ्रश्यति प्रक्रमाद् द्रुमात्, रात्रिगणानाम् उपलक्षणत्वात् रात्रिन्दिवसमूहानाम् 'अत्यये' अतिक्रमे, 'एवम्' इत्येवंप्रकारं मनुष्याणां जीवितम् अशेषजीवोपलक्षणं चैतत्, तदपि हि रात्रिन्दिवगणानामतिक्रमे यथास्थित्या अध्यवसायादिजनितेन उपक्रमेण वा भ्रश्यतीत्येवमुच्यते। उक्तञ्च—"शस्त्रं व्याधिर्विषं च ज्वलनजलभयव्यालवेतालशोकाः, शीतोष्णक्षुत्पिपासागलविवरमरुन्मूत्रविष्ठानिरोधाः। नानाक्षुद्रोपघाताः प्रचुरभुजिरुजः श्रान्तिगात्राभिघाताः, विघ्नान्येतानि सद्यश्चिरमपि घटितं जीवितं संहरन्ति ॥ १ ॥" यतश्चैवमतः समयमपि आस्तामावलिकादि, अपेर्गम्यमानत्वात्, हे 'गौतम!' इति इन्द्रभूतेरामन्त्रणम्, 'मा प्रमादीः' मा प्रमादं कृथाः। शेषशिष्योपलक्षणं च गौतमग्रहणम्। अत्र च पाण्डुरकपदाक्षिप्तं यौवनस्याप्यनित्यत्वमावि-

त्रिभिर्गुरवाह निर्युक्तिकृत् गाथात्रयम्—"परियंट्टियलायन्नं, चलंतसंधिं मुयंतविटागं । पत्तं च वसणपत्तं, कालप्पत्तं भणइ गाहं ॥ १ ॥ जह तुब्भे तह अम्हे, तुब्भे वि य होहिहा जहा अम्हे । अप्पाहेइ पडंतं, पंडुयपत्तं किसलयाणं ॥ २ ॥" किमेवं पाण्डुपत्रकिसलयानामुल्लापः सम्भवति ? येनेदमुच्यते, अत आह—"नवि अत्थि नवि य होही, उल्लावो किसलपंडुपत्ताणं । उवमा खलु एस कया, भवियजणविबोहणट्ठाए ॥३॥" भणितं चागमविद्भिः—"[3]चरियं च कप्पियं वा, आहरणं दुविहमेव नायव्वं । अत्थस्स साहणट्ठा, इंधणमिव ओयणट्ठाए ॥१॥" यथेह किसलयानि पाण्डुपत्रेणानुशिष्यन्ते तथाऽन्योऽपि यौवनगर्वितोऽनुशासनीयः । उक्तञ्च—"परिभवसि किमिति लोकं, जरसा परिजर्जरीकृतशरीरम् । अचिरात् त्वमपि भविष्यसि, यौवनगर्वं किमुद्वहसि ? ॥ १ ॥" तदेवं जीवितयौवनयोरनित्यत्वमवगम्य न प्रमादो विधेय इति सूत्रार्थः ॥ १ ॥ पुनरायुषोऽनित्यत्वं ख्यापयितुमाह—

अप्रमादार्थं वीरप्रभोरनुशासनम् ।

> कुसग्गे जह ओसबिंदुए, थोवं चिट्ठइ लंबमाणए ।
> एवं मणुयाण जीवियं, समयं गोयम! मा पमायए ॥ २ ॥

व्याख्या—कुशाग्रे यथा 'अवश्यायबिन्दुकः' शरत्कालभाविश्लक्ष्णवर्षबिन्दुः, स्वार्थे कप्रत्ययः, 'स्तोकम्' अल्पकाल-

---

१ "परिपतितशातनं, चलत्सन्धि मुञ्चद्वृन्तकम् । पत्रं च व्यसनप्राप्तं, कालप्राप्तं भणति गाथाम् ॥ १ ॥
यथा यूयं तथा वयं, यूयमपि च भविष्यथ यथा वयम् । सन्दिशति पतत् पाण्डुपत्रं किसलयानाम् ॥ २ ॥"

२ "नैवास्ति नैव च भविष्यत्युल्लापः किसलय-पाण्डुपत्राणाम् । उपमा खल्वेषा कृता, भविकजनविबोधनार्थम् ॥ ३ ॥"

३ "चरितं च कल्पितं वा उदाहरणं द्विविधमेव ज्ञातव्यम् । अर्थस्य साधनार्थं इन्धनमिवौदनार्थाय ॥ १ ॥"

मिति गम्यते, तिष्ठति लम्बमानकः । एवं मनुजानां जीवितम्, अतः समयमपि **गौतम !** मा प्रमादीरिति सूत्रार्थः ॥२॥
अमुमेवार्थमुपसंहरन्नुपदेशमाह—

**इइ इत्तरियम्मि आउए, जीवियए बहुपच्चवायए ।**
**विहुणाहि रयं पुरेकडं, समयं गोयम ! मा पमायए ॥ ३ ॥**

**व्याख्या**—'इति' उक्तन्यायेन 'इत्वरे' स्वल्पकालभाविनि एति–उपक्रमहेतुभिः अनपवर्त्त्यतया यथास्थित्यैवानुभवनीयतां गच्छतीति आयुः, तच्चैवं निरुपक्रममेव तस्मिन्, तथाऽनुकम्पितं जीवितकं, चशब्दस्य गम्यमानत्वात् तस्मिंश्च अर्थात् सोपक्रमायुषि, बहवः–प्रभूताः प्रत्यपायाः–उपघातहेतवोऽध्यवसाननिमित्तादयो यस्मिंस्तत्तथा, अनेन चानुकम्पिताहेतुराविष्कृतः । एवं चोक्तरूपद्रुमपत्रोदाहरणतः कुशाग्रजलबिन्दूदाहरणतश्च मनुजायुर्निरुपक्रमं सोपक्रमं च तुच्छमिति, त्वमतोऽस्यानित्यतां मत्वा 'विधुनीहि' जीवात् पृथक् कुरु 'रजः' कर्म "पुरेकडं" ति पुरा–पूर्वं तत्कालापेक्षया कृतं–विहितं । तद्विधुवनोपायमाह—समयमपि **गौतम !** मा प्रमादीरिति सूत्रार्थः ॥ ३ ॥ स्यात्–पुनर्मनुष्यभवावाप्तौ उद्यंस्याम इत्याह—

**दुलहे खलु माणुसे भवे, चिरकालेण वि सव्वपाणिणं ।**
**गाढा य विवाग कम्मुणो, समयं गोयम ! मा पमायए ॥ ४ ॥**

**व्याख्या**—'दुर्लभः' दुरवापः 'खलुः' विशेषणे, अकृतसुकृतानामिति विशेषणं द्योतयति, 'मानुषः' मनुष्यसम्बन्धी 'भवः' जन्म 'चिरकालेनापि' प्रभूतकालेनापि आस्तामल्पकालेन इत्यपिशब्दार्थः, 'सर्वप्राणिनां' सर्वेषामपि जीवानाम्, किमिति दुर्लभः मनुष्यभवः ? इत्याह—'गाढाः' विनाशयितुमशक्यतया दृढाः, 'च' इति यस्मात्, "विवाग कम्मुणो" त्ति

'विपाकाः' उदयाः 'कर्मणां' मनुष्यगतिविघातिप्रकृतिरूपाणाम् । यत एवमतः समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थः ॥ ४ ॥ कथं पुनर्दुर्लभं मनुजत्वम् ? इत्याह—

अप्रमादार्थं वीरप्रभोरनुशासनम् ।

पुढवीकायमइगओ, उक्कोसं जीवो उ संवसे । कालं संखाईयं, समयं गोयम ! मा पमायए ॥५॥
आउक्कायमइगओ, उक्कोसं जीवो उ संवसे । कालं संखाईयं, समयं गोयम ! मा पमायए ॥ ६ ॥
तेउक्कायमइगओ, उक्कोसं जीवो उ संवसे । कालं संखाईयं, समयं गोयम ! मा पमायए ॥ ७ ॥
वाउक्कायमइगओ, उक्कोसं जीवो उ संवसे । कालं संखाईयं, समयं गोयम ! मा पमायए ॥ ८ ॥
वणस्सइकायमइगओ, उक्कोसं जीवो उ संवसे । कालमणंतं दुरंतं, समयं गोयम ! मा पमायए ॥९॥
बेइंदियकायमइगओ, उक्कोसं जीवो उ संवसे । कालं संखिज्जसन्नियं, समयं गोयम ! मा पमायए १०
तेइंदियकायमइगओ, उक्कोसं जीवो उ संवसे । कालं संखिज्जसन्नियं, समयं गोयम ! मा पमायए ११
चउरिंदियकायमइगओ, उक्कोसं जीवो उ संवसे । कालं संखिज्जसन्नियं, समयं गोयम ! मा पमायए १२
पंचेंदियकायमइगओ, उक्कोसं जीवो उ संवसे । सत्तट्ठभवग्गहणे, समयं गोयम ! मा पमायए ॥१३॥
देवे णरए य गओ, उक्कोसं जीवो उ संवसे । इक्केक्कभवग्गहणे, समयं गोयम ! मा पमायए ॥१४॥

व्याख्या—पृथ्वीकायमतिगतः "उक्कोसं" ति उत्कर्षतो जीवः 'तुः' पूरणे, 'संवसेत्' तद्रूपतयैव अवतिष्ठेत् 'कालं' सङ्ख्यातीतम्, अतः समयमपि गौतम ! मा प्रमादीरिति ॥ १ ॥ एवमप्काय-तेजस्काय-वायुकायसूत्रत्रयं व्याख्येयम्, तथा वनस्पतिसूत्रं च । नवरं कालमनन्तं, अनन्तकायिकापेक्षमेतत् । दुष्टोऽन्तोऽस्येति दुरन्तस्तम्, इदमपि साधारणापेक्षयैव,

---

१ अतिशयेन गत्वा गत्वा तद्रुपत्तिलक्षणेन गतः—प्राप्तः ।

ते ह्यत्यन्ताल्पबोधतया तत उद्धृता अपि न प्रायो विशिष्टं मानुषादभवमाप्नुवन्ति । इह च सङ्ख्यातीतग्रहणे असङ्ख्याता अनन्तग्रहणे चाऽनन्ता उत्सर्पिण्यवसर्पिण्योऽवगन्तव्याः । यत आगमः—"अस्संखोसप्पिणिउसप्पिणीउ एगिंदियाण उ चउण्हं । ता चेव ऊ अणंता, वणस्सईए उ बोधव्वा ॥ १ ॥" तथा द्वीन्द्रियकायमतिगतः उत्कर्षतो जीवः संवसेत् कालं 'सङ्ख्येयसंज्ञितं' सङ्ख्यातवर्षसहस्रात्मकम्, अतः समयमपीति पूर्ववत् ॥ एवं त्रीन्द्रिय-चतुरिन्द्रियसूत्रे । पञ्चेन्द्रिया उत्तरत्र देवनारकयोरभिधानात् मानुषत्वस्य तु दुर्लभत्वेन प्रक्रान्तत्वात् तिर्यञ्च एव गृह्यन्ते, तत्कायमतिगतः उत्कर्षतो जीवः संवसेत् सप्त वा अष्ट वा सप्ताष्टानि भवग्रहणानि, अतः समयमपीति पूर्ववत् ॥ दैवान् नैरयिकांश्च अतिगत उत्कर्षतो जीवः संवसेत् एकैकभवग्रहणम्, अतः समयमपि **गौतम !** मा प्रमादीरिति सूत्रदशकार्थः ॥ उक्तमेवार्थमुपसंहरन्नाह—

**एवं भवसंसारे, संसरति सुभासुभेहिं कम्मेहिं । जीवो पमायबहुलो, समयं गोयम ! मा पमायए १५**

**व्याख्या**—'एवम्' उक्तप्रकारेण भवा एव—तिर्यगादिजन्मान्येव संसारो भवसंसारः तस्मिन् 'संसरति' पर्यटति शुभाशुभैः कर्मभिर्जीवः प्रमादबहुलः, अतः समयमपि **गौतम !** मा प्रमादीरिति सूत्रार्थः ॥ १५ ॥ एवं मनुजभवदुर्लभत्वमुक्तम् । इदानीं तदवाप्तावप्युत्तरोत्तरगुणावाप्तिरतिदुरापैव इत्याह—

**लद्धूणऽवि माणुसत्तणं, आयरियत्तं पुणरावि दुल्लभं ।**
**बहवे दसुया मिलेक्खुया, समयं गोयम ! मा पमायए ॥ १६ ॥**
**लद्धूणऽवि आयरियत्तणं, अहीणपंचिंदियया हु दुल्लहा ।**
**विगलिंदियया हु दीसई, समयं गोयम ! मा पमायए ॥ १७ ॥**

---

१ "असङ्ख्योत्सर्पिण्यवसर्पिण्य एकेन्द्रियाणां तु चतुर्णाम् । ताश्चैव त्वनन्ता वनस्पतेस्तु बोधव्याः ॥ १ ॥"

अहीणपंचिंदियत्तं पि से लहे, उत्तमधम्मसुई हु दुल्लहा ।
कुतित्थिनिसेवए जणे, समयं गोयम! मा पमायए ॥ १८ ॥
लद्धूणऽवि उत्तमं सुइं, सद्दहणा पुणरावि दुल्लभा ।
मिच्छत्तनिसेवए जणे, समयं गोयम! मा पमायए ॥ १९ ॥
धम्मं पि हु सद्दहंतया, दुल्लभया काएण फासया ।
इह कामगुणेहिं मुच्छिया, समयं गोयम! मा पमायए ॥ २० ॥

व्याख्या—लब्ध्वाऽपि मानुपत्वम् 'आर्यत्वं' मगधाद्यार्यदेशोत्पत्तिलक्षणं 'पुनरपि' भूयोऽपि दुर्लभम्, किमिति? आह— 'दस्यवः' देशप्रत्यन्तवासिनश्चौराः, "मिलेक्खुय" त्ति 'म्लेच्छाः' अव्यक्तवाचो न यदुक्तमार्यैरवधार्यते, ते च शकयवनादिदेशोद्भवाः। उक्तञ्च—सगजवणसवरवव्वरकायमुरुंडोड्डगोड्डपक्कणिया । अरवागहोणरोमसपारसखसखासिया चेव ॥१॥ दुंबिलयलउसवोक्कसभिल्लंधपुलिंदकुंधभमररुया। कुंचायचीणचंचुयमालवदमिला कुलग्घाया ॥२॥ केकयकिरायखरमुहगयमुह तह तुरगमिंढगमुहा य। हयकन्ना गयकन्ना, अन्ने य अणारिया वहवे ॥३॥ पावा पयंडदंडा, निरणुतावा य निग्घिणा कूरा । धम्मे परंगमेयरमाई जेसुं न ववहारो ॥४॥ मनुजत्वमवाप्याऽपि वहवस्तेषु जन्तव उत्पद्यन्ते । अतः समयमपि गौतम! मा प्रमादीः। इत्यमार्यत्वमपि दुर्लभम्, तदपि लब्ध्वाऽपि आर्यत्वं अहीनपञ्चेन्द्रियता, 'हु'रवधारणे, दुर्लभैव । इहैव हेतुमाह— विकलानि—रोगादिभिरुपहतानि इन्द्रियाणि येषां ते तथा तद्भावो विकलेन्द्रियता, 'हुरि'ति निपातोऽनेकार्थतया वाहुल्यवाचकः, ततश्च यतो वाहुल्येन विकलेन्द्रियता दृश्यते, ततोऽहीनपञ्चेन्द्रियता दुर्लभैव । तथा च समयमपि गौतम! मा प्रमादीः। तथा कथञ्चिदहीनपञ्चेन्द्रियतामपि 'सः' जन्तुर्लभेत, तथापि 'उत्तमधर्मश्रुतिः' तच्छ्रवणात्मिका 'हु'रवधारणे

अप्रमादार्थं वीरप्रभोरनुशासनम् ।

भिन्नक्रमश्च, ततो दुर्लभैव, किमिति? यतः 'कुतीर्थिनिषेवकः' शाक्योलूक्यादिकुपाखण्डिपर्युपासकः 'जनः' लोकः, कुतीर्थिनो हि लाभार्थिनो यदेव प्राणिनां प्रियं तदेवोपदिशन्ति तत्तीर्थकृतामप्येवंविधत्वात्। उक्तं हि—"सत्कारयशोलाभार्थिभिश्च मूढैरिहान्यतीर्थकरैः। अवसादितं जगदिदं, प्रियाण्यपथ्यान्युपदिशद्भिः ॥१॥" इति॥ सुकरैव तेषां सेवा, तत्सेविनां च कुत उत्तमधर्म्मश्रुतिः?, अतः समयमपि गौतम! मा प्रमादीः। किञ्च—लब्ध्वाऽपि उत्तमां 'श्रुतिम्' उत्तमधर्म्मश्रवणात्मिकां श्रद्धानं पुनरपि दुर्लभम्, इह हेतुमाह—मिथ्यात्वनिषेवकः जनः, अनादिभवाभ्यासतया गुरुकर्म्मतया च तत्रैव प्रायः प्रवृत्तेः, अतः समयमपीति पूर्ववत्॥ अन्यच्च 'धर्म्ममपि' प्रक्रमात् सर्वज्ञप्रणीतम् 'अपिः' भिन्नक्रमः 'तुः' वाक्यालङ्कारे, ततः 'श्रद्दधतोऽपि' कर्त्तुमभिलषतोऽपि दुर्लभकाः 'कायेन' शरीरेण 'स्पर्शकाः' अनुष्ठातारः, कारणमाह—'इह' अस्मिन् जगति 'कामगुणेषु' शब्दादिषु 'मूर्च्छिताः' गृद्धा जन्तव इति शेषः। प्रायेणाऽपथ्येष्वभिष्वङ्गः प्राणिनाम्। यत उक्तम्—"प्रायेण हि यदपथ्यं, तदेव चाऽऽतुरजनप्रियं भवति। विषयातुरस्य जगतो, यथानुकूलाः प्रिया विषयाः॥ १॥" यतश्चैवमतो दुरापामिमां सामग्रीमवाप्य समयमपि गौतम! मा प्रमादीरिति सूत्रपञ्चकार्थः॥ अन्यच्च सति शरीरसामर्थ्ये धर्म्मस्पर्शनेति तदनित्यताभिधानद्वारेणाप्रमादोपदेशमाह—

परिजूरइ ते सरीरयं, केसा पंडुरया हवंति ते।
से सोयबले य हायई, समयं गोयम! मा पमायए॥ २१॥
परिजूरइ ते सरीरयं, केसा पंडुरया हवंति ते।
से चक्खुबले य हायई, समयं गोयम! मा पमायए॥ २२॥

अप्रमादार्थं वीरप्रभोरनुशासनम् ।

परिजूरइ ते सरीरयं, केसा पंडुरया हवंति ते ।
से घाणबले य हायई, समयं गोयम! मा पमायए ॥ २३ ॥
परिजूरइ ते सरीरयं, केसा पंडुरया हवंति ते ।
से जिब्भबले य हायई, समयं गोयम! मा पमायए ॥ २४ ॥
परिजूरइ ते सरीरयं, केसा पंडुरया हवंति ते ।
से फासबले य हायई, समयं गोयम! मा पमायए ॥ २५ ॥
परिजूरइ ते सरीरयं, केसा पंडुरया हवंति ते ।
से सव्वबले य हायई, समयं गोयम! मा पमायए ॥ २६ ॥

व्याख्या—'परिजीर्यति' सर्वप्रकारां वयोहानिमनुभवति 'ते' तव शरीरमेव जरादिभिरभिभूयमानतया अनुकम्पनीयमिति शरीरकं, यतः 'केशाः' शिरसिजाः पाण्डुरा एव पाण्डुरकाः पूर्वं जननयनमनोहारिणोऽत्यन्तकृष्णाः सन्तः शुक्लीभवन्ति ते, पुनः ते–शब्दोपादानं भिन्नवाक्यत्वात् । तथा 'से' इति तद् यत् पूर्वमासीत् श्रोत्रयोः–कर्णयोः बलं–दूरादिशब्दश्रवणसामर्थ्यं श्रोत्रबलं 'चः' समुच्चये 'हीयते' जरातः क्षयमपैति, अतः शरीरसामर्थ्यस्यास्थिरत्वात् समयमपि गौतम! मा प्रमादीः । एवं सूत्रपञ्चकमपि ज्ञातव्यम् । तथा 'सर्वबलमि'ति सर्वेषां करचरणाद्यवयवानां स्वसामर्थ्यम् । उक्तञ्च—"गात्रं सङ्कुचितं गतिर्विगलिता दन्ताश्च नाशं गता, दृष्टिर्भ्रश्यति रूपमेव ह्रसते वक्त्रं च लालायते । वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते, धिक्कष्टं जरयाऽभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥ १ ॥" इति सूत्रपञ्चार्थः ॥ २१-२२-२३-२४-२५-२६ ॥ जरातः शरीराशक्तिरुक्ता, सम्प्रति रोगतस्तामाह—

अरई गंडं विसूईया, आयंका विविहा फुसंति ते ।
विहडइ विद्धंसइ ते सरीरयं, समयं गोयम ! मा पमायए ॥ २७ ॥

व्याख्या—'अरतिः' वातादिजनितश्चित्तोद्वेगः 'गंडं' गडुः, 'विसूचिका' अजीर्णविशेषः 'आतङ्काः' सद्यो घातिनो रोगविशेषाः 'विविधाः' अनेकप्रकाराः स्पृशन्ति 'ते' तव शरीरकमिति गम्यते । यदुक्तम्—"सासे खासे जरे डाहे, कुच्छिसूले भगंदरे । अरिसा अजीरए दिट्ठी—मुहसूले अरोयए ॥ १ ॥ अच्छिवेयण कंडू य, कन्नावाहा जलोयरे । कोढे एमाइणो रोगा, पीलयंति सरीरिणं ॥ २ ॥" ततश्च "विहडइ" त्ति 'विपतति' विशेषेणाधः पतति—बलोपचयादपैति, 'विध्वस्यते' जीवविमुक्तमधः पतति ते शरीरकम्, अतो यावज्जरा रोगाश्च शरीरं न जर्जरयन्ति तावत् समयमपीति पूर्ववत् । अन्येषामपि अयमुपदेशः । उक्तञ्च—"यावत् स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा, यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुषः । आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्, सन्दीप्ते भवने हि कूपखननं प्रत्युद्यमः कीदृशः ? ॥ १ ॥" केशपाण्डुरत्वादि च यद्यपि गौतमे न सम्भवति तथापि तन्निश्रया शेषशिष्यप्रतिबोधनार्थत्वाददुष्टमिति सूत्रार्थः ॥२७॥

यथा अप्रमादो विधेयस्तथा चाऽऽह—

वोच्छिंद सिणेहमप्पणो, कुमुदं सारइयं व पाणियं ।
से सव्वसिणेहवज्जिए, समयं गोयम ! मा पमायए ॥ २८ ॥

व्याख्या—'व्युच्छिन्द्धि' अपनय 'स्नेहम्' अभिष्वङ्गं, कस्य सम्बन्धिनम् ? आत्मनः, कुमुदमिव "सारइयं" ति सूत्रत्वात् शरदि भवं शारदम् 'वा' उपमार्थो भिन्नक्रमश्च प्राग् योजितः, 'पानीयं' जलम्, यथा तत् प्रथमं जलमग्नमपि जलमपहाय वर्त्तते तथा त्वमपि चिरसंसृष्टत्वादिभिर्मद्विषयस्नेहवशगोऽपि तमपनय, अपनीय च "से" इति 'अथ'

अनन्तरं सर्वस्नेहवर्जितः सन् समयमपि **गौतम !** मा प्रमादीः । इह जलमपहायैतावति सिद्धे यत् शारदपदोपादानं तत् शारदजलस्येव स्नेहस्याऽपि अतिमनोरमत्वख्यापनार्थमिति सूत्रार्थः ॥ २८ ॥ किञ्च—

**चेच्चा णं धणं च भारियं, पव्वइओ हि सि अणगारियं ।**
**मा वंतं पुणो वि आइए, समयं गोयम ! मा पमायए ॥ २९ ॥**

व्याख्या—'त्यक्त्वा' परिहृत्य "णं" वाक्यालङ्कारे, 'धनं' चतुष्पदादि, चशब्दो भिन्नक्रमः, ततः भार्यां च त्यक्त्वा 'प्रव्रजितः' प्रतिपन्नः, 'हिः' यस्मात् "सी"ति सूत्रत्वेन अकारलोपात् 'असि' भवसि 'अनगारितां' यतिताम्, अतो मा 'वान्तम्' उद्गीर्णं पुनरपि "आइए" त्ति आपिब, किन्तु समयमपि **गौतम !** मा प्रमादीरिति सूत्रार्थः ॥ २९ ॥ कथञ्च वान्ताऽऽपानं न भवति ? इत्याह—

**अवउज्झिय मित्तवंधवं, विउलं चेव धणोहसंचयं ।**
**मा तं वितियं गवेसए, समयं गोयम ! मा पमायए ॥ ३० ॥**

व्याख्या—'अपोह्य' त्यक्त्वा मित्राणि च बान्धवाश्च मित्रबान्धवम्, विपुलं चैव 'धनौघसंचयं' कनकादिद्रव्यसमूहसञ्चयम् मा 'तदि'ति मित्रादिकं 'द्वितीयं' पुनर्ग्रहणार्थमिति गम्यते, 'गवेषय' अन्वेषय, तदभिष्वङ्गवान् मा भूः, त्यक्तं हि तद् वान्तोपमम्, तदभिष्वङ्गश्च वान्ताऽऽपानप्राय इत्यभिप्रायः । किन्तु समयमपि **गौतम !** मा प्रमादीरिति सूत्रार्थः ॥३०॥ उक्तं प्रतिबन्धनिराकरणार्थमभिधाय दर्शनविशुद्ध्यर्थमाह—

**ण हु जिणे अज्ज दिस्सइ, बहुमए दिस्सइ मग्गदेसिए ।**
**संपइ णेयाउए पहे, समयं गोयम ! मा पमायए ॥ ३१ ॥**

अप्रमादार्थं वीरप्रभोरनुशासनम् ।

**व्याख्या**—'न हु' नैव 'जिनः' तीर्थकृत् 'अद्य' अस्मिन् काले दृश्यते, यद्यपीति गम्यते, तथापि "बहुमए" त्ति पन्थाः, स च द्रव्यतो नगरादिमार्गः, भावतस्तु सातिशयज्ञानदर्शनचारित्रात्मको मुक्तिमार्गः, स एवात्र परिगृह्यते, स दृश्यते, "मग्गदेसिय" त्ति मार्ग्यमाणत्वाद् मार्गः—मोक्षस्तस्य "देसिए" त्ति सूत्रत्वात् देशकः—प्रापको मार्गदेशकः, न चैवंविधोऽयमतीन्द्रियार्थदर्शिनं जिनं विना सम्भवति इत्यसन्दिग्धचेतसो भाविनोऽपि भव्या न प्रमादं विधास्यन्तीति, अतः समयमपि **गौतम !** मा प्रमादीः । इत्थं व्याख्या सूचकत्वात् सूत्रस्येति सूत्रार्थः ॥ ३१ ॥ अत्रैवार्थे पुनरुपदिशन्नाह—

**अवसोहिय कंटगापहं, ओइन्नोऽसि पहं महालयं ।**
**गच्छसि मग्गं विसोहिया, समयं गोयम ! मा पमायए ॥ ३२ ॥**

**व्याख्या**—'अवशोध्य' परिहृत्य "कंटगापहं" ति आकारोऽलाक्षणिकः, कण्टकाश्च—भावतः चरकादिकुश्रुतयः तैराकुलः पन्थाः कण्टकपथस्तं, ततः 'अवतीर्णोऽसि' अनुप्रविष्टः 'असि' भवसि 'पन्थानं' प्रक्रमात् सम्यग्दर्शनादिकं भावमार्गं "महालयं" ति महान्तम्, कश्चिदवतीर्णोऽपि मार्गं न गच्छेद् अत आह—'गच्छसि' यासि मार्गं, न पुनरवस्थित एवाऽसि, सम्यग्दर्शनाद्युत्सर्पणेन मुक्तिमार्गगमनप्रवृत्तत्वाद्भवतः । तथाप्यनिश्चये प्रायोऽप्राप्तिरेव स्यादित्याह—'विशोध्य' विनिश्चित्य । तदेवं प्रवृत्तः सन् समयमपि **गौतम !** मा प्रमादीरिति सूत्रार्थः ॥ ३२ ॥ अनन्तरं मार्गप्रतिपत्तिरुक्ता, तत्प्रतिपत्तौ च कस्यचिदनुतापसम्भव इति तन्निराचिकीर्षयाऽऽह—

**अवले जह भारवाहए, मा मग्गे विसमेऽवगाहिया ।**
**पच्छा पच्छाणुतावए, समयं गोयम ! मा पमायए ॥ ३३ ॥**

व्याख्या—'अयलः' अविद्यमानशरीरसामर्थ्यः 'यथे'ति औपम्ये, भारं वहतीति भारवाहकः, 'मा' निषेधे "मग्गे" ति मार्गं "विसमे" त्ति 'विषमं' मन्दसत्त्वैर्दुस्तरं "अवगाहिय" त्ति 'अवगाह्य' प्रविश्य त्यक्ताङ्गीकृतभारः सन्निति गम्यते, 'पश्चात्' तत्कालानन्तरं 'पश्चादनुतापकः' पश्चात्तापकृत्, भूरिति शेषः । इदमुक्तं भवति—यथा कश्चिद् देशान्तरगतो बहुभिरुपायैः स्वर्णादिकमुपार्ज्य स्वगृहाभिमुखमागच्छन्नतिभीरुतया अन्यवस्त्वन्तर्हितं स्वर्णादिकं स्वशिरस्यारोप्य कतिचिद् दिनानि सम्यगुद्वहति, अनन्तरं च क्वचिदुपलादिसङ्कुले पथि 'अहो ! अहमनेन भारेणाऽऽक्रान्तः' इति तमुत्सृज्य स्वगृहमागतोऽत्यन्तनिर्धनतयाऽनुतप्यते—किं मया मन्दभाग्येन तत् परित्यक्तमिति ? । एवं त्वमपि प्रमादपरतया त्यक्तसंयमभारः मन्नेवंविधो मा भूः, किंतु समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थः ॥ ३३ ॥ यद्विदमद्यापि निस्तरणीयमल्पं च निस्तीर्णमित्यभिसन्धिनोत्साहभङ्गोऽपि स्यादिति तदपनोदायाह—

**तिन्नो हु सि अन्नवं महं, किं पुण चिट्ठसि तीरमागओ ? ।**
**अभितुर पारं गमित्तए, समयं गोयम ! मा पमायए ॥ ३४ ॥**

व्याख्या—"तिन्नो हु सि" त्ति तीर्ण एवाऽसि, अर्णवमिवाऽर्णवं "महं" ति 'महान्तं' गुरुम्, 'किमि'ति प्रश्ने, 'पुनरि'ति वाक्योपन्यासे, ततः किं पुनस्तिष्ठसि 'तीरं' पारं 'आगतः' प्राप्तः ? । किमुक्तं भवति ?—संसारः भवः कर्म्म वा भावतोऽर्णव उच्यते, स च द्विविधोऽपि त्वयोत्तीर्णप्राय एवेति केन हेतुना तीरप्राप्तोऽप्यौदासीन्यं भजसे ? नैवेदं तवोचितमित्याशयः । किन्तु "अभितुर" त्ति अभि—आभिमुख्येन त्वरस्व—शीघ्रो भव 'पारं' परतीरं भावतो मुक्तिपदं "गमित्तइ" त्ति गन्तुम्, अतश्च समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थः ॥ ३४ ॥ अथापि स्यात्—मम पारप्राप्तियोग्यतैव न समस्ति अत आह—

अप्रमादार्थं वीरप्रभोरनुशासनम् ।

अकलेवरसेणिमुस्सिया, सिद्धिं गोयम ! लोय गच्छसि ।
खेमं च सिवं अणुत्तरं, समयं गोयम ! मा पमायए ॥ ३५ ॥

व्याख्या—अविद्यमानं कडेवरं–शरीरमेषामकडेवराः–सिद्धास्तेषां श्रेणिरकडेवरश्रेणिः, यया उत्तरोत्तरशुभपरिणामप्राप्तिरूपया ते सिद्धिपदमारोहन्ति क्षपकश्रेणिरित्यर्थः, तां 'उच्छ्रित्य' उत्तरोत्तरसंयमस्थानावाप्त्योच्छ्रितामिव कृत्वा 'सिद्धिं' सिद्धिनामानं लोकं गौतम ! 'गच्छसि' सुव्यत्ययाद् गमिष्यसि । 'क्षेमं' परचक्राद्युपद्रवरहितं, 'चः' समुच्चये भिन्नक्रमश्च, 'शिवमनुत्तरं च' तत्र शिवम्–अशेषदुरितोपशमेन, अनुत्तरं–सर्वोत्कृष्टम्, ततः समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थः ॥३५॥ सम्प्रति निगमयितुमुपदेशसर्वस्वमाह—

बुद्धे परिनिव्वुडे चरे, गाम गए नगरे व संजए । संतिमग्गं च वूहते, समयं गोयम ! मा पमायए ॥३६॥

व्याख्या—'बुद्धः' अवगतहेयादिविभागः 'परिनिर्वृतः' कषायाभ्युपशमतः शीतीभूतः 'चरेः' आसेवस्व, संयममिति शेषः । "गाम" त्ति विभक्तिलोपाद् ग्रामे 'गतः' स्थितो नगरे वा, उपलक्षणत्वाद् अरण्यादिषु वा, किमुक्तं भवति ?— सर्वस्मिन् अनभिष्वङ्गवान्, 'संयतः' सम्यक् पापस्थानेभ्य उपरतः 'शान्तिमार्गं' मुक्तिमार्गं, चशब्दो भिन्नक्रमः, ततः 'बृंहयेश्च' भव्यजनप्ररूपणया वृद्धिं नयेः, ततः समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थः ॥ ३६ ॥ इत्थं भगवदुक्तमिदमाकर्ण्य गौतमो यत् कृतवांस्तदाह—

बुद्धस्स निसम्म भासियं, सुकहितमट्ठपदोवसोहियं ।
रागं दोसं च छिंदिया, सिद्धिगइं गए गोयमे ॥ ३७ ॥ त्ति बेमि ॥

व्याख्या—'बुद्धस्य' केवलावलोकितसमस्तवस्तुतत्त्वस्य प्रक्रमात् श्रीमन्महावीरस्य 'निशम्य' आकर्ण्य 'भाषितम्' ... , ... उपमादर्शनादिना प्रकारेण कथितं-प्रबन्धेन प्रतिपादितं सुकथितम्, अत एवार्थप्रधानानि पदानि ... ... , रागं द्वेषं छित्त्वा सिद्धिगतिं गतो गौतमो भगवान् प्रथमगणधर इति सूत्रार्थः ॥ ३७ ॥ 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥

॥ इति श्रीनेमिचन्द्रसूरिविरचितायां सुखबोधायां उत्तराध्ययनसूत्र-लघुटीकायां द्रुमपत्रकाख्यं दशममध्ययनं समाप्तम् ॥

सविपक्ष-बहुश्रुत-स्वरूपम् ।

# अथ बहुश्रुतपूजाख्यमेकादशमध्ययनम् ।

उक्तं दशममध्ययनम् । साम्प्रतं बहुश्रुतपूजाख्यमेकादशमारभ्यते, अस्य चायमभिसम्बन्धः—'इहानन्तराध्ययनेऽप्रमादार्थमनुशासनमुक्तम्, तच्च विवेकिनैव भावयितुं शक्यम्, विवेकश्च बहुश्रुतपूजात उपजायते, इति बहुश्रुतपूजोच्यते' इत्यनेन सम्बन्धेनाऽऽयातस्यास्याध्ययनस्य आदिसूत्रम्—

**संजोगा विप्पमुक्कस्स, अणगारस्स भिक्खुणो। आयारं पाउकरिस्सामि, आणुपुव्विं सुणेह मे ॥१॥**

**व्याख्या**—संयोगाद् विप्रमुक्तस्य अनगारस्य भिक्षोः 'आचारम्' उचितक्रियां बहुश्रुतपूजात्मिकां प्रादुष्करिष्याम्यानुपूर्व्या शृणुत मे कथयत इति शेष इति सूत्रार्थः ॥ १ ॥ इह बहुश्रुतपूजा प्रक्रान्ता, सा च बहुश्रुतस्वरूपरिज्ञान एव कर्त्तुं शक्या, बहुश्रुतश्च अबहुश्रुतविपर्ययेण भवति अतोऽबहुश्रुतस्वरूपं तावदाह—

**जे यावि होइ निव्विज्जे, थद्धे लुद्धे अणिग्गहे। अभिक्खणं उल्लवती, अविणीए अबहुस्सुए ॥ २॥**

**व्याख्या**—'यः' कश्चित् चापिशब्दौ भिन्नक्रमावुत्तरत्र योक्ष्येते, 'भवति' जायते, निर्गतो विद्यायाः—सम्यक्शास्त्रावगमरूपायाः निर्विद्यः, अपिशब्दसम्बन्धात् सविद्योऽपि यः 'स्तब्धः' अहङ्कारी 'लुब्धः' रसादिगृद्धिमान्, न विद्यते निग्रहः—इन्द्रियनियमनात्मकोऽस्येति अनिग्रहः, 'अभीक्ष्णं' पुनः पुनः उत्—प्राबल्येनासम्बद्धभाषितादिरूपेण लपति—वक्ति उल्लपति 'अविनीतश्च' विनयरहितः, "अबहुस्सुए" त्ति यत्तदोर्नित्याभिसम्बन्धात् सोऽअबहुश्रुत उच्यते इति शेषः । सविद्यस्याप्यबहुश्रुतत्वं बहुश्रुतफलाभावादिति भावनीयम्, एतद्विपरीतश्च अर्थात् बहुश्रुत इति सूत्रार्थः ॥ २ ॥ कुतः पुनरीदृशमबहुश्रुतत्वं बहुश्रुतत्वं च लभ्यते ? इत्याह—

अह पंचहिं ठाणेहिं, जेहिं सिक्खा न लब्भइ । थंभा कोहा पमाएणं, रोगेणं आलसेण य ॥ ३ ॥
अह अट्ठहिं ठाणेहिं, सिक्खासीले त्ति वुच्चइ । अहस्सिरे सया दंते, ण य मम्ममुदाहरे ॥ ४ ॥
णासीले ण विसीले, ण सिया अइलोलुए । अक्कोहणे सच्चरए, सिक्खासीले त्ति वुच्चइ ॥ ५ ॥

सविपक्ष-बहुश्रुत-स्वरूपम् ।

व्याख्या—'अथ' इत्युपन्यासार्थे, पञ्चभिः 'स्थानैः' प्रकारैर्वक्ष्यमाणा 'शिक्षा' ग्रहणाऽऽसेवनात्मिका न लभ्यते तैरिन्द्रशमबहुश्रुतत्वमवाप्यत इति शेषः । कैः पुनः सा न लभ्यते ? इत्याह—'स्तम्भात्' मानात् 'क्रोधात्' कोपात् 'प्रमादेन' मद्यविषयादिना 'रोगेण' गलत्कुष्ठादिना, 'आलस्येन' अनुत्साहात्मना शिक्षा न लभ्यत इति प्रक्रमः । 'चः' समुच्चये । इत्थमबहुश्रुतत्वहेतूनभिधाय बहुश्रुतत्वहेतूनाह—अथ अष्टाभिः स्थानैः शिक्षां शीलयति—अभ्यस्यतीति शिक्षाशील इत्युच्यते तीर्थकरादिभिरिति गम्यते । तान्येवाह—"अहस्सिरे" त्ति अहसनशीलो न सहेतुकमहेतुकं वा हसन्नेवास्ते, 'सदा' सर्वकालं 'दान्तः' इन्द्रिय-नोइन्द्रियदमवान्, न च 'मर्म' परापभ्राजनाकारि 'उदाहरेत्' उद्घट्टयेत्, 'न' नैव 'अशीलः' सर्वथा शीलविकलः, न 'विशीलः' विरूपशीलोऽतीचारकलुषितव्रत इत्यर्थः, 'न स्यात्' न भवेत् 'अतिलोलुपः' अतीवरसलम्पटः, 'अक्रोधनः' अपराधिन्यपि क्षमावान्, 'सत्यरतः अवितथभाषणसक्त इति । निगमयितुमाह—शिक्षाशीलः 'इति' अनन्तरोक्तगुणभाग् उच्यते, स च बहुश्रुत एव भवतीति भावः । विशेषाभिधायित्वाच्च क्वचित् केषाञ्चिदन्तर्भावसम्भवेऽपि पृथगुपादानमिति सूत्रत्रयार्थः ॥ ३–४–५ ॥ किञ्च—अबहुश्रुतत्वे बहुश्रुतत्वे वाऽविनयो विनयश्च मूलकारणं । न च अविनीतविनीतयोः स्वरूपमविज्ञाय तौ ज्ञातुं शक्याविति यैः स्थानैरविनीतो यैश्च विनीत उच्यते तान्यभिधातुमाह—

अह चोद्दसहिं ठाणेहिं, वट्टमाणो उ संजए । अविणीए वुच्चई सो उ, णिव्वाणं च ण गच्छइ ॥६॥
अभिक्खणं कोही भवइ, पबंधं च पकुव्वइ । मित्तिज्जमाणो वमइ, सुयं लद्धूण मज्जइ ॥७॥

**अवि पावपरिक्खेवी, अवि मित्तेसु कुप्पइ। सुप्पियस्सावि मित्तस्स, रहे भासइ पावगं॥ ८॥
पइण्णवाई दुहिले, थद्धे लुद्धे अनिग्गहे। असंविभागी अचियत्ते, अविणीए त्ति वुच्चइ॥ ९॥
अह पन्नरसहिं ठाणेहिं, सुविणीए त्ति वुच्चइ। नीयावित्ती अचवले, अमाई अकुऊहले॥ १०॥
अप्पं च अहिक्खिवइ, पवंधं च ण कुवइ। मित्तिज्जमाणो भजति, सुयं लद्धुं न मज्जइ॥ ११॥
न य पावपरिक्खेवी, न य मित्तेसु कुप्पइ। अप्पियस्सावि मित्तस्स, रहे कल्लाण भासइ॥ १२॥
कलहडमरवज्जए, बुद्धे य अभिआइए। हिरिमं पडिसंलीणो, सुविणीए त्ति वुच्चइ॥ १३॥**

'अथे'ति प्राग्वत्। चतुर्दशसु स्थानेषु, सूत्रे तु सप्तम्यर्थे तृतीया, 'वर्त्तमानः' तिष्ठन् 'तुः' पूरणे, 'संयतः' तपस्वी अविनीत उच्यते। 'स तु' इत्यविनीतः पुनः किम्? इत्याह—'निर्वाणं' मोक्षं चशब्दादिहैव ज्ञानादींश्च 'न गच्छति' न प्राप्नोति॥ कानि पुनश्चतुर्दशस्थानानि? इत्याह—अभीक्ष्णं 'क्रोधी' क्रोधनो भवति। 'प्रवन्धं च' प्रकृतत्वात् कोपस्यैवाविच्छेदात्मकं "पकुवइ" त्ति प्रकुरुते, प्रकुपितः सन् मृदुवचनादिभिरपि नोपशाम्यति। तथा "मित्तिज्जमाणो" त्ति 'मित्रीयमाणोऽपि' मित्रं ममायमस्त्वितीष्यमाणोऽपि अपेर्लुप्तस्य दर्शनात् 'वमति' त्यजति, प्रस्तावाद् मैत्री, किमुक्तं भवति?—यदि कश्चिद्धार्मिकतया वक्ति—यथा त्वं न वेत्सीत्यहं तव पात्रं लेपयामि, ततोऽसौ प्रत्युपकारभीरुतया प्रतिवक्ति—ममालमेतेन, कृतमपि कृतघ्नतया वा न मन्यत इति वमतीत्युच्यते। तथा "सुयं" ति अपेर्गम्यमानत्वात्, 'श्रुतमपि' आगममपि लब्ध्वा माद्यति दर्पं याति–गर्वं विदधाति, कोऽर्थः—श्रुतं हि मदापहारहेतुकम्, स तु तेन दृप्यति। तथा 'अपिः' सम्भावनायां सम्भाव्यत एतत् यथाऽसौ पापैः–कथञ्चित् समित्यादिषु स्खलितलक्षणैः परिक्षिपति–तिरस्कुरुत इत्येवंशीलः पापपरिक्षेपी आचार्यादीनामिति गम्यते। तथा 'अपिः' भिन्नक्रमः, ततः 'मित्रेभ्योऽपि' सुहृद्भ्योऽपि आस्तामन्येभ्यः 'कुप्यति' क्रुध्यति,

सूत्रे चतुर्थ्यर्थे सप्तमी । तथा 'सुप्रियस्यापि' अतिवल्लभस्यापि मित्रस्य 'रहसि' एकान्ते 'भाषते' वक्ति पापमेव पापकम्, किमुक्तं भवति ?—अग्रतः प्रियं वक्ति पृष्ठतस्तु प्रतिसेवकोऽयमित्यादिकमनाचारमेवाऽऽविष्करोति । तथा प्रतिज्ञया—इत्थमेवमहमित्येकान्ताभ्युपगमरूपया वदनशीलः प्रतिज्ञावादी । तथा "दुहिल" त्ति द्रोहणशीलः द्रोग्धा न मित्रमप्यनभिद्रुह्य आस्ते । तथा 'स्तब्धः' तपस्व्यहम् इत्याद्यहङ्कृतिमान् । तथा 'लुब्धः' अन्नादिष्वभिकाङ्क्षावान् । तथा 'अनिग्रहः' प्राग्वत् । तथा असंविभजनशीलः असंविभागी, नाऽऽहारादिकमवाप्यातिगार्ध्यतोऽन्यस्मै स्वल्पमपि प्रयच्छति, किन्त्वात्मानमेव पोषयति । तथा "अचियत्ते" त्ति 'अप्रीतिकरः' दृश्यमानः सम्भाष्यमाणो वा सर्वस्याप्रीतिमेवोत्पादयति, एवंविधदोषान्वितोऽविनीत इत्युच्यत इति निगमनम् ॥ इत्थमविनीतस्थानान्यभिधाय विनीतस्थानान्याह—अथ पञ्चदशभिः स्थानैः सु-शोभनो विनीतः—विनयान्वितः सुविनीत इत्युच्यते । तान्येवाह—"नीयावित्ति" त्ति नीचम्—अनुद्धतं यथा भवत्येवं वर्तत इत्येवंशीलः नीचैर्वर्त्ती, गुरुषु न्यग्वृत्तिमान्, यथाऽऽह—"नीयं[1] सेज्जं गइं ठाणं, नीयं च आसणाणि य । नीयं च पाए वंदिज्जा, नीयं कुज्जा य अंजलिं ॥ १ ॥" तथा च न चपलः अचपलः गति-स्थान-भाषाभावभेदाच्चतुर्धा । तत्र गतिचपलः—द्रुतचारी । स्थानचपलः—यस्तिष्ठन्नपि चलन्नेवास्ते हस्तादिभिः । भाषाचपलः—भाषा-ऽसभ्या-ऽसमीक्ष्या-ऽदेशकालप्रलापिभेदाच्चतुर्धा, तत्र असत्—अविद्यमानम् असभ्यम्—खरपरुषादि असमीक्ष्य—अनालोच्य प्रलपन्तीत्येवंशीला असदसभ्याऽसमीक्ष्यप्रलापिनस्त्रयः, अदेशकालप्रलापी चतुर्थः, अतीते कार्ये यो वक्ति—यदिदं

1 "नीचां शय्यां गतिं स्थानं, नीचानि चासनानि च । नीच च पादौ वन्देत, नीचं च कुर्याचाञ्जलिम् ॥ १ ॥"

२ भाषाचपलस्य चतुर्णामभिसम्बन्धादसत्प्रलापी १ असभ्यप्रलापी २ असमीक्ष्यप्रलापी ३ अदेशकालप्रलापीति ४ चतुर्धा भाषाचपल उक्तो ।

सविपक्ष-बहुश्रुत-स्वरूपम् ।

तत्र देशे काले वाऽकरिष्यत् ततः सुन्दरमभविष्यत् । भावचपलः–सूत्रेऽर्थे वाऽसमाप्त एव योऽन्यद् गृह्णाति । 'अमायी'[3] न मनोज्ञमाहारादिकमवाप्य गुर्वादिवञ्चकः । 'अकुतूहलः' न कुहुकेन्द्रजालाद्यवलोकनपरः, 'अल्पमेवाधिक्षिपति' अभाववचनोऽल्पशब्दोऽत्र, ततश्च नैव कञ्चनाधिक्षिपति–नाऽऽक्रोशति । 'प्रबन्धं च' उक्तरूपं न करोति । 'मित्रीयमाणः' उक्तन्यायेन 'भजते' मित्रीयितारमुपकुरुते, प्रत्युपकारं वा प्रत्यसमर्थः कृतघ्नो न भवति । श्रुतं लब्ध्वा न माद्यति, किन्तु मददोषपरिज्ञानतः सुतरामवनमति । 'न च' नैव 'पापपरिक्षेपी' उक्तरूपः । न च मित्रेभ्यः कृतज्ञतया कथञ्चिदपराधेऽपि कुप्यति । अप्रियस्याऽपि मित्रस्य रहसि "कल्लाण" त्ति कल्याणं[11] भाषते, इदमुक्तं भवति—मित्रमिति यः प्रतिपन्नः–अङ्गीकृतः स यद्यप्यपकृतिशतानि विधत्ते तथाऽप्येकमपि सुकृतमनुस्मरन् न रहस्यपि तद्दोषमुदीरयति । तथा चाह—

"एकसुकृतेन दुष्कृतशतानि ये नाशयन्ति ते धन्याः । नत्वेकदोषजनितो, येषां कोपः स च कृतघ्नः ॥ १ ॥" इति । कलहश्च–वाचिको विग्रहः डमरं च–प्राणिघातादिभिः तद्वर्जकः[12] 'बुद्धः' बुद्धिमान्, एतच्च सर्वत्र अनुगम्यत एवेति न प्रकृतसङ्ख्याविरोधः । "अभिजाइए"[13] त्ति अभिजातिः–कुलीनता तां गच्छति–उत्क्षिप्तभारनिर्वहणादिनेत्यभिजातिगः ह्रीः–लज्जा सा विद्यतेऽस्य ह्रीमान्[14], कथञ्चित् कलुषाध्यवसायतायामप्यकार्यमाचरन् लज्जते । 'प्रतिसलीनः'[15] गुरुसकाशेऽन्यत्र वा कार्यं विना न यतस्ततश्चेष्टते । प्रस्तुतमुपसहरन्नाह—'सुविनीतः' सुविनीतशब्दवाच्य इत्येवंविधगुणान्वित उच्यते इति सूत्राष्टकार्थः ॥ ६-७-८-९-१०-११-१२-१३ ॥ यश्चैवं विनीतः स कीदृक् स्यात् ? इत्याह—

**वसे गुरुकुले निच्चं, जोगवं उवहाणवं । पियंकरे पियंवाई, से सिक्खं लद्धुमरिहइ ॥ १४ ॥**

**व्याख्या**—'वसेत्' आसीत, क ?—गुरूणाम्–आचार्यादीनां कुलम्–अन्वयो गच्छ इत्यर्थः गुरुकुलं तत्र, तदाज्ञोपलक्षणं च कुलग्रहणं, 'नित्यं' सदा, किमुक्तं भवति ?—यावज्जीवमपि गुर्वाज्ञायामेव तिष्ठेत् । उक्तञ्च—"णाणस्स होइ

भागी" इत्यादि । योगः—व्यापारः स चेह प्रक्रमाद् धर्मगत एव तद्वान् । उपधानम्—अङ्गानङ्गाध्ययनादौ यथायोगमाचाम्लादितपोविशेषः तद्वान्, यद् यस्योपधानमुक्तं न तन् कृच्छ्रभीरुतयोत्सृज्यान्यथैवाऽधीते शृणोति वा । प्रियम्—अनुकूलं करोतीति प्रियङ्करः, कथञ्चित् केनचिदपकृतोऽपि न तत्प्रतिकूलमाचरति, किन्तु ममैव कर्मणामयं दोष इत्यवधारयन् अप्रियकारिण्यपि प्रियमेव चेष्टते । इदं च भावयति—अपकारिणि कोपश्चेन्, कोपे कोपः कथं न ते ? । धर्मार्थकाममोक्षाणां, प्रसह्य परिपन्थिनि ॥ १ ॥ अत एव च "पियंवाइ" त्ति केनचिदप्रियमुक्तोऽपि प्रियमेव वदतीत्येवंशीलः प्रियवादी । उक्तञ्च—"सिक्खह पियाइं वोत्तुं, सव्वो तूसइ पियं भणंताणं । किं कोइलाहि दिन्नं ?, किं व हियं कस्स काएहिं ? ॥१॥ करयलमलियस्स वि दमणयस्स मघमघइ पेसलो गंधो । कुवियस्स वि सज्जणमाणुसस्स महुरो समुल्लावो ॥२॥ सुजनो न याति विकृतिं, परहितनिरतो विनाशकालेऽपि । छेदेऽपि चन्दनतरुः, सुरभयति मुखं कुठारस्य ॥ ३ ॥" तथाऽस्य को गुणः ? इत्यत आह—'सः' एवंगुणविशिष्टः 'शिक्षां' शास्त्रार्थग्रहणादिरूपां 'लब्धुम्' अवाप्तुम् 'अर्हति' योग्यो भवतीति । अनेनैव अविनीतस्त्वेतद्विपरीतः शिक्षां लब्धुं नार्हतीत्यर्थादुक्तं भवति । तथा च यः शिक्षां लभते स बहुश्रुत इतरस्त्वबहुश्रुत इति भाव इति सूत्रार्थः ॥ १४ ॥ एवं च सविपक्षं बहुश्रुतं प्रपञ्चतोऽभिधाय प्रतिज्ञातं तत्प्रतिपत्तिरूपमाचारं तस्यैव स्तवद्वारेणाह—

सविपक्ष-बहुश्रुत-स्वरूपम् ।

**जहा संखम्मि पयं निहियं, दुहओ वि विरायति । एवं बहुस्सुए भिक्खू, धम्मो कित्ती तहा सुयं ॥१५॥**

व्याख्या—'यथे'ति दृष्टान्तोपन्यासे, 'शङ्खे' जलजे 'पयः' दुग्धं 'निहितं' न्यस्तं "दुहओ वि" त्ति द्विधाऽपि स्वसम्बन्ध्याऽऽश्रयसम्बन्धिगुणद्वयलक्षणेन प्रकारद्वयेनाऽपीति अपिशब्दार्थः, 'विराजते' शोभते, तत्र हि तत् न कलुषीभवति, न

---

1 "शिक्षध्वं प्रियाणि वक्तुं, सर्वस्तुष्यति प्रियं भणद्भ्यः । किं कोकिलाभिर्दत्तं ?, किं वा हृतं कस्य काकैः ? ॥ १ ॥
करतलमृदितस्याऽपि दमनकस्य प्रसर्पति पेशलो गन्धः । कुपितस्याऽपि सज्जनमानुषस्य मधुरः समुल्लापः ॥ २ ॥"

चाम्लतां भजते, नापि च परिस्रवति । 'एवम्' अनेन प्रकारेण बहुश्रुते "भिक्खु" त्ति आर्षत्वाद् 'भिक्षौ' तपस्विनि 'धर्मः' यतिधर्मः 'कीर्त्तिः' श्लाघा तथा 'श्रुतम्' आगमो विराजते इति सम्बधः । किमुक्तं भवति ?—यद्यपि धर्म-कीर्त्ति-श्रुतानि निरुपलेपतादिगुणेन स्वयं शोभाभाञ्जि तथापि मिथ्यात्वादिकालुष्यविगमतो निर्मलतादिगुणेन शङ्ख इव बहुश्रुते स्थितान्याश्रयगुणेन विशेपतः शोभन्ते, तानि हि न तत्र मालिन्यम् अन्यथाभावं हानि वा कदाचन प्रतिपद्यन्ते इति सूत्रार्थः ॥ १५ ॥ पुनर्बहुश्रुतस्तवमाह—

**जहा से कंबोयाणं, आइन्ने कंथए सिया । आसे जवेण पवरे, एवं हवइ बहुस्सुए ॥ १६ ॥**

'यथा' येन प्रकारेण 'सः' इति प्रतीतः 'कम्बोजानां' कम्बोजदेशोद्भवानां प्रक्रमादश्वानां मध्ये 'आकीर्णः' व्याप्तः शीलादिगुणैरिति गम्यते, 'कन्थकः' प्रधानोऽश्वः, यः किल दृपच्छकलभृतकुतुपनिपतनध्वनेर्न सन्त्रस्यति, 'स्यात्' भवेत् 'अश्वः' तुरङ्गमः 'जवेन' वेगेन 'प्रवरः' प्रधानः । 'एवम्' इत्युपनये, तत ईदृशो भवति बहुश्रुतः, सोऽप्यन्ययतीनां शीलादिभिर्गुणैः प्रवर इति सूत्रार्थः ॥ १६ ॥ किं च—

**जहाऽऽइन्नसमारूढो, सूरे दढपरक्कमे । उभओ णंदिघोसेणं, एवं हवइ बहुस्सुए ॥ १७ ॥**

**व्याख्या**—यथा आकीर्ण—जात्यादिगुणोपेतं तुरङ्गमं समारूढः—अध्यासितः आकीर्णसमारूढः 'शूरः' चारभटः 'दृढपराक्रमः' गाढपराक्रमः "उभओ" त्ति 'उभयतः' वामतो दक्षिणतश्च 'नान्दीघोपेण' द्वादशतूर्यनिर्घोपात्मकेन । एवं भवति बहुश्रुतः । किमुक्तं भवति ?—यथैवंविधः शूरो न केनचिदभिभूयते, न चान्यस्तदाश्रितः तथाऽयमपि जिनप्रवचनतुरङ्गाश्रितो दृप्यत्परवादिदर्शनेऽपि चात्रस्तः तद्विजयं च प्रति समर्थः उभयतश्च दिनरजन्योः स्वाध्यायघोष-

रूपेण नार्द्रारोपेणोपलक्षितः परतीर्थिभिरतीव मदावलिप्तैरपि नाभिभवितुं शक्यः, न चाऽत्र प्रतिपत्तिः तदाश्रितोऽन्योऽपि कथञ्चिज्जीयत इति सूत्रार्थः ॥ १७ ॥

**जहा करेणुपरिकिन्ने, कुंजरे सट्ठिहायणे । बलवंते अप्पडिहए, एवं हवइ बहुस्सुए ॥ १८ ॥**

व्याख्या—यथा करेणुपरिकीर्णः—हस्तिनीभिः परिवृतः 'कुञ्जरः' हस्ती, षष्टिर्हायनान्यस्येति 'षष्टिहायनः' षष्टिवर्षप्रमाणः, तस्य हि एतावत्कालं यावत् प्रतिवर्षं बलोपचयः ततस्तदपचय इत्येवमुक्तम्, अत एव च "बलवंते" त्ति बलं—शरीरसामर्थ्यमस्यास्तीति बलवान् सन् अप्रतिहतो भवति, कोऽर्थः ?—नाऽन्यैर्मदोत्कटैरपि मतङ्गजैः पराङ्मुखीक्रियते । एवं भवति बहुश्रुतः । सोऽपि हि करेणुसदृशीभिः परप्रसरनिरोधिनीभिरौत्पत्तिक्यादिबुद्धिभिर्विद्याभिश्च विविधाभिर्वृतः षष्टिहायनतया चात्यन्तस्थिरमतिः, अत एव च बलवत्त्वेनाप्रतिहतो भवति, दर्शनोपहन्तृभिर्न प्रतिहन्तुं शक्यत इति सूत्रार्थः ॥ १८ ॥ अन्यच्च—

**जहा से तिक्खसिंगे, जायक्खंधे विरायइ । वसहे जूहाहिवई, एवं हवइ बहुस्सुए ॥ १९ ॥**

व्याख्या—यथा स तीक्ष्णे—निशिताग्रे शृङ्गे—विषाणे यस्य स तथा, जातः—अत्यन्तमुपचितीभूतः स्कन्धोऽस्येति जातस्कन्धः, समस्ताङ्गोपाङ्गोपचितत्वोपलक्षणं चैतत्, विराजते 'वृषभः' प्रतीतः, यूथस्य—गवां समूहस्य अधिपतिः—स्वामी स तथा, एवं भवति बहुश्रुतः । सोऽपि हि परपक्षभेत्तृतया तीक्ष्णाभ्यां स्वशास्त्रपरशास्त्राभ्यां शृङ्गतुल्याभ्यामुपलक्षितो गच्छादिगुरुकार्यधुराधरणधौरेयतया च जातस्कन्धः, अत एव यूथस्य—साध्व्यादिसमूहस्य अधिपतिः—आचार्यादिपदवीं गतः सन् विराजते इति सूत्रार्थः ॥ १९ ॥ अन्यच्च—

**जहा से तिक्खदाढे, ओदग्गे दुप्पहंसए । सीहे मियाण पवरे, एवं हवइ बहुस्सुए ॥ २० ॥**

व्याख्या—यथा स तीक्ष्णदंष्ट्रः 'उदग्रः' उत्कटः अत एव "दुप्पहंसए" त्ति 'दुष्प्रधर्षकः' अन्यैर्दुरभिभवः 'सिंहः' केसरी 'मृगाणाम्' आरण्यप्राणिनां प्रवरो भवति, एवं बहुश्रुतः । अयमपि हि परपक्षभेत्तृतया तीक्ष्णदंष्ट्रासमैर्नैगमादिनयैः प्रतिभादिगुणोदग्रतया च दुरभिभव इत्यन्यतीर्थानां मृगस्थानीयानां प्रवर एवेति सूत्रार्थः ॥ २० ॥ अपरं च—

**जहा से वासुदेवे, संखचक्कगदाधरे । अप्पडिहयबले जोहे, एवं हवइ बहुस्सुए ॥ २१ ॥**

व्याख्या—यथा 'वासुदेवः' विष्णुः, शङ्खचक्रगदा धारयतीति शङ्खचक्रगदाधरः, 'अप्रतिहतबलः' अस्खलितसामर्थ्यः, किमुक्तं भवति ?—एकं सहजसामर्थ्यवान् अन्यच्च तथाविधायुधान्वित इति, 'योधः' सुभटः, भवत्येवं बहुश्रुतः । सोऽपि ह्येकं स्वाभाविकप्रतिभाप्रागल्भ्यवान् अपरं शङ्खचक्रगदासदृशैः सम्यग्दर्शनज्ञानचारित्रैरुपेत इति योध इव योधः कर्मवैरिपराभवं प्रतीति सूत्रार्थः ॥ २१ ॥ अपरं च—

**जहा से चाउरंते, चक्कवट्टी महिड्ढिए । चोद्दसरयणाहिवई, एवं हवइ बहुस्सुए ॥ २२ ॥**

व्याख्या—यथा स चतुर्भिः—हयगजरथनरात्मकैः अन्तः—शत्रुविनाशात्मको यस्य स तथा, 'चक्रवर्त्ती' षट्खण्डभरताधिपः 'महर्द्धिकः' दिव्यानुकारिलक्ष्मीकः, चतुर्दश च तानि रत्नानि च चतुर्दशरत्नानि, तानि चामूनि—'सेणावइ[1] गाहावइ[2], पुरोहिय[3] गय[4] तुरय[5] वड्ढइग[6] इत्थी[7] । चक्कं[8] छत्तं[9] चम्मं[10], मणि[11] कागिणि[12] खग्ग[13] दंडो[14] य ॥ १ ॥' तेषामधिपतिश्चतुर्दशरत्नाधिपतिः, एवं भवति बहुश्रुतः । सोऽपि हि चतुर्भिर्दानादिधर्मैरन्तः—स्वकर्मवैरिविनाशोऽस्येति चतुरन्तः, ऋद्धयश्चामर्पौषध्यादयो महत्य एवास्य भवन्ति, सम्भवन्ति चास्याऽपि चतुर्दशरत्नोपमानि पूर्वाणीति कथं न चक्रवर्त्तितुल्यतास्य ? इति सूत्रार्थः ॥ २२ ॥

१ 'सेनापतिः[1] गाथापतिः[2] पुरोहितो[3] गजस्तुरंगो[4,5] वर्धकिः[6] स्त्री[7] । चक्रं[8] छत्रं[9] चर्म[10] मणिः[11] काकिणी[12] खड्गो[13] दण्डश्च[14] ॥ १ ॥'

**जहा से सहस्सक्खे, वज्जपाणी पुरंदरे । सक्के देवाहिवई, एवं हवइ बहुस्सुए ॥ २३ ॥**

व्याख्या—यथा स सहस्रमक्ष्णामस्येति 'सहस्राक्षः' सहस्रलोचनः, अत्र सम्प्रदायः—"सहस्सक्ख त्ति पञ्च मंतिसयाइं देवाणं इंदस्स, तस्स तेसिं सहस्समच्छीणं, तेसिं नीईए विक्कमइ, अहवा जं सहस्सेणं अच्छीणं दीसइ तं सो दोहिं अच्छीहिं अब्भहियतरागं पेच्छइ" त्ति । वज्रं—वज्राभिधानमायुधं पाणौ अस्येति वज्रपाणिः, लोकोक्त्या च पूर्दारणात् पुरन्दरः, क ईदृग् ? इत्याह—शक्रो देवाधिपतिः, एवं भवति बहुश्रुतः । सोऽपि हि श्रुतज्ञानेनाशेषातिशयरत्ननिधानेन लोचनसहस्रेणैव जानीते, यद्वैवंविधः तस्य सल्लक्षणतया वज्रमपि लक्षणं पाणौ सम्भवतीति वज्रपाणिः, पूः शरीरमप्युच्यते, तद् विकृष्टतपोऽनुष्ठानेन दारयति कृशीकरणादिति पुरन्दरः । दैवैरपि धर्मेऽत्यन्तनिश्चलतया पूज्यत इति तत्पतिरप्युच्यते, तथा चाह—"देवा वि तं णमंसति, जस्स धम्मे सया मणो" त्ति सूत्रार्थः ॥ २३ ॥ अपि च—

**जहा से तिमिरविद्धंसे, उत्तिट्ठंते दिवायरे । जलंते इव तेएण, एवं हवइ बहुस्सुए ॥ २४ ॥**

व्याख्या—यथा सः 'तिमिरविध्वंसः' अन्धकारापहारकः 'उत्तिष्ठन्' उद्गच्छन् 'दिवाकरः' सूर्यः, स हि ऊर्द्ध्वं नभोभागमाक्रामन् अतितेजस्वितां भजते अवतरंस्तु न तथेत्येवं विशिष्यते, 'ज्वलन्निव' ज्वालां मुञ्चन्निव 'तेजसा' महसा, एवं भवति बहुश्रुतः । सोऽपि ह्यज्ञानतिमिरापहारकः संयमस्थानेषु विशुद्धविशुद्धतराध्यवसायत उत्सर्पन् तपस्तेजसा ज्वलन्निव भवतीति सूत्रार्थः ॥ २४ ॥ अन्यच्च—

**जहा से उडुवई चंदे, णक्खत्तपरिवारिए । पडिपुन्ने पुन्नमासीए, एवं हवइ बहुस्सुए ॥ २५ ॥**

व्याख्या—यथा स उडूनां-नक्षत्राणां पतिः उडुपतिः 'चन्द्रः' शशी नक्षत्रैः-अश्विन्यादिभिरुपलक्षणत्वात् ग्रहैस्ताराभिश्च परिवारितो नक्षत्रपरिवारितः, 'प्रतिपूर्णः' समस्तकलोपेतः, कदा ? इत्यत आह—पौर्णमास्याम् । इह च पतिरपि

**व्याख्या**—"समुद्दगंभीरसम" त्ति आर्षत्वाद् गाम्भीर्येण–अलब्धमध्यात्मकेन गुणेन समा गाम्भीर्यसमाः समुद्रस्य गाम्भीर्यसमाः समुद्रगाम्भीर्यसमाः, "दुरासय" त्ति दुःखेनाऽऽश्रीयन्ते अभिभवबुद्ध्या केनापीति दुराश्रयाः, अत एव "अचक्किय" त्ति 'अचकिताः' अत्रासिताः 'केनचित्' परप्रवादिना, तथा दुःखेन प्रधृष्यन्ते–परिभूयन्ते केनापीति दुःप्रधर्षकाः । के एवंविधाः ? इत्याह—"सुयस्स पुन्ना विउलस्स" त्ति सुव्व्यत्ययात् 'श्रुतेन' आगमेन 'पूर्णाः' परिपूर्णाः 'विपुलेन' अङ्गाऽनङ्गादिभेदतो विस्तीर्णेन, 'त्रायिणः' त्रातारः । तानेव फलतो विशेषयितुमाह—'क्षपयित्वा' विनाश्य 'कर्म' ज्ञानावरणादि गतिं 'उत्तमां' मुक्तिरूपां 'गताः' प्राप्ताः, उपलक्षणत्वाद् गच्छन्ति गमिष्यन्ति च । इह चैकवचनप्रक्रमेऽपि बहुवचननिर्देशो व्याप्तिप्रदर्शनार्थमिति सूत्रार्थः ॥ ३१ ॥ इत्थं बहुश्रुतस्य गुणवर्णनादिकां पूजामभिधाय शिष्योपदेशमाह—

**तम्हा सुयमहिट्ठेज्जा, उत्तमट्ठगवेसए । जेणऽप्पाणं परं चेव, सिद्धिं संपाउणिज्जासि ॥३२॥ त्ति बेमि ॥**

**व्याख्या**—यस्मादमी मुक्तिगमनावसाना बहुश्रुतगुणाः तस्मात् 'श्रुतम्' आगमम् 'अधितिष्ठेत्' अध्ययनश्रवणचिन्तनादिना श्रयेत् उत्तमः–प्रधानोऽर्थः स च मोक्ष एव तं 'गवेपयति' अन्वेपयति उत्तमार्थगवेपकः, येन किं स्यात् ? इत्याह—येन आत्मानं परं चैव 'सिद्धिं' मुक्तिं सम्प्रापयेदिति सूत्रार्थः ॥ ३२ ॥ 'इतिः' परिसमाप्तौ 'ब्रवीमी' इति पूर्ववत् ॥

॥ इति श्रीनेमिचन्द्रसूरिकृतायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां बहुश्रुतपूजाख्यमेकादशमध्ययनं समाप्तम् ॥



बहुश्रुतमाहात्म्यं शिष्योपदेशश्च ।

॥ १७२ ॥

# अथ हरिकेशीयाख्यं द्वादशमध्ययनम् ।



व्याख्यातमेकादशमध्ययनम् । अधुना हरिकेशमुनिवक्तव्यतानिबद्धं हरिकेशीयाख्यं द्वादशमारभ्यते । अस्य चायमभिसम्बन्धः—'अनन्तराध्ययने बहुश्रुतपूजोक्ता । इह तु बहुश्रुतेनाऽपि तपसि यत्नो विधेय इति ख्यापनार्थं तपःसमृद्धिरुपवर्ण्यते' इत्यनेन सम्बन्धेनाऽऽयातस्यास्याध्ययनस्य प्रस्तावनार्थं हरिकेशचरितं तावदुच्यते—

महुराए नयरीए संखो नाम राया, सो य तिवग्गसारं जिणधम्माणुट्ठाणं परं जीवलोगसुहमणुभविऊण पच्छा निव्विण्णकामभोगो तहाविहाणं थेराणमंतिए निक्खंतो महाविभूईए, कालक्कमेण य जाओ गीयत्थो । पुहइमंडलं च भमंतो पत्तो हत्थिणाउरं । तत्थ भिक्खानिमित्तं पविट्ठो, समुयाणिंतो य पत्तो एगं रत्थं । सा य किर उण्हा जलंतमुम्मुरसमाणा, उण्हकाले न सक्काइ कोइ ताए वोलेउं । जो तत्थ अयाणंतो पविसइ सो उप्फंदइ विणस्सइ य । तीसे य पुण नामं चेव हुयवहरत्था । तेण साहुणा आसन्नगवक्खसंठिओ पुच्छिओ सोमदेवाभिहाणो पुरोहिओ—किमेएण मग्गेण वच्चामि ? । तेण य 'एएण हुयवहपहेण गच्छंतं डंभमाणं पेच्छिस्सामो' त्ति चिन्तिऊण भणियं—वच्चसु । पइट्ठो मुणी इरिओवउत्तो । पुरोहिओ वि उवरितलारूढो अतुरियमुवउत्तं सणियं सणियं वोलंतं मुणिं पेच्छिऊण गओ तेण मग्गेण, जाव हिमफाससरिसो जाओ पहो । तओ चिंतियमणेण—अहो ! मए पावकम्मेण असुहसंकप्पेण पावकम्ममणुट्ठियं, दट्ठव्वो य एस महप्पा, जस्स तवसत्तीए एसो अग्गिसंकासो हिमफरिससरिसो पहो जाओ । गओ से समीवं, पणमिओ भावसारं, निवेइयं नियदुच्चरियं । मुणिणा वि दाइयं संसारासारत्तणं, परूविओ कसायविवागो, कहिओ जिणधम्माणुट्ठाणफलविसेसो, पसंसियं निव्वाणसुहं, सव्वहा वित्थरेण संसिओ सम्मत्तमूलो साहुधम्मो । तओ तक्कालाणुरूवनिवत्तियाऽसेसकायव्वो जाय-

कश्चिदेकाक्येव भवति मृगपतिवदिति उडुपतिग्रहणेऽपि नक्षत्रपरिवारित इत्युक्तम्। एवं भवति बहुश्रुतः। असावपि नक्षत्र-
सदृशानां साधूनामधिपतिः तथा तत्परिवारितः, सकलकलोपेतत्वेन प्रतिपूर्णश्च भवतीति सूत्रार्थः ॥ २५ ॥ अपरं च—

**जहा से सामाइगाणं, कोट्ठागारे सुरक्खिए। णाणाधन्नपडिपुन्ने, एवं हवइ बहुस्सुए ॥ २६ ॥**

**व्याख्या**—यथा सः "सामाइयाणं" ति समाजः—समूहस्तं समवयन्ति सामाजिकाः—समूहवृत्तयो लोकास्तेषां, 'कोष्ठा-
गारः' धान्याश्रयः सुष्ठु—प्राहरिकपुरुषादिव्यापारादिना रक्षितः—पालितो दस्युमूषकादिभ्यः सुरक्षितः, नाना—अनेकप्रकाराणि
धान्यानि—शालिमुद्गादीनि तैः प्रतिपूर्णो नानाधान्यप्रतिपूर्णः। एवं भवति बहुश्रुतः। असावपि सामाजिकानामिव गच्छवा-
सिनां मुनीनामुपयोगिभिर्नानाधान्यसदृशैरङ्गोपाङ्गप्रकीर्णकादिभेदैः श्रुतज्ञानविशेषैः प्रतिपूर्ण एव भवति। सुरक्षितश्च प्रवच-
नाऽऽधारतया। यत उक्तम्—"जेणं कुलं आयत्तं, तं पुरिसं आयरेण रक्खेह"[1] इत्यादीति सूत्रार्थः ॥ २६ ॥ अपि च—

**जहा सा दुमाण पवरा, जंबू णाम सुदंसणा। अणाढियस्स देवस्स, एवं हवइ बहुस्सुए ॥ २७ ॥**

**व्याख्या**—यथा सा द्रुमाणां प्रवरा जम्बूः 'नाम्ना' अभिधानेन, 'सुदर्शना नाम' सुदर्शना, न हि यथेयममृतोपमफला
देवाद्याश्रयश्च तथाऽन्यः कश्चिद् द्रुमोऽस्ति, द्रुमत्वं फलव्यवहारश्चास्याः तत्प्रतिरूपतयैव, वस्तुतः पार्थिवत्वेनोक्तत्वात्।
सा च कस्य? इत्याह—'अनादृतस्य' अनादृतनाम्नः 'देवस्य' जम्बूद्वीपाधिपतेर्व्यन्तरसुरस्य आश्रयत्वेन सम्बन्धिनी।
एवं भवति बहुश्रुतः। सोऽपि ह्यमृतोपमफलकल्पश्रुतान्वितो देवादीनामपि च पूज्यतयाऽभिगमनीयः शेषद्रुमोपम-
साधुषु च प्रधान इति सूत्रार्थः ॥ २७ ॥ अन्यच्च—

**जहा सा नईण पवरा, सलिला सागरंगमा। सीया णीलवंतप्पवहा, एवं हवइ बहुस्सुए ॥ २८ ॥**

[1] "यस्मिन् कुलं आयत्तं तं पुरुषमादरेण रक्षत"।

व्याख्या—यथा सा नदीनां प्रवरा 'सलिला' नदी सागरं—समुद्रं गच्छतीति सागरङ्गमा 'शीता' शीतानाम्नी, नीलवान्—मेरोरुत्तरस्यां दिशि वर्षधरपर्वतस्ततः प्रवहति नीलवत्प्रवहा । एवं भवति बहुश्रुतः । सोऽपि हि सरित्समानानामन्यसाधूनां प्रधानो विमलजलकल्पश्रुतज्ञानान्वितश्च; तथा सागरतुल्यां मुक्तिमेवासौ गच्छति, तदुचितानुष्ठानप्याऽस्य प्रवृत्तत्वात्; नीलवत्तुल्याच्च उच्छ्रितोच्छ्रितमहाकुलादेवाऽस्य प्रसूतिरिति सूत्रार्थः ॥ २८ ॥ किञ्च—

बहुश्रुत-स्तवः ।

**जहा से णगाण पवरे, सुमहं मंदरे गिरी । णाणोसहिपज्जलिए, एवं हवइ बहुस्सुए ॥ २९ ॥**

व्याख्या—यथा सः 'नगानां' पर्वतानां प्रवरः 'सुमहान्' अतिशयगुरुः मन्दरो गिरिः नानौषधिभिः—अनेकविशिष्टमाहात्म्याभिर्वनस्पतिविशेषरूपाभिः प्रकर्षेण ज्वलितः—दीप्तो नानौषधिप्रज्वलितः । एवं भवति बहुश्रुतः । श्रुतमाहात्म्येनासौ अनन्तस्थिर इति शेषः, गिरिकल्पापरसाध्वपेक्षया प्रवर एव भवति, तथान्धकारेऽपि प्रकाशनशक्त्यन्विताऽऽमर्षौषध्यादियुक्त एवेति सूत्रार्थः ॥ २९ ॥ किं बहुना—

**जहा से सयंभूरमणे, उदही अक्खओदए । णाणारयणपडिपुन्ने, एवं हवइ बहुस्सुए ॥ ३० ॥**

व्याख्या—यथा सः 'स्वयम्भूरमणः' स्वयम्भूरमणाभिधानः 'उदधिः' समुद्रः अक्षयं—अविनाशि उदकं—जलं यस्मिन् स तथा, नानारत्नैः—नानाप्रकारैर्मरकतादिभिः परिपूर्णो नानारत्नपरिपूर्णः । एवं भवति बहुश्रुतः, अयमपि ह्यक्षयसम्यग्ज्ञानोदको नानातिशयरत्नवांश्च भवतीति सूत्रार्थः ॥ ३० ॥ साम्प्रतमुक्तगुणानुवादतः फलोपदर्शनतश्च तस्यैव माहात्म्यमाह—

**समुद्दगंभीरसमा दुरासया, अचक्किया केणइ दुप्पहंसिया ।**
**सुयस्स पुन्ना विउलस्स ताइणो, खवित्तु कम्मं गइमुत्तमं गया ॥ ३१ ॥**

---

१ संखोऽस्मे धुर कुंजर, वसेह हरी वासुदेव चक्किदं । रवि ससि कोट्ठये जंबू[13], सीयानई[14] मेरु[15] चरमुदही[16] ॥ १ ॥ इयं सङ्ग्रहगाथा पद्मनन्दिगणिभिः कृता ।

व्याख्या—"समुद्दगंभीरसम" त्ति आर्षत्वाद् गाम्भीर्येण—अलब्धमध्यात्मकेन गुणेन समा गाम्भीर्यसमाः समुद्रस्य गाम्भीर्यसमाः समुद्रगाम्भीर्यसमाः, "दुरासय" त्ति दुःखेनाऽऽश्रीयन्ते अभिभवबुद्ध्या केनापीति दुराश्रयाः, अत एव "अचक्किय" त्ति 'अचकिताः' अत्रासिताः 'केनचित्' परप्रवादिना, तथा दुःखेन प्रधृष्यन्ते—परिभूयन्ते केनापीति दुःप्रर्षकाः । के एवंविधाः ? इत्याह—"सुयस्स पुन्ना विउलस्स" त्ति सुब्व्यत्ययात् 'श्रुतेन' आगमेन 'पूर्णाः' परिपूर्णाः 'विपुलेन' अङ्गाऽनङ्गादिभेदतो विस्तीर्णेन, 'त्रायिणः' त्रातारः । तानेव फलतो विशेषयितुमाह—'क्षपयित्वा' विनाश्य 'कर्म' ज्ञानावरणादि गतिं 'उत्तमां' मुक्तिरूपां 'गताः' प्राप्ताः, उपलक्षणत्वाद् गच्छन्ति गमिष्यन्ति च । इह चैकवचनप्रक्रमेऽपि बहुवचननिर्देशो व्याप्तिप्रदर्शनार्थमिति सूत्रार्थः ॥ ३१ ॥ इत्थं बहुश्रुतस्य गुणवर्णनादिकां पूजामभिधाय शिष्योपदेशमाह—

**तम्हा सुयमहिट्ठेज्जा, उत्तमट्ठगवेसए । जेणऽप्पाणं परं चेव, सिद्धिं संपाउणिज्जासि ॥३२॥ त्ति बेमि ॥**

व्याख्या—यस्मादमी मुक्तिगमनावसाना बहुश्रुतगुणाः तस्मात् 'श्रुतम्' आगमम् 'अधितिष्ठेत्' अध्ययनश्रवणचिन्तनादिना श्रयेत् उत्तमः—प्रधानोऽर्थः स च मोक्ष एव तं 'गवेषयति' अन्वेषयति उत्तमार्थगवेषकः, येन किं स्यात् ? इत्याह—येन आत्मानं परं चैव 'सिद्धिं' मुक्तिं सम्प्रापयेदिति सूत्रार्थः ॥ ३२ ॥ 'इतिः' परिसमाप्तौ 'ब्रवीमी' इति पूर्ववत् ॥

॥ इति श्रीनेमिचन्द्रसूरिकृतायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां बहुश्रुतपूजाख्यमेकादशमध्ययनं समाप्तम् ॥



बहुश्रुतमाहात्म्यं शिष्योपदेशश्च ।

# अथ हरिकेशीयाख्यं द्वादशमध्ययनम् ।



व्याख्यातमेकादशमध्ययनम् । अधुना हरिकेशमुनिवक्तव्यतानिबद्धं हरिकेशीयाख्यं द्वादशमारभ्यते । अस्य चायमभिसम्बन्धः—'अनन्तराध्ययने बहुश्रुतपूजोक्ता । इह तु बहुश्रुतेनाऽपि तपसि यत्नो विधेय इति ख्यापनार्थं तपःसमृद्धिरुपवर्ण्यते' इत्यनेन सम्बन्धेनाऽऽयातस्यास्याध्ययनस्य प्रस्तावनार्थं हरिकेशचरितं तावदुच्यते—

महुराए नयरीए संखो नाम राया, सो य तिवग्गसारं जिणधम्माणुट्ठाणं परं जीवलोगसुहमणुभविऊण पच्छा निव्विण्णकामभोगो तहाविहाणं थेराणमंतिए निक्खंतो महाविभूईए, कालक्कमेण य जाओ गीयत्थो । पुहइमंडलं च भमंतो पत्तो हत्थिणाउरं । तत्थ भिक्खानिमित्तं पविट्ठो, समुयाणिंतो य पत्तो एगं रत्थं । सा य किर उण्हा जलंतमुम्मुरसमाणा, उण्हकाले न सक्कइ कोइ ताए वोलेउं । जो तत्थ अयाणंतो पविसइ सो उप्फंदइ विणस्सइ य । तीसे य पुण नामं चेव हुयवहरत्था । तेण साहुणा आसन्नगवक्खसंठिओ पुच्छिओ सोमदेवाभिहाणो पुरोहिओ—किमेएण मग्गेण वच्चामि ? । तेण य 'एएण हुयवहपहेण गच्छंतं डज्झमाणं पेच्छिस्सामो' त्ति चिन्तिऊण भणियं—वच्चसु । पइट्ठो मुणी इरिओवउत्तो । पुरोहिओ वि उवरितलारूढो अतुरियमुवउत्तं सणियं सणियं वोलंतं मुणिं पेच्छिऊण गओ तेण मग्गेण, जाव हिमफाससरिसो जाओ पहो । तओ चिंतियमणेण—अहो ! मए पावकम्मेण असुहसंकप्पेण पावकम्ममणुट्ठियं, दट्ठव्वो य एस महप्पा, जस्स तवसत्तीए एसो अग्गिसंकासो हिमफरिससरिसो पहो जाओ । गओ से समीवं, पणमिओ भावसारं, निवेइयं नियदुच्चरियं । मुणिणा वि दाइयं संसारासारत्तणं, परूविओ कसायविवागो, कहिओ जिणधम्माणुट्ठाणफलविसेसो, पसंसियं निव्वाणसुहं, सवित्थरेण संसिओ सम्मत्तमूलो साहुधम्मो । तओ तक्कालाणुरूवनिवित्तियाऽसेसकायव्वो जाय-

हरिकेशचरित्रम् ।

संवेगाइसओ सोमदेवपुरोहिओ गंतूण तस्स समीवं निक्खंतो । गहिया सिक्खा, पालेइ सामन्नं, परं 'उत्तमजाई अहं' ति वहेइ जाइगारवं, करेइ य रूवाइमयं, ण उण परिहावेइ—जहा णत्थि किं पि संसारे अवलेवकारणं, जओ सुभा य असुभा य परिणामा सव्वे वि कम्माणुभावेण परावत्तमाणा चेवेत्थ जीवाणं । भणियं च—सुरो वि कुक्कुरो होइ, रंको राया वि जायए । दिओ वि होइ मायंगो, संसारे कम्मदोसओ ॥ १ ॥ अन्नं च—न सा जाई न सा जोणी, न तं ठाणं न तं कुलं । न जाया न मुया जत्थ, सव्वे जीवा अणंतसो ॥ २ ॥ किञ्च—उत्तमत्तं गुणेहिं चेव पाविज्जई ण जाईए । उक्तञ्च—"गुणैरुत्तमतां याति, न तु जातिप्रभावतः । क्षीरोदधिसमुत्पन्नः, कालकूटः किमुत्तमः ? ॥ ३ ॥" अन्यच्च—कौशेयं कृमितः सुवर्णमुपलाद् दूर्वा च गोलोमतः, पङ्कात्तामरसं शशाङ्कमुदधेरीन्दीवरं गोमयात् । काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना, जाता लोकमहर्घतां निजगुणैः प्राप्ताश्च किं जन्मना ? ॥ ४ ॥ एवमाइअभावियपरमत्थो सो जाइमयाइथद्धो कालक्कमेण मओ समाणो पत्तो तियसालयं । मुणिओ पुव्वभववुत्तंतो, णिवत्तियतियसकायव्वो य सह तियसरामाहिं भोगे भुंजिउं पयत्तो । एवं च भोगासत्तस्स वोलीणाणि णेगाणि पलिओवमाणि । ठिइक्खएण य ततो चुओ संतो गंगाए तीरे बलकोट्टाभिहाणस्स हरिएसाहिवस्स गोरीए भारियाए कुच्छिंसि उववन्नो । सा य कुसुमियं वसंतसिरिसमद्धासियं चूयं दट्ठूण पडिबुद्धा । सुमिणपाढयाण सिट्ठं । तेहिं वि समाइट्ठो पहाणपुत्तजम्मो । कमेण पसूया दारयं ति । अवि य—जाईमयावलेवा, मायंगकुलम्मि एस उववन्नो । सोहग्गरूवरहिओ, णियबंधूणं पि हसणिज्जो ॥ १ ॥ पइट्ठियं च से नामं बलो त्ति । वड्ढंतो सव्वत्थ भंडणरओ विसपायवो विव जाओ सव्वेसिं उव्वेयकारी । अन्नया पत्ते वसंतूसवे पाणभोयणणच्चणपराण बंधूण मज्झाओ डिंभरूवेहिं सह भंडणं करेंतो निच्छूढो । पासट्ठिओ य ताणि पेच्छति कीलंताणि । थेववेलाए य आगओ ताण मज्झेण विसहरो, 'सप्पो सप्पो' त्ति वाहरिओ तेहिं, वावाइओ य सो मायंगेहिं । पच्छा तह च्चिय आगओ दीवओ, सो

'अट्टो' त्ति न वावाइओ । तओ तं पेच्छिऊण चिंतियं वलेण—अहो ! निययदोसेहिं पाणिणो आवयाण मंदिरं भवंति, जेणं 'सविसो' त्ति णिययभएण वावाइओ सप्पो, इयरो वि 'निव्विसो' त्ति मुक्को । 'नियगुणदोसेहिंतो, संपय-विवयाओ होंति पुरिसाणं । ता उज्झिऊण दोसे, एण्हिं पि गुणे पयासेमि ॥ १ ॥' एवं भावेमाणो तक्खणसंजायजाइसंभरणो सुमरियपुरिमाणवासो जाईमयदारुणत्तणं च भावितो संविग्गो धम्मं सोऊण साहुमूलम्मि णिविन्नभवपवंचो मायंगमहरिसी जाओ । गहियसामुकिरिओ छट्ठ-ऽट्ठम-दसम-दुवालसम-ऽसद्धमास-मास-चउमासखमणेहिं सोसियसरीरो कमेण विहरमाणो संपत्तो पाम जिणजम्मोनसोहियं तियसनयरिसच्छहं वाणारसिं । आवासिओ मुणिजणपसत्थे तिंडुगामिहाणे उज्जाणे । तत्थ य गंडीतिंडुगो नाम जक्खो परिवसइ । सो य असरिसगुणावज्जिओ तं चेव महरिसिं पज्जुवासिंतो चिट्ठइ । अन्नेण जक्खेण आगंतूण पुच्छिओ गंडीतिंडुगजक्खो—कीस ण दीससि ? । तेण भणियं—एस महप्पा मम उज्जाणे चिट्ठइ, एयं पज्जुवासिंतो चिट्ठामि । सो वि पडिबुद्धो महरिसिचरिएण । अवि य—दट्ठुं मुणिस्स चरियं, पडिबुद्धो सो वि तिंडुगं भणइ । तं निय मित्त ! कयत्थो, जस्स वणे वसइ तव एसो ॥ १ ॥ मज्झ वि वसंति मुणिणो, उज्जाणे तो खणंतरं एकं । गंतूण तेरि महप्पा, वदामो एव भणिऊणं ॥ २ ॥ ते तत्थ गया दिट्ठा, मुणिणो कह वि हु पमायओ विकहं । कुणमाणा तो गाढं, अणुरत्ता तम्मि ते जक्खा ॥ ३ ॥ एवं च भावसारं तिंडुगजक्खस्स महरिसि थुणंतस्स जाइ कालो त्ति । अवि य—भावेण वंदमाणस्स महरिसिं तस्स पूयपावस्स । वच्चइ सुहेण कालो, हरिणो व जिणं थुणंतस्स ॥ १ ॥ तत्थ य कोसलियराइणो धूया भद्दाऽभिहाणा नाणाविहपरियणाणुगम्ममाणा खज्जभोज्जगंधमल्लविलेवणपडलधरीहिं चेडीहिं

1 'सो य रिसिगुणावज्जिओ' इति पाठान्तरम् । स च यक्ष ऋषिगुणावर्जित इत्यर्थः । असदृशगुणे.—असमानगुणैरावर्जितः, अर्थात्तद्-

सह गया जक्खाययणं। पूइऊण य जक्खपाडम पयाहिणं कुणंतीए दिट्ठो मलमइलियसव्वंगो जुन्नमलिणोवगरणो पणट्ठरूवलावन्नो अइदूसहतवसोसियसरीरो मुणी । तं च दट्ठूण मूढत्तणओ निच्छूढमणाए । 'पावा एसा, जा महरिसिं निंदेइ' त्ति भावितेण अहिट्ठिया जक्खेण असमंजसाइं विलविउं पयत्ता। कह कह वि नीया मंदिरं । तं तहाविहं दट्ठूण विसन्नचित्तेण राइणा वाहराविया गारुडिया भोइयभट्टचट्टाइणो त्ति । अवि य—जो वरडिं पि न याणइ, नरवइणा सो वि तत्थ वाहरिओ । नेहाउलाण अहवा, केत्तियमेत्तं तु पुरिसाणं? ॥ १ ॥ तओ समाढत्ता धन्नंतरिविब्भमेहिं वेज्जेहिं चउप्पगारा किरिया। न जाओ विसेसो। पुणो वि पउत्ता जंततंतरक्खामंडलाइणो । ते वि ऊसरभूमिनिहिय व्व वीया जाया निप्फल त्ति । अवि य—इय जाहे विग्गुत्ता, सव्वे विज्जाइणो तओ जक्खो । जंपइ पत्तम्मि ठिओ, एयाए निंदिओ साहू ॥ १ ॥ तो जइ णवरं तस्सेव देह मुंचामि नऽन्नहा मोक्खो । रन्ना वि जीवउ त्ति य, पडिवन्नं जक्खवयणं तु ॥ २ ॥ तओ समासत्थसरीरा सव्वालंकारविभूसिया गहियविवाहोवगरणा सहिसहिया महाविभूईए गया महरिसिणो समीवं, पायवडणपच्चुट्ठियाए य विन्नत्तमणाए सह मह्लएहिं—महरिसि! गिण्हसु मज्झ सयंवराए करं करेणं ति। मुणिणा भणियं—भद्दे! अलं एयाए संकहाए बुहजणपरिनिंदियाए। अवि य—इत्थीहिं समं वासं, पि जे न इच्छंति एगवसहीए। कह ते णियकरेहिं, रमणीण करे गहिस्संति? ॥ १ ॥ सिद्धिवहुबद्धरागा, असुईपुन्नासु कह णु जुवईसु। रज्जंति महामुणिणो, गेवेज्जयवासिदेवे व्व? ॥२॥ ततो संजायाऽमरिसेण जक्खेण पच्छाइऊण रिसिरूवं विउरुविऊण नाणाविहरूवाणि ओछूढा, वेलविया सव्वं पि रयणिं। पभायसमए सुमिणमिव मन्नमाणा विमणदुम्मणा परियणाणुगम्ममाणा गया पिउसमीवं। पविसंती भणिया राइणो पुरओ उवलद्धवुत्तंतेण रुद्ददेवपुरोहिएण—देव! इसिपत्ती एसा, तेण मुक्का बंभणाण होइ। तओ 'इमं चेव एत्थ पत्तयालं' ति मन्नमाणेण दिन्ना तस्सेव राइणा। अवि य—पावनिमित्तं काउं, जा रिसिणा उज्झिया

णरिंदसुया । स मिय पुरोहिएणं, गहिया सुहकारणं काउं ॥ १ ॥ एवं च पुरोहियस्स तीए सह विसयसुहमणुहवंतस्स वोलीणो कोइ कालो । वाहिं च रुद्ददेवेण जन्नं जयंतेण सा जन्नपत्ती कया । तत्थ संपत्ता देसंतरेहिंतो चट्टभट्टाइणो । इओ य मासपारणए पंचसमिओ तिगुत्तो गोयरचरियाए भमंतो जन्नवाडम्मि पविट्ठो महरिसी भिक्खट्ठा इत्यादि । शेषकथानकं सूत्रादेवाऽवसेयम् । तच्चेदम्—

हरिकेशमुनि वक्तव्यता ।

**सोवागकुलसंभूओ, गुणुत्तरधरो मुणी । हरिएस वलो णाम, आसी भिक्खू जिइंदिओ ॥ १ ॥**

व्याख्या—'श्वपाककुलसम्भूतः' चाण्डालकुलोत्पन्नः, उत्तरान् गुणान्—ज्ञानादीन् धारयतीत्युत्तरगुणधरः, सूत्रे तु पूर्वापरनिपातः प्राकृतत्वात्, 'मुनिः' प्रतीतः, श्वपाककुलोत्पन्नोऽपि च कदाचित् संवासादिना अन्यथैव प्रतीतः स्यात्, अत आह—'हरिकेशः' हरिकेशतया श्वपाकतयेत्यर्थः सर्वत्र प्रतीतः 'वलो नाम' वलाभिधानः आसीत् भिक्षुर्जितेन्द्रिय इति सूत्रार्थः ॥ १ ॥

**इरिएसणभासाएउचारसमिईसु य । जओ आयाणणिक्खेवे, संजओ सुसमाहिओ ॥ २ ॥**

व्याख्या—ईर्या च एषणा च भाषा च एकारश्चाऽलाक्षणिकः, उच्चारश्च-सूचकत्वात् सूत्रस्य उच्चारप्रश्रवणादिपरिष्ठापनम् ईर्यैषणाभाषोच्चाराः तद्विषयाः समितयस्तासु 'यतः' यत्नवान्, पूर्वचशब्दस्य भिन्नक्रमत्वाद् 'आदाननिक्षेपे च' पीठफलकादेर्ग्रहणस्थापने यत इति, किम्भूतः सन् ? 'संयतः' संयमान्वितः 'सुसमाहितः' सुष्ठु समाधिवानिति सूत्रार्थः ॥ २ ॥ तथा—

**मणगुत्तो वयगुत्तो, कायगुत्तो जिइंदिओ । भिक्खट्ठा वंभइज्जम्मि, जन्नवाडमुवट्ठिओ ॥ ३ ॥**

१ भिनत्ति सदसदनुष्ठानेन क्षुधं-अष्टविधं कर्मेति भिक्षुः ।

**व्याख्या**—मनोगुप्तिरस्येति मनोगुप्तः एवं वाग्गुप्तः कायगुप्तो जितेन्द्रियः, पुनरुपादानमतिशयख्यापनार्थम्, 'भिक्षार्थं' भिक्षानिमित्तं "बंभइज्जम्मि" त्ति ब्रह्मणां-ब्राह्मणानाम् इज्या-यजनं यस्मिन् सोऽयं ब्रह्मेज्यस्तस्मिन्, "जन्नवाडं" ति 'यज्ञपाटके' सुब्व्यत्ययाद् यज्ञवाटे यज्ञपाटे वा 'उपस्थितः' प्राप्त इति सूत्रार्थः ॥ ३ ॥ तं च तत्रायान्तमवलोक्य तत्रत्यलोका यत् कुर्युस्तदाह—

**तं पासिऊणमेज्जंतं, तवेण परिसोसियं। पंतोवहिउवगरणं, उवहसंति अणारिया ॥ ४ ॥**

**व्याख्या**—'तं' वलनामानं मुनिं "पासिऊणं" ति दृष्ट्वा "एज्जंतं" ति 'आयान्तम्' आगच्छन्तं 'तपसा' षष्ठाऽष्टमादिरूपेण 'परिशोषितं' कृशीकृतं, तथा प्रान्तः—जीर्णमलिनत्वादिभिरसारः उपधिः—वर्षाकल्पादिरौघिकः उपकरणं च—दण्डकाद्यौपग्रहिकं यस्य स प्रान्तोपध्युपकरणस्तं उपहसन्ति 'अनार्याः' अशिष्टा इति सूत्रार्थः ॥ ४ ॥ कथं पुनरनार्याः ? कथं च उपहसितवन्तः ? इत्याह—

**जाईमयपडिबद्धा, हिंसगा अजितेंदिया। अबंभचारिणो बाला, इमं वयणमब्बवी ॥ ५ ॥**

**कयरे आगच्छइ दित्तरूवे ?, काले विगराले फोक्कनासे।**

**ओमचेलए पंसुपिसायभूए, संकरदूसं परिहरिय कंठे ॥ ६ ॥**

**व्याख्या**—जातिमदप्रतिबद्धाः 'हिंसकाः' प्राणिघातकाः अजितेन्द्रियाः 'अब्रह्मचारिणः' मैथुनसेविनः, वर्ण्यते हि तन्मते मैथुनमपि धर्माय—धर्मार्थं पुत्रकामस्य, स्वदारेष्वधिकारिणः। ऋतुकाले विधानेन, तत्र दोषो न विद्यते ॥ १ ॥ तथा—अपुत्रस्य गतिर्नास्ति, स्वर्गो नैव च नैव च। अथ पुत्रमुखं दृष्ट्वा, पश्चात्स्वर्गं गमिष्यति ॥ २ ॥ अत एव बाला इव बालाः, बालक्रीडितानुकारिष्वग्निहोत्रादिषु प्रवृत्तत्वात्। उक्तं हि केनचित्—"अग्निहोत्रादिकं कर्म, बालक्रीडेव लक्ष्यते"।

'इदं' वक्ष्यमाणं वचनं "अब्बवि" त्ति 'अब्रुवन्' उक्तवन्तः ॥ किं तत् ? इत्याह—"कयरे" त्ति कतरः, एकारस्तु प्राकृतत्वात्, आगच्छति 'दीप्तरूपः' वीभत्सरूपः, कालः वर्णतः, 'विकरालः' दन्तुरत्वादिना भयानकः, "फोक" त्ति देशीयपदम्, ततश्च फोका—अग्रे स्थूला उन्नता च नासाऽस्येति फोकनासः, 'अवमचेलः' निकृष्टचीवरः, पांशुना—रजसा पिशाचवद् भूतः—जातः पांशुपिशाचभूतः, पिशाचो हि लौकिकानां दीर्घश्मश्रुनखरोमा पांशुगुण्डितश्च इष्टः, ततः सोऽपि निष्प्रतिकर्मतया रजोदिग्धदेहतया चैवमुच्यते। सङ्करः—कचवरः, स च प्रस्तावादुत्कुरुडिकारूपस्तत्र दूष्यं—वस्त्रं सङ्करदूष्यं, तत्र हि यदत्यन्तनिकृष्टं निरुपयोगि तदेव लोकैरुत्सृज्यते, ततस्तत्प्रायमन्यदपि तथोक्तम्, 'परिवृत्य' निक्षिप्य 'कण्ठे' गले, स हि अनिक्षिप्तोपकरणतया स्वमुपकरणमादायैव भ्राम्यतीत्येवमुक्त इति सूत्रद्वयार्थः ॥ ५–६ ॥ इत्थं दूरादागच्छन् उक्तः। आसन्नं चैनं किमूचुः ? इत्याह—

**कतरे तुमं इय अदंसणिज्जे ?, काए व आसाइहमागओ सि।**
**ओमचेलगा ! पंसुपिसायभूया !, गच्छ क्खलाहि किमिह ठ्ठिओ सि ? ॥ ७ ॥**

व्याख्या—कतरस्त्वम् ?, पाठान्तरतश्च को रे त्वम् ?, अधिक्षेपे रेशब्दः, 'इति' इति एवं 'अदर्शनीयः' अद्रष्टव्यः 'कया वा' किं रूपया वा "आसाइहमागओऽसि" त्ति प्राकृतलक्षणाद् एकारलोपो मकारश्चाऽऽगमिकः, ततः 'आशया' वाञ्छया 'इह' यज्ञपाटके 'आगतः' प्राप्तः 'असि' भवसि ?, अवमचेलक ! पांशुपिशाचभूत !, पुनरनयोरुपादानमत्यन्ताधिक्षेपदानार्थम्, 'गच्छ' व्रज "खलाहि" त्ति देशीयपदम् 'अपसर' इत्यस्यार्थे वर्त्तते, ततोऽयमर्थः—अस्मद्दृष्टिपथादपसर, किमिह स्थितोऽसि त्वम् ? नैवेह त्वया स्थातव्यमिति सूत्रार्थः ॥ ७ ॥ एवमधिक्षिप्ते तस्मिन् मुनौ प्रशमपरतया किञ्चिदजल्पति तत्सान्निध्यकारी गण्डीतिन्दुकयक्षो यदचेष्टत तदाह—

हरिकेशमुनेः सौत्री वक्तव्यता।

जक्खो तहिं तिंदुयरुक्खवासी, अणुकंपओ तस्स महामुणिस्स ।
पच्छायइत्ता णियगं सरीरं, इमाइं वयणाइं उदाहरित्था ॥ ८ ॥

**व्याख्या**—यक्षः 'तस्मिन्' अवसरे इति गम्यते, तिन्दुकवृक्षवासी, तथा च सम्प्रदायः—तस्स तिंदुगवणस्स मज्झे महंतो तिंदुगरुक्खो तहिं सो वसइ, तस्सेव हेट्ठा चेइयं जत्थ सो साहू ठिओ त्ति । 'अनुकम्पकः' अनुकूलक्रियाप्रवृत्तिः, कस्य ? इत्याह—'तस्य' हरिकेशबलस्य महामुनेः, प्रच्छाद्य 'निजकम्' आत्मीयं शरीरम्, कोऽभिप्रायः ?—तपस्विशरीरे एव प्रविश्य स्वयमनुपलक्ष्यः सन् 'इमानि' वक्ष्यमाणानि वचनानि "उदाहरित्था" उदाहृतवानिति सूत्रार्थः ॥ ८ ॥ कानि पुनस्तानि ? इत्याह—

समणो अहं संजओ बंभयारी, विरओ धणपयणपरिग्गहाओ ।
परप्पवित्तस्स उ भिक्खकाले, अन्नस्स अट्ठा इहमागओ मि ॥ ९ ॥
वियरिज्जई खज्जइ भोज्जई य, अन्नं पभूतं भवयाणमेयं ।
जाणाहि मे जायणजीविणो त्ति, सेसावसेसं लहऊ तवस्सी ॥ १० ॥

**व्याख्या**—'श्रमणः' मुनिरहम्, सम्यग् यतः 'संयतः' असद्व्यापारेभ्य उपरतः, अत एव ब्रह्मचारी, तथा 'विरतः' निवृत्तः धन-पचन-परिग्रहात्, समाहारादेकवचनम्, तत्र धनं—चतुष्पदादि, पचनम्—आहारपाकः, परिग्रहः—द्रव्यादिमूर्च्छा, अत एव परस्मै प्रवृत्तं परप्रवृत्तं—परार्थं निष्पन्नं तस्य, 'तुः' अवधारणे, ततः परप्रवृत्तस्यैव न तु मदर्थं साधितस्य, भिक्षाकाले 'अन्नस्य' अशनस्य "अट्ठ" त्ति सूत्रत्वादर्थाय 'इह' यज्ञपाटे आगतोऽस्मि । एवमुक्ते च ते कदाचिदभिदध्युः—नेह किञ्चित् कस्मैचिद् दीयते, अत आह—'वितीर्यते' दीयते दीनादिभ्यः 'खाद्यते' खण्डखाद्यादि 'भुज्यते च'

भक्तमूपादि 'अन्नम्' अशनं 'प्रभूतं' बहु 'भवतां' युष्माकं सम्बन्धि 'एतत्' प्रत्यक्षम्, तथा 'जानीत' अवगच्छत "मे" त्ति सूत्रत्वाद् मां याचनजीवनं-याचनेन जीवनशीलं द्वितीयार्थे षष्ठी, 'इति' अस्माद्धेतोः 'शेषाऽवशेषम्' उद्धरितस्याप्युद्धरितं लभतां 'तपस्वी' यतिः इति सूत्रद्वयार्थः ॥ ९-१० ॥ एवं यक्षेणोक्ते ते आहुः—

हरिकेशमुनेः सौत्री वक्तव्यता।

**उवक्खडं भोयण माहणाणं, अत्तट्ठियं सिद्धमिहेगपक्खं ।**
**ण उ वयं एरिसमन्नपाणं, दाहामु तुब्भं किमिहं ठिओ सि ? ॥ ११ ॥**

व्याख्या—'उपस्कृतं' संस्कृतं भोजनं 'माहनानां' ब्राह्मणानाम् आत्मार्थे भवमात्मार्थिकं ब्राह्मणैरप्यात्मनैव भोज्यं न त्वन्यस्मै देयम्, किमिति ? यतः 'सिद्धं' निष्पन्नं 'इह' यज्ञे, एकः पक्षः-ब्राह्मणलक्षणो यस्य तदेकपक्षम्, किमुक्तं भवति ?—यदस्मिन्नुपस्क्रियते न तद् ब्राह्मणव्यतिरिक्ताय दीयते, विशेषतस्तु शूद्राय । यत उक्तम्—"न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविःकृतम् । न चास्योपदिशेद्धर्मं, न चास्य व्रतमादिशेत् ॥ १ ॥" यतश्चैवमतो 'न तु' नैव वयं 'ईदृशम्' उक्तरूपम् अन्नपानं दास्यामस्तुभ्यम्, किम् इह स्थितोऽसि ? इति सूत्रार्थः ॥ ११ ॥ यक्ष आह—

**थलेसु बीयाइं ववंति कासगा, तहेव निन्नेसु य आससाए ।**
**एयाए सद्धाए दलाह मज्झं, आराहए पुन्नमिणं खु खेत्तं ॥ १२ ॥**

व्याख्या—'स्थलेषु' उच्चभूभागेषु 'बीजानि' मुद्गादीनि वपन्ति 'कर्षकाः' कृषीवलाः, तथैव 'निम्नेषु च' नीचभागेषु च "आससाए" त्ति 'आशंसया' 'यदि अत्यन्तप्रवर्षणं भावि तदा स्थलेषु फलावाप्तिः, अथान्यथा तदा निम्नेषु' इत्येवमभिलापात्मिकया 'एतया' उक्तरूपकर्षकाशंसातुल्यया श्रद्धया "दलाहि" त्ति दद्ध्वं मह्यम् । किमुक्तं भवति ?—यद्यपि भवन्तो निम्नतुल्यमात्मानं मन्यन्ते मां च स्थलतुल्यं तथापि मह्यमपि दातुमुचितम् । अथ स्यात्—एवं दत्तेऽपि न

फलावाप्तिरित्याह—"आराहए पुन्नमिणं खु" खुशब्दस्यावधारणार्थस्य भिन्नक्रमत्वात् 'आराधयेदेव' साधयेदेव नात्र अन्यथाभावः, 'पुण्यं' शुभं 'इदं' दृश्यमानं 'क्षेत्रं' दानस्थानम्, पुण्यप्ररोहहेतुतया आत्मानमेवाऽऽहेति सूत्रार्थः ॥१२॥ यक्षवचनानन्तरं त इदमाहुः—

खित्ताणि अम्हं विदिताणि लोए, जहिं पकिन्ना विरुहंति पुन्ना ।
जे माहणा जातिविज्जोववेया, ताइं तु खेत्ताइं सुपेसलाइं ॥ १३ ॥

**व्याख्या**—'क्षेत्राणि' दानक्षेत्राणि अस्माकं 'विदितानि' ज्ञातानि वर्त्तन्त इति गम्यते, 'लोके' जगति "जहिं" ति वचनव्यत्ययात् 'येषु' क्षेत्रेषु 'प्रकीर्णानि' दत्तानि अशनादीनीति शेषः, 'विरोहन्ति' जन्मान्तरोपस्थानतः प्रादुर्भवन्ति 'पूर्णानि' समस्तानि । स्यादेतद्—अहमपि तन्मध्यवर्त्त्येव इत्याशङ्क्याऽऽह—ये ब्राह्मणाः जातिश्च—ब्राह्मणजातिरूपा विद्या च—चतुर्दशविद्यास्थानात्मिका ताभ्याम् "उववेय" त्ति उपेताः—अन्विता जातिविद्योपेताः, "ताइं तु" त्ति तान्येव क्षेत्राणि 'सुपेशलानि' शोभनानि न तु भवादृशानि शूद्रजातीनि, शूद्रत्वादेव वेदविद्यावहिष्कृतानीति । यत उक्तम्—"समम्श्रोत्रिये दानं, द्विगुणं ब्राह्मणब्रुवे । सहस्रगुणमाचार्ये, अनन्तं वेदपारगे ॥ १ ॥" इति सूत्रार्थः ॥ १३ ॥

यक्ष उवाच—

कोहो य माणो य वहो य जेसिं, मोसं अदत्तं च परिग्गहं च ।
ते माहणा जाइविज्जाविहूणा, ताइं तु खेत्ताइं सुपावयाइं ॥ १४ ॥

**व्याख्या**—क्रोधश्च मानश्च चशब्दात् मायालोभौ च वधश्च 'येषामि'ति प्रक्रमाद् भवतां ब्राह्मणानां "मोसं" ति 'मृषा' अलीकभाषणं "अदत्तं" ति अदत्तादानं चशब्दात् मैथुनं च 'परिग्रहश्च' गोभूम्यादिस्वीकारः, अस्तीति सर्वत्र

हरिकेशमुनेः सौत्री वक्तव्यता।

गम्यते , 'ते' इति क्रोधाद्युपेता यूयं ब्राह्मणा जातिविद्याविहीनाः । क्रियाकर्मविभागेन चातुर्वर्ण्यव्यवस्था। **यत उक्तम्—**
"एकवर्णमिदं सर्वं, पूर्वमासीद्युधिष्ठिर ! । क्रियाकर्मविभागेन, चातुर्वर्ण्यं व्यवस्थितम् ॥ १ ॥ ब्राह्मणो ब्रह्मचर्येण, यथा
शिल्पेनशिल्पिकः । अन्यथा नाममात्रं स्या-दिन्द्रगोपककीटवत् ॥ २ ॥" न चैवंविधक्रिया ब्रह्मचर्यात्मिका कोपाद्युपेतेषु
तत्त्वतः सम्भवति, अतो न तावज्जातिसम्भवः । तथा विद्याऽपि संज्ञानात्मिका न सम्भवत्येव भवत्सु, अज्ञानसंसूचकेषु
बालक्रीडाप्रायेष्वग्निहोत्रादिषु प्रवृत्तिदर्शनात् । ततः स्थितमेतत्—"ताइं तु" त्ति 'तुः' अवधारणे भिन्नक्रम एव, ततः
'तानि' भवद्विदितानि ब्राह्मणलक्षणानि 'क्षेत्राणि' सुपापकान्येव न तु सुपेशलानि, क्रोधाद्युपेतत्वेनातिशयपापहेतुत्वादिति
सूत्रार्थः ॥ १४ ॥ कदाचित् ते वदेयुः—वेदविद्याविदो वयमत एव ब्राह्मणजातयः तत् कथं जातिविद्याहीनाः
इत्युक्तवानसि ? इत्याह—

**तुब्भेत्थ भो ! भारहरा गिराणं, अट्ठं न जाणाह अहिज्ज वेदे ।**
**उच्चावयाइं मुणिणो चरंति, ताइं तु खेत्ताइं सुपेसलाइं ॥ १५ ॥**

व्याख्या—यूयं 'अत्रे'ति लोके 'भोः' इत्यामन्त्रणे, भारं धरन्तीति भारधराः 'गिरां' वाचां प्रक्रमाद् वेदसम्बन्धिनीनाम्, इह च भारस्तासां भूयस्त्वमेव। किमिति भारधराः ? इति उच्यते—यतः 'अर्थम्' अभिधेयं न जानीथ, "अहिज्ज" त्ति अपेर्गम्यमानत्वाद् अधीत्यापि 'वेदान्' ऋग्वेदादीन्, ततस्तत्त्वतो वेदविद्याविदोऽपि भवन्तो न भवन्ति, तत् कथं जातिविद्यासम्पन्नत्वेन क्षेत्रभूताः स्युः ? । कानि तर्हि भवदभिप्रायेण क्षेत्राणि ? इत्याह—"उच्चावयाइं" ति 'उच्चावचानि' उत्तमाऽधमानि मुनयः 'चरन्ति' भिक्षानिमित्तं पर्यटन्ति गृहाणि, ये इति गम्यते, न तु भवन्त इव पचनाद्यारम्भवृत्तयः, तत एव परमार्थतो वेदार्थं विदन्ति, तत्रापि भिक्षावृत्तेरेव समर्थितत्वात् । तथा च वेदानुवादिनः—"चरेन्माधुकरीं

वृत्तिमपि म्लेच्छकुलादपि । एकान्नं नैव भुञ्जीत, बृहस्पतिसमादपि ॥१॥" तान्येव मुनिलक्षणानि क्षेत्राणि सुपेशलानीति
प्राग्वदिति सूत्रार्थः ॥ १५ ॥ इत्थमध्यापकं यक्षेण निर्मुखीकृतमवलोक्य तच्छात्राः प्राहुः—

**अज्झावयाणं पडिकूलभासी, पभाससे किन्नु सगासे अम्हं ? ।**
**अवि एतं विणस्सउ अन्नपाणं, ण य णं दाहामु तुमं नियंठा ! ॥ १६ ॥**

व्याख्या—'अध्यापकानाम्' उपाध्यायादीनां प्रतिकूलभाषी सन् त्वं 'प्रभाषसे' प्रकर्षेण ब्रूषे, 'किमि'ति क्षेपे,
'तुरि'त्यक्षमायाम्, ततश्च धिग् भवन्तं न वयं क्षमामहे यद् इत्थं भवान् ब्रूते 'सकाशे' समीपे अस्माकम् । 'अपि' सम्भा-
वने, 'एतत्' परिदृश्यमानं 'विनश्यतु' कुथितादिभावमाप्नोतु अन्नपानम्, 'न च' नैव "णं" वाक्यालङ्कारे "दाहामु" त्ति
दास्यामस्तव हे 'निर्ग्रन्थ !' निष्किञ्चन !, गुरुप्रत्यनीको हि भवानिति भाव इति सूत्रार्थः ॥ १६ ॥ यक्ष आह—

**समितीहिं मज्झं सुसमाहियस्स, गुत्तीहि गुत्तस्स जितिंदियस्स ।**
**जइ मे ण दाहित्थ अहेसणिज्जं, किमज्ज जन्नाण लभित्थ लाभं ? ॥ १७ ॥**

व्याख्या—'समितिभिः' ईर्यासमित्यादिभिर्मह्यं 'सुसमाहिताय' सुष्ठु समाधिमते 'गुप्तिभिः' मनोगुप्त्यादिभिर्गुप्ताय
जितेन्द्रियाय, चतुर्थ्यर्थे सर्वत्र षष्ठी, 'यदी'त्यभ्युपगमे 'मे' मह्यं "मज्झं" तीत्यस्य व्यवहितत्वात् पुनरुपादानमदुष्टमेव,
न दास्यथ, 'अथे'त्युपन्यासे 'एषणीयम्' एषणाविशुद्धमन्नादि 'किं' न किञ्चिदित्यर्थः अद्य यज्ञानां लप्स्यथ 'लाभं'
पुण्यप्राप्तिरूपम् । पात्रदानादेव हि विशिष्टपुण्यावाप्तिः, अन्यत्र तु तथाविधफलाभावेन दीयमानस्य हानिरेव । उक्तं हि—
दधिमधुघृतान्यपात्रे, क्षिप्तानि यथाऽऽशु नाशमुपयान्ति । एवमपात्रे दत्तानि केवलं नाशमुपयान्ति ॥ १ ॥" इति
सूत्रार्थः ॥ १७ ॥ इत्थं तेनोक्ते यदध्यापक आह तदुच्यते—

के इत्थ खत्ता उवजोइया वा, अज्झावया वा? सह खंडिएहिं।
एयं तु दंडेण फलेण हंता, कंठम्मि घेत्तूण खलेज्ज जो णं ॥ १८ ॥

व्याख्या—के 'अत्रे'त्येवस्मिन् स्थाने 'क्षत्राः' क्षत्रियजातयः? ''उवजोइय'' त्ति 'उपज्योतिषः' अग्निसमीपवर्त्तिनो महानसिकाः? 'अध्यापकाः' पाठकाः?, उभयत्र वा विकल्पे, 'सहे'ति युक्ताः 'खण्डिकैः' छात्रैः ये, किम्? इत्याह— 'एनं' श्रमणकं 'दण्डेन' वंशयष्ट्यादिना 'फलेन' बिल्वादिना 'हन्ते'ति हत्वा—ताडयित्वा ततश्च 'कण्ठे' गले गृहीत्वा ''खलेज्ज'' त्ति 'स्खलयेयुः' निष्काशयेयुः। ''जो'' त्ति वचनव्यत्ययाद् ये, ''णं'' वाक्यालङ्कारे इति सूत्रार्थः ॥ १८ ॥

अत्रान्तरे यत्तत्राभूत् तदाह—

अज्झावयाणं वयणं सुणेत्ता, उद्धाइया तत्थ बहू कुमारा।
दंडेहिं वेत्तेहि कसेहिं चेव, समागया तं इसिं तालयंति ॥ १९ ॥

व्याख्या—'अध्यापकानाम्' उपाध्यायानां वचनं श्रुत्वा 'उद्धाविताः' वेगेन धाविताः तत्र बहवः 'कुमाराः' छात्रादिरूपाः, ते हि क्रीडनकपरा इति 'अहो! क्रीडनकमागतम्' इति रभसतः 'दण्डैः' वंशदण्डादिभिः 'वेत्रैः' जलवंशरूपैः 'कशैश्चैव' वर्ध्रविकारैः 'समागताः' मिलिताः तं 'ऋषिं' मुनिं ताडयन्ति इति सूत्रार्थः ॥ १९ ॥ अस्मिंश्चावसरे—

रन्नो तहिं कोसलियस्स धूया, भद्द त्ति नामेण अणिंदियंगी।
तं पासिता संजय हम्ममाणं, कुद्धे कुमारे परिणिव्ववेइ ॥ २० ॥

व्याख्या—'राज्ञः' नृपतेः 'तत्र' यज्ञपाटके, कोशलायां भवः कौशलिकस्तस्य ''धूय'' त्ति दुहिता भद्रेति नाम्नी 'अनिन्दिताङ्गी' कल्याणशरीरा 'तं' हरिकेशबलं ''पासिय'' त्ति दृष्ट्वा 'संयतं' तस्यामप्यवस्थायां हिंसादेरुपरतं

हरिकेशमुनेः
सौत्री
वक्तव्यता।

'हन्यमानं' ताड्यमानम्, क्रुद्धान् कुमारान् 'परिनिर्वापयति' कोपाग्निविध्यापनेन शीतीकरोतीति सूत्रार्थः ॥ २० ॥ सा च तान् निर्वापयन्ती तस्य माहात्म्यमतिनिःस्पृहतां चाह—

देवाभिओगेण णिओइएण, दिन्ना मु रन्ना मणसा ण झाया ।
णरिंददेविंदऽभिवंदिएणं, जेणामि वंता इसिणा स एसो ॥ २१ ॥
एसो हु सो उग्गतवो महप्पा, जितिंदिओ संजओ बंभयारी ।
जो मे तया णेच्छई दिज्जमाणी, पिउणा सयं कोसलिएण रन्ना ॥ २२ ॥
महाजसो एस महाणुभागो, घोरव्वओ घोरपरक्कमो अ ।
मा एयं हीलह अहीलणिज्जं, मा सव्वे तेएण भे णिद्दहिज्जा ॥ २३ ॥

व्याख्या—देवस्य अभियोगः–बलात्कारो देवाभियोगस्तेन 'नियोजितेन' व्यापारितेन "दिन्ना मु" त्ति दत्ताऽस्मि अहं 'राज्ञा' अक्रमात् कौशलिकेन, तथापि "मणस" त्ति अपेर्गम्यमानत्वात् 'मनसाऽपि' चित्तेनाऽपि 'न ध्याता' नाभिलषिता येनेति सम्बध्यते, नरेन्द्रदेवेन्द्राभिवन्दितेन, अत एव येनाऽस्मि अहं 'वान्ता' त्यक्ता 'ऋषिणा' मुनिना, स एष युष्माभिः यः कदर्थयितुमारब्धः, ततो न युक्तमेतदिति भावः ॥ पुनरिममेवार्थं समर्थयितुमाह—एष एव स उग्रतपाः, अत एव महात्मा जितेन्द्रियः संयतो ब्रह्मचारी च, यः "मे" त्ति मां तदा नेच्छति दीयमानां 'पित्रा' जनकेन 'स्वयम्' आत्मना न त्वन्यप्रेषणादिना कौशलिकेन राज्ञा । तदनेन निःस्पृहत्वमुक्तम् ॥ पुनस्तन्माहात्म्यमाह—'महायशाः' अपरिमितकीर्त्तिः 'एषः' मुनिः 'महानुभागः' अतिशयाऽचिन्त्यशक्तिः 'घोरव्रतः' दुर्धरमहाव्रतः 'घोरपराक्रमश्च' कषायादिरिपुजयं प्रति रौद्रसामर्थ्यः, यतोऽयमीदृक् ततो मा "एयं" 'एनं' यतिं 'हीलयत' अवधूतं पश्यत अहीलनीयम् । किमिति ?

अत आह—मा सर्वान् 'तेजसा' तपोमाहात्म्येन "भे" भवतः 'निर्धाक्षीत्' भस्मसात्कार्षीत्, अयं हि रुष्टो भस्मसादेव कुर्यादिति भाव इति सूत्रत्रयार्थः॥ २१-२२-२३ ॥ अत्रान्तरे मा भूदेतस्या वचनं अन्यथेति यद् यक्षः कृतवांस्तदाह—

एयाइं तीसे वयणाइं सोच्चा, पत्तीए भद्दाइ सुभासियाइं ।
इसिस्स वेयावडिअट्टयाए, जक्खा कुमारे विणिवारयंति ॥ २४ ॥
ते घोररूवा ठिअ अंतलिक्खे, असुरा तहिं तं जणं तालयंति ।
ते भिन्नदेहे रुहिरं वमंते, पासित्तु भद्दा इणमाहु भुज्जो ॥ २५ ॥

व्याख्या—'एतानि' अनन्तरोक्तानि वचनानि 'तस्याः' श्रुत्वा 'पत्न्याः' भार्याया रुद्रदेवपुरोहितस्येति गम्यते, भद्रायाः 'सुभाषितानि' सूक्तानि वचनानीति योज्यते, ऋषेर्वैयावृत्त्यर्थं यक्षाः यक्षपरिवारस्य वहुत्वात् वहुवचनम्, कुमारान् 'विनिवारयन्ति' विशेषेणोपहतिं कुर्वतो निराकुर्वन्ति॥ तथा 'ते' यक्षाः 'घोररूपाः' रौद्राकारधारिणः "ठिय" त्ति स्थिताः 'अन्तरिक्षे' नभसि 'असुराः' असुरभावान्वितत्वात्, 'तस्मिन्' यज्ञपाटे 'तं' उपद्रवकारिणं जनं ताडयन्ति । ततः 'तान्' कुमारान् भिन्नदेहान् रुधिरं वमतो दृष्ट्वा भद्रा 'इदं' वक्ष्यमाणं "आहु" त्ति वचनव्यत्ययेन 'आह' ब्रूते 'भूयः' पुनरिति सूत्रद्वयार्थः ॥ २४–२५ ॥ किं तत्? इत्याह—

गिरिं नहेहिं खणह, अयं दंतेहिं खायह । जायतेयं पाएहिं हणह, जे भिक्खुं अवमन्नह ॥ २६ ॥

आसीविसो उग्गतवो महेसी, घोरव्वतो घोरपरक्कमो य ।
अगणिं व पक्खंद पयंगसेणा, जे भिक्खुयं भत्तकाले वहेह ॥ २७ ॥

हरिकेशमुनेः सौत्री वक्तव्यता ।

**सीसेण एयं सरणं उवेह, समागया सव्वजणेण तुम्हे ।**
**जइ इच्छह जीवियं वा धणं वा, लोगं पि एसो कुविओ डहेज्जा ॥ २८ ॥**

**व्याख्या**—गिरिं नखैः 'खनथ' विदारयथ, 'अयः' लोहं दन्तैः खादथ, 'जाततेजसम्' अग्निं पादैः 'हथ' ताडयथ,
सर्वत्र इवार्थो द्रष्टव्यः। 'ये' यूयं 'भिक्षुं' प्रक्रमादेनं 'अवमन्यध्वे' अवधीरयथ, अनर्थफलत्वाद् भिक्ष्वपमानस्येति भावः ॥
कथमिदम्? इत्याह—'आशीविषः' आशीविषलब्धिमान्–शापानुग्रहसमर्थ इत्यर्थः। कुतः पुनरयं एवंविधः? यत
उग्रतपा महर्षिः घोरव्रतो घोरपराक्रमश्च। यतश्चैवमतः 'अग्निं' ज्वलनं 'वा' इवार्थो भिन्नक्रमश्च, ततः 'प्रस्कन्दथेव' आक्रम-
थेव। केव? "पयंगसेण" त्ति उपमार्थस्य गम्यमानत्वात् 'पतङ्गसेनेव' शलभसन्ततिरिव, यथा ह्यसौ तत्र पतन्ती आशु
घातमाप्नोति एवं भवन्तोऽपीति भावः। 'ये' यूयं भिक्षुकं 'भक्तकाले' भोजनसमये, तत्र दीनादेरवश्यं देयमिति शिष्टसमयः,
यूयं तु न केवलं न प्रयच्छत किन्तु तत्रापि "वहेह" त्ति 'विध्यथ' ताडयथेति ॥ तेषां तन्माहात्म्यमावेद्य कृत्योपदेश-
माह—'शीर्षेण' शिरसा 'एनं' मुनिं 'शरणं' त्राणम् 'उपेत' अभ्युपगच्छत, किमुक्तं भवति?—शिरःप्रणामपूर्वकमयमेवा-
स्माकं शरणमिति प्रतिपद्यध्वम्, 'समागताः' मिलिताः सर्वजनेन सह यूयम्, यदीच्छत जीवितं वा धनं वा, नाऽस्मिन्
कुपिते जीवितादिरक्षाक्षमं अन्यत् शरणमस्ति। किमित्येवम्? अत आह—'लोकमपि' भुवनमपि एष कुपितो दहेत्।
तथा च **वाचकः**—"कल्पान्तोग्रानलवत्, प्रज्वलनं तेजसैकतस्तेपाम्" तथा **लौकिका** अप्याहुः—"न तद् दूरं
यदश्वेषु, यच्चाग्नौ यच्च मारुते। विपे च रुधिरे प्राप्ते, साधौ च कृतनिश्चये ॥ १ ॥" इति सूत्रत्रयार्थः ॥ २६-२७-२८ ॥
सम्प्रति तत्पतिस्तान् दृष्ट्वा यदचेष्टत तदाह—

अवहेडियपिट्ठिसउत्तमंगे, पसारियाबाहुअकम्मचेट्ठे ।
णिब्भेरियच्छे रुहिरं वमंते, उड्ढंमुहे णिग्गयजीहणेत्ते ॥ २९ ॥
ते पासिया खंडिय कट्ठभूए, विमणो विसण्णो अह माहणो सो ।
इसिं पसाएइ सभारियाओ, हीलं च णिंदं च खमाह भंते ! ॥ ३० ॥

हरिकेशमुनेः सौत्री वक्तव्यता ।

**व्याख्या**—अवहेठितानि—अधोनामितानि "पट्ठि" त्ति पृष्ठं यावत् सन्ति—शोभनान्युत्तमाङ्गानि येषां ते अवहेठितपृष्ठसदुत्तमाङ्गाः मध्यमपदलोपी समासस्तान्, प्रसारिता बाहवो येषां ते तथा, कर्माणि—अग्नौ समित्प्रक्षेपणादीनि तद्विषया चेष्टा कर्मचेष्टा, अविद्यमाना कर्मचेष्टा येषां ते तथा, ततः कर्मधारये प्रसारितबाह्वकर्मचेष्टास्तान्, "निब्भेरिय" त्ति प्रसारितानि अक्षीणि—नयनानि येषां ते तथा तान्, रुधिरं वमतः "उड्ढंमुहे" त्ति ऊर्ध्वमुखान्, निर्गतजिह्वानेत्रान् तान् दृष्ट्वा "खंडिय" त्ति सुपो लोपात् 'खण्डिकान्' छात्रान् 'काष्ठभूतान्' अत्यन्तनिश्चेष्टतया काष्ठोपमान् 'विमनाः' विचित्तः 'विषण्णः' विषादं गतः, 'अथे'ति दर्शनानन्तरं ब्राह्मणः 'सः' इति रुद्रदेवनामा ऋषिं प्रसादयति 'सभार्याकः' भार्यायुक्तः, कथम् ? इत्याह—'हीलां च' अवज्ञां 'निन्दां च' दोषोद्भावनं क्षमस्व भदन्त ! इति सूत्रद्वयार्थः ॥२९–३०॥ पुनः प्रसादनमेवाह—

बालेहिं मूढेहिं अयाणएहिं, जं हीलिया तस्स खमाह भंते ! ।
महप्पसाया इसिणो हवंति, न हु मुणी कोवपरा हवंति ॥ ३१ ॥

**व्याख्या**—'बालैः' शिशुभिः 'मूढैः' कषायमोहनीयवशगैः अत एव 'अज्ञैः' हिताहितविवेकविकलैः यद् हीलिताः "तस्स" त्ति सूत्रत्वात् तत् क्षमस्व भदन्त !, न हि अज्ञानाद्युपहतानामुपरि महात्मनां कोपः, अनुकम्पनीया एवामी ।

० ३१

उक्तञ्च केनचित्—"आत्मद्रुहममर्यादं, मूढमुज्झितसत्पथम् । सुतरामनुकम्पेत, नरकार्चिष्मदिन्धनम् ॥ १ ॥" किञ्च— महाप्रसादा ऋषयो भवन्ति, "न हु" त्ति न पुनर्मुनयः कोपपरा भवन्तीति सूत्रार्थः ॥ ३१ ॥ मुनिराह—

**पुव्विं च इण्हिं च अणागयं च, मणप्पदोसो ण मे अत्थि कोई ।**
**जक्खा हु वेयावडियं करेंति, तम्हा हु एते णिहता कुमारा ॥ ३२ ॥**

**व्याख्या**—'पूर्वं च' पुरा 'इदानीं च' अधुना "अणागयं च" त्ति 'अनागते च' भविष्यति काले मनःप्रद्वेषो न मेऽस्ति उपलक्षणत्वाद् आसीद् भविष्यति च 'कोऽपी'त्यल्पोऽपि । यक्षाः 'हुरि'ति यस्माद् वैयावृत्यं कुर्वन्ति "तम्हे" त्ति तस्मात् 'हुर'वधारणे, ततस्तस्मादेव हेतोरेते निहताः कुमाराः, न तु मम मनःप्रद्वेषोऽत्र हेतुरिति भाव इति सूत्रार्थः ॥३२॥ सम्प्रति तद्गुणाकृष्टचेतस उपाध्यायप्रमुखा इदमाहुः—

**अत्थं च धम्मं च वियाणमाणा, तुब्भे ण वि कुप्पह भूतिपन्ना ।**
**तुब्भं तु पाए सरणं उवेमो, समागया सव्वजणेण अम्हे ॥ ३३ ॥**

**व्याख्या**—'अर्थं च' अभिधेयं शास्त्राणामिति गम्यते, 'धर्मं च' यतिधर्मं क्षान्त्यादिकं 'विजानन्तः' अवगच्छन्तो यूयं 'नाऽपि' नैव कुप्यथ भूतिः—रक्षा प्राणिरक्षकत्वेन प्रज्ञा—बुद्धिरेषामिति भूतिप्रज्ञाः, अतश्च "तुब्भं तु" त्ति युष्माकमेव पादौ शरणम् 'उपेमः' उपगच्छामः, समागताः सर्वजनेन वयमिति सूत्रार्थः ॥ ३३ ॥ किञ्च—

**अच्चेमु ते महाभागा !, ण ते किंचि ण अच्चिमो । भुंजाहि सालिमं कूरं, णाणावंजणसंजुयं ॥ ३४॥**

**व्याख्या**—'अर्चयामः' पूजयामः "ते" त्ति सुब्व्यत्ययात् त्वां हे महाभाग !, 'न' नैव तव 'किञ्चित्' चरणरे-

ण्यादिकमपि नार्चयामः । तथा भुङ्क्ष्व "सालिमं" ति 'शालिमयं' शालिनिष्पन्नं 'कूरं' ओदनं नानाव्यञ्जनसंयुक्तमिति सूत्रार्थः ॥ ३४ ॥ अन्यच्च—

**इमं च मे अत्थि पभूयमन्नं, तं भुंजसु अम्ह अणुग्गहट्ठा ।**
**बाढं ति पडिच्छति भत्तपाणं, मासस्स ऊ पारणए महप्पा ॥ ३५ ॥**

व्याख्या—'इदं च' प्रत्यक्षत एव परिदृश्यमानं 'मे' मम 'अस्ति' विद्यते 'प्रभूतं' प्रचुरं 'अन्नं' मण्डकखण्डखाद्यादि समस्तं भोजनं तद् भुङ्क्ष्व अस्माकमनुग्रहार्थम् । एवं च तेनोक्ते मुनिराह—'बाढम्' एवं कुर्मः 'इति' एवं ब्रुवाण इति शेषः, 'प्रतीच्छति' द्रव्यादितः शुद्धमिति गृह्णाति भक्तं पानं "मासस्स उ" त्ति मासादेव पारणके महात्मा इति सूत्रार्थः ॥ ३५ ॥ तदा च तत्र यदभूत् तदाह—

**तहियं गंधोदयपुप्फवासं, दिव्वा तहिं वसुहारा य वुट्ठा ।**
**पहताओ दुंदुभीओ सुरेहिं, आगासे अहोदाणं च घुट्ठं ॥ ३६ ॥**

व्याख्या—"तहियं" ति 'तस्मिन्' यज्ञपाटे, गन्धोदकं च पुष्पाणि च तेषां वर्ष–वर्षणं गन्धोदकपुष्पवर्षं सुरैरिति सम्बन्धात् कृतमिति गम्यते । 'दिव्या' अतिश्रेष्ठा "तहिं" ति तस्मिन्नेव वसु–द्रव्यं तस्य धारा–सततपातजनिता सन्ततिः वसुधारा सा च 'वृष्टे'ति पातिता सुरैरित्यत्रापि सम्बध्यते । तथा प्रहताः 'दुन्दुभयः' देवानकाः सुरैः । तथा तैरेव आकाशे अहोदानं च 'घुष्टं' शब्दितमिति सूत्रार्थः ॥ ३६ ॥ तेऽपि ब्राह्मणा विस्मितमनस इदमाहुः—

**सक्खं खु दीसइ तवोविसेसो, ण दीसइ जाइविसेस कोई ।**
**सोवागपुत्तं हरिएससाहुं, जस्सेरिसा इड्ढि महाणुभागा ॥ ३७ ॥**

हरिकेशमुनेः सौत्री वक्तव्यता ।

व्याख्या—'साक्षात्' प्रत्यक्षं 'खुरि'त्यवधारणे, ततः साक्षादेव दृश्यते तपसो विशेषः—विशिष्टत्वं माहात्म्यमित्यर्थः तपोविशेषः, 'न' नैव दृश्यते 'जातिविशेषः' जातिमाहात्म्यं 'कोऽपि' स्वल्पोऽपि। किमित्येवम्? अत आह—यतः श्वपाकपुत्रं हरिकेशसाधुं पश्यतेति शेषः, यस्य 'ईदृशी' दृश्यमानरूपा 'ऋद्धिः' देवसन्निधानात्मिका सम्पद् 'महानुभागा' सातिशयमाहात्म्येति सूत्रार्थः ॥ ३७ ॥ साम्प्रतं स एव मुनिस्तानुपशान्तमिथ्यात्वमोहनीयोदयानिव पश्यन्निदमाह—

**किं माहणा! जोइसमारभंता, उदएण सोहिं बहिया विमग्गहा।**
**जं मग्गहा बाहिरियं विसोहिं, ण तं सुदिट्ठं कुसला वयंति ॥ ३८ ॥**

व्याख्या—'किमि'ति क्षेपे, ततो न युक्तमिदं हे 'माहनाः!' ब्राह्मणाः! 'ज्योतिः' अग्निं 'समारभमाणाः' प्रस्तावाद् यागकरणतः प्रवर्त्तमाना यागं कुर्वन्त इत्यर्थः, 'उदकेन' जलेन "सोहिं" ति 'शुद्धिं' निर्मलतां "बहिय" त्ति बाह्यां 'विमार्गयथ' अन्वेषयथ?। किमेवमुपदिश्यते? इत्याह—यद् यूयं मार्गयथ 'बाह्यां' बाह्यहेतुकां विशुद्धिं न तत् 'सुदृष्टं' सुष्ठु प्रेक्षितं 'कुशलाः' तत्त्वविचारं प्रति निपुणाः 'वदन्ति' प्रतिपादयन्तीति सूत्रार्थः ॥ ३८ ॥ यथा चैतत् सुदृष्टं न भवति तथा स्वत एवाह—

**कुसं च जूवं तणकट्ठमग्गिं, सायं च पायं उदगं फुसंता।**
**पाणाइं भूयाइं विहेडयंता, भुज्जो वि मंदा! पकरेह पावं ॥ ३९ ॥**

व्याख्या—'कुशं च' दर्भं 'यूपं च' प्रतीतमेव, तृणं च—वीरणादि काष्ठं च—समिदादि तृणकाष्ठम्, 'अग्निं' प्रतीतं सर्वत्र प्रतिगृह्णन्त इति शेषः। 'सायं' सन्ध्यायाम्, चशब्दो भिन्नक्रमस्ततः "पायं" ति 'प्रातश्च' प्रभाते 'उदकं' जलं 'स्पृशन्तः' आचमनादिषु परामृशन्तः "पाणाइं" ति 'प्राणिनः' द्वीन्द्रियादीन्, सम्भवन्ति हि जले पूतरकरूपास्त इति,

''भूयाई'' त्ति 'भूतान्' तरून्, उक्तञ्च—''प्राणा द्वि-त्रि-चतुः प्रोक्ताः, भूतास्तु तरवः स्मृताः। जीवाः पञ्चेन्द्रिया ज्ञेयाः, शेषाः सत्त्वाः प्रकीर्तिताः॥ १॥'' पृथिव्याद्युपलक्षणं चैतद्। 'विहेठमानाः' विविधं बाधमानाः, किम्? इत्याह— 'भूयोऽपि' पुनरपि न केवलं पुरा किन्तु शुद्धिकालेऽपि जलानलादिजीवोपमर्दतः 'मन्दाः' जडाः 'प्रकुरुथ' प्रकर्षेणोपचिनुथ 'पापम्' अशुभकर्म। अयमाशयः—कुशला हि कर्ममलविलयात्मिकां तात्त्विकीमेव शुद्धिं मन्यन्ते, भवदभिमतयाग-स्नाने च यूपादिपरिग्रहजलस्पर्शाविनाभावित्वेन भूतोपमर्दहेतुतया प्रत्युत कर्ममलोपचयनिबन्धने एव, नातः तत्सम्भव इति कथं तद्बहिःशुद्धिमार्गणं सुदृष्टं ते वदेयुः?, तथा च वाचकः—''शौचमाध्यात्मिकं त्यक्त्वा, भावशुद्ध्यात्मकं शुभम्। जलादिशौचं यत्रेष्टं, मूढविस्मापनं हि तत्॥ १॥'' इति सूत्रार्थः॥ ३९॥ इत्थं तद्वचनतः समुत्पन्नशङ्कास्ते यागं प्रति तावदेवं पप्रच्छुः—

कहं चरे भिक्खु! वयं जयामो?, पावाइं कम्माइं पणुल्लयामो।
अक्खाहि णे संजय! जक्खपूइया!, कहं सुजट्ठं कुसला वयंति?॥ ४०॥

व्याख्या—'कथं' केन प्रकारेण ''चरे'' त्ति प्राकृतत्वात् 'चरेमहि' यागार्थं प्रवर्तेमहि हे भिक्षो! वयम्? तथा 'यजामः' यागं कुर्मः कथमितियोगः, 'पापानि' अशुभानि कर्माणि ''पणुल्लयामो'' त्ति 'प्रणुदामः' प्रेरयामो येनेति गम्यते। 'आख्याहि' कथय 'नः' अस्माकं हे 'संयत!' यक्षपूजित!, किमुक्तं भवति?—यो हि अस्मद्विदितः कर्मप्रणोदनोपायो यागरूपः स युष्माभिर्दूषितः इति भवन्त एवापरं यागमुपदिशन्तु, कथं 'स्विष्टं' शोभनं यजनं कुशला वदन्ति? इति सूत्रार्थः॥ ४०॥ मुनिराह—

छज्जीवकाए असमारभंता, मोसं अदत्तं च असेवमाणा।
परिग्गहं इत्थीउ माण मायं, एयं परिन्नाय चरंति दंता॥ ४१॥

व्याख्या—पड्जीवकायान् 'असमारभमाणाः' अनुपमर्दयन्तः, "मोसं" ति 'मृषा' अलीकभाषणम् 'अदत्तं च' अदत्तादानं च असेवमानाः, परिग्रहं स्त्रियो मानं मायां तत्सहचरितत्वात् कोप-लोभौ च, 'एतद्' अनन्तरोक्तं परिग्रहादि 'परिज्ञाय' ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया प्रत्याख्याय 'चरन्ति' यागे प्रवर्त्तन्ते 'दान्ताः' इन्द्रिय-नोइन्द्रियदमेन यतय इति गम्यते । यत एवमतो भवद्भिरप्येवं चरितव्यमिति सूत्रार्थः ॥ ४१ ॥ प्रथमप्रश्नप्रतिवचनमुक्तम्, शेषप्रश्ननिर्वचनमाह—

**सुसंवुडा पंचहिं संवरेहिं, इह जीवियं अणवकंखमाणा ।**
**वोसट्ठकाए सुइचत्तदेहा, महाजयं जयई जन्नसिट्ठं ॥ ४२ ॥**

व्याख्या—'सुसंवृताः' स्थगितसमस्ताश्रवद्वाराः, 'पञ्चभिः संवरैः' प्राणातिपातविरत्यादिव्रतैः 'इह' मनुष्यजन्मनि उपलक्षणत्वात् परत्र च 'जीवितं' प्रस्तावाद् असंयमजीवितम् 'अनवकाङ्क्षन्तः' अनभिलपन्तः अत एव 'व्युत्सृष्टकायाः' परीपहोपसर्गसहिष्णुतया त्यक्तकायाः, शुचयः-अकलुपितव्रतास्ते च ते त्यक्तदेहाश्च-अत्यन्तनिष्प्रतिकर्मतया शुचित्यक्तदेहाः, महान् जयः-कर्मशत्रुपराभवनलक्षणो यस्मिन् स महाजयस्तं "जयई" ति वचनव्यत्ययाद् यजन्ति मुनयः, ततो भवन्तोऽप्येवं यजन्तां "जन्नसेट्ठं" ति प्राकृतत्वात् श्रेष्ठयज्ञम् । श्रेष्ठवचनेन च एतद् यजनं स्विष्टं कुशला वदन्ति, एप एव च कर्मप्रणोदनोपाय इत्युक्तं भवतीति सूत्रार्थः ॥ ४२ ॥ यत् ईदृग्गुणः श्रेष्ठयज्ञं यजते ततस्त्वमपि ईदृग्गुण एव, तथा च तं यजमानस्य कानि उपकरणानि ? को वा यजनविधिः ? इत्यभिप्रायेण ते एवमाहुः—

**के ते जोई ? के व ते जोइठाणा ?, का ते सूया ? किं व ते कारिसंगं ? ।**
**एहा य ते कयरा संति ? भिक्खू !, कयरेण होमेण हुणासि जोइं ? ॥ ४३ ॥**

व्याख्या—'के' इति किं 'ते' तव 'ज्योतिः ?' अग्निः ?, किं वा ते ज्योतिःस्थानम् ? यत्र ज्योतिर्निधीयते, काः 'स्रुवः ?'

घृतादिप्रक्षेपिका दर्व्यः ?, "किं व" त्ति किं वा करीपः—प्रतीतः स एवाङ्गम्—अभ्युदीपनकारणं करीपाङ्गं येनाग्निः सन्धुक्ष्यते, 'एधाश्च' समिधो यकाभिरग्निः प्रज्वाल्यते 'ते' तव 'कतराः' इति काः ?, "संति" त्ति चस्य गम्यमानत्वात् 'शान्तिश्च' दुरितोपशमहेतुः अध्ययनपद्धतिः कतरेति प्रक्रमः, "भिक्खू!" इति भिक्षो! कतरेण 'होमेण' हवनविधिना 'जुहोपि' आहुतिभिः प्रीणयसि किं तद् ज्योतिः ?, षड्जीवनिकायसमारम्भनिषेधेन ह्यस्मदभिमतो होमः तदुपकरणानि च पूर्वं निषिद्धानीति कथं भवतो यजनसम्भवः ? इति सूत्रार्थः ॥ ४३ ॥ मुनिराह—

हरिकेशमुनेः सौत्री वक्तव्यता ।

**तवो जोई जीवो जोइठाणं, जोगा सुया सरीरं कारिसंगं ।**
**कम्मं एहा संजमजोग संती, होमं हुणामि इसिणं पसत्थं ॥ ४४ ॥**

व्याख्या—'तपः' बाह्याभ्यन्तरभेदभिन्नं 'ज्योतिः' अग्निः, यथा हि ज्योतिरिन्धनानि भस्मीकरोति एवं तपोऽपि भावेन्धनानि—कर्माणि । 'जीवः' जन्तुः ज्योतिःस्थानम्, तपोज्योतिपस्तदाश्रयत्वात् । 'योगाः' मनोवाक्कायाः श्रुवः, ते हि शुभव्यापाराः स्नेहस्थानीयाः तपोज्योतिपो ज्वलनहेतुभूताः तत्र संस्थाप्यन्त इति । शरीरं करीपाङ्गम्, तेनैव हि तपोज्योतिरुद्दीप्यते, तद्भावभावित्वात् तस्य । 'कर्म' उक्तरूपम् एधाः, तस्यैव तपसा भस्मीभावनयनात् । "संजमजोग" त्ति 'संयमयोगाः' संयमव्यापाराः शान्तिः, सर्वप्राण्युपद्रवपरिहारित्वात् तेषाम् । तथा "होमं" ति होमेन जुहोमि तपोज्योतिरिति गम्यते, 'ऋपीणां' मुनीनां सम्बन्धिना "पसत्थं" ति प्रशस्तेन जीवोपघातरहितत्वेन विवेकिभिः श्लाघितेन सम्यक् चारित्रेणेति भावः । अनेन च कतरेण होमेन जुहोपि ज्योतिरिति प्रत्युक्तमिति सूत्रार्थः ॥ ४४ ॥ एवं यज्ञस्वरूपमवधार्य स्नानस्वरूपं पिपृच्छिपवस्ते इदमाहुः—

**के ते हरए? के य ते संतितित्थे?, कहिंसि ण्हाओ व रयं जहासि?।**
**आयक्ख णे संजय! जक्खपूइया!, इच्छामो णाउं भवओ सयासे ॥ ४५ ॥**

**व्याख्या**—कः 'ते' तव 'ह्रदः' नदः?, "के य ते संतितित्थे" त्ति किं च ते शान्त्यै—पापोपशमनिमित्तं तीर्थं—पुण्यक्षेत्रं शान्तितीर्थम्? तथा च "कहिंसि ण्हाओ व" त्ति वाशब्दस्य भिन्नक्रमत्वात् कस्मिन् वा 'स्नातः' शुचिभूतो रज इव शुद्धि- 'रजः' कर्म 'जहासि' त्यजसि त्वम्?, गम्भीराभिप्रायो हि भवान् तत्र किमस्माकमिव भवतोऽपि हि ह्रदतीर्थे एव शुद्धि- स्थानम्? अन्यद्वा? इति न विद्म इति भावः। 'आचक्ष्व' व्यक्तं वद 'नः' अस्माकं संयत! यक्षपूजित!, 'इच्छामः' अभिलषामः 'ज्ञातुम्' अवगन्तुं 'भवतः' तव 'सकाशे' समीपे इति सूत्रार्थः ॥ ४५ ॥ मुनिराह—

**धम्मे हरए बंभे संतितित्थे, अणाइले अत्तपसन्नलेसे।**
**जहिंसि ण्हाओ विमलो विसुद्धो, सुसीतीभूतो पजहामि दोसं ॥ ४६ ॥**
**एयं सिणाणं कुसलेहि दिट्ठं, महासिणाणं इसिणं पसत्थं।**
**जहिंसि ण्हाया विमला विसुद्धा, महारिसी उत्तमं ठाण पत्त ॥ ४७ ॥ त्ति बेमि ॥**

**व्याख्या**—'धर्मः' अहिंसाद्यात्मकः ह्रदः, कर्मरजोपहन्तृत्वात्। 'ब्रह्मे'ति ब्रह्मचर्यं शान्तितीर्थम्, तदाऽऽसेवनेन हि सकलमलमूलरागद्वेषावुन्मूलितावेव भवतः, तदुन्मूलनाच्च न कदाचिद् मलस्य सम्भवोऽस्ति, सत्याद्युपलक्षणं चैतत्। तथा चाह—"ब्रह्मचर्येण सत्येन, तपसा संयमेन च। मातङ्गर्षिर्गतः शुद्धिं, न शुद्धिस्तीर्थयात्रया ॥१॥" किञ्च—भवत्प्रतीत- तीर्थानि प्राण्युपमर्दहेतुतया प्रत्युत मलोपचयनिमित्तानीति कुतस्तेषां शुद्धिहेतुता?, तथा चोक्तम्—"कुर्याद्वर्षसहस्रं तु, अहन्यहनि मज्जनम्। सागरेणाऽपि कृत्स्नेन, वधको नैव शुध्यति ॥ १ ॥" ह्रदशान्तितीर्थे एव विशिनष्टि—'अनाविले'

मिथ्यात्वगुप्तिविराधनादिभिरकलुषे, अनाविलत्वात्। आत्मनः—जीवस्य प्रसन्ना—मनागप्यकलुषा पीताद्यन्यतरा लेश्या यस्मिन्नात्मप्रसन्नलेश्यं तस्मिन् एवंविधे धर्महृदे ब्रह्माख्यशान्तितीर्थे च। "जहिंसि" त्ति यस्मिन् स्नात इव स्नातः अत्यन्तशुद्धिभवनात् 'विमलः' भावमलरहितोऽत एव 'विशुद्धः' गतकलङ्कः "सुसीतीभूतो" त्ति 'सुशीतीभूतः' रागाद्युत्तापविरहितः सुष्ठु शैत्यं प्राप्तः 'प्रजहामि' प्रकर्षेण त्यजामि दूषयति—विशुद्धमप्यात्मानं विकृतिं नयतीति दोषः—कर्म तम्। अनेनैवदाह—ममापि ह्रदतीर्थे एव शुद्धिस्थानं परमेवंविधे एवेति ॥ निगमयितुमाह—'एतदि'त्यनन्तरमुक्तं 'स्नानं' रजोहानं कुशलैर्दृष्टम्, इदमेव च महास्नानं न तु युष्मत्प्रतीतम्, अस्यैव सकलमलापहारित्वात् अत एव ऋषीणां 'प्रशस्तं' प्रशंसास्पदम्, न तु जलस्नानवत् सदोषतया निन्द्यम्। अस्यैव फलमाह—"जहिंसि" त्ति सुव्व्यत्ययाद् येन स्नाता विमला विशुद्धा इति प्राग्वत्, 'महर्षयः' महामुनयः 'उत्तमं स्थानं' मुक्तिलक्षणं 'प्राप्ताः' गता इति सूत्रद्वयार्थः ॥ ४६—४७ ॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत्। एवं चोपसम्पन्नेषु द्विजेषु यक्षेण प्रगुणीकृतास्ते छात्राः तत्कालोचितधर्मदेशनया च तान् प्रतिबोध्य गतः स्वविहारमसौ मुनिः ॥

हरिकेशमुनेः सौत्री वक्तव्यता।

॥ इति श्रीनेमिचन्द्रसूरिविनिर्मितायां सुखबोधायां उत्तराध्ययनसूत्र-
लघुटीकायां हरिकेशीयाख्यं द्वादशमध्ययनं समाप्तम् ॥

उषितौ 'श्वपाकनिवेशनेषु' चाण्डालगृहेषु ॥ कदाचित् तत्राऽपि विज्ञानविशेषादिना अहीलनीयावेव स्यातामित्याह—तस्यां च 'जातौ' श्वपाकसम्बन्धिन्यां च, 'तुः' विशेषणे, ततश्च शेषजातिभ्यः कुत्सिततत्वं विशिनष्टि, पापेव पापिका—कुत्सिता तस्यां "वुच्छे" त्ति उषितौ "मु" इत्यावां श्वपाकनिवेशनेषु सर्वस्य लोकस्य 'जुगुप्सनीयौ' हीलनीयौ। 'इहे'त्यस्मिन् जन्मनि 'तुः' पुनरर्थः तत इह पुनः 'कर्माणि' शुभानुष्ठानानि "पुरेकडाइं" पूर्वकृतानि विशिष्टजात्यादीनां निबन्धनमिति शेषः। ततः तत्प्रत्ययैः पुनस्तदुपार्जनायैव यत्नो विधेयो न तु विषयाभिष्वङ्गव्याकुलितमानसैरेव स्थेयमिति भावः ॥ यतश्चैवमतः 'सः' इति सम्भूतनामा अनगार आसीत्। "दाणिसिं" ति देशीयभाषया इदानीं राजा महानुभागो महर्द्धिकः पुण्यफलोपेतश्च सन् दृष्टफलत्वेनाभिनिष्क्रामेति सम्बन्धः। किं कृत्वा? इत्याह—त्यक्त्वा भोगान् अशाश्वतान्, आदीयते—मद्विवेकैर्गृह्यते इति आदानः—चारित्रधर्मस्तद्धेतोः 'अभिनिष्काम' आभिमुख्येन प्रव्रजितो भव, गृहस्थतायां हि न सर्वविरतिरूपचारित्रसम्भव इति सूत्रत्रयार्थः ॥ १८–१९–२० ॥ क इव तदकरणे दोषः? इत्याह—

**इह जीविए राय! असासयम्मि, धणियं तु पुन्नाइं अकुव्वमाणो।**
**सो सोयई मच्चुमुहोवणीए, धम्मं अकाऊण परम्मि लोए ॥ २१ ॥**

व्याख्या—इह 'जीविते' मनुष्यसम्बन्धिन्यायुषि राजन्! 'अशाश्वते' अस्थिरे "धणियं तु" त्ति अतिशयेनैव न तु ध्वजपटप्रान्तादिवत् चञ्चलतामात्रेण 'पुण्यानि' पुण्यहेतुभूतानि शुभानुष्ठानान्यकुर्वाणः 'सः' इति पुण्यानुपार्जकः 'शोचते' दुःखार्तः पश्चात्तापं विधत्ते। मृत्युमुखं—मरणगोचरमुपनीतः तथाविधकर्मभिरुपढौकितः सन् धर्ममकृत्वा "परम्मि" त्ति तस्य गम्यमानत्वात् परस्मिंश्च 'लोके' जन्मान्तररूपे गत इति शेषः। नरकादिषु ह्यसह्याऽसातवेदनार्दितशरीरः शशिनृप-

चित्र-सम्भूत-मुन्योः सौत्री वक्तव्यता।

वत् 'किं न मया तदैव सदनुष्ठानमनुष्ठितमि'ति खिद्यत एवाऽधर्मकारीति सूत्रार्थः ॥ २१ ॥ स्यादेतत्—मृत्युमुखोपनीतस्य परत्र च दुःखाभिहतस्य स्वजनादयस्त्राणाय भविष्यन्ति ततो न शोचिष्यन्ते इत्याशङ्क्याह—

**जहेह सीहो व मियं गहाय, मच्चू णरं णेइ हु अंतकाले ।**
**ण तस्स माया व पिया व भाया, कालम्मि तम्मिंसहरा भवंति ॥ २२ ॥**
**ण तस्स दुक्खं विभयंति णायओ, ण मित्तवग्गा ण सुया ण बंधवा ।**
**एगो सयं पच्चणुहोइ दुक्खं, कत्तारमेवं अणुजाइ कम्मं ॥ २३ ॥**

**व्याख्या**—'यथे'त्यौपम्ये 'इहे'ति लोके 'सिंहः' मृगपतिः 'वा' इति पूरणे, 'मृगं' कुरङ्गं गृहीत्वा प्रक्रमात् परलोकं नयतीति सम्बन्धः । एवं 'मृत्युः' कृतान्तः 'नरं' पुरुषं नयति, 'हुः' अवधारणे, ततो नयत्येव, 'अन्तकाले' जीवितव्यावसानसमये । न 'तस्य' मृत्युना नीयमानस्य माता वा पिता वा "भाय" त्ति वाशब्दस्येह गम्यमानत्वात् भ्राता वा 'काले तस्मिन्' जीवितान्तरूपे अंशं-प्रक्रमात् जीवितभागं धारयन्ति-मृत्युना नीयमानं रक्षन्तीत्यंशधराः, उक्तं हि—"न पिता भ्रातरः पुत्राः, न भार्या न च बान्धवाः । न शक्ता मरणात् त्रातुं, मग्नाः संसारसागरे ॥ १ ॥" इति ॥ स्यादेतत्—जीवितारक्षणेऽपि दुःखांशहारिणो भविष्यन्ति अत आह—न 'तस्य' मृत्युना नीयमानस्य 'दुःखं' शारीरं मानसं वा 'विभजन्ति' विभागीकुर्वन्ति 'ज्ञातयः' दूरवर्त्तिनः स्वजना न 'मित्रवर्गाः' सुहृत्समूहा न 'सुताः' पुत्रा न 'बान्धवाः' निकटवर्त्तिनः स्वजनाः, किन्तु 'एकः' अद्वितीयः 'स्वयम्' आत्मना 'प्रत्यनुभवति' वेदयते 'दुःखं' क्लेशम् । किमिति ? यतः 'कर्त्तारमेव' उपार्जयितारमेव 'अनुयाति' अनुगच्छति कर्मेति सूत्रद्वयार्थः ॥ २२-२३ ॥ इत्थमशरणत्वभावनामभिधायैकत्वभावनामाह—

चिच्चा दुपयं चउप्पयं च, खेत्तं गेहं धण-धन्नं च सवं ।
सकम्मविइओ अवसो पयाइ, परं भवं सुंदर पावगं वा ॥ २४ ॥
तं इक्कगं तुच्छसरीरगं से, चितीगयं डज्झिय पावगेणं ।
भज्जा य पुत्तो वि य णायओ य, दायारमन्नं अणुसंकमंति ॥ २५ ॥

व्याख्या—त्यक्त्वा 'द्विपदं च' भार्यादि 'चतुष्पदं च' हस्त्यादि 'क्षेत्रम्' इक्षुक्षेत्रादि 'गृहं' धवलगृहादि "धणं" ति 'धनं' कनकादि 'धान्यं च' शाल्यादि सर्वम्, ततः किम्? इत्याह—'स्वकर्मद्वितीयः' आत्मकर्मसहायः 'अवशः' अस्वतन्त्रः प्रयाति 'परम्' अन्यं 'भवं' जन्म "सुंदर" त्ति विन्दुलोपात् 'सुन्दरं' स्वर्गादि 'पापकं वा' नरकादि, स्वकृतकर्मानुरूपमिति भावः ॥ स्यादेतत्—जीवेन त्यक्तस्य शरीरस्य का वार्त्ता? इत्यत आह—'तद्' इति यत् तेन त्यक्तम् 'एकम्' अद्वितीयं तुच्छम्-असारं शरीरकम्, अनयोस्तु विशेषणसमासः, "से" 'तस्य' भवान्तरगतस्य सम्बन्धि 'चितिगतं' चिताप्राप्तं दग्ध्वा 'तुः' पूरणे, 'पावकेन' अग्निना, भार्या च पुत्रोऽपि च ज्ञातयश्च 'दातारम्' अभिलषितवस्तुसम्पादयितारमन्यम् 'अनुसङ्क्रामन्ति' उपसर्पन्ति । ते हि गृहमनेनावरुद्धमास्त इति तद् बहिर्निष्कास्य जनलज्जादिना च भस्मसात्कृत्य कृत्वा च लौकिककृत्यानि आक्रन्द्य च कतिचिद् दिनानि पुनः स्वार्थतत्परतया पूर्ववद् विलसन्ति न तद्वार्त्तामपि पृच्छन्तीत्यभिप्राय इति सूत्रद्वयार्थः ॥ २४–२५ ॥ किञ्च—

उवणिज्जई जीवियमप्पमायं, वन्नं जरा हरइ णरस्स रायं ! ।
पंचालराया ! वयणं सुणाहि, मा कासि कम्माइं महालयाइं ॥ २६ ॥

व्याख्या—'उपनीयते' ढौक्यते प्रक्रमाद् मृत्यवे तथाविधकर्मभिः 'जीवितम्' आयुः 'अप्रमादं' प्रमादं विनैव, आवी-

चित्र-सम्भूत-मुन्योः सौत्री वक्तव्यता ।

चीमरणतो निरन्तरमित्यभिप्रायः। ‘वर्ण’ सुस्निग्धच्छायात्मकं जरा हरति नरस्य हे राजन्!। यतश्चैवमतः पञ्चालराज!
वचनं ‘श्रृणु’ आकर्णय, किं तत्? मा कार्षीः कर्माणि “महालयाणि” त्ति अतिशयमहान्ति पञ्चेन्द्रियव्यपरोपण-
कुणिमभक्षणादीनीति सूत्रार्थः ॥ २६ ॥ एवं मुनिनोक्ते नृपतिराह—

**अहं पि जाणामि जहेह साहू!, जं मे तुमं साहसि वक्कमेयं।**
**भोगा इमे संगकरा भवंति, जे दुज्जया अज्जो! अम्हारिसेहिं ॥ २७ ॥**

व्याख्या—अहमपि जानामीति तथेति शेषः, ‘यथा’ येन प्रकारेण ‘इह’ अस्मिन् जगति साधो! यद् ‘मे’ मम त्वं ‘साधयसि’ कथयसि ‘वाक्यम्’ उपदेशरूपं वचः ‘एतद्’ अनन्तरोक्तम्। तत् कथं न विषयान् परित्यजसि? अत आह—भोगा इमे ‘सङ्गकराः’ प्रतिबन्धोत्पादका भवन्ति ये यत्तदोर्नित्याभिसम्बन्धात् ते दुस्त्यजाः आर्य! ‘अस्मादृशैः’ गुरुकर्मभिरिति सूत्रार्थः ॥ २७ ॥ किञ्च—

**हत्थिणपुरम्मि चित्ता!, दट्ठूणं णरवइं महिड्ढियं। कामभोगेसु गिद्धेणं, णियाणमसुहं कडं ॥२८॥**
**तस्स मे अप्पडिकंतस्स, इमं एयारिसं फलं। जाणमाणो वि जं धम्मं, कामभोगेसु मुच्छिओ ॥२९॥**

व्याख्या—हस्तिनागपुरे हे ‘चित्र!’ चित्रनामन् मुने! दृष्ट्वा ‘नरपतिं’ सनत्कुमारनामानं चतुर्थचक्रवर्त्तिनं महर्द्धिकं कामभोगेषु गृद्धेन निदानम् ‘अशुभम्’ अशुभानुबन्धि कृतमिति ॥ “तस्स” त्ति सुब्व्यत्ययेन ‘तस्माद्’ निदानाद् ‘मे’ मम ‘अप्रतिक्रान्तस्य’ अप्रतिनिवृत्तस्य, तदा हि त्वया बहुधोच्यमानेऽपि न मच्चेतसः प्रत्यावृत्तिरभूदिति, ‘इदमेतादृशम्’ अनन्तरवक्ष्यमाणरूपं ‘फलं’ कार्यम्, यत् कीदृग्? इत्याह—“जाणमाणो वि” त्ति प्राकृतत्वात् जानन्नपि यदहं

१ सत्यपि च जीविते।

'धर्मं' श्रुतधर्मादिकं कामभोगेषु 'मूर्च्छितः' गृद्धः, तदेतत् कामभोगेषु मूर्च्छनं मम निदानकर्मणः फलमिति सूत्रद्वयार्थः ॥ २८–२९ ॥ पुनर्निदानफलमेवोदाहरणतो दर्शयितुमाह—

चित्र-सम्भूत-मुन्योः मैत्री वक्तव्यता ।

**नागो जहा पंकजलावसन्नो, दट्ठुं थलं णाभिसमेइ तीरं ।**
**एवं वयं कामगुणेसु गिद्धा, ण भिक्खुणो मग्गमणुव्वयामो ॥ ३० ॥**

व्याख्या—'नागः' हस्ती 'यथे'त्युपन्यासे, पङ्कप्रधानं जलं पङ्कजलं तत्राऽवसन्नः—निमग्नः पङ्कजलावसन्नः सन् दृष्ट्वा स्थलं 'न' नैव 'अभिसमेति' प्राप्नोति 'तीर' पारम् अपेर्गम्यमानत्वात् तीरमपि आस्तां स्थलमिति भावः । एवं वयं कामगुणेषु गृद्धाः न 'भिक्षोः' साधोः 'मार्गं' पन्थानं सदाचारलक्षणम् 'अनुव्रजामः' अनुसराम इति सूत्रार्थः ॥ ३० ॥ पुनरनित्यतादर्शनाय मुनिराह—

**अच्चेइ कालो तूरंति राईओ, ण यावि भोगा पुरिसाण णिच्चा ।**
**उवेच्च भोगा पुरिसं चयंति, दुमं जहा खीणफलं व पक्खी ॥ ३१ ॥**

व्याख्या—'अत्येति' अतिक्रामति 'कालः' यथायुष्ककालः, किमिति ? यतः 'त्वरन्ति' शीघ्रं गच्छन्ति 'रात्रयः' रजन्यः, दिनोपलक्षणं चैतत्, ततोऽनेन जीवितस्याऽनित्यत्वमुक्तम् । उक्तं हि—"क्षण-याम-दिवस-मासच्छलेन गच्छन्ति जीवितदलानि । इति विद्वानपि कथमिह, गच्छसि निद्रावशं रात्रौ ? ॥ १ ॥" न च भोगा अपि, अपेरत्र सम्बन्धात् पुरुषाणां 'नित्याः' शाश्वताः, यत उपेत्य स्वप्रवृत्त्या न तु पुरुषाभिप्रायेण भोगाः पुरुषं त्यजन्ति, कमिव क इव ? इत्याह—द्रुमं क्षीणफलं यथा 'पक्षी' विहग इव, फलोपमानि हि पुण्यानि, ततस्तदपगमे पुरुषं पक्षिवद् भोगा मुञ्चन्तीति सूत्रार्थः ॥ ३१ ॥ यत एवमतः—

**जइ त सि भोगे चइउं असत्तो, अज्जाइं कम्माइं करेहि रायं ! ।**
**धम्मे ठिओ सव्वपयाणुकंपी, तो होहिसि देवो इओ विउव्वी ॥ ३२ ॥**

**व्याख्या**—यदि त्वमसि भोगान् त्यक्तुमशक्तः, ततः किम् ? इत्याह—'आर्याणि' शिष्टजनोचितानि 'कर्माणि' अनुष्ठानानि कुरु राजन् ! 'धर्मे' प्रक्रमाद् गृहस्थधर्मे सम्यग्दृष्ट्यादिशिष्टानुचरिताचारलक्षणे स्थितः सन् 'सर्वप्रजानुकम्पी' समस्तप्राणिदयापरः । ततः किं फलम् ? इत्याह—'ततः' आर्यकर्मकरणाद् भविष्यसि 'देवः' वैमानिकः 'इतः' अस्माद् मनुष्यभवादनन्तरं "विउव्वि" त्ति वैक्रियशरीरवानिति सूत्रार्थः ॥ ३२ ॥ एवमुक्तोऽपि यदाऽसौ न किञ्चित् प्रतिपद्यते तदा मुनिराह—

**ण तुज्झ भोगे चइऊण बुद्धी, गिद्धो सि आरंभपरिग्गहेसु ।**
**मोहं कओ इत्तिउ विप्पलावो, गच्छामि रायं ! आमंतिओ सि ॥ ३३ ॥**

**व्याख्या**—'न' प्रतिषेधे, तव भोगान् उपलक्षणत्वादनार्यकर्माणि वा त्यक्तुं बुद्धिः, किन्तु 'गृद्धः' मूर्च्छितः 'असि' भवसि आरम्भपरिग्रहेषु । 'मोघं' निष्फलं यथा भवत्येवं 'कृतः' विहित एतावान् 'विप्रलापः' विविधव्यर्थवचनोपन्यासात्मकः । सम्प्रति तु गच्छामि राजन्! 'आमन्त्रितः' अनेकार्थत्वाद् धातूनां पृष्टः 'असि' भवसि। अयमाशयः—अनेकधा जीवितानित्यत्वादिदर्शनद्वारेणाऽनुशिष्यमाणस्याऽपि तव न मनागपि विषयविरक्तिरित्यविनेयत्वादुपेक्षैव श्रेयस्करी । उक्तं हि—"मैत्री-प्रमोद-कारुण्य-माध्यस्थ्यानि सत्त्वगुणाधिकक्लिश्यमानाविनेयेषु" इति सूत्रार्थः ॥ ३३ ॥ इत्थमुक्त्वा गते मुनौ ब्रह्मदत्तस्य यदभूत् तदाह—

चित्र-सम्भूत-मुन्योः सौत्री वक्तव्यता ।

पंचालराया वि य बंभदत्तो, साहुस्स तस्सा वयणं अकाउं ।
अणुत्तरे भुंजिय कामभोए, अणुत्तरे सो नरए पविट्ठो ॥ ३४ ॥

व्याख्या—"पंचालराया वि य" त्ति 'अपिः' पुनरर्थे, 'चः' पूरणे, ततः पञ्चालराजः पुनर्ब्रह्मदत्तः साधोः तस्य वचनम् 'अकृत्वा' वज्रतन्दुलवद् गुरुकर्मतयाऽत्यन्तदुर्भेदत्वाद् अननुष्ठाय 'अनुत्तरान्' सर्वोत्तमान् भुक्त्वा कामभोगान् "अनुत्तरे" सकलनरकज्येष्ठे अप्रतिष्ठान इत्यर्थः स ब्रह्मदत्तो नरके प्रविष्टः । तदनेन निदानस्य नरकपर्यवसानं फलमुपदर्शितं भवतीति सूत्रार्थः ॥ ३४ ॥ सम्प्रति प्रसङ्गत एव चित्रवक्तव्यतोच्यते—

चित्तो वि कामेहि विरत्तकामो, उदत्तचारित्ततवो महेसी ।
अणुत्तरं संजम पालइत्ता, अणुत्तरं सिद्धिगइं गओ ॥ ३५ ॥ त्ति बेमि ॥

व्याख्या—'चित्रोऽपि' चित्रः पुनः कामेभ्यः 'विरक्तकामः' पराङ्मुखीभूताभिलाषः उदात्तं—प्रधानं चारित्रं—सर्वविरतिरूपं तपश्च—द्वादशविधं यस्य स तथा, महर्षिः अनुत्तरं 'संयमं' सप्तदशभेदं पालयित्वा 'अनुत्तरां' सर्वलोकाकाशोपरिवर्तिनीं सिद्धिगतिं गत इति सूत्रार्थः ॥ ३५ ॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥

॥ इति श्रीनेमिचन्द्रसूरिविरचितायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां चित्रसम्भूतीयाख्यं त्रयोदशमध्ययनं समाप्तम् ॥

# अथ इषुकारीयाख्यं चतुर्दशमध्ययनम् ।



व्याख्यातं त्रयोदशमध्ययनम् । अधुना इषुकारीयाख्यं चतुर्दशमारभ्यते, अस्य चायमभिसम्बन्धः—'इहानन्तराध्ययने मुख्यतो निदानदोष उक्तः प्रसङ्गतो निर्निदानतागुणश्च, अत्र तु मुख्यतः स एवोच्यते' इत्यनेन सम्बन्धेनायातस्यास्याऽध्ययनस्य प्रस्तावनार्थं इषुकारवक्तव्यता तावदुच्यते । तत्र सम्प्रदायः—

जे ते दो वि गोवदारया चित्त-संभूयपुव्वभवमित्ता साहुअणुकंपाए लद्धसम्मत्ता कालं काऊण देवलोगे उववन्ना । ते ततो चुया खिइपइट्ठिए नयरे इब्भकुले दो वि भायरो जाया । तत्थ तेसिं अन्ने वि चत्तारि इब्भदारगा वयंसया जाया । तत्थ वि भोगे भुंजिउं तहारूवाणं थेराणमंतिए धम्मं सोऊण सव्वे पव्वइया । सुचिरकालं संजममणुपालेऊण भत्तं पच्चक्खाउं कालं काऊण सोहम्मे कप्पे पउमगुम्मे विमाणे छ वि जणा चउपलिओवमठितिया देवा उववन्ना । तत्थ जे ते गोववज्जा देवा ते चइऊण कुरुजणवए उसुयारे पुरे एगो उसुयारो नाम राया जाओ, बीओ तस्सेव महादेवी कमलावई नाम संवुत्ता, तइओ तस्स य चेव राइणो भिगू नाम पुरोहिओ संवुत्तो, चउत्थो तस्सेव पुरोहियस्स भारिया संवुत्ता वासिट्ठा गोत्तेण जसा नाम । सो य भिगू पुरोहिओ अणवच्चो गाढं तप्पए, अवच्चनिमित्तं उवायएइ देवयाणं, पुच्छइ नेमित्तिए । ते य दो वि पुव्वभवगोवा देवभवे वट्टमाणा ओहिणा जाणिउं जहा 'अम्हे एयस्स भिगुस्स पुरोहियस्स पुत्ता भविस्सामो' तओ समणरूवं काऊणं उवागया भिगुसमीवं । भिगुणा सभारिएण वंदिया, सुहासणत्था य धम्मं कहिंति । तेहिं दोहिं वि सावयवयाणि गहियाणि । पुरोहिएण भन्नइ—भगवं ! अम्हं अवच्चं होज्जा न व त्ति ? ।

माहणेहिं भन्नइ—'भविस्संति दुवे दारगा, ते य डहरगा चेव पव्वइस्सति, तेसि तुब्भेहिं वाघाओ न कायव्वो। ते गुरुहं सबोहिस्संति' त्ति भणिऊण पडिगया देवा। नाइचिरेण य चइऊण तस्स पुरोहियस्स भारियाए वासिट्ठिए दुवे वि उयरे पञायाया। तओ सो पुरोहिओ सभारिओ नयराओ निग्गंतुं पच्चंतगामे ठिओ। तत्थेव सा माहणी पसूया। दारया जाया। तओ 'मा पव्वइस्सति' त्ति काउं मायावित्तेहिं वुग्गाहिया—जहा एए पव्वइयगा डिक्करूवाणि घेत्तुं मारेंति, पच्छा तेसिं मंसं खायंति, तं मा तुब्भे कयाइ एएसिं अल्लिइस्सह। अन्नया ते तम्मि गामे रमंता बाहिं निग्गया। इओ य अद्धाणपडिवन्नया साहू आगच्छंति। तओ ते दारया साहू दट्ठूण भयभीया पलायंता एगम्मि वडपायवे आरूढा। साहुणो समावत्तीए गहियभत्तपाणा तम्मि चेव वडहेट्ठे ठिया, मुहुत्तं च वीसमिऊणं भुंजिउं पवत्ता। ते वडारूढा पासंति साभावियं भत्तपाणं, णत्थि मंसं ति। तओ चिंतिउं पवत्ता—'कत्थ अम्हे एयारिसाणि रूवाणि दिट्ठपुव्वाणि ?' त्ति जाई संभरिया, संबुद्धा। साहुणो वंदिउं गया अम्मापिउसमीवं। मायावित्तं संबोहिऊण सह मायावित्तेहिं पव्वइया। देवीए राया सबोहिओ। ताणि पव्वइयाणि। एवं ताणि छावि केवलनाणं पाविऊण निव्वाणमुवगयाणि॥ इह तु सूत्रोक्तस्याप्यर्थस्याभिधानं प्रसङ्गत इत्यदोषः। सम्प्रति सूत्रमनुस्त्रियते—

राजादीनां वक्तव्यता।

देवा भवित्ता ण पुरेभवम्मी, केई चुया एगविमाणवासी।
पुरे पुराणे उसुयारणामे, खाए समिद्धे सुरलोगरम्मे ॥ १ ॥
सकम्मसेसेण पुराकएणं, कुलेसुदग्गेसु य ते पसूया।
णिविन्न संसारभया जहाय, जिणिंदमग्गं सरणं पवन्ना ॥ २ ॥

पुमत्तमागम्म कुमार दो वि, पुरोहिओ तस्स जसा य पत्ती ।
विसालकित्ती य तहोसुयारो, रायऽत्थ देवी कमलावई य ॥ ३ ॥

व्याख्या—देवा भूत्वा ''पुरेभवम्मि'' त्ति पूर्वभवे 'केचिद्' अनिर्दिष्टनामानः च्युताः, एकस्मिन्—पद्मगुल्मनाम्नि
विमाने वसन्तीत्येवंशीला एकविमानवासिनः 'पुरे' नगरे 'पुराणे' चिरन्तने इषुकारनाम्नि 'ख्याते' प्रथिते समृद्धे सुर-
लोकरम्ये, स्वम्—आत्मीयं कर्म—पुण्यप्रकृतिलक्षणं तस्य शेषः—उद्धरितं स्वकर्मशेषस्तेन पुराकृतेन कुलेषु उदग्रेषु 'चः' पूरणे,
'ते' इति ये देवा भूत्वा च्युताः 'प्रसूताः' उत्पन्नाः, ''निव्विण्ण'' त्ति आर्षत्वात् 'निर्विण्णाः' उद्विग्नाः संसारभयात्,
''जहाय'' त्ति परित्यज्य भोगादीनीति गम्यते, 'जिनेन्द्रमार्गं' तीर्थकृदुपदिष्टं मुक्तिपथं 'शरणम्' अपायरक्षाक्षममाश्रयं
'प्रपन्नाः' अभ्युपगता इत्यध्ययनार्थसूचनम् ॥ कश्च किं रूपः सन् जिनेन्द्रमार्गं शरणं प्रपन्नः ? इत्याह—'पुंस्त्वं' पुरुषत्वम्
'आगम्य' प्राप्य ''कुमार'' त्ति 'कुमारौ' अकृतपाणिग्रहणौ द्वौ 'अपिः' पूरणे, सुलभबोधिकत्वेन प्राधान्यख्यापनार्थं चानयोः
पूर्वमुपादानम्, पुरोहितः तृतीयः, तस्य 'जसा च' जसानाम्नी पत्नी चतुर्थः, 'विशालकीर्त्तिश्च' विस्तीर्णयशाश्च तथा इषु-
कारो नाम राजा पञ्चमः, 'अत्र' एतस्मिन् भवे 'देवी' इति प्रधानपत्नी प्रक्रमात् तस्यैव राज्ञः कमलावती च नाम्ना
षष्ठ इति सूत्रत्रयार्थः ॥ १–२–३ ॥ सम्प्रति यथैतेषु जिनेन्द्रमार्गे प्रतिपत्तिः कुमारकयोर्जाता तथा दर्शयितुमाह—

जाईजरामच्चुभयाभिभूया, बहिंविहाराभिणिविट्ठचित्ता ।
संसारचक्कस्स विमोक्खणट्ठा, दट्ठूण ते कामगुणे विरत्ता ॥ ४ ॥
पियपुत्तगा दोन्नि वि माहणस्स, सकम्मसीलस्स पुरोहियस्स ।
सरित्तु पोराणिय तत्थ जाइं, तहा सुचिन्नं तव संजमं च ॥ ५ ॥

व्याख्या—जाति-जरा-मृत्युभयाभिभूतौ, वहिः संसाराद् विहारः-स्थानं वहिर्विहारः स चार्थाद् मोक्षस्तस्मिन्न-भिनिविष्टं-वद्धाग्रहं चित्तं ययोस्तौ, तथा संसारः चक्रमिव संसारचक्रं तस्य 'विमोक्षार्थं' परित्यागनिमित्तं दृष्ट्वा साधूनिति शेषः, 'तौ' अनन्तरोक्तौ 'कामगुणे' कामगुणविषये विरक्तौ प्रियौ—वल्लभौ तौ च तौ पुत्रावेव पुत्रकौ प्रियपुत्रकौ द्वावपि माहनस्य 'स्वकर्मशीलस्य' यजनयाजनादिस्वकीयानुष्ठाननिरतस्य 'पुरोहितस्य' शान्तिकर्तुः स्मृत्वा "पोराणिय" त्ति सूत्रत्वात् 'पौराणिकीं' चिरन्तनीं 'तत्र' सन्निवेशे जातिम्, तथा सुचीर्णं तपः संयमं च, अत्र कामगुणविरक्तिरेव जिनेन्द्रमार्गप्रतिपत्तिरिति सूत्रद्वयार्थः ॥ ४–५ ॥ ततस्तौ किमकार्ष्टाम्? इत्याह—

**ते कामभोगेसु असज्जमाणा, माणुस्सएसुं जे यावि दिव्वा ।**
**मोक्खाभिकंखी अभिजायसड्ढा, तातं उवागम्म इमं उदाहु ॥ ६ ॥**

व्याख्या—'तौ' पुरोहितपुत्रौ 'कामभोगेषु' उक्तरूपेषु "असज्जमाण" त्ति 'असजन्तौ' सङ्गमकुर्वन्तौ 'मानुष्यकेषु' मनुजसम्बन्धिषु ये चाऽपि 'दिव्याः' देवसम्बन्धिनः कामभोगास्तेषु चेति प्रक्रमः, 'मोक्षाभिकाङ्क्षिणौ' मुक्त्यभिलाषिणौ 'अभिजातश्रद्धौ' उत्पन्नतत्त्वरुची 'तातं' पितरमुपागम्य 'इदं' वक्ष्यमाणं "उदाहु" त्ति 'उदाहरताम्' उक्तवन्ताविति सूत्रार्थः ॥ ६ ॥ यच तावुक्तवन्तौ तदाह—

**असासयं दट्ठु इमं विहारं, बहुअंतरायं न य दीहमाउं ।**
**तम्हा गिहंसि ण रइं लभामो, आमंतयामु चरिसामि मोणं ॥ ७ ॥**

व्याख्या—'अशाश्वतम्' अनित्यं दृष्ट्वा 'इमं' प्रत्यक्षं 'विहारं' मनुष्यत्वेनावस्थानम्, किमित्येवम्? इत्याह—'बह्वन्तरायं' बहुव्याध्यादिविघ्नं 'न च' नैव दीर्घं 'आयुः' जीवितम्, सम्प्रति पल्योपमायुष्कताया अप्यभावात्, यत एवं तस्माद्

षण्णाम्
इषुकार-
राजादीनां
वक्तव्यता ।

गृहे न रतिं लभामहे, अतश्च 'आमन्त्रयावहे' पृच्छाव आवां यथा चरिष्यावः 'मौनं' मुनिभावं संयममिति सूत्रार्थः ॥ ७ ॥
एवं च ताभ्यामुक्ते—

**अह तायगो तत्थ मुणीण तेसिं, तवस्स वाघायकरं वयासी ।**
**इमं वयं वेयविओ वदंति, जहा ण होई असुयाण लोगो ॥ ८ ॥**
**अहिज्ज वेदे परिविस्स विप्पे, पुत्ते परिट्ठप्प गिहंसि जाया ! ।**
**भोचा ण भोगे सह इत्थियाहिं, आरण्णगा होह मुणी पसत्था ॥ ९ ॥**

**व्याख्या**—'अथ' अनन्तरं तात एव तातकः 'तत्र' तस्मिन्नवसरे 'मुन्योः' भावतः प्रतिपन्नमुनिभावयोः 'तयोः' कुमारयोः तपसः, उपलक्षणत्वादशेषधर्मानुष्ठानस्य च व्याघातकरं वचनमिति शेषः, "वयासि" त्ति अवादीत्, यद्वादीत् तदाह—इमां वाचं वेदविदो वदन्ति, यथा—न भवति 'असुतानाम्' अपुत्राणां 'लोकः' परलोकः, तं विना पिण्डप्रदानाद्यभावात्। तथा च **वेदवचः**—"अनपत्यस्य लोका न भवन्ति।" तथाऽपि अन्यैरप्युक्तम्—"पुत्रेण जायते लोकः, इत्येषा वैदिकी श्रुतिः। अथ पुत्रस्य पुत्रेण, स्वर्गलोके महीयते ॥ १ ॥" यत एवं तस्माद् अधीत्य वेदान् 'परिवेष्य' भोजयित्वा विप्रान् पुत्रान् परिस्थाप्य गृहे 'जातौ !' पुत्रौ !, तथा भुक्त्वा "ण" इति वाक्यालङ्कारे, भोगान् सह स्त्रीभिः अरण्ये भवौ आरण्यौ तावेव 'आरण्यकौ' आरण्यकव्रतधारिणौ "होह" त्ति 'भवतां' सम्पद्येथां युवां मुनी 'प्रशस्तौ' श्लाघ्याविति सूत्रद्वयार्थः ॥ ८–९ ॥ इत्थं तेनोक्ते कुमारकौ यदकार्ष्टां तदाह—

**सोयग्गिणा आयगुणिंधणेणं, मोहाणिला पज्जलणाहिएणं ।**
**संतत्तभावं परितप्पमाणं, लालप्पमाणं बहुहा बहुं च ॥ १० ॥**

पुरोहियं तं कमसोऽणुणंतं, णिमंतयंतं च सुए धणेणं ।
जहक्कमं कामगुणेसु चेव, कुमारगा ते पसमिक्ख वक्कं ॥ ११ ॥
वेया अहीया ण भवंति ताणं, भुत्ता दिया णिंति तमंतमे णं ।
जाया य पुत्ता ण भवंति ताणं, को णाम ते अणुमन्निज्ज एयं ? ॥ १२ ॥
खणमित्तसुक्खा बहुकालदुक्खा, पगामदुक्खा अणिकामसोक्खा ।
संसारमोक्खस्स विपक्खभूया, खाणी अणत्थाण उ कामभोगा ॥ १३ ॥
परिव्वयंते अणियत्तकामे, अहो य राओ परितप्पमाणे ।
अन्नप्पमत्ते धणमेसमाणे, पप्पोत्ति मच्चुं पुरिसे जरं च ॥ १४ ॥
इमं च मे अत्थि इमं च णत्थि, इमं च मे किच्चमिमं अकिच्चं ।
तं एवमेवं लालप्पमाणं, हरा हरंति त्ति कहं पमाओ ? ॥ १५ ॥

व्याख्या—शोकाग्निना, आत्मनो गुणाः-अनादिकालसहचरितत्वेन रागादय आत्मगुणास्ते इन्धनम् उद्दीपकतया यस्य स तथा तेन, 'मोहानिलात्' अज्ञानपवनात् "पज्जलणाहिएणं" ति अधिकप्रज्वलनेन सन्तप्तभावं अत एव च 'परितप्यमान' समन्ताद् दह्यमान 'लालप्यमानम्' अतिशयेन दीनवचांसि लपन्तं 'बहुधा' अनेकप्रकारं 'बहु च' प्रभूतं यथा भवति, पुरोहितं 'तमि'ति प्रक्रान्तम् "कमसो" त्ति क्रमेण 'अनुनयन्तं' प्रज्ञापयन्तं निमन्त्रयन्तं च सुतौ धनेन यथाक्रमं कामगुणैश्च कुमारकौ 'तौ' अनन्तरप्रक्रान्तौ 'प्रसमीक्ष्य' प्रकर्षेण अज्ञानाच्छादितमतिमालोक्य 'वाक्यं' वच उक्तवन्ताविति गम्यते ॥ किं तत् ? इत्याह—वेदा अधीता न भवन्ति त्राणम्, उक्तं हि वेदविद्भिरपि—"शिल्पमध्ययनं नाम, वृत्तं

पण्णाम्
इषुकार-
राजादीनां
वक्तव्यता ।

ब्राह्मणलक्षणम् । वृत्तस्थं ब्राह्मणं प्राहुर्नेतरान् वेदजीवकान् ॥ १ ॥" तथा "भुत्त" त्ति भोजिता द्विजा नयन्ति तमसोऽपि यत् तमस्तस्मिन्–अतिरौद्रे रौरवादिनरके, "णमि"ति वाक्यालङ्कारे, ते हि भोजिताः पशुवधाद्यशुभव्यापार एव प्रवर्त्तन्ते। तथा जाताश्च पुत्रा न भवन्ति त्राणं नरकादिकुगतौ निपततामिति गम्यते । उक्तं हि **वेदमतानुसारिभिरपि**—"यदि पुत्राद् भवेत् स्वर्गो, दानधर्मो न विद्यते । मुषितस्तत्र लोकोऽयं, दानधर्मो निरर्थकः ॥ १ ॥ बहुपुत्रा दुली गोधा, ताम्रचूडस्तथैव च । तेषां च प्रथमं स्वर्गः, पश्चाल्लोको गमिष्यति ॥ २ ॥" यतश्चैवं ततः 'को नाम' न कश्चित् 'ते' तव 'अनुमन्येत' अनुजानीयात् सविवेक इति गम्यते 'एतद्' अनन्तरमुक्तं वेदाध्ययनादित्रयम् ॥ तथा क्षणमात्रसौख्या बहुकालदुःखाः 'प्रकामदुःखाः' अतिशयदुःखाः 'अनिकामसौख्याः' अप्रकृष्टसुखाः संसारमोक्षस्य विपक्षभूताः, किमित्येवंविधास्ते ? इत्याह—'खनिः' आकरोऽनर्थानाम्, तुशब्दोऽवधारणे भिन्नक्रमश्च, ततः खनिरेव 'कामभोगाः' उक्तरूपाः ॥ अनर्थखनित्वमेव स्पष्टयितुमाह—'परिव्रजन्' विषयसुखलाभार्थमितस्ततो भ्राम्यन् 'अनिवृत्तकामः' अनुपरतेच्छः सन्, "अहो य राओ" त्ति आर्षत्वात् चस्य भिन्नक्रमत्वाद् अह्नि रात्रौ च 'परितप्यमानः' तदवाप्तौ समन्तात् चिन्ताग्निना दह्यमानः, अन्ये–सुहृत्स्वजनादयः तदर्थं प्रमत्तः–तत्कृत्यासक्तचेता अन्यप्रमत्तः 'धनं' वित्तम् 'एषयन्' विविधोपायैर्गवेषयमाणः "पप्पोत्ति" प्राप्नोति मृत्युं पुरुषो जरां च ॥ इदं च मेऽस्ति धान्यादि, इदं च नास्ति रजतरूप्यादि, इदं च मे 'कृत्यं' गृहवरण्डिकादि, इदमकृत्यमारब्धमपि वाणिज्यादि न कर्तुमुचितम्, 'तं' पुरुषम् 'एवमेवं' वृथैव 'लालप्यमानम्' अत्यर्थं व्यक्तवाचा वदन्तम्, हरन्त्यायुरिति 'हराः' दिनरजन्यादयः 'हरन्ति' भवान्तरं नयन्ति । 'इती'ति अस्माद् हेतोः कथं प्रमादः प्रक्रमाद् धर्मे कर्तुमुचितः ? इति शेष इति सूत्रपञ्चकार्थः ॥ १०-११-१२-१३-१४-१५ ॥
सम्प्रति धनादिभिः प्रलोभयितुं पुरोहितः प्राह—

धणं पभूयं सह इत्थियाहिं, सयणा तहा कामगुणा पगामा ।
तवं कए तप्पइ जस्स लोओ, तं सब्व साहीणमिहेव तुज्झं ॥ १६ ॥

व्याख्या—धनं प्रभूतं सह [1]स्त्रीभिः 'स्वजनाः' पितृ-पितृव्यादयः, तथा कामगुणाः "पकाम" त्ति प्रकामाः 'तपः' कष्टानुष्ठानं 'कृते' निमित्तं 'तप्यते' अनुतिष्ठति 'यस्य' धनादेर्लोकः तत् सर्वं स्वाधीनम् 'इहैव' अस्मिन् गृहे "तुज्झं" ति युवयोरिति सूत्रार्थः ॥ १६ ॥ तौ आहतुः—

धणेण किं धम्मधुराहिगारे?, सयणेण वा कामगुणेहिं चेव? ।
समणा भविस्सामु गुणोहधारी, बहिंविहारा अभिगम्म भिक्खं ॥ १७ ॥

व्याख्या—धनेन किम्?, न किञ्चित् 'धर्मधुराधिकारे' तत्प्रस्तावे, स्वजनेन वा कामगुणैश्चैव, ततः श्रमणौ भविष्यावः 'गुणौघधारिणौ' क्षमादिगुणसमूहधारकौ, बहिर्ग्रामादिभ्यो विहारो ययोस्तौ बहिर्विहारौ अप्रतिबद्धविहारावित्यर्थः 'अभिगम्य' आश्रित्य भिक्षामिति सूत्रार्थः ॥ १७ ॥ आत्मास्तित्वमूलत्वात् सकलधर्मानुष्ठानस्य तन्निराकरणायाह पुरोहितः—

जहा य अग्गी अरणीउऽसंतो, खीरे घयं तिल्लमहा तिलेसु ।
एमेव जाया सरिरम्मि सत्ता, सम्मुच्छई णासइ णावचिट्ठे ॥ १८ ॥

व्याख्या—यथैव चस्यावधारणार्थत्वात् 'अग्निः' "अरणिउ" त्ति 'अरणितः' अग्निमन्थनकाष्ठात् 'असन्' अविद्यमान एव सम्मूर्च्छति, तथा क्षीरे घृतं तैलमथ तिलेषु, एवमेव हे जातौ! शरीरे सत्त्वाः "सम्मुच्छइ" त्ति 'सम्मूर्च्छन्ति'

पण्णाम् इषुकार-राजादीनां वक्तव्यता ।

---

१ यद्यपि तयोस्तदा स्त्रियो न सन्ति तथाऽपि तदवाप्तियोग्यताऽस्तीति तासामभिधानम् ।

पूर्वमसन्त एवोत्पद्यन्ते । तथा "नासइ" त्ति नश्यन्ति "नावचिट्ठंति" न पुनरवतिष्ठन्ते शरीरनाशे तन्नाशात्, इति सूत्रार्थः ॥ १८ ॥ कुमारकावाहतुः—

**नो इंदियग्गिज्झ अमुत्तभावा, अमुत्तभावा वि य होइ णिच्चो ।**
**अज्झत्थहेउं निययऽस्स बंधो, संसारहेउं च वयंति बंधं ॥ १९ ॥**

**व्याख्या**—'नो' नैव इन्द्रियग्राह्यः सत्त्व इति प्रक्रमः, अमूर्त्तभावात्, तथा अमूर्त्तभावादपि च भवति नित्यः, तथा हि—यद् द्रव्यत्वे सति अमूर्त्तं तद् नित्यम् आकाशवत्। न चैवममूर्त्तत्वादेव तस्य सम्बन्धासम्भवः, यतः "अज्झत्थहेउं निययऽस्स बंधो" अध्यात्मशब्देन आत्मस्था मिथ्यात्वादय इहोच्यन्ते, ततस्तद्धेतुः—तन्निमित्तो नियतः—निश्चितो बन्धः—कर्मभिः सश्लेषः, यथाऽमूर्त्तस्याऽपि नभसो मूर्त्तैरपि घटादिभिः सम्बन्ध एवमस्यापि कर्मभिर्मूर्त्तैरपि न विरुध्यते, तथा संसारहेतुं च वदन्ति बन्धमिति सूत्रार्थः ॥ १९ ॥ यत एवमस्ति आत्मा बन्धश्च तस्य इत्यतः—

**जहा वयं धम्ममयाणमाणा, पावं पुरा कम्ममकासि मोहा ।**
**ओरुज्झमाणा परिरक्खियंता, तं नेव भुज्जो वि समायरामो ॥ २० ॥**

**व्याख्या**—यथा वयं 'धर्मं' सम्यग्दर्शनादिकम् अजानानाः 'पापं' पापहेतु 'पुरा' पूर्वं 'कर्म' अनुष्ठानं "अकासि" त्ति 'अकार्ष्म' कृतवन्तः 'मोहात्' अज्ञानात् 'अवरुध्यमानाः' निर्गमं गृहादलभमानाः 'परिरक्ष्यमाणाः' अनुजीविभिरनुपाल्यमानाः 'तत्' पापकर्म नैव 'भूयोऽपि' पुनरपि समाचरामः, यथावद् विदितवस्तुत्वादिति सूत्रार्थः ॥ २० ॥ अन्यच्च—

**अब्भाहयम्मि लोयम्मि, सव्वओ परिवारिए । अमोहाहिं पडंतीहिं, गिहंसि ण रइं लभे ॥ २१ ॥**

१ अरूप हि यथाऽऽकाश, रूपिद्रव्यादिभाजनम् । तथा ह्यरूपी जीवोऽपि, रूपिकर्मादिभाजनम् ॥ १ ॥

व्याख्या—'अभ्याहते' पीडिते लोके 'सर्वतः' सर्वासु दिक्षु 'परिवारिते' परिवेष्टिते 'अमोघाभिः' अवन्ध्यप्रहरणोपमाभिः 'पतन्तीभिः' आगच्छन्तीभिः 'गृहे' गृहवासे न रतिं लभामहे। यथा वागुरावेष्टितो मृगोऽमोघैश्च प्रहरणैर्व्याधेनाभ्याहतो न रतिं लभते, एवमावामपीति सूत्रार्थः ॥ २१ ॥ भृगुराह—

**केण अब्भाहओ लोओ, केण वा परिवारिओ। का वा अमोहा वुत्ता, जाया! चिंतावरो हुमि ॥२२॥**

व्याख्या—केन व्याधतुल्येन अभ्याहतो लोकः? केन वा वागुरारूपेण परिवारितः? का वा 'अमोघा' अमोघप्रहरणोपमा उक्ता? हे जातौ! चिन्तापरः "हुमि" त्ति भवामि। ततो ममाऽऽवेद्यतामयमर्थ इति सूत्रार्थः ॥२२॥ तावाहतुः—

**मच्चुणाऽब्भाहओ लोओ, जराए परिवारिओ। अमोहा रयणी वुत्ता, एवं ताय! वियाणह ॥ २३ ॥**

व्याख्या—मृत्युना अभ्याहतो लोकः, तस्य सर्वत्राप्रतिहतप्रसरत्वात्। उक्तञ्च—

"तित्थयरा गणहारी, सुरवइणो चक्कि-केसवा रामा। संहरिया हयविहिणा, सेसेसु नरेसु का गणणा? ॥१॥"[1] जरया परिवारितः, अमोघाश्च रजन्यः उक्ताः, तत्पतने ह्यवश्यंभावी जनस्याभिघातः, एवं तात! विजानीत इति सूत्रार्थः ॥२३॥

**जा जा वच्चइ रयणी, न सा पडिनियत्तई। अहम्मं कुणमाणस्स, अफला जंति राईओ ॥ २४ ॥**

**जा जा वच्चइ रयणी, न सा पडिनियत्तई। धम्मं च कुणमाणस्स, सफला जंति राईओ ॥ २५ ॥**

व्याख्या—या या व्रजति रजनी न सा 'प्रतिनिवर्त्तते' न पुनरागच्छति, ताश्च अधर्मं कुर्वतो जन्तोरिति गम्यते अफला यान्ति रात्रयः, अधर्मनिबन्धनं गृहस्थतेति ॥ तथा "जा जे"त्यादि पूर्ववत्। नवरं "धम्मं च" त्ति 'चः' पुनरर्थे

---

१ "तीर्थंकरा गणधारिणः, सुरपतयश्चक्रि केशवा रामाः। संहृता हतविधिना, शेषेषु नरेषु का गणना? ॥ १ ॥"

पणणाम् इषुकार-राजादीनां वक्तव्यता।

धर्मं पुनः कुर्वतः सफलाः, धर्मफलत्वात् जन्मनः । न च व्रतं विना धर्म इत्यतः तत् प्रतिपत्स्याव इति सूत्रद्वयार्थः ॥ २४–२५ ॥ इत्थं तद्वचनेन प्रतिबुद्धो भृगुराह—

**एगओ संवसित्ता णं, दुहओ सम्मत्तसंजुया। पच्छा जाया! गमिस्सामो, भिक्खमाणा कुले कुले॥**

व्याख्या—'एकतः' एकस्मिन् स्थाने 'समुष्य' सहैवाऽऽसित्वा "दुहओ" त्ति 'द्वये' आवां युवां च सम्यक्त्वसंयुताः, उपलक्षणत्वाद् देशविरत्या च संयुताः 'पश्चात्' यौवनोत्तरकालं हे जातौ! गमिष्यामो वयं ग्रामनगरादिषु मासकल्पादिक्रमेणेति शेषः, 'भिक्षमाणाः' याचमानाः पिण्डादिकमिति गम्यते 'कुले कुले' गृहे गृहे अज्ञातोञ्छवृत्त्येत्यर्थः इति सूत्रार्थः ॥ २६ ॥ कुमारावाहतुः—

**जस्सऽत्थि मच्चुणा सक्खं, जस्स वऽत्थि पलायणं ।**
**जो जाणइ न मरिस्सामि, सो हु कंखे सुए सिया ॥ २७ ॥**
**अज्जेव धम्मं पडिवज्जयामो, जहिं पवन्ना ण पुणब्भवामो ।**
**अणागयं णेव य अत्थि किंचि, सद्धाखमं ने विणइत्तु रागं ॥ २८ ॥**

व्याख्या—यस्यास्ति मृत्युना सह 'सख्यं' मैत्री, यस्य वाऽस्ति 'पलायनं' नाशनं मृत्योरिति प्रक्रमः, तथा यो जानीते यथाऽहं न मरिष्यामि "सो हु" स एव 'काङ्क्षति' प्रार्थयते 'श्वः' आगामिनि दिने स्याद् इदमिति गम्यते ॥ अतोऽद्यैव 'धर्मं' यतिधर्मं प्रतिपद्यामहे, "जहिं" ति आर्षत्वाद् यं धर्मं 'प्रतिपन्नाः' आश्रिताः "न पुणब्भवामो" त्ति 'न पुनर्भविष्यामः' न पुनर्जन्म प्राप्स्यामः, जन्ममरणाद्यभावहेतुत्वाद् धर्मस्य । किं च—'अनागतम्' अप्राप्तं नैव चास्ति 'किञ्चिद्' अतिसुन्दरमपि वस्तु, सर्वभावानामनन्तशः प्राप्तपूर्वत्वात् । उक्तञ्च—"का सा गतिर्जगति या शतशो न याता, किं तत् सुखं

यदमठन्न पुराऽनुभूतम् । कास्ताः श्रियो न खलु या वहुशोऽप्यवाप्ता-श्चेतस्तथाऽपि तव वर्द्धत एव वाञ्छा ॥ १ ॥" अतः श्रद्धा—अभिलाषः तया क्षमं—युक्तं श्रेय इत्यर्थः, अनुष्ठानं कर्त्तुमिति शेषः, "णे" त्ति 'नः' अस्माकं 'विनीय' अपनीय 'राग' स्वजनाऽभिष्वङ्गलक्षणमिति सूत्रद्वयार्थः ॥ २७–२८ ॥ इदं चाकर्ण्य पुरोहित उत्पन्नव्रतग्रहणपरिणामो ब्राह्मणीमन्विदमाह—

पण्णाम् इषुकार-राजादीनां वक्तव्यता

पहीणपुत्तस्स हु णत्थि वासो, वासिट्ठि! भिक्खायरियाइ कालो ।
साहाहि रुक्खो लहए समाहिं, छिन्नाहिं साहाहिं तमेव खाणुं ॥ २९ ॥
पक्खाविहूणो व जहेह पक्खी, भिच्चविहूणो व रणे णरिंदो ।
विवन्नसारो वणिउ व्व पोए, पहीणपुत्तो मि तहा अहं पि ॥ ३० ॥

व्याख्या—प्राकृतत्वेन पुत्राभ्यां प्रहीणः-त्यक्तो यस्तस्य 'हुः' पूरणे, नास्ति वासो मे गृहे इति गम्यते, 'हे वासिष्ठि !' वसिष्ठगोत्रे ! भिक्षाचर्यायाः, उपलक्षणं चैतद् व्रतग्रहणस्य, कालो वर्त्तत इति शेषः । किमित्येवम्? अत आह—शाखाभिर्वृक्षो लभते 'समाधिं' स्वास्थ्यम्, छिन्नाभिः शाखाभिः 'तमेव' वृक्षं "खाणुं" ति स्थाणुं जनो व्यपदिशतीत्युपस्कारः, यथा हि तास्तस्य शोभासंरक्षणादिना समाधिहेतवः एवं ममाऽप्येतौ सुतौ, अतस्तद्विरहितोऽहमपि स्थाणुकल्प एवेति ॥ किञ्च—पक्षविहीनो 'वा' दृष्टान्तान्तरसमुच्चये, यथा 'इह' लोके पक्षी, भृत्यविहीनो वा रणे नरेन्द्रः, 'विपन्नसारः' विनष्टहिरण्यादिद्रव्यो वणिग् वा 'पोते' प्रवहणे भिन्ने इति गम्यते व्यसनभागितया विषीदति, पुत्रप्रहीणोऽस्मि तथाऽहमपीति सूत्रद्वयार्थः ॥ २९–३० ॥ वासिष्ठ्याह—

सुसंभिया कामगुणा इमे ते, संपिंडिया अग्गरसा पभूया ।
भुंजामु ता कामगुणे पकामं, पच्छा गमिस्सामु पहाणमग्गं ॥ ३१ ॥

व्याख्या—'सुसम्भृताः' सुष्टु संस्कृताः कामगुणाः 'इमे' एते 'ते' तव, तथा 'सम्पिण्डिताः' पुञ्जीकृताः "अग्गरस" त्ति चस्य गम्यमानत्वाद् अग्र्याः–प्रवराः रसाश्च–मधुरादयः प्रभूताः, कामगुणान्तर्गतत्वेऽपि रसानां पृथगुपादानम् अतिगृद्धिहेतुत्वात्, "भुंजामो" त्ति भुञ्जीमहि 'तत्' तस्मात् कामगुणान् 'प्रकामम्' अतिशयेन, 'पश्चात्' वृद्धावस्थायां गमिष्यामः 'प्रधानमार्ग' प्रव्रज्यारूपं मुक्तिपथमिति सूत्रार्थः ॥ ३१ ॥ पुरोहितः प्राह—

भुत्ता रसा भोइ ! जहाति णो वओ, ण जीवियट्ठा पयहामि भोए ।
लाहं अलाहं च सुहं च दुक्खं, संचिक्खमाणो चरिसामि मोणं ॥ ३२ ॥

व्याख्या—'भुक्ताः' सेविता रसा उपलक्षणत्वात् शेषकामगुणाश्च, "भोइ" त्ति हे भवति ! आमन्त्रणमेतत्, 'जहाति' त्यजति 'नः' अस्मान् 'वयः' प्रक्रमाद् इष्टक्रियाकरणक्षमम्, उपलक्षणत्वात् जीवितं च, ततो यावद् नैतत् त्यजति तावत् प्रव्रजामः–जन्मान्तरभाविभोगार्थं दीक्षां ग्रहीष्यामः । ते चात्रैव स्वाधीनाः किं प्रव्रज्यया ? इति प्रेरणायामाह— न 'जीवितार्थम्' असंयमजीवितार्थं प्रजहामि भोगान् किन्तु लाभमलाभं च, सुखम् चस्य भिन्नक्रमत्वाद् दुःखं च "संचिक्खमाणो" त्ति 'समतया ईक्षमाणः' लाभाऽलाभसुखदुःखजीवितमरणादिषु समतामेव भावयन् इत्यभिप्रायः, चरिष्यामि 'मौनं' मुनिभावम्, ततो मुक्त्यर्थमेव मम दीक्षाप्रतिपत्तिरिति सूत्रार्थः ॥ ३२ ॥ वासिष्ठ्याह—

मा हू तुमं सोदरियाण संभरे, जुन्नो व हंसो पडिसोयगामी ।
भुंजाहि भोगाइं मए समाणं, दुक्खं खु भिक्खायरिया विहारो ॥ ३३ ॥

व्याख्या—'मा' निषेधे, 'हुः' वाक्यालङ्कारे, त्वं 'सोदर्याणां' भ्रातॄणाम्, उपलक्षणं शेषस्वजनानां भोगानां च "संभरे" त्ति अस्मार्षीः, "जुण्णो व हंसो" त्ति जीर्णो हंस इव प्रतिस्रोतोगामी सन्, किमुक्तं भवति?—यथाऽसौ नदीस्रोतसि प्रतिकूलगमनम् अतिकष्टमारभ्याऽपि तत्राशक्तः पुनरनुस्रोत एव धावति। एवं भवानपि संयमभारं वोढुमसमर्थः पुनः सोदरादीन् भोगांश्च स्मरिष्यसि, ततो भुङ्क्ष्व भोगान् मया 'समानं' सार्द्धम्, "दुक्खं खु" दुःखमेव भिक्षाचर्या 'विहारः' ग्रामादिष्वप्रतिबद्धविहारः, उपलक्षणञ्चैतत् शिरोलोचादीनामिति सूत्रार्थः ॥ ३३ ॥ पुरोहित आह—

जहा य भोई! तणुयं भुयंगो, णिम्मोअणिं हेच्च पलेइ मुत्ते।
एमेए जाया पयहंति भोगे, ते हं कहं णाणुगमेस्समेक्को? ॥ ३४ ॥
छिंदित्तु जालं अबलं व रोहिया, मच्छा जहा कामगुणे पहाय।
धोरेयसीला तवसा उदारा, धीरा हु भिक्खायरियं चरंति ॥ ३५ ॥

व्याख्या—यथा च हे भवति! 'तनुजां' देहजातां भुजङ्गः 'निर्मोचनीं' निर्मोकं हित्वा 'पर्येति' समन्ताद् गच्छति 'मुक्तः' निरपेक्षः "एमेए" त्ति एवमेतौ जातौ 'प्रजहीतः' त्यजतो भोगान्। ततः किम्? इत्याह—'तौ' जातौ अहं कथं न 'अनुगमिष्यामि' प्रव्रज्याग्रहणेनानुसरिष्यामि 'एकः' अद्वितीयः?, किं मम असहायस्य गृहवासेनेति भावः ॥ तथा छित्त्वा जालम् 'अबलमिव' दुर्बलमिव बलीयोऽपीति गम्यते, 'रोहिताः' रोहितजातीया मत्स्याश्चरन्तीति सम्बन्धः। 'यथा' इति दृष्टान्तोपन्यासे, तथेति गम्यते, ततस्तथा जालरूपान् कामगुणान् प्रहाय, धुरि वहन्ति धौरेयास्तेषामिव शीलम्—उत्क्षिप्तभारनिर्वहणलक्षणं येषां ते तथा, 'तपसा' अनशनादिना 'उदाराः' प्रधानाः 'धीराः' सात्त्विकाः 'हुरि'ति यस्माद्

पण्णाम् इषुकार-राजादीनां वक्तव्यता।

भिक्षाचर्यां चरन्ति, व्रतोपलक्षणमेतद्, अतोऽहमपीत्थं व्रतमेव ग्रहीष्ये इति भाव इति सूत्रद्वयार्थः ॥ ३४–३५ ॥ इत्थं प्रतिबोधिता ब्राह्मण्याह—

णहेव कुंचा समइक्कमंता, तताइं जालाइं दलेत्तु हंसा ।
पलेंति पुत्ता य पई य मज्झं, ते हं कहं णाणुगमेस्समेक्का ? ॥ ३६ ॥

व्याख्या—नभसीव कौञ्चाः 'समतिक्रामन्तः' तांस्तान् देशानुल्लङ्घयन्तः ततानि जालानि 'दलित्वा' भित्त्वा "हंस" त्ति चस्य गम्यमानत्वाद् हंसाश्च "पलिंति" त्ति 'परियन्ति' समन्ताद् गच्छन्ति, पुत्रौ च पतिश्च मम सम्बन्धिनो गम्यमानत्वाद् ये एतद् जालोपमं विषयाभिष्वङ्गं हित्वा नभःकल्पे निरुपलेपतया संयमे तानि तानि संयमस्थानानि अतिक्रामन्तस्तानहं कथं नाऽनुगमिष्याम्येका सती ? इति सूत्रार्थः ॥ ३६ ॥ इत्थं चतुर्णामपि व्रतप्रतिपत्तौ यद्भूत्तदाह—

पुरोहियं तं ससुयं सदारं, सोच्चाऽभिणिक्खम्म पहाय भोए ।
कुडुंबसारं विउलुत्तमं तं, रायं अभिक्खं समुवाय देवी ॥ ३७ ॥

वंतासी पुरिसो रायं !, ण सो होइ पसंसिओ । माहणेण परिच्चत्तं, धणं आदाउमिच्छसि ॥ ३८ ॥
सव्वं जगं जइ तुहं, सव्वं वावि धणं भवे । सव्वं पि ते अपज्जत्तं, णेव ताणाय तं तव ॥ ३९ ॥

मरिहिसि रायं ! जया तया वा, मणोरमे कामगुणे विहाय ।
इक्को हु धम्मो नरदेव ! ताणं, ण विज्जई अन्नमिहेह किंचि ॥ ४० ॥

व्याख्या—पुरोहितं 'तं' भृगुनामानं ससुतं सदारं श्रुत्वा 'अभिनिष्क्रम्य' गृहाद् निर्गत्य प्रहाय भोगान् प्रव्रजित-

मिति गम्यते, 'कुटुम्बसारं' धनधान्यादि, विपुलं चोत्तमं च विपुलोत्तमं, 'तदि'ति यत् पुरोहितेन त्यक्तं गृह्णन्तमिति शेषः, "रायं" ति राजानम् 'अभीक्ष्णं' पुनः पुनः 'समुवाच' सम्यगुक्तवती 'देवी' **कमलावती** नाम ॥ किमुक्तवती ? इत्याह—'वान्ताशी' वान्तभोजी पुरुषो य इति गम्यते, हे राजन् ! न स भवति प्रशंसितो विद्वद्भिरिति शेषः । कथमहं वान्ताशी ? इति चेद् इत्यत आह—ब्राह्मणेन परित्यक्तं धनमादातुमिच्छसि ॥ किञ्च—सर्वं जगद् यदि "तुहं" ति तव सर्वं वाऽपि धनं भवेत्, सर्वमपि 'ते' तव 'अपर्याप्तम्' अशक्तम् इच्छापूरणं प्रतीति शेषः, अपर्यवसितत्वात् तस्याः । तथा नैव 'त्राणाय' जरामरणाद्यपनोदाय 'तदि'ति सर्वं जगद्धनं वा तवेति ॥ अन्यच्च—मरिष्यसि राजन् ! 'यदा तदा वा' यस्मिन् तस्मिन् वा काले, जातस्य ध्रुवं मरणात् । उक्तं हि—"कश्चित् सखे ! त्वया दृष्टः, श्रुतः सम्भावितोऽपि वा । क्षितौ वा यदि वा स्वर्गे, यो जातो न मरिष्यति ? ॥ १ ॥" मनोरमान् कामगुणान् 'विहाय' त्यक्त्वा, न किञ्चित् त्वया सह यास्यतीत्यभिप्रायः, तथा 'एको हु' एक एव धर्मः 'नरदेव !' नृपते ! 'त्राणं' शरणम्, न विद्यते अन्यद् 'इह' लोके 'इह' मरणे किञ्चित् । उक्तं च—"[1]अत्थेण नंदराया, न ताइओ गोधणेण कुइयन्नो । धन्नेण तिलयसिट्ठी, पुत्तेहिं न ताइओ सगरो ॥ १ ॥" इत्यतो धर्म एवाऽनुष्ठेयो विद्वद्भिः, तस्मात् परित्यजाऽमुं द्विजपरित्यक्तद्रव्यग्रहणाऽऽग्रहमिति सूत्रचतुष्टयार्थः ॥ ३७-३८-३९-४० ॥ यतश्च धर्माद् ऋते नान्यत् त्राणमतः—

**णाहं रमे पक्खिणि पंजरे वा, संताणछिन्ना चरिसामि मोणं ।**
**अकिंचणा उज्जुकडा णिरामिसा, परिग्गहारंभणियत्तदोसा ॥ ४१ ॥**

---

१ "अर्थेन नन्दराज., न त्रातो गोधनेन कुचिकर्णः । धान्येन तिलकश्रेष्ठी, पुत्रैर्न त्रातः सगरः ॥ १ ॥"

पण्णाम्
इषुकार-
राजादीनां
वक्तव्यता ।

दवग्गिणा जहा रण्णे, डज्झमाणेसु जंतुसुं। अन्ने सत्ता पमोदंति, रागद्दोसवसं गया ॥ ४२ ॥
एवमेव वयं मूढा, कामभोगेसु मुच्छिया। डज्झमाणं न बुज्झामो, रागद्दोसग्गिणा जगं ॥ ४३ ॥
भोगे भुच्चा वमित्ता य, लहुभूयविहारिणो। आमोयमाणा गच्छंति, दिया कामकमा इव ॥४४॥
इमे य बद्धा फंदंति, मम हत्थऽज्जमागया। वयं च सत्ता कामेसु, भविस्सामो जहा इमे ॥ ४५ ॥
सामिसं कुललं दिस्सा, बज्झमाणं णिरामिसं। आमिसं सव्वमुज्झित्ता, विहरिस्सामो णिरामिसा ४६
गिद्धोवमे उ णच्चा णं, कामे संसारवड्ढणे। उरगो सुवन्नपासि व्व, संकमाणो तणुं चरे ॥ ४७ ॥
णागु व्व बंधणं छेत्ता, अप्पणो वसहिं वए। एयं पत्थं महाराय! उसुयारि त्ति मे सुयं ॥ ४८ ॥

व्याख्या—नाऽहं 'रमे' रतिमवाप्नोमि "पक्खिणि पंजरे व" त्ति पक्षिणीव पञ्जरे, किमुक्तं भवति ?—यथासौ दुःखोत्पादिनि पञ्जरे रतिं न लभते एवमहमपि जरामरणाद्युपद्रवविद्रुते भवपञ्जरे न रमे, अतः "संताणछिन्न" त्ति 'छिन्नसन्ताना' प्रक्रमाद् विनाशितस्नेहसन्ततिः चरिष्यामि 'मौनं' मुनिभावम् "अकिञ्चना" हिरण्यादिकिञ्चनरहिता, ऋजु–मायारहितं कृतम्–अनुष्ठितं यस्याः सा ऋजुकृता, तथा निष्क्रान्ता आमिषाद्–विषयादेः निरामिषा, "परिग्गहारंभनियत्तदोस" त्ति परिग्रहारम्भावेव जीवदूषणाद् दोषौ ताभ्यां निवृत्ता परिग्रहारम्भदोषनिवृत्ता ॥ अपरञ्च—दवाग्निना यथाऽरण्ये दह्यमानेषु जन्तुषु 'अन्ये' अपरे 'सत्त्वाः' अविवेकिनः प्रमोदन्ते, किंविधाः ? रागद्वेषवशं गताः ॥ एवमेव वयं "मूढ" त्ति 'मूढानि' मोहवशगानि कामभोगेषु मूर्च्छितानि दह्यमानं न बुध्यामहे रागद्वेषाग्निना 'जगत्' प्राणिसमूहम्। यो हि सविवेको रागादिमांश्च न भवति स दावानलेन दह्यमानान् अन्यसत्त्वानवलोक्य अहमप्येवमनेन दहनीय इति तद्रक्षणोपायतत्पर एव भवति न तु प्रमोदते प्रमादवशगतः सन्। ततो वयमपि भोगापरित्यागादेवंविधान्येवेति ॥

ये तु एवंविधा न भवन्ति ते किं कुर्वन्ति ? इत्याह—भोगान् भुक्त्वा पुनरुत्तरकालं वान्त्वा च, लघुः—वायुस्तद्भूताः—तदुपमाः सन्तो विहरन्तीत्येवंशीलाः लघुभूतविहारिणः—अप्रतिबद्धविहारिण इत्यर्थः 'आमोदमानाः' प्रमोदमनुभवन्तः नयाविधानुष्ठानेनेति गम्यते, गच्छन्ति विवक्षितस्थानमिति शेषः । क इव ? 'द्विजा इव' विहगा इव 'कामक्रमाः' स्वेच्छाचारिणः । किमुक्तं भवति ?—यथा द्विजा यत्र यत्र रोचते तत्र तत्राऽऽमोदमाना भ्राम्यन्ति एवमेतेऽपि अभिष्वङ्गस्याभावाद् यत्र यत्र संयमनिर्वाहस्तत्र तत्र यान्तीति ॥ पुनरर्थादिष्वास्थां निराकुर्वन्नाह—'इमे' प्रत्यक्षाः शब्दादयः 'चः' समुच्चये 'यत्ताः' नियन्त्रिता अनेकोपायैः रक्षिता इत्यर्थः, स्पन्दन्त इव स्पन्दन्ते अस्थितिधर्मतया । ये कीदृशाः ? इत्याह—"मम हत्थऽज्जमागय" त्ति मम उपलक्षणत्वात् तव च हस्तं हे आर्ये ! आगताः स्ववशा इत्यर्थः, आत्मनोऽज्ञतां दर्शयितुमाह—'वयं च' वयं पुनः सक्तानि कामभोगेषु, एवंविधेष्वपि चामीष्वभिष्वङ्गो मोहविलसितमिति भावः । यत एवमतो भविष्यामो यथा 'इमे' पुरोहितादयः, किमुक्तं भवति ?—यथाऽमीभिश्चञ्चलत्वमवलोक्यैते परित्यक्तास्तथा वयमपि त्यक्ष्याम इति ॥ स्यादेतद्—अस्थिरत्वेऽपि सुखहेतुत्वात् किमित्यमी त्यज्यन्ते ? इत्याह—'सामिषं' पिशितरूपामिषयुक्तं 'कुललं' गृध्रं शकुनिकां वा दृष्ट्वा 'बाध्यमानं' पीड्यमानं विहगान्तरैरिति गम्यते, 'निरामिषम्' अन्यथाभूतं दृष्ट्वेति गम्यते, 'आमिषं' धनधान्यादि सर्वमुज्झित्वा 'विहरिष्यामि' अप्रतिबद्धविहारितया चरिष्यामि निरामिषा ॥ उक्ताऽनुवादेनोपदेष्टुमाह—गृद्धोपमान् उक्तन्यायेन 'तुः' पूरणे, ज्ञात्वा "णं" वाक्यालङ्कारे, 'कामान्' कामयन्ति—शब्दादीनभिलषन्तीति कामाः—विषयिणस्तान्, किंभूतान् ? संसारवर्धनान्, किम् ? इत्याह—"उरगो सुवन्नपासि व" त्ति इवशब्दस्य भिन्नक्रमत्वाद् आर्षत्वाग उरग इव 'सौपर्णेयपार्श्वे' गरुडसमीपे 'शङ्कमानः' भयत्रस्तः 'तनु' स्तोकं यतनयेत्यर्थः, 'चरेः' क्रियासु प्रवर्त्तस्व । अस्यायमाशयः—यथा सौपर्णेयोपमैर्विषयैर्न बाध्यसे तथा यतस्व ॥ ततश्च किम् ? इत्याह—नाग इव

षण्णाम् इषुकार-राजादीनां वक्तव्यता ।

षण्णाम् इषुकारराजादीनां वक्तव्यता।

वन्धनं छित्त्वाऽऽत्मनो 'वसतिं' विन्ध्याटवीं व्रजति, एवं भवानपि कर्मबन्धनमुपहत्याऽऽत्मनः शुद्धजीवस्य वसतिम्—आश्रयं मुक्तिमित्यर्थः व्रजेः, अनेन दीक्षायाः प्रसङ्गतः फलमुक्तम्। एवं चोपदिश्य निगमयितुमाह—'एतद्' यन्मयोक्तं 'पथ्यं' हितं महाराज! इषुकार! 'इति' एतद् मया 'श्रुतम्' अवधारितं साधुसकाशादिति गम्यते इति सूत्राष्टकार्थः ॥ ४१-४२-४३-४४-४५-४६-४७-४८ ॥ एवं च तद्वचनात् प्रतिबुद्धो नृपः। ततश्च यत् तौ द्वावपि चक्रतुस्तदाह—

**चइत्ता विउलं रज्जं, कामभोगे य दुच्चए। णिव्विसया णिरामिसा, णिन्नेहा णिप्परिग्गहा ॥ ४९ ॥**

**सम्मं धम्मं वियाणित्ता, चिच्चा कामगुणे वरे। तवं पगिज्झऽहक्खायं, घोरं घोरपरक्कमा ॥ ५० ॥**

व्याख्या—त्यक्त्वा विपुलं राज्यं कामभोगांश्च दुस्त्यजान् 'निर्विषयौ' विषयरहितौ अत एव निरामिषौ 'निःस्नेहौ' निःप्रतिबन्धौ 'निष्परिग्रहौ' मूर्च्छारहितौ सम्यक् 'धर्मं' श्रुत-चारित्रात्मकं विज्ञाय त्यक्त्वा कामगुणान् वरान्, पूर्वविशेषणैर्गतार्थत्वेऽपि पुनरभिधानमतिशयख्यापकम्। 'तपः' अनशनादि 'प्रगृह्य' अभ्युपगम्य 'यथाख्यातं' येन प्रकारेण तीर्थकरादिभिः कथितं 'घोरं' दुरनुचरं, घोरपराक्रमौ तथैव कृतवन्ताविति शेष इति सूत्रद्वयार्थः ॥ ४९–५० ॥ सम्प्रति समस्ताध्ययनोपसंहारमाह—

**एवं ते कमसो बुद्धा, सव्वे धम्मपरायणा। जम्ममच्चुभउव्विग्गा, दुक्खस्संतगवेसिणो ॥ ५१ ॥**

**सासणे विगयमोहाणं, पुव्विं भावणभाविया। अचिरेणेव कालेणं, दुक्खस्संतमुवागया ॥ ५२ ॥**

**राया सह देवीए, माहणो य पुरोहिओ। माहणी दारगा चेव, सव्वे ते परिणिव्वुडि ॥५३॥ त्ति बेमि॥**

व्याख्या—'एवम्' अमुना प्रकारेण 'तानि' अनन्तरमुक्तरूपाणि षडपि क्रमशो बुद्धानि सर्वाणि धर्मपरायणानि जन्ममृत्युभयोद्विग्नानि दुःखस्यान्तगवेषकाणि ॥ पुनस्तद्वक्तव्यतामेवाह—शासने 'विगतमोहानाम्' अर्हतां 'पूर्वम्' अन्य-

जन्मनि, भावनया—कुशलकर्माऽभ्यासरूपया भावितानि—वासितानि भावनाभावितानि अत एव 'अचिरेणैव' स्वल्पेनैव कालेन दुःखस्य 'अन्तं' मोक्षम् 'उपागतानि' प्राप्तानि, सर्वत्र प्राकृतत्वात् पुल्लिङ्गनिर्देशः ॥ मन्दमतिस्मरणायाध्ययनार्थमुपसंहर्तुमाह—राजा सह देव्या ब्राह्मणश्च पुरोहितो ब्राह्मणी दारकौ चैव सर्वाणि तानि 'परिनिर्वृतानि' मुक्तिं गतानीति सूत्रार्थः ॥ ५१-५२-५३ ॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥

षण्णाम् इषुकार-राजादीनां वक्तव्यता ।

इति श्रीनेमिचन्द्रसूरिकृतायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां इषुकारीयाख्यं चतुर्दशमध्ययनं समाप्तम् ॥

# अथ सभिक्षुनामकं पञ्चदशमध्ययनम् ।

व्याख्यातं चतुर्दशमध्ययनम् । सम्प्रति सभिक्षुनामकं पञ्चदशमारभ्यते, अस्य चायमभिसम्बन्धः—'इहाऽनन्तराध्ययने निर्निदानतागुण उक्तः, स च मुख्यतो भिक्षोरेव, भिक्षुश्च गुणत इति तद्गुणा अनेनोच्यन्ते' इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्यादिसूत्रम्—

**मोणं चरिस्सामि समेच्च धम्मं, सहिए उज्जुकडे णियाणछिन्ने ।**
**संथवं जहेज्ज अकामकामे, अन्नायएसी परिवए स भिक्खू ॥ १ ॥**

**व्याख्या**—'मौनं' श्रामण्यं चरिष्यामि इत्यभिप्रायेणेत्युपस्कारः, 'समेत्य' प्राप्य 'धर्मं' श्रुतचारित्रभेदं 'सहितः' समेतोऽन्यसाधुभिरिति गम्यते, न त्वेकाकी, एकाकित्वस्यागमे निषिद्धत्वात् । यदुक्तम्—"एगागियस्स दोसा, इत्थी साणे तहेव पडिणीए । भिक्खविसोहिमहव्वय, तम्हा सेविज्ज दोगमणं ॥ १ ॥" 'ऋजुकृतः' अशठानुष्ठानः "नियाणछिन्न" त्ति निदानं–विषयाऽभिष्वङ्गात्मकं तत् छिन्नम्–अपनीतं येन स छिन्ननिदानः 'संस्तवं' मात्रादिभिः परिचयं 'जह्यात्' त्यजेत्, न कामकामः–कामाभिलाषी अकामकामः, अज्ञातः–तपआदिभिर्गुणैः अनवगत एषयते ग्रासादिकम् अज्ञातैषी 'परिव्रजेत्' अनियतविहारितया विहरेत्, "स भिक्खु" त्ति य एवंविधः स भिक्षुः । अनेन सिंहतया निष्क्रम्य सिंहतयैव विहरणं भिक्षुत्वनिबन्धनमुक्तमिति सूत्रार्थः ॥ १ ॥ तच्च सिंहतया विहरणं यथा स्यात् तथा विशेषत आह—

१ "एकाकिनो दोषाः, स्त्री श्वानः तथैव प्रत्यनीकः । भिक्षाविशुद्धि-महाव्रतं, तस्मात्सेवेत द्विगमनम् ॥ १ ॥"

राओवरयं चरेज्ज लाढे, विरए वेदवियाऽऽयरक्खिए।
पन्ने अभिभूय सव्वदंसी, जे कम्हि वि ण मुच्छिए स भिक्खू ॥ २ ॥

व्याख्या—"रागोवरयं" ति उपरतरागो यथा भवत्येवं 'चरेत्' विहरेत् "लाढे" त्ति 'लष्टः' सदनुष्ठानतया प्रधानः 'विरतः' असंयमाद् निवृत्तः 'वेदवित्' आगमवेदी "आयरक्खिय" त्ति रक्षितो दुर्गतेः तद्धेत्वसदनुष्ठानवर्जनत आत्मा येन स रक्षितात्मा, परनिपातः सर्वत्र प्राकृतत्वात्। 'प्रज्ञः' हेयोपादेयबुद्धिमान् अभिभूय परीषहोपसर्गानिति गम्यते, सर्वं-गम्यमानत्वात् प्राणिगणं पश्यति—आत्मवत् प्रेक्षते सर्वदर्शी यः कस्मिश्चित् सचित्तादिवस्तुनि न मूर्च्छितः न भिक्षुरिति सूत्रार्थः ॥ २ ॥ अन्यच्च—

अक्कोसवहं विइत्तु धीरे, मुणी चरे लाढे णिच्चमायगुत्ते।
अव्वग्गमणे असंपहिट्ठे, जे कसिणं अहियासए स भिक्खू ॥ ३ ॥

व्याख्या—आक्रोशश्च वधश्च आक्रोशवधं तद् 'विदित्वा' स्वकृतकर्मफलमेतदिति मत्वा 'धीरः' अक्षोभ्यः मुनिश्चरेद् अप्रतिबद्धविहारेणेति गम्यते, "लाढि" त्ति प्राग्वत् 'नित्यं' सदा "आयगुत्ते" त्ति गुप्तः—रक्षितोऽसंयमस्थानेभ्य आत्मा येन स तथा, अव्यग्रम्—अनाकुलम् असमञ्जसचिन्तोपरमतो मनो यस्य सोऽव्यग्रमनाः, 'असम्प्रहृष्टः' आक्रोशदानादिषु न प्रहर्षवान्। यथा कश्चिदाह—"कश्चित्पुमान् क्षिपति मां परिरूक्षवाक्यैः, श्रीमत्क्षमाभरणमेत्य मुदं व्रजामि।" इत्यादि। प्रकृतोपसंहारमाह—यः 'कृत्स्नं' समस्तमाक्रोशवधम् 'अध्यास्ते' सहते स भिक्षुरिति सूत्रार्थः ॥ ३ ॥ किञ्च—

पंतं सयणासणं भइत्ता, सीउण्हं विविहं च दंसमसगं।
अव्वग्गमणे असंपहिट्ठे, जे कसिणं अहियासए स भिक्खू ॥ ४ ॥

भिक्षोर्गुण-वक्तव्यता।

भिक्षोर्गुणवक्तव्यता।

व्याख्या—'प्रान्तम्' अधमं शयनासनम्, उपलक्षणत्वाद् भोजनाच्छादनादि च 'भुक्त्वा' सेवित्वा शीतोष्णं चस्य गम्यमानत्वात् 'विविधं च' नानाप्रकारं दंशमशकं प्राप्येति शेषः, सर्वत्र च समाहारद्वन्द्वः, अव्यग्रमना असम्प्रहृष्टो यः कृत्स्नमध्यास्ते स भिक्षुरिति सूत्रार्थः ॥ ४ ॥ अपरञ्च—

**णो सक्कियमिच्छती न पूयं, णो वि य वंदणगं कुओ पसंसं ?।**
**से संजए सुव्वए तवस्सी, सहिए आयगवेसए स भिक्खू ॥ ५ ॥**

व्याख्या—'नो' नैव 'सत्कृतं' सत्कारम् अभ्युत्थानाऽनुगमादिरूपम् 'इच्छति' अभिलषति, न 'पूजां' वस्त्रादिसपर्याम्, 'नोऽपि च' नैव च 'वन्दनकं' द्वादशावर्त्तादिरूपम्, कुतः 'प्रशंसां' निजगुणोत्कीर्त्तनरूपाम् ?, नैवेच्छतीत्यभिप्रायः। 'सः' एवंविधः सम्यग् यतते सदनुष्ठानं प्रतीति संयतः 'सुव्रतः' शोभनव्रतः 'तपस्वी' प्रशस्यतपाः 'सहितः' पूर्ववद्, आत्मानं कर्मविगमात् शुद्धरूपं गवेषयति—मृगयति इति आत्मगवेषको यः स भिक्षुरिति सूत्रार्थः ॥ ५ ॥ तथा—

**जेण पुण जहाइ जीवियं, मोहं वा कसिणं णियच्छई।**
**नरनारिं पजहे सया तवस्सी, ण य कोऊहलं उवेइ स भिक्खू ॥ ६ ॥**

व्याख्या—'येन' हेतुभूतेन पुनःशब्दोऽस्य सर्वथा संयमघातित्वविशेषद्योतकः 'जहाति' त्यजति 'जीवितं' संयमजीवितं 'मोहं वा' मोहनीयं कषायनोकषायादिरूपं 'कृत्स्नं' समस्तं 'नियच्छति' बध्नाति, तदेवंविधं नरश्च नारी च नरनारि 'प्रजह्यात्' त्यजेद् यः सदा तपस्वी, न च 'कुतूहलं' रूपादिविषयमुपैति स भिक्षुरिति सूत्रार्थः ॥ ६ ॥ सम्प्रति पिण्डविशुद्धिद्वारेण सभिक्षुत्वमाह—

भिक्षोर्गुण-वक्तव्यता ।

छिन्नं सरं भोमं अंतलिक्खं, सुमिणं लक्खण दंड वत्थुविज्जं ।
अंगवियारं सरस्सविजयं, जे विज्जाहिं ण जीवई स भिक्खू ॥ ७ ॥

वस्त्रशुभाशुभफलयन्त्रम्—

| | | |
|---|---|---|
| देव | आसु | देव |
| मनु | राक्ष | मनु |
| देव | आसु | देव |

व्याख्या—छेदनं छिन्नं वसनदशनादीनां, तद्विपयशुभाऽशुभनिरूपिका विद्याऽपि छिन्नमित्युक्ता, एवं सर्वत्र । छिन्नादिकानि—[1]"अंजण-खंजण-कद्दमलित्ते, मूसगभक्खिय अग्गिविदड्ढे । तुन्निय-कुट्टिय-पज्जवलीढे, होइ विवागु सुहो असुहो वा ॥ १ ॥ देवेसु उत्तमो लाभो, माणुस्सेसु य मज्झिमो । आसुरेसु य गेलन्नं, मरणं जाण रक्खसे ॥ २ ॥ इत्यादि । दैविकादिभागव्यवस्था पुनः—[2]चत्तारि देवयाभागा, दो य भागा य माणुसा । आसुरा य दुवे भागा, मज्झे वत्थस्स रक्खसो ॥ १ ॥" तथा "सरं" ति स्वरस्वरूपाभिधानम्—[3]"सज्जं रवइ मऊरो, कुक्कुडो रिसहं सरं । हंसो रवइ गंधारं, मज्झिमं तु गवेलए ॥ १ ॥ तथा—सज्जेण लहइ वित्तिं, कयं च न विणस्सइ । गावो पुत्ता य मित्ता य, नारीणं होइ वल्लहो ॥२॥ रिसहेण उ ईसरियं, सेणावच्चं धणाणि य ।" इत्यादि । तथा भूमौ भवं 'भौमं' भूकम्पादिलक्षणम्, यथा—"शब्देन महता भूमिर्यदा रसति कम्पते । सेनापतिरमात्यश्च, राजा राष्ट्रं च पीड्यते ॥१॥" इत्यादि । तथा अन्तरिक्षम्—आकाशं तत्र भवमान्तरिक्षं गन्धर्वनगरादिलक्षणम्, यथा—"कपिलं सस्यघाताय, माञ्जिष्ठं हरणं गवाम् । अव्यक्तवर्णं

---

१ "अञ्जन-खञ्जन-कर्दमलिप्ते, मूपकभक्षितेऽग्निविदग्धे । तूर्णित-कुट्टित-पर्यवलीढे, भवति विपाक: शुभोऽशुभो वा ॥ १ ॥ देवेषु उत्तमो लाभो, मानुष्येषु च मध्यम । आसुरेषु च ग्लान्यं, मरणं जानीहि राक्षसे ॥ २ ॥  २ चत्वारो देवताभागा, द्वौ च भागौ च मानुषौ । आसुरीयो च द्वौ भागौ, मध्ये वस्त्रस्य राक्षसः ॥ १ ॥"  ३ "षड्जं रौति मयूरः, कुर्कुट ऋषभं स्वरम् । हंसो रौति गान्धारं, मध्यमं तु गवेलकः ॥ १ ॥ षड्जेन लभते वृत्तिं, कृतं च न विनश्यति । गावः पुत्राश्च मित्राणि च, नारीणां भवति वल्लभः ॥ १ ॥ ऋषभेण ऐश्वर्यं, सेनापत्यं धनानि च ।"

कुरुते, बलक्षोभं न संशयः ॥१॥ गान्धर्वनगरं स्निग्धं, सप्राकारं सतोरणम् । सौम्यां दिशं समाश्रित्य, राज्ञस्तद्विजयङ्करम् ॥२॥" इत्यादि । तथा 'स्वप्नं' स्वप्नगतं शुभाऽशुभकथनम्, यथा—"गायने रोदनं ब्रूयाद्, नर्त्तने वधबन्धनम् । हसने शोचनं ब्रूयात्, पठने कलहं तथा ॥१॥" इत्यादि । तथा 'लक्षणं' स्त्रीपुरुषादीनाम्, यथा—"[1]चंक्खुसिणेहे सुहिओ, दंतसिणेहे य भोयणं मिट्ठं । तयणेहेण य सोक्खं, नहनेहे होइ परमधणं ॥१॥" इत्यादि । तथा "दंड" त्ति 'दण्डः' यष्टिः, तत्स्वरूपकथनम्—"[2]एगंपव्वं पसंसंती"त्यादि । तथा 'वास्तुविद्या' प्रासादादिलक्षणाभिधायकं शास्त्रम् । तथा 'अङ्गविकारः' शिरःस्फुरणादिः, तच्छुभाशुभस्वरूपकथनम्, यथा—"[3]सिरफुरणे किर रज्जमि"त्यादि । तथा स्वरस्य—दुर्गाशिवादिरुतरूपस्य विजयः—तत्सम्बन्धी शुभाशुभनिरूपणाभ्यासः, यथा—"[4]सामा-सारस-वायस-कोसिय-सियवत्त-रासह-सिवाओ । जंबुय-वसहा वामा, पत्थाणे कज्जसिद्धियरा ॥ १ ॥" इत्यादि । ततो य एताभिर्विद्याभिर्न जीवति नैता एव जीविकाः प्रकल्प्य प्राणान् धारयति स भिक्षुरिति सूत्रार्थः ॥ ७ ॥ तथा—

**मंतं मूलं विविहं विज्जचिंतं, वमण-विरेयण-धूम-नेत्त-सिणाणं ।**
**आउरे सरणं तिगिच्छियं च, तं परिन्नाय परिव्वए स भिक्खू ॥ ८ ॥**

व्याख्या—'मन्त्रम्' ॐकारादिस्वाहापर्यन्तम् 'मूलं' मूलिका कोशाभिहितं शरपुङ्खामूलिकादि 'विविधं' नानाप्रकारं 'वैद्यचिन्तां' वैद्यसम्बन्धिनीं पथ्यौषधादिव्यापारात्मिकां चिन्ताम्, यथा—"वर्जयेद् द्विदलं शूली, कुष्ठी मांसं ज्वरी

१ "चक्षुःस्नेहे सुखितो, दन्तस्नेहे च भोजनं मिष्टम् । त्वक्स्नेहेन च सौख्यं, नखस्नेहे भवति परमधनम् ॥ १ ॥" २ "एकपर्वा प्रशंसन्ति" । ३ "शिरःस्फुरणे किल राज्यम्" । ४ "श्यामा-सारस-वायस-कौशिक-शतपत्र-रासभ-शिवा. । जम्बुक-वृषभा वामाः प्रस्थाने कार्यसिद्धिकराः ॥ १ ॥"

पानम्। नग्ननग्नमनीनारी, नेत्ररोगी च मैथुनम् ॥१॥" इत्यादि। वमनम्—उद्गिरणम्, विरेचनं—कोष्ठशुद्धिरूपम्, धूमं—मनःशिलादिसम्बन्धि, "नेत्तं" ति नेत्रशब्देन नेत्रसंस्कारकमिह समीराञ्जनादि गृह्यते, स्नानम्—अपत्यार्थं मन्त्रौषधिसंस्कृतजलाभिषेचनम्, वमनादीनां च समाहारद्वन्द्वः। "आउरे सरणं" ति सुब्व्यत्ययाद् 'आतुरस्य' रोगपीडितस्य 'स्मरणं' 'हा तात! हा मातः!' इत्यादिरूपम्, 'चिकित्सितं च' आत्मनो रोगप्रतीकाररूपम्, 'तद्' इति यदनन्तरमुक्तं वमनादि "परिन्नाय" त्ति ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया च प्रत्याख्याय 'परिव्रजेत्' संयममार्गे परिगच्छेद् यः स भिक्षुरिति सूत्रार्थः ॥ ८ ॥ अपरं च—

> **खत्तिय-गण-उग्ग-रायपुत्ता, माहण भोइय विविहा य सिप्पिणो।**
> **नो तेसिं वयइ सिलोगपूयं, तं परिन्नाय परिव्वए स भिक्खू ॥ ९ ॥**

व्याख्या—क्षत्रियाः—राजानः गणाः—मल्लादिसमूहाः उग्राः—आरक्षिकादयः राजपुत्राः—नृपसुता एतेषां द्वन्द्वः। 'माहनाः' ब्राह्मणाः 'भोगिकाः' विशिष्टनेपथ्यादिभोगवन्तोऽमात्यादयः, उभयत्र सुपो लुक्। विविधाश्च 'शिल्पिनः' स्वपकादयः इति शेषः। 'नो' नैव तेषां 'वदति' भाषते श्लोकपूजे, यथा—शोभना एते, पूजयत चैतानिति, उभयत्र पापानुमत्यादिदोषसम्भवात्। किन्तु 'तत्' श्लोकपूजादिकं द्विविधयाऽपि परिज्ञया परिज्ञाय परिव्रजेद् यः स भिक्षुरिति सूत्रार्थः ॥ ९ ॥ अन्यच्च—

> **गिहिणो जे पव्वइएण दिट्ठा, अप्पव्वइएण व संथुया हवेज्जा।**
> **तेसिं इहलोइयप्फलट्ठा, जो संथवं न करेइ स भिक्खू ॥ १० ॥**

भिक्षोर्गुण-वक्तव्यता।

भिक्षोर्गुणवक्तव्यता ।

ाख्या—गृहिणो ये प्रव्रजितेन दृष्टाः 'अप्रव्रजितेन वा' गृहस्थावस्थेन सह 'संस्तुताः' परिचिता भवेयुः, "तेसिं" ति तैः सह 'ऐहलौकिकफलार्थं' वस्त्रादिलाभनिमित्तं यः 'सस्तवं' परिचयं न करोति स भिक्षुरिति सूत्रार्थः ॥ १० ॥ तथा—

**सयणासणपाणभोयणं, विविहं खाइम-साइमं परेसिं ।**
**अदए पडिसेहिए नियंठे, जे तत्थ ण पउस्सई स भिक्खू ॥ ११ ॥**

**व्याख्या**—शयनासनपानभोजनं विविधं खादिमस्वादिमं "परेसि" ति 'परेभ्यः' गृहस्थादिभ्यः "अदए" त्ति अददद्भ्यः 'प्रतिषिद्धः' कश्चित् कारणान्तरेण याचमानो निराकृतः 'निर्ग्रन्थः' ग्रन्थरहितो यः 'तत्र' अदाने 'न प्रदुष्यति' न प्रद्वेषं याति स भिक्षुरिति सूत्रार्थः ॥ ११ ॥ तथा—

**जं किंचि आहारपाणं विविहं, खाइम-साइमं परेसिं लद्धुं ।**
**जो तं तिविहेण णाणुकंपे, मणवयकायसुसंवुडे जे स भिक्खू ॥ १२ ॥**

**व्याख्या**—'यत् किञ्चिद्' अल्पमपि आहारपानं विविधं खादिमस्वादिमं च, चस्य गम्यमानत्वात् परेभ्यो लब्ध्वा यः "तं" ति सुब्व्यत्ययात् तेनाहारादिना 'त्रिविधेन' मनोवाक्कायलक्षणेन प्रकाररूपेण 'न अनुकम्पते' बालग्लानादीन् नोपकुरुते न स भिक्षुरिति शेषः । यस्तु सुसंवृतमनोवाक्कायः सन् बालग्लानादीननुकम्पत इति गम्यते, उक्तञ्च—"साहवो तो वि जत्तेण, निमंतेज्ज जहक्कमं । जइ इत्थ केइ इच्छेज्जा, तेहिं सद्धिं तु भुंजए ॥ १ ॥" स भिक्षुरिति सूत्रार्थः ॥ १२ ॥ किञ्च—

१ "साधवस्ततोऽपि यत्नेन निमन्त्रयेयुर्यथाक्रमम् । यद्यत्र केऽपि इच्छेयुः तै. सार्धं तु भुञ्जीरन् ॥ १ ॥"

भिक्षोर्गुण-वक्तव्यता।

आयामगं चेव जवोदणं च, सीयं सोवीरजवोदगं च।
णो हीलए पिंडं णीरसं तु, पंतकुलाइं परिव्वए स भिक्खू ॥ १३ ॥

व्याख्या—आयाममेव 'आयामकम्' अवश्रावणं 'चः' समुच्चये, 'एवः' पूरणे, 'यवोदनं च' यवभक्तं 'शीतं' शीतलं सौवीरं च–काञ्जिकं यवोदकं च–यवधावनं सौवीरयवोदकम्, तच्च 'नो हीलयेत्' धिगिदं किमनेनानिष्टेन ? इति न निन्देत्, 'पिण्डम्' आयामकादि एव नीरसमपि, तुशब्दस्य अप्यर्थत्वाद् अत एव प्रान्तकुलानि यः परिव्रजेत् स भिक्षुरिति सूत्रार्थः ॥ १३ ॥ अन्यच्च—

सद्दा विविहा भवंति लोए, दिव्वा माणुस्सया तहा तिरिच्छा।
भीमा भयभेरवा उराला, जो सोच्चा ण विहेज्जई स भिक्खू ॥ १४ ॥

व्याख्या—शब्दाः 'विविधाः' विमर्गप्रद्वेपादिना विधीयमानतया नानाप्रकारा भवन्ति लोके 'दिव्याः' देवसम्बन्धिनः 'मानुष्यकाः' मनुष्यसम्बन्धिनः, तथा 'तैरश्चाः' तिर्यक्सम्बन्धिनः 'भीमाः' रौद्राः, भयेन भैरवाः–अत्यन्तसाध्वसोत्पादका भयभैरवाः 'उदाराः' महान्तः, यः श्रुत्वा प्रक्रमात् तानेव शब्दान् 'न व्यथते' धर्मध्यानतो न चलति स भिक्षुरिति सूत्रार्थः ॥ १४ ॥ इत्येतावता सिंहविहारितायां निमित्तमुक्तम्, सम्प्रति समस्तधर्ममूलसम्यक्त्वस्थैर्यमाह—

वायं विविहं समिच्च लोए, सहिए खेयाणुगए य कोवियप्पा।
पन्ने अभिभूय सव्वदंसी, उवसंते अविहेडए स भिक्खू ॥ १५ ॥

व्याख्या—वादं 'विविधं' "मुण्डस्य भवति धर्मः, तथा जटाभिः सवाससां धर्मः। गृहवासेऽपि च धर्मो, वनेऽपि वसता भवति धर्मः ॥ १ ॥" इत्यादिदर्शनान्तराभिप्रायरूपं 'समेत्य' ज्ञात्वा लोके सहितः प्राग्वत्, खेदयत्यनेन कर्मेति

खेदः-संयमस्तेनाऽनुगतः 'चः' पूरणे, कोविदः-लब्धशास्त्रपरमार्थ आत्मा यस्य स कोविदात्मा, "पन्ने अभिभूय सव्वदंसी उवसते" त्ति प्राग्वत्, "अविहेठकः" न कस्यचिद् विबाधको यः स भिक्षुरिति सूत्रार्थः ॥ १५ ॥ तथा—

**असिप्पजीवी अगिहे अमित्ते, जिइंदिए सव्वओ विप्पमुक्के ।**
**अणुक्कसाई लहुअप्पभक्खी, चिच्चा गिहं एगयरे स भिक्खू ॥ १६ ॥ त्ति बेमि ॥**

व्याख्या—'अशिल्पजीवी' चित्रादिविज्ञानजीविकारहितः 'अगृहः' अनगारः "अमित्ते" त्ति उपलक्षणत्वाद् अमित्रशत्रुः जितेन्द्रियः, तथा 'सर्वतः' बाह्याभ्यन्तराच्च ग्रन्थादिति गम्यते विप्रमुक्तः, तथा 'अणुकषायी' स्वल्पकषायः "लहुअप्पभक्खि" त्ति अल्पानि-स्तोकानि लघूनि-निःसाराणि निष्पावादीनि भक्षितुं शीलमस्येत्यल्पलघुभक्षी त्यक्त्वा 'गृहं' द्रव्यभावभेदभिन्नम्, एकः-रागद्वेषरहितः चरत्येकचरो यः स भिक्षुरिति सूत्रार्थः ॥ १६ ॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥

॥ इति श्रीनेमिचन्द्रसूरिरचितायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां पञ्चदशं सभिक्षुनामकमध्ययनं समाप्तम् ॥

# अथ ब्रह्मचर्यसमाधिनामकं षोडशमध्ययनम् ।

व्याख्यातं पञ्चदशमध्ययनम् । अधुना षोडशमध्ययनमारभ्यते, अस्य चायमभिसम्बन्धः—'इहाऽनन्तराध्ययने भिक्षुगुणा उक्ताः, ते च तत्त्वतो ब्रह्मचर्यव्यवस्थितस्य भवन्ति, तदपि च ब्रह्मचर्यगुप्तिपरिज्ञानत इति ता इहाभिधीयन्ते' इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्यादिसूत्रम्—

**सुयं मे आउसं! तेणं भगवया एवमक्खायं—इह खलु थेरेहिं भगवंतेहिं दस बंभचेरसमाहिठाणा पन्नत्ता, जे भिक्खू सोचा णिसम्म संजमबहुले संवरबहुले समाहिबहुले गुत्ते गुत्तिंदिए गुत्तबंभयारी सदा अप्पमत्ते विहरिज्जा ॥ १ ॥**

व्याख्या—श्रुतं मया आयुष्मन् ! तेन भगवता एवं 'आख्यातं' कथितम्, कथम् ? इत्याह—सोपस्कारत्वात् सूत्रस्य यथेति गम्यते, ततो यथा 'इह' प्रवचने 'खलुः' निश्चयेन 'स्थविरैः' गणधरादिभिर्भगवद्भिर्दश ब्रह्मचर्यसमाधिस्थानानि प्रज्ञप्तानि, कोऽभिप्रायः ?—नैषामियं स्वमनीषिका, किन्तु भगवताऽप्येवमाख्यातं मया श्रुतम्, ततोऽत्र माऽनास्थां कृथाः । तान्येव विशिनष्टि—'ये' इति यानि भिक्षुः 'श्रुत्वा' आकर्ण्य 'निशम्य' अर्थतोऽवधार्य "संजमबहुले" त्ति प्राकृतत्वाद् बहुलः–प्रभूत उत्तरोत्तरस्थानाप्त्या संयमोऽस्येति बहुलसंयमः, अत एव बहुलसंवरः पञ्चेन्द्रियाणाम् अत एव 'बहुलसमाधिः' चित्तस्वास्थ्यम् 'गुप्तः' मनोवाक्कायैः अत एव गुप्तेन्द्रियः, तत एव गुप्तं–नवगुप्तिसेवनाद् ब्रह्मेति–ब्रह्मचर्यं चरितुं शीलमस्येति गुप्तब्रह्मचारी 'सदा' सर्वदा अप्रमत्तो विहरेदिति सूत्रार्थः ॥ १ ॥

दश ब्रह्मचर्यसमाधिस्थानानि ।

णो इत्थीहिं सद्धिं सण्णिसिज्जागए विहरित्ता हवइ से निग्गंथे । तं कहमिति चेद् आचार्य आह—णिग्गंथस्स खलु इत्थीहिं सद्धिं सण्णिसेज्जागयस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा, भेयं वा लभिज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हवेज्जा, केवलिपन्नत्ताओ वा धम्माओ भंसेज्जा, तम्हा खलु णो णिग्गंथे इत्थीहिं सद्धिं सन्निसिज्जागए विहरेज्जा ॥ ३ ॥

व्याख्या—नो स्त्रीभिः सार्द्धं सन्निपद्या—पीठाद्यासनं तद्गतः सन् 'विहर्त्ता' अवस्थाता भवति, कोऽर्थः ? ताभिः सहैकासने नोपविशेत्, उत्थितास्वपि तासु मुहूर्त्तं तत्र नोपवेष्टव्यमिति सम्प्रदायः, य एवंविधः स निर्ग्रन्थः । शेषं प्रश्ननिर्वचनाभिधायि पूर्ववदिति सूत्रार्थः ॥ ३ ॥ चतुर्थमाह—

णो इत्थीणं इंदियाइं मणोहराइं मणोरमाइं आलोएत्ता णिज्झाइत्ता हवइ से निग्गंथे । तं कहमिति चेद् आयरियाऽऽह—णिग्गंथस्स खलु इत्थीणं इंदियाइं मणोहराइं मणोरमाइं आलोएमाणस्स निज्झाएमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा, भेयं वा लभिज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हविज्जा, केवलिपन्नत्ताओ वा धम्माओ भंसेज्जा, तम्हा खलु णो णिग्गंथे इत्थीणं इंदियाइं मणोहराइं मणोरमाइं आलोएज्जा णिज्झाइज्जा ॥ ४ ॥

व्याख्या—नो स्त्रीणाम् 'इन्द्रियाणि' नयनादीनि मनः—चित्तं हरन्ति—दृष्टमात्राणि आक्षिपन्तीति मनोहराणि, तथा

मनो रमयन्ति—दर्शनानन्तरमनुचिन्त्यमानान्याह्लादयन्तीति मनोरमाणि 'आलोकिता' ईषद् दृष्टा 'निर्ध्याता' प्रबन्धेन निरीक्षिता भवति यः स निर्ग्रन्थः, अन्यत् प्रतीतमेवेति सूत्रार्थः ॥ ४ ॥ पञ्चममाह—

णो इत्थीणं कुड्डुंतरंसि वा दूसंतरंसि वा भित्तिअंतरंसि वा कूइयसद्दं वा रुइयसद्दं वा गीयसद्दं वा हसियसद्दं वा थणियसद्दं वा कंदियसद्दं वा विलवियसद्दं वा सुणित्ता भवइ से निग्गंथे। तं कहमिति चेदाचार्य आह—इत्थीणं कुड्डुंतरंसि वा दूसंतरंसि वा भित्तिअंतरंसि वा कूइयसद्दं वा रुइयसद्दं वा गीयसद्दं वा हसियसद्दं वा थणियसद्दं वा कंदियसद्दं वा विलवियसद्दं वा सुणमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा, भेयं वा लभिज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हविज्जा, केवलिपन्नत्ताओ वा धम्माओ भंसेज्जा, तम्हा खलु णिग्गंथे णो इत्थीणं कुड्डुंतरंसि वा दूसंतरंसि वा भित्तिअंतरंसि वा कूइयसद्दं वा रुइयसद्दं वा गीयसद्दं वा हसियसद्दं वा थणियसद्दं वा कंदियसद्दं वा विलवियसद्दं वा सुणमाणो विहरेज्जा ॥ ५ ॥

व्याख्या—नो स्त्रीणां कुड्यं—लेष्टुकादिरचितं तेनाऽन्तरं—व्यवधानं कुड्यान्तरं तस्मिन् वा, दूष्यं—वस्त्रं यवनिकारूपं तदन्तरे वा भित्तिः—पक्वेष्टकादिरचिता तदन्तरे वा स्थित्वेति शेषः, 'कूजितशब्दं वा' रतसमये कोकिलादिविहगभाषारूपं 'रुदितशब्दं वा' रतिकलहादिकं 'गीतशब्दं वा' पञ्चमादिहुकृतिरूपं 'हसितशब्दं वा' कहकहादिकं 'स्तनितशब्दं वा'

दश ब्रह्मचर्यसमाधिस्थानानि।

दश ब्रह्मचर्यसमाधिस्थानानि।

कयरे खलु ते थेरेहिं भगवंतेहिं दस बंभचेरसमाहिठाणा पन्नत्ता ? जे भिक्खू सोच्चा णिसम्म संजमबहुले संवरबहुले समाहिबहुले गुत्ते गुत्तिंदिए गुत्तबंभयारी सया अप्पमत्ते विहरिज्जा । इमे खलु ते थेरेहिं भगवंतेहिं दस बंभचेरसमाहिठाणा पन्नत्ता, जे भिक्खू सोच्चा निसम्म संजमबहुले संवरबहुले समाहिबहुले गुत्ते गुत्तिंदिए गुत्तबंभयारी सया अप्पमत्ते विहरेज्जा, तंजहा—विवित्ताइं सयणासणाइं सेविज्जा से निग्गंथे, नो इत्थीपसुपंडगसंसत्ताइं सयणासणाइं सेवित्ता हवइ से निग्गंथे। तं कहं ? इति चेद् आचार्य आह—निग्गंथस्स खलु इत्थीपसुपंडगसंसत्ताइं सयणासणाइं सेवमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जेज्जा, भेदं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हवेज्जा, केवलिपन्नत्ताओ धम्माओ वा भंसिज्जा, तम्हा नो इत्थिपसुपंडगसंसत्ताइं सयणासणाइं सेवित्ता हवइ से निग्गंथे ॥१॥

कतराणीत्यादि प्रश्नसूत्रम्, इमानीत्यादि निर्वचनसूत्रं प्राग्वत् । तान्येवाह—'तद्यथे'त्युपन्यासे, 'विविक्तानि' स्त्रीपशुपण्डकैरनाकीर्णानि शयनासनानि उपलक्षणत्वात् स्थानानि च सेवेत यः स निर्ग्रन्थो भवतीति शेषः । इत्थमन्वयेनाऽभिधायाव्युत्पन्नविनेयानुग्रहायामुमेवार्थं व्यतिरेकत आह—'नो' नैव स्त्रीपशुपण्डकसंसक्तानि शयनासनानि 'सेविता' उपभोक्ता भवति । 'तदि' ति अनन्तरोक्तं 'कथं' केन प्रकारेण ? 'इति चेद्' एवं यदि मन्यसे अत्रोच्यते—निर्ग्रन्थस्य खलु निश्चितं स्त्रीपशुपण्डकसंसक्तानि शयनासनानि सेवमानस्य "बंभयारिस्स" त्ति अपेर्गम्यमानत्वाद् ब्रह्मचारिणोऽपि सतो ब्रह्मचर्ये 'शङ्का वा' इहान्येषामिति गम्यते, ततः शङ्का वाऽन्येषां किमेवंविधशयनास-

नसेवी ब्रह्मचारी ? उत नेति ?, अथवा शङ्का—स्त्र्यादिभिरत्यन्ताऽपहृतचित्ततया विस्मृतसकलाप्तोपदेशस्य "सत्यं वच्मि हितं वच्मि, सारं वच्मि पुनः पुनः । अस्मिन्नसारे संसारे, सारं सारङ्गलोचना ॥ १ ॥" इत्यादिरागातुरवचः परिभावयतो मिथ्यात्वोदयतः कदाचित् 'तदासेवने यो दोप उक्तस्तीर्थकृद्भिः स दोप एव न भवति' इत्येवंरूपः संशय उत्पद्यते, 'काङ्क्षा वा' स्त्र्याद्यभिलापरूपा, "प्रियादर्शनमेवाऽस्तु, किमन्यैर्दर्शनान्तरैः । प्राप्यते येन निर्वाणं, सरागेणाऽपि चेतसा ? ॥ १ ॥" इत्याद्यभिधायिका नीलपटादिदर्शनाऽऽग्रहरूपा वा, 'विचिकित्सा वा' 'किमेतावतः कष्टानुष्ठानस्य फलं भविष्यति न वा ? तद्वरमेतदासेवनमेवाऽस्तु' इत्येवंरूपा 'समुत्पद्येत' जायेत, 'भेदं वा' विनाशं वा चारित्रस्येति गम्यते लभेत, 'उन्मादं वा' कामग्रहात्मकं प्राप्नुयात्, 'दीर्घकालिकं वा' दीर्घकालभाविनं, रोगश्च—दाहज्वरादिः आतङ्कश्च—आशुघाती शूलादिः रोगातङ्कं भवेत्, सम्भवति हि स्त्र्याद्यभिलापातिरेकतोऽरोचकत्वं ततश्च ज्वरादीनि, केवलिप्रज्ञप्ताद् वा 'धर्मात्' श्रुतचारित्ररूपात् समस्ताद् भ्रश्येत्, कस्यचिदतिक्लिष्टकर्मोदयाद् धर्मपरित्यागसम्भवात् । यत एवं 'तस्मा-दि'त्यादिनिगमनवाक्यं सुगममिति सूत्रार्थः ॥ १ ॥ उक्तं प्रथमं समाधिस्थानम् । द्वितीयमाह—

दश ब्रह्मचर्यसमाधिस्थानानि ।

**णो इत्थीणं कथं कहेत्ता हवइ से निग्गंथे । तं कहमिति चेदायरियाऽऽह—निग्गंथस्स खलु इत्थीणं कहं कहेमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जेज्जा, भेयं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं रोगायंकं वा हवेज्जा, केवलिपन्नत्ताओ वा धम्माओ भंसिज्जा, तम्हा नो इत्थीणं कहं कहेज्जा ॥२॥**

व्याख्या—नो स्त्रीणामेकाकिनीनामिति गम्यते, 'कथां' स्त्रीणां वा सम्बन्धिनीं कथां रूपनेपथ्यादिविपयां कथयिता भवति स निर्ग्रन्थः, य एवंविधः स निर्ग्रन्थो न त्वन्य इत्यभिप्रायः । तत् कथमित्यादि पूर्ववदिति सूत्रार्थः ॥२॥ तृतीयमाह—

णो इत्थीहिं सद्धिं सण्णिसिज्जागए विहरित्ता हवइ से निग्गंथे । तं कहमिति चेद् आचार्य आह—णिग्गंथस्स खलु इत्थीहिं सद्धिं सण्णिसेज्जागयस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा, भेयं वा लभिज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हवेज्जा, केवलिपन्नत्ताओ वा धम्माओ भंसेज्जा, तम्हा खलु णो णिग्गंथे इत्थीहिं सद्धिं सन्निसिज्जागए विहरेज्जा ॥ ३ ॥

व्याख्या—नो स्त्रीभिः सार्द्धं सन्निपद्या–पीठाद्यासनं तद्गतः सन् 'विहर्त्ता' अवस्थाता भवति, कोऽर्थः ? ताभिः सहैकासने नोपविशेत्, उत्थितास्वपि तासु मुहूर्त्तं तत्र नोपवेष्टव्यमिति सम्प्रदायः, य एवंविधः स निर्ग्रन्थः । शेषं प्रश्ननिर्वचनाभिधायि पूर्ववदिति सूत्रार्थः ॥ ३ ॥ चतुर्थमाह—

णो इत्थीणं इंदियाइं मणोहराइं मणोरमाइं आलोएत्ता णिज्झाइत्ता हवइ से निग्गंथे। तं कहमिति चेद् आयरियाऽऽह—णिग्गंथस्स खलु इत्थीणं इंदियाइं मणोहराइं मणोरमाइं आलोएमाणस्स निज्झाएमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा, भेयं वा लभिज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हविज्जा, केवलिपन्नत्ताओ वा धम्माओ भंसेज्जा, तम्हा खलु णो णिग्गंथे इत्थीणं इंदियाइं मणोहराइं मणोरमाइं आलोएज्जा णिज्झाइज्जा ॥ ४ ॥

व्याख्या—नो स्त्रीणाम् 'इन्द्रियाणि' नयनादीनि मनः–चित्तं हरन्ति–दृष्टमात्राणि आक्षिपन्तीति मनोहराणि, तथा

मनो रमयन्ति—दर्शनानन्तरमनुचिन्त्यमानान्याह्लादयन्तीति मनोरमाणि 'आलोकिता' ईषद् दृष्टा 'निर्ध्याता' प्रबन्धेन निरीक्षिता भवति यः स निर्ग्रन्थः, अन्यत् प्रतीतमेवेति सूत्रार्थः ॥ ४ ॥ पञ्चममाह—

णो इत्थीणं कुड्डंतरंसि वा दूसंतरंसि वा भित्तिअंतरंसि वा कूइयसद्दं वा रुइयसद्दं वा गीयसद्दं वा हसियसद्दं वा थणियसद्दं वा कंदियसद्दं वा विलवियसद्दं वा सुणित्ता भवइ से निग्गंथे। तं कहमिति चेदाचार्य आह—इत्थीणं कुड्डंतरंसि वा दूसंतरंसि वा भित्तिअंतरंसि वा कूइयसद्दं वा रुइयसद्दं वा गीयसद्दं वा हसियसद्दं वा थणियसद्दं वा कंदियसद्दं वा विलवियसद्दं वा सुणमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा, भेयं वा लभिज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हविज्जा, केवलिपन्नत्ताओ वा धम्माओ भंसेज्जा, तम्हा खलु णिग्गंथे णो इत्थीणं कुड्डंतरंसि वा दूसंतरंसि वा भित्तिअंतरंसि वा कूइयसद्दं वा रुइयसद्दं वा गीयसद्दं वा हसियसद्दं वा थणियसद्दं वा कंदियसद्दं वा विलवियसद्दं वा सुणमाणो विहरेज्जा ॥ ५ ॥

व्याख्या—नो स्त्रीणां कुड्यं—लेष्टुकादिरचितं तेनाऽन्तरं—व्यवधानं कुड्यान्तरं तस्मिन् वा, दूष्यं—वस्त्रं यवनिकारूपं तदन्तरे वा भित्तिः—पक्वेष्टकादिरचिता तदन्तरे वा स्थित्वेति शेषः, 'कूजितशब्दं वा' रतसमये कोकिलादिविहगभाषारूपं 'रुदितशब्दं वा' रतिकलहादिकं 'गीतशब्दं वा' पञ्चमादिहुङ्कृतिरूपं 'हसितशब्दं वा' कहकहादिकं 'स्तनितशब्दं वा'

दश ब्रह्मचर्यसमाधिस्थानानि।

रतिसमयकृतं 'क्रन्दितशब्दं वा' प्रोषितभर्तृकादिकृतं 'विलपितशब्दं वा' प्रलापरूपं श्रोता यो भवति स निर्ग्रन्थः । शेषं स्पष्टमिति सूत्रार्थः ॥ ५ ॥ षष्ठमाह—

**नो निग्गंथे पुव्वरयं पुव्वकीलियं अणुसरित्ता भवइ, तं कहमिति चेद् आयरियाऽऽह— निग्गंथस्स खलु इत्थीणं पुव्वरयं पुव्वकीलियं अणुसरमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा, भेयं वा लभिज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हविज्जा, केवलिपन्नत्ताओ वा धम्माओ भंसेज्जा, तम्हा खलु निग्गंथे नो इत्थीणं पुव्वरयं पुव्वकीलियं अणुसरेज्जा ॥ ६ ॥**

व्याख्या—नो निर्ग्रन्थः पूर्वरतं 'पूर्वक्रीडितं वा' दुरोदरादिरमणात्मकं वाशब्दस्य गम्यमानत्वाद् अनुसर्त्ता भवति । शेषं प्राग्वत् । इति सूत्रार्थः ॥ ६ ॥ सप्तममाह—

**णो पणीयं आहारं आहारेत्ता हवइ से निग्गंथे । तं कहमिति चेदाचार्य आह— निग्गंथस्स खलु पणीयं पाणभोयणं आहारेमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा, भेयं वा लभिज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हविज्जा, केवलिपन्नत्ताओ वा धम्माओ भंसेज्जा तम्हा खलु णो निग्गंथे पणीयं आहारं आहारेज्जा ॥ ७ ॥**

व्याख्या—नो 'प्रणीतं' गलद्बिन्दु, उपलक्षणत्वाद् अन्यमप्यत्यन्तं धातूद्रेककारिणम् आहारम् आहारयिता भवति यः स निर्ग्रन्थः । शेषं प्राग्वत् । इति सूत्रार्थः ॥ ७ ॥ अष्टममाह—

नो अइमायाए पाणभोयणं आहारित्ता हवइ से निग्गंथे । तं कहमिति चेदाचार्य आह—अइमायाए पाणभोयणं आहारेमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा, भेयं वा लभिज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हविज्जा, केवलिपन्नत्ताओ वा धम्माओ भंसेज्जा, तम्हा खलु णो णिग्गंथे अइमायाए पाणभोयणं भुंजेज्जा ॥ ८ ॥

दश ब्रह्मचर्यसमाधिस्थानानि ।

व्याख्या—नो 'अतिमात्रया' "बत्तीस किर कवला, आहारो कुच्छिपूरओ भणिओ । पुरिसस्स महिलियाए, अट्ठावीसं भवे कवला ॥ १ ॥" इत्यागमोक्तमात्रातिक्रमेण पानभोजनमाहारयिता भवति यः स निर्ग्रन्थः । शेषं तथैवेति सूत्रार्थः ॥ ८ ॥ नवममाह—

णो विभूसाणुवाई हवइ से निग्गंथे । तं कहमिति चेद् आयरियाऽऽह—विभूसावत्तिए विभूसियसरीरे इत्थिजणस्स अभिलसणिज्जे हवइ । तओ णं तस्स इत्थिजणेणं अभिलसिज्जमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा, भेयं वा लभिज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हविज्जा, केवलिपन्नत्ताओ वा धम्माओ भंसेज्जा, तम्हा खलु णो णिग्गंथे विभूसाणुवाई सिया ॥ ९ ॥

व्याख्या—नो 'विभूषानुपाती' शरीरोपकरणसंस्कारकर्त्ता भवति यः स निर्ग्रन्थः । शेषं सुगमम् । नवरं "विभूसा-

---

१ "द्वात्रिंशत् किल कवला, आहारः कुक्षिपूरको भणित । पुरुषस्य महेलाया, अष्टाविंशतिर्भवेयु कवलाः ॥ १ ॥"

वत्तिए" त्ति विभूषां वर्त्तयितुं–विधातुं शीलमस्येति विभूषावर्त्ती स एव विभूषावर्त्तिकः, अत एव 'विभूषितशरीरः' स्नानाद्यलङ्कृततनुरिति सूत्रार्थः ॥ ९ ॥ दशममाह—

**णो सद्द-रूव-रस-गंध-फासाणुवाई हवइ से निग्गंथे। तं कहं? इति चेद् आयरियाह—निग्गंथस्स खलु सद्द-रूव-रस-गंध-फासाणुवाइयस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जेज्जा, भेयं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हवेज्जा, केवलिपन्नत्ताओ वा धम्माओ भंसेज्जा, तम्हा खलु णो णिग्गंथे सद्द-रूव-रस-गंध-फासाणुवाई भवइ से निग्गंथे, दसमे बंभचेरसमाहिट्ठाणे हवइ ॥ १० ॥**

व्याख्या—नो शब्द-रूप-रस-गन्ध-स्पर्शान् अनुपतति–अनुयाति शब्दरूपरसगन्धस्पर्शानुपाती भवति यः स निर्ग्रन्थः। शेषं प्राग्वत्। नवरं शब्दः–मन्मनभाषितादिरिति सूत्रार्थः ॥ १० ॥

**भवंति इत्थ सिलोगा। तंजहा—**

भवन्ति 'अत्र' उक्त एवार्थे 'श्लोकाः' पद्यरूपाः, तद्यथा—

**जं विवित्तमणाइन्नं, रहिअं थीजणेण य। बंभचेरस्स रक्खट्ठा, आलयं तु निसेवए ॥ १ ॥**
**मणपल्हायजणणिं, कामरागविवड्ढणिं। बंभचेररओ भिक्खू, थीकहं तु विवज्जए ॥ २ ॥**

व्याख्या—"जं" ति प्राकृतत्वाद् यः 'विविक्तः' रहस्यभूतः प्रक्रमात् तत्रैव वास्तव्यस्त्र्याद्यभावात् 'अनाकीर्णः' तत्प्रयोजनागतः स्त्र्याद्यसङ्कुलः, रहितः अकालचारिणा वन्दनादिनिमित्तागतेन स्त्रीजनेन, कालाकालचारित्वविभागस्तु

दश ब्रह्मचर्यसमाधिस्थानानि ।

ब्रह्मचर्याश्रिताऽगम्—"अट्ठमी-पक्खिए मोत्तुं, वायणाकालमेव य । सेसकालमयंतीओ, नेयाओ अकालचारीओ ॥१॥" पशुपण्डकादिभिर्ब्रह्मचर्यस्य रक्षणार्थमालयं तमिति गम्यते, 'तुः' पूरणे, निषेवते । तथा मनःप्रह्लादजननीं, कामरागः—विषयाभिष्वङ्गः तद्विवर्द्धनीम्, शेषं स्पष्टम् ॥ १–२ ॥

**समं च संथवं थीहिं, संकहं च अभिक्खणं । बंभचेररओ भिक्खू, णिच्चसो परिवज्जए ॥ ३ ॥**

व्याख्या—'समं च' सह 'संस्तवं' परिचयं स्त्रीभिर्निषद्या प्रक्रमाद् एकासनभोगेनेति गम्यते, शेषं स्पष्टम् ॥ ३ ॥

**अंग-पच्चंगसंठाणं, चारुल्लवियपेहियं । बंभचेररओ थीणं, चक्खुगेज्झं विवज्जए ॥ ४ ॥**

व्याख्या—अङ्गानां–शिरःप्रभृतीनां प्रत्यङ्गानां–कुचकक्षादीनां संस्थानम्–आकारः अङ्गप्रत्यङ्गसंस्थानं, चारु–शोभनम् उल्लपितं प्रेक्षितं ब्रह्मचर्यरतः स्त्रीणां सम्बन्धि चक्षुर्ग्राह्यं सद् विवर्जयेत् । किमुक्तं भवति ?—चक्षुषि सति रूपग्रहणमवश्यम्भावि, परं तद्दर्शनेऽपि तत्परिहार एव कर्त्तव्यो न तु रागवशतः पुनः पुनस्तदेव वीक्षणीयम् । उक्तं हि—"असक्क रूवमदट्ठुं, चक्खुगोयरमागयं । रागदोसे उ जे तत्थ, ते बुहो परिवज्जए ॥ १ ॥" ॥ ४ ॥

**कूइयं रुइयं गीयं, हसियं थणिय कंदियं । बंभचेररओ थीणं, सोयगेज्झं विवज्जए ॥ ५ ॥**

व्याख्या—सुगममेव, नवरं कूजितादि विवर्जयेत् । कुड्यान्तरादिष्विति शेषः ॥ ५ ॥

**हासं खिड्डं रतिं दप्पं, सहसाऽवत्तासियाणि य । बंभचेररओ थीणं, नाणुचिंते कयाइ वि ॥ ६ ॥**

व्याख्या—हासं प्रतीतम्, 'क्रीडा' द्यूतरमणादिरूपाम्, 'रतिं' कान्ताऽङ्गसङ्गजनितां प्रीतिम्, 'दर्पं' मानिनीमानद-

1 "अष्टमी-पाक्षिके मुक्त्वा, वाचनाकालमेव च । शेषकालमायान्त्यो, ज्ञेया अकालचार्यः ॥१॥" "अशक्यं रूपमद्रष्टुं, चक्षुर्गोचरमागतम् । रागद्वेषौ तु यौ तत्र, तौ बुधः परिवर्जयेत् ॥१॥"

लनोत्थ गर्वम्, 'सहसाऽवत्रासितानि च' पराङ्मुखदयितादेः सपदि त्रासोत्पादकानि अक्षिस्थगनादीनि, शेषं स्पष्टम् ॥६॥

**पणीयं भत्तपाणं तु, खिप्पं मयविवड्ढणं । बंभचेररओ भिक्खू, णिच्चसो परिवज्जए ॥ ७ ॥**

व्याख्या—सुगमम्, नवरं मदः-कामोद्रेकः ॥ ७ ॥

**धम्मलद्धं मिअं काले, जत्तत्थं पणिहाणवं । नाइमत्तं तु भुंजेज्जा, बंभचेररओ सया ॥ ८ ॥**

व्याख्या—धर्मेण हेतुना न तु कुण्टलादिकरणेन लब्धं धर्मलब्धं 'मितम्' "अद्धमसणस्स सवंजणस्स कुज्जा दवस्स दो भाए । वाउपवियारणट्ठा, छब्भागं ऊणयं कुज्जा ॥१॥" इत्याद्यागमोक्तमानान्वितमाहारमिति गम्यते । 'काले' प्रस्तावे 'यात्रार्थं' संयमनिर्वाहणार्थं न तु रूपाद्यर्थम्, 'प्रणिधानवान्' चित्तस्वास्थ्योपेतो न तु रागद्वेषवशगो भुञ्जीतेति सम्बध्यते, 'न तु' नैव तुशब्दस्योत्तरस्यात्र सम्बन्धात् । 'अतिमात्रं' मात्रातिक्रान्तं भुञ्जीत ब्रह्मचर्ये रतः 'सदा' सर्वदा, कदाचित् कारणतोऽतिमात्राहारस्याप्यदुष्टत्वात् । उक्तञ्च—"कक्खडखेत्तचुओ वा, दुब्बल अद्धाण पविसमाणो वा । खीराइगहण दीहं, बहुं च उवमा अयकडिल्ले ॥ १ ॥" ॥ ८ ॥

**विभूसं परिवज्जेज्जा, सरीरपरिमंडणं । बंभचेररओ भिक्खू, सिंगारत्थं न धारए ॥ ९ ॥**

व्याख्या—'विभूषाम्' उपकरणगतां परिवर्जयेत्, 'शरीरपरिमण्डनं' केशश्मश्रुसमारचनादिकं शृङ्गारार्थं न धारयेदिति सूत्रार्थः ॥ ९ ॥

**सद्दे रूवे य गंधे य, रसे फासे तहेव य । पंचविहे कामगुणे, णिच्चसो परिवज्जए ॥ १० ॥**

---

१ "अर्धमशनस्य सव्यञ्जनस्य कुर्याद् द्रवस्य द्वौ भागौ । वातप्रविचारणार्थं षड्भागमूनं कुर्यात् ॥ १ ॥"

२ "रूक्षादिक्षेत्रच्युतो वा दुर्बलोऽध्वानं प्रविशन् वा । क्षीरादिग्रहणे दीर्घा बहु च उपमा अयःकडिल्लेन ॥ १ ॥"

व्याख्या—स्पष्टमेव, नवरं कामस्य गुणाः—उपकारकाः कामगुणा इति सूत्रदशकार्थः ॥ १० ॥ सम्प्रति यत् प्राक् प्रत्येकमुक्तं शङ्का वा भवेदित्यादि तद् दृष्टान्ततः स्पष्टयितुमाह—

**आलओ थीजणाइन्नो, थीकहा य मणोरमा। संथवो चेव नारीणं, तासिं इंदियदरिसणं ॥ ११ ॥**
**कूइयं रुइयं गीयं, हसियं भुत्तासियाणि य। पणीयं भत्तपाणं च, अतिमायं पाणभोयणं ॥ १२ ॥**
**गत्तभूसणमिट्ठं च, कामभोगा य दुज्जया। नरस्सऽत्तगवेसिस्स, विसं तालउडं जहा ॥ १३ ॥**

व्याख्या—सूत्रत्रयमपि प्रतीतम्, नवरं भुक्तासितानि च स्मृतानीति शेषः, तत्र भुक्तानि—भोगरूपाणि आसितानि—स्त्रयादिभिरेव सहाऽवस्थितानि, हास्याद्युपलक्षणमेतत्, गात्रभूषणमिष्टं चेति, चशब्दोऽप्यर्थः, तत इष्टमप्यास्तां विहितम्, विषं तालपुटं 'यथे'ति यथा तालपुटविषं सद्योघातित्वेन दारुणविपाकं तथा स्त्रीजनाकीर्णालयाद्यपि, शङ्कादिकारणतया संयमरूपभावजीवितस्येतरस्य च नाशहेतुत्वादिति सूत्रत्रयार्थः ॥ ११–१२–१३ ॥ सम्प्रति निगमयितुमाह—

**दुज्जए कामभोगे य, णिच्चसो परिवज्जए। संकाठाणाणि सव्वाणि, वज्जेज्जा पणिहाणवं ॥ १४ ॥**
**धम्मारामे चरे भिक्खू, धिईमं धम्मसारही। धम्मारामरए दंते, बंभचेरसमाहिए ॥ १५ ॥**

व्याख्या—दुर्जयान् कामभोगान् "निच्चसो" त्ति नित्यं परिवर्जयेत्, 'शङ्कास्थानानि च' अनन्तरोक्तानि, पूर्वत्र चस्य भिन्नक्रमत्वात् 'सर्वाणि' दशापि वर्जयेत् 'प्रणिधानवान्' एकाग्रमनाः ॥ एतद्वर्जकश्च किं कुर्याद् ? इत्याह—धर्म आराम इव दुःखसन्तापतप्तानां निर्वृतिहेतुतया धर्मारामस्तस्मिन् चरेद् भिक्षुः धृतिमान्, 'धर्मसारथिः' अन्येषामपि धर्मप्रवर्त्तयिता, धर्मे आरमन्ते धर्मारामाः—सुसाधवस्तेषु रतो न त्वेकाकित्वे धर्मारामरतः, 'दान्तः' उपशान्तो ब्रह्मचर्यसमाहित इति सूत्रद्वयार्थः ॥ १५ ॥ ब्रह्मचर्यविशुद्ध्यर्थोऽयं सर्वोऽप्युपक्रम इति तन्माहात्म्यमाह—

दश ब्रह्मचर्यसमाधिस्थानानि ।

**देव-दाणव-गंधव्वा, जक्ख-रक्खस-किन्नरा। बंभयारिं नमंसंति, दुक्करं जे करंति तं ॥ १६ ॥**

व्याख्या—देव-दानव-गन्धर्वाः यक्ष-राक्षस-किन्नराः, समस्तदेवजात्युपलक्षणमेतद्, एते सर्वेऽपि ब्रह्मचारिणं यतिं नमस्यन्ति 'दुष्करं' दुरनुचरं "जे करेंति" त्ति यः 'करोति' अनुतिष्ठति 'तदि'ति प्रक्रमाद् ब्रह्मचर्यमिति शेषः, इति सूत्रार्थः ॥ १६ ॥ सकलाध्ययनोपसंहारार्थमाह—

**एस धम्मे धुवे णियए, सासए जिणदेसिए। सिद्धा सिज्झंति चाणेणं, सिज्झिस्संति तहावरे ॥१७॥ त्ति बेमि॥**

दश ब्रह्मचर्यसमाधिस्थानानि।

व्याख्या—'एषः' अनन्तरोक्तः 'धर्मः' ब्रह्मचर्यलक्षणः 'ध्रुवः' स्थिरः परप्रवादिभिरप्रकम्प्यतया प्रमाणप्रतिष्ठित इत्यर्थः, 'नित्यः' त्रिकालसम्भवात्, 'शाश्वतः' अनवरतभवनात्, एकार्थिकानि वा एतानि, जिनदेशितः। अस्यैव त्रिकालगोचरं फलमाह—'सिद्धाः' पुरा अनन्तासु उत्सर्पिण्यवसर्पिणीषु, सिध्यन्ति 'चः' समुच्चये विदेहेषु 'अनेन' ब्रह्मचर्यलक्षणेन धर्मेण, सेत्स्यन्ति तथा 'अपरे' अनन्तायामनागताद्धायामिति सूत्रार्थः ॥ १७ ॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥

॥ इति श्रीनेमिचन्द्रसूरिविरचितायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां दशब्रह्मचर्यसमाधिनामकं षोडशमध्ययनं समाप्तम् ॥

# अथ पापश्रमणीयाख्यं सप्तदशमध्ययनम् ।

व्याख्यातं षोडशमध्ययनम्। अधुना पापश्रमणीयाख्यं सप्तदशमारभ्यते, अस्य चायमभिसम्बन्धः—'इहाऽनन्तराध्ययने ब्रह्मचर्यगुप्तय उक्ताः, ताश्च पापस्थानवर्जनादेवाऽऽसेवितुं शक्यन्ते, इति पापश्रमणस्वरूपाभिधानतस्तदेव कात्कोच्यते' इत्यनेन सम्बन्धेनायातस्यास्यादिसूत्रद्वयम्—

पापस्थान-वर्जन-वक्तव्यता ।

जे केइ उ पव्वइए णियंठे, धम्मं सुणेत्ता विणओववन्ने ।
सुदुल्लहं लहिउं बोहिलाभं, विहरेज्ज पच्छा य जहासुहं तु ॥ १ ॥
सेज्जा दढा पाउरणं मि अत्थि, उप्पज्जई भोत्तु तहेव पाउं ।
जाणामि जं वट्टइ आउसु ! त्ति, किं नाम काहामि ? सुएण भंते ! ॥ २ ॥

व्याख्या—'यः कश्चित्' इत्यविवक्षितविशेषः 'तुः' पूरणे, 'प्रव्रजितः' निष्क्रान्तो निर्ग्रन्थः प्राग्वत्। कथं पुनरयं प्रव्रजितः ? इत्याह—'धर्मं' श्रुतचारित्ररूपं 'श्रुत्वा' निशम्य विनयेन—ज्ञानाद्युपचारात्मकेनोपपन्नः—युक्तो विनयोपपन्नः सन् 'सुदुर्लभम्' अतिशयदुष्प्रापं "लभिउं" ति लब्ध्वा 'बोधिलाभं' जिनप्रणीतधर्मप्राप्तिरूपम्, अनेन भावप्रतिपत्त्याऽसौ प्रव्रजित इत्युक्तं भवति। स किम् ? इत्याह—'विहरेत्' चरेत् 'पश्चात्' प्रव्रजितोत्तरकालं 'चः' पुनरर्थो विशेषद्योतकः, ततश्च प्रथमं सिंहवृत्त्या प्रव्रज्य पश्चात्पुनः 'यथासुखं' यथा तथा निद्राविकथादिकरणलक्षणेन प्रकारेण सुखमात्मनोऽवभासते सुखशब्दस्य प्रकारार्थत्वाद् यथासुखमेव शृगालवृत्त्यैव विहरेदित्यर्थः ॥ स च गुरुणाऽन्येन वा हितैषिणाऽध्ययनं प्रति प्रेरितो यद्वक्ति तदाह—'शय्या' वसतिः 'दृढा' वातातपजलाद्युपद्रवैरनभिभाव्या, तथा 'प्रावरणं' वर्षाकल्पादि 'मे'

पापस्थानवर्जनवक्तव्यता ।

केन्द्रियोपलक्षणं चैतद्, अत एवाऽसंयतः, तथा "संजय मन्नमाणे" त्ति कोऽर्थः ? संयतोऽहमिति मन्यमानः, अनेन च संविग्नपाक्षिकत्वमप्यस्य नास्तीत्युक्तम्, शेषं प्राग्वत् ॥ ६ ॥ तथा 'संस्तारकं' कम्बलादि 'फलकं' दारुमयं 'पीठम्' आसनं 'निपद्यां' स्वाध्यायभूमिं 'पादकम्बलं' पादपुञ्छनम् 'अप्रमृज्य' रजोहरणादिना, उपलक्षणत्वाद् अप्रत्युपेक्ष्य च 'आरोहति' उपविशति यः स पापश्रमण इत्युच्यते ॥ ७ ॥ तथा 'दवदवस्स'' त्ति 'द्रुतं द्रुतं' तथाविधालम्बनं विनाऽपि त्वरितं त्वरितं 'सञ्चरति' भिक्षाचर्यादिषु पर्यटति 'प्रमत्तश्च' प्रमादवांश्च भवति इति शेषः, 'अभीक्ष्णं' पुनः पुनः 'उल्लङ्घनश्च' वत्सडिम्भादीनामधःकर्त्ता, 'चण्डश्च' आरभटवृत्त्याऽऽश्रणयतः । चरमपादोऽत्रोत्तरत्र च प्राग्वत् ॥ ८ ॥ तथा प्रतिलेखयति प्रमत्तः सन्, 'अपोज्झति' यत्र तत्र निक्षिपति, किं तत् ? 'पादकम्बलं' पादपुञ्छनम्, समस्तोपध्युपलक्षणमेतत्, स एवं 'प्रतिलेखनाऽनायुक्तः' प्रत्युपेक्षाऽनुपयुक्तः ॥ ९ ॥ तथा प्रतिलेखयति प्रमत्तः स किञ्चिदपि 'हुः' अप्यर्थे विकथादीति गम्यते, 'निशम्य' आकर्ण्य तत्राक्षिप्तचित्ततयेति भावः । गुरून् परिभावयति गुरुपरिभावको नित्यम्, किमुक्तं भवति ?—असम्यक्प्रत्युपेक्षमाणः अन्यद्वा वितथमाचरन् गुरुमिश्रोदितस्तानेव अभिभवति, यथा—स्वयमेव प्रत्युपेक्षध्वम्, युष्माभिरेव वयमित्थं शिक्षिताः ततो युष्माकमेवैष दोष इत्यादि ॥ १० ॥ किञ्च—'बहुमायी' प्रभूतवञ्चनाप्रयोगवान् 'प्रमुखरः' प्रकर्षेण मुखरः स्तब्धः लुब्धः 'अनिग्रहश्च' अविद्यमानेन्द्रियनिग्रहः 'असंविभागी' गुरुग्लानादीनामुचितमशनादि न यच्छति, "अचियत्ते" त्ति गुर्वादिष्वप्यप्रीतिमान्, शेषं तथैव ॥ ११ ॥ तथा 'विवादं' वाक्कलहं 'चः' पूरणे 'उदीरयति' कथञ्चिदुपशान्तमपि उत्प्रासनादिना प्रवृद्धिं नयति, 'अधर्मः' निर्धर्मः, आप्तां—सद्बोधरूपतया हितां प्रज्ञाम्—आत्मनोऽन्येषां वा बुद्धिं कुतर्कव्याकुलीकरणतो हन्ति यः स आप्तप्रज्ञाहा, 'व्युद्ग्रहे' दण्डादिघातजनिते विरोधे 'कलहे' वाचिके 'रक्तः' सक्तः, शेषं प्राग्वत् ॥ १२ ॥ तथा अस्थिरासनः कुकुचः प्राग्वत् । 'यत्र तत्र' संसक्तसरजस्कादावपीत्यर्थः निषीदति

पापस्थान-वर्जन-वक्तव्यता ।

'आसने' पीठादौ 'अनायुक्तः' अनुपयुक्तः सन्, शेषं प्राग्वत् ॥ १३ ॥ तथा सरजस्कपादः स्वपिति, किमुक्तं भवति ?— असंयमं प्रलमीरुतया पादावप्रमृज्यैव शेते, तथा 'शय्यां' वसतिं न प्रतिलेखयति, 'संस्तारके' कम्बलादौ सुप्त इति शेषः, 'अनायुक्तः' "कुक्कुडिपायपसारण आयामेउं पुणो वि आउंटे"[1] इत्याद्यागमानुपयुक्तः, शेषं तथैव ॥ १४ ॥ तपोविषयं पापश्रमणत्वमाह—"दुद्धदही" त्ति दधिदुग्धे, विकृतिहेतुत्वाद् विकृती, उपलक्षणत्वाद् घृताद्यशेषविकृतिपरिग्रहः, आहारयति 'अभीक्ष्णं' वारं वारं तथाविधपुष्टालम्बनं विनेति भावः, अत एव अरतश्च 'तपःकर्मणि' अनशनादौ, शेषं प्राग्वत् ॥ १५ ॥ तथा अस्तमयति 'चः' पूरणे सूर्ये आहारयति 'अभीक्ष्णं' पुनः पुनर्दिने दिने इत्यर्थः, यदि चासौ केनचिद् गीतार्थेनाधुना चोद्यते, यथा—आयुष्मन्! किमेवं त्वयाऽऽहारतत्परेणैव स्थीयते? दुर्लभा खल्वियं मनुजत्वादिचतुरङ्गसामग्री, तत एतामवाप्य तपस्युद्यन्तुमुचितमिति, ततः किम्? इत्याह—"चोइओ पडिचोएइ" त्ति चोदितः प्रतिचोदयति, यथा—कुशलस्त्वमुपदेशदाने न तु स्वयमनुष्ठाने, अन्यथा किमेवमवगच्छन्नपि भवान् न विकृष्टतपोऽनुतिष्ठति?, शेषं तथैव ॥ १६ ॥ 'आचार्यपरित्यागी' ते हि तपःकर्मणि विषीदन्तमुद्यमयन्ति, आनीतमपि चान्नादि बालग्लानादिभ्यो दापयन्ति, अतोऽतीवाहारलोभेन तत्परित्यजनशीलः । परपाषण्डान्—सौगतादीन् "मृद्वी शय्या प्रातरुत्थाय पेया" इत्याद्यभिप्रायतोऽत्यन्ताहारप्रसक्तान् सेवते—तथा तथोपसर्पति इति परपाषण्डसेवकः, तथा स्वेच्छाचारितया गणाद् गणं षण्मासाभ्यन्तर एव सङ्क्रामतीति गाणङ्गणिक इत्यागमिकी परिभाषा, अत एव दुष्टं भूतं—जातमस्य 'दुर्भूतः' दुराचारतया निन्द्यो भूत इत्यर्थः ॥ १७॥ वीर्याचारविषयमाह—स्वकं गृहं परित्यज्य परगेहे "वावडे" त्ति 'व्याप्रियते' पिण्डार्थी सन् तत्कृत्यानि कुरुते, 'निमित्तेन च' शुभाशुभकथनादिना 'व्यवहरति' द्रव्याद्यर्जनं करोति ॥ १८ ॥

१ "कुक्कुटीवत् पादप्रसारणं आयम्य पुनरपि आकुञ्चयेत् ।"

ममाऽस्ति, किञ्च—'उत्पद्यते' जायते 'भोक्तुं' भोजनाय, तथैव 'पातुं' पानाय, यथाक्रममशनं पानं चेति शेषः, तथा 'जानामि' अवगच्छामि 'यद्वर्त्तते' यदिदानीमस्ति 'आयुष्मन्!' इति प्रेरयितुरामन्त्रणम् 'इति' एतस्माद् हेतोः 'किं नाम ?' न किञ्चिदित्यर्थः, "काहामि" त्ति करिष्यामि 'श्रुतेन' आगमेनाऽधीतेनेत्यध्याहारः, 'भदन्ते'ति पूज्यामन्त्रणम्, इह च प्रक्रमादाक्षेपे किंशब्दः । अयं हि किलास्याशयः—'यथा ये भवन्तोऽधीयन्ते तेऽपि नातीन्द्रियं वस्तु किञ्च-नाऽवबुध्यन्ते, तत् किं हृदयगलतालुशोपविधायिनाऽधीतेन ?' इत्येवमध्यवसितो यः स पापश्रमण इत्युच्यते इतीहाऽपि सिंहावलोकितन्यायेन सम्बध्यते इति सूत्रद्वयार्थः ॥ १–२ ॥ किञ्च—

**जे केइ पव्वईए, णिद्दासीले पगामसो भोच्चा । पेच्चा सुहं सुयइ, पावसमणि त्ति वुच्चई ॥ ३ ॥**

व्याख्या—यः कश्चित् प्रव्रजितः 'निद्राशीलः' निद्रावान् 'प्रकामशः' बहुशः 'भुक्त्वा' दध्यौदनादि 'पीत्वा' तक्रादि 'सुखं' यथाभवत्येवं सकलक्रियानुष्ठाननिरपेक्ष एव 'स्वपिति' शेते स इत्थम्भूतः पापश्रमण इत्युच्यत इति सूत्रार्थः ॥३॥ तथा—

**आयरियउवज्झाएहिं, सुयं विणयं च गाहिए । ते चेव खिंसई बाले, पावसमणि त्ति वुच्चई ॥४॥**

**आयरियउवज्झायाणं, सम्मं नो पडितप्पई । अप्पडिपूयए थद्धे, पावसमणि त्ति वुच्चई ॥ ५ ॥**

व्याख्या—आचार्योपाध्यायैः श्रुतं विनयं च 'ग्राहितः' शिक्षितो यैरिति गम्यते 'तानेव' आचार्यादीन् 'खिंसति' निन्दति 'बालः' विवेकविकलो यः स पापश्रमण इत्युच्यत इति ॥ आचार्योपाध्यायानां 'सम्यग्' अवैपरीत्येन 'न प्रति-तप्यते' न तत्तप्तिं विधत्ते, तथा 'अप्रतिपूजकः' केनचित् साधुनोपकृतेऽपि न प्रत्युपकारकारी 'स्तब्धः' गर्वाध्मात आत्मा-नमेव बहुमन्यते यः स पापश्रमण इति सूत्रद्वयार्थः ॥ ४–५ ॥ चारित्रविषयं तमाह—इत्थं विनयरहितं पापश्रमणम-भिधाय चरणकरणविकलं तमेवाह—

सम्मद्दमाणो पाणाणि, वीयाणि हरियाणि य। असंजए संजय मन्नमाणे, पावसमणि त्ति वुच्चई ॥६॥
संथारं फलगं पीढं, णिसिज्जं पायकंबलं। अप्पमज्जियमारुहई, पावसमणि त्ति वुच्चई ॥ ७ ॥
दवदवस्स संचरई, पमत्ते य अभिक्खणं। उल्लंघणे य चंडे य, पावसमणि त्ति वुच्चई ॥ ८ ॥
पडिलेहेइ पमत्ते, अवउज्झइ पायकंबलं। पडिलेहाअणाउत्तो, पावसमणि त्ति वुच्चई ॥ ९ ॥
पडिलेहेइ पमत्ते, से किंचि हु णिसामिया। गुरुं परिभावए णिच्चं, पावसमणि त्ति वुच्चई ॥ १० ॥
बहुमाई पमुहरी, थद्धे लुद्धे अणिग्गहे। असंविभागी अचियत्ते, पावसमणि त्ति वुच्चई ॥ ११ ॥
विवायं च उदीरेइ, अधम्मे अत्तपण्णहा। वुग्गहे कलहे रत्ते, पावसमणि त्ति वुच्चई ॥ १२ ॥
अथिरासणे कुक्कुईए, जत्थ तत्थ णिसीयई। आसणम्मि अणाउत्ते, पावसमणि त्ति वुच्चई ॥ १३ ॥
ससरक्खपाओ सुयई, सेज्जं ण पडिलेहए। संथारए अणाउत्ते, पावसमणि त्ति वुच्चई ॥ १४ ॥
दुद्धदही विगईओ, आहारेइ अभिक्खणं। अरए य तवोकम्मे, पावसमणि त्ति वुच्चई ॥ १५ ॥
अत्थंतम्मि य सूरम्मि, आहारेइ अभिक्खणं। चोइओ पडिचोएइ, पावसमणि त्ति वुच्चई ॥ १६ ॥
आयरियपरिचाई, परपासंडसेवए। गाणंगणिए दुब्भूए, पावसमणि त्ति वुच्चई ॥ १७ ॥
सयं गेहं परिचज्ज, परगेहंसि वावडे। णिमित्तेण य ववहरई, पावसमणि त्ति वुच्चई ॥ १८ ॥
सन्नाइपिंडं जेमेइ, णेच्छई सामुयाणियं। गिहिणिसेज्जं च वाहेइ, पावसमणि त्ति वुच्चई ॥ १९ ॥

व्याख्या—सम्मर्दयन् 'प्राणानि' ति प्राणिनो द्वीन्द्रियादीन् 'वीजानि' शाल्यादीनि 'हरितानि च' दूर्वादीनि, सकलै-

पापस्थान-वर्जन-वक्तव्यता।

केन्द्रियोपलक्षणं चैतद्, अत एवाऽसंयतः, तथा "संजय मन्नमाणे" त्ति कोऽर्थः? संयतोऽहमिति मन्यमानः, अनेन च संविग्नपाक्षिकत्वमप्यस्य नास्तीत्युक्तम्, शेषं प्राग्वत् ॥ ६ ॥ तथा 'संस्तारकं' कम्बलादि 'फलकं' दारुमयं 'पीठम्' आसनं 'निषद्यां' स्वाध्यायभूमिं 'पादकम्बलं' पादपुञ्छनम् 'अप्रमृज्य' रजोहरणादिना, उपलक्षणत्वाद् अप्रत्युपेक्ष्य च 'आरोहति' उपविशति यः स पापश्रमण इत्युच्यते ॥ ७ ॥ तथा 'दवदवस्स" त्ति 'द्रुतं द्रुतं' तथाविधालम्बनं विनाऽपि त्वरितं त्वरितं 'सञ्चरति' भिक्षाचर्यादिषु पर्यटति 'प्रमत्तश्च' प्रमादवांश्च भवति इति शेषः, 'अभीक्ष्णं' पुनः पुनः 'उल्लङ्घनश्च' वत्सडिम्भादीनामधःकर्त्ता, 'चण्डश्च' आरभटवृत्त्याऽऽश्रणयतः । चरमपादोऽत्रोत्तरत्र च प्राग्वत् ॥ ८ ॥ तथा प्रतिलेखयति प्रमत्तः सन्, 'अपोज्झति' यत्र तत्र निक्षिपति, किं तत्? 'पादकम्बलं' पादपुञ्छनम्, समस्तोपध्युपलक्षणमेतत्, स एवं 'प्रतिलेखनाऽनायुक्तः' प्रत्युपेक्षाऽनुपयुक्तः ॥ ९ ॥ तथा प्रतिलेखयति प्रमत्तः स किञ्चिदपि 'हुः' अप्यर्थे विकथादीति गम्यते, 'निशम्य' आकर्ण्य तत्राक्षिप्तचित्ततयेति भावः । गुरून् परिभावयति गुरुपरिभावको नित्यम्, किमुक्तं भवति?—असम्यक्प्रत्युपेक्षमाणः अन्यद्वा वितथमाचरन् गुरुभिश्चोदितस्तानेव अभिभवति, यथा—स्वयमेव प्रत्युपेक्षध्वम्, युष्माभिरेव वयमित्थं शिक्षिताः ततो युष्माकमेवैष दोष इत्यादि ॥ १० ॥ किञ्च—'बहुमायी' प्रभूतवञ्चनाप्रयोगवान् 'प्रमुखरः' प्रकर्षेण मुखरः स्तब्धः लुब्धः 'अनिग्रहश्च' अविद्यमानेन्द्रियनिग्रहः 'असंविभागी' गुरुग्लानादीनामुचितमशनादि न यच्छति, "अचियत्ते" त्ति गुर्वादिष्वप्यप्रीतिमान्, शेषं तथैव ॥ ११ ॥ तथा 'विवाद' वाक्कलहं 'चः' पूरणे 'उदीरयति' कथञ्चिदुपशान्तमपि उत्प्रासनादिना प्रवृद्धिं नयति, 'अधर्मः' निर्धर्मः, आप्तां—सद्बोधरूपतया हितां प्रज्ञाम्—आत्मनोऽन्येषां वा बुद्धिं कुतर्कव्याकुलीकरणतो हन्ति यः स आप्तप्रज्ञाहा, 'व्युद्ग्रहे' दण्डादिघातजनिते विरोधे 'कलहे' वाचिके 'रक्तः' सक्तः, शेषं प्राग्वत् ॥ १२ ॥ तथा अस्थिरासनः कुकुचः प्राग्वत् । 'यत्र तत्र' संसक्तसरजस्कादावपीत्यर्थः निषीदति

पापस्थान-वर्जन-वक्तव्यता ।

'आसने' पीठादौ 'अनायुक्तः' अनुपयुक्तः सन्, शेषं प्राग्वत् ॥ १३ ॥ तथा सरजस्कपादः स्वपिति, किमुक्तं भवति ?— असंगतं प्रत्यवेक्षणया पादावप्रमृज्यैव शेते, तथा 'शय्यां' वसतिं न प्रतिलेखयति, 'संस्तारके' कम्बलादौ सुप्त इति शेषः, 'अनायुक्तः' "कुक्कुडिपायपसारण आयामेउं पुणो वि आउंटे" इत्याद्यागमानुपयुक्तः, शेषं तथैव ॥ १४ ॥ तपोविषयं पापश्रमणत्वमाह—"दुद्धदही" त्ति दधिदुग्धे, विकृतिहेतुत्वाद् विकृती, उपलक्षणत्वाद् घृताद्यशेषविकृतिपरिग्रहः, आहारयति 'अभीक्ष्णं' वारं वारं तथाविधपुष्टालम्बनं विनेति भावः, अत एव अरतश्च 'तपःकर्मणि' अनशनादौ, शेषं प्राग्वत् ॥ १५ ॥ तथा अस्तमयति 'चः' पूरणे सूर्ये आहारयति 'अभीक्ष्णं' पुनः पुनर्दिने दिने इत्यर्थः, यदि चासौ केनचिद् गीतार्थेनाधुना चोद्यते, यथा—आयुष्मन्! किमेवं त्वयाऽऽहारतत्परेणैव स्थीयते? दुर्लभा खल्वियं मनुजत्वादिचतुरङ्गसामग्री, तत एतामवाप्य तपस्युद्यन्तुमुचितमिति, ततः किम्? इत्याह—"चोइओ पडिचोएइ" त्ति चोदितः प्रतिनोदयति, यथा—कुशलस्त्वमुपदेशदाने न तु स्वयमनुष्ठाने, अन्यथा किमेवमवगच्छन्नपि भवान् न विकृष्टतपोऽनुतिष्ठति?, शेषं तथैव ॥ १६ ॥ 'आचार्यपरित्यागी' ते हि तपःकर्मणि विपीदन्तमुद्यमयन्ति, आनीतमपि चान्नादि बालग्लानादिभ्यो ददति, अतोऽतीवाहारलोभेन तत्परित्यजनशीलः । परपाषण्डान्—सौगतादीन् "मृद्वी शय्या प्रातरुत्थाय पेया" इत्याद्यभिप्रायवतोऽत्यन्ताहारप्रसक्तान् सेवते—तथा तथोपसर्पति इति परपाषण्डसेवकः, तथा स्वेच्छाचारितया गणाद् गणं षण्मासाभ्यन्तर एव सङ्क्रामतीति गाणङ्गणिक इत्यागमिकी परिभाषा, अत एव दुष्टं भूतं—जातमस्य 'दुर्भूतः' दुराचारतया निन्द्यो भूत इत्यर्थः ॥ १७ ॥ वीर्याचारविषयमाह—स्वकं गृहं परित्यज्य परगेहे "वावडे" त्ति 'व्याप्रियते' पिण्डार्थी सन्नन्यकृत्यानि कुरुते, 'निमित्तेन च' शुभाशुभकथनादिना 'व्यवहरति' द्रव्याद्यर्जनं करोति ॥ १८ ॥

१ "कुक्कुटीवत्पादप्रसारणं आयम्य पुनरपि आकुञ्चयेत् ।"

स्वज्ञातिभिः—निजबन्धुभिर्यः स्नेहाद् दीयते पिण्डः स स्वज्ञातिपिण्डस्तं 'जेमति' भुङ्क्ते, नेच्छति 'सामुदानिकं' भैक्षम्, गृहिणां निपद्यां पर्यङ्कतूल्यादिकां शय्यां 'वाहयति' सुखशीलतया आरोहतीति सूत्रचतुर्दशकार्थः ॥ १९ ॥ सम्प्रति अध्ययनार्थमुपसंहरन् उक्तरूपदोषाऽऽसेवनपरिहारयोः फलमाह—

**एयारिसे पंचकुसीलऽसंवुडे, रूवंधरे मुणिपवराण हेट्ठिमे ।**
**अयंसि लोए विसमेव गरहिए, ण से इहं णेव परत्थ लोए ॥ २० ॥**
**जे वज्जए एते सदा उ दोसे, से सुव्वए होइ मुणीण मज्झे ।**
**अयंसि लोए अमयं व पूइए, आराहए लोगमिणं तहा परं ॥ २१ ॥ त्ति बेमि ॥**

**व्याख्या**—'एतादृशः' ईदृशः पञ्चकुशीलाः—पार्श्वस्थादयस्तद्वदसंवृतः 'रूपधरः' रजोहरणादिवेषधरः, प्राकृतत्वाच्च विन्दुनिर्देशः, 'मुनिप्रवराणां' प्रवरयतीनां "हेट्ठिमो" त्ति 'अधोवर्त्ती' अतिजघन्यसंयमस्थानवर्त्तितया निकृष्टः, एतत्फलमाह—"अयंसि लोए विसमेव गरहिए न से इहं नेव परत्थ लोए" त्ति अस्मिन् लोके 'विषमिव' गरल इव गर्हितः अत एव स न इह नैव परलोके अर्घतीति शेष इति ॥ यो वर्जयति 'एतान्' उक्तरूपान् "सया उ" त्ति सदैव दोषान् सः 'सुव्रतः' प्रशस्यव्रतो भवति मुनीनां मध्ये तन्मध्ये गण्यत इत्यर्थः, तथा चास्मिन् लोके अमृतमिव पूजितः आराधयति लोकमिमं तथा 'परं' परलोकमिति सूत्रद्वयार्थः ॥ २०–२१ ॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥

**॥ इति श्रीनेमिचन्द्रसूरिकृतायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां पापश्रमणीयाख्यं सप्तदशमध्ययनं समाप्तम् ॥**

# अथ संयतीयाख्यमष्टादशमध्ययनम् ।

सञ्जयराज-वक्तव्यता ।

उक्तं सप्तदशमध्ययनम् । अधुना संयतीयाख्यमष्टादशमारभ्यते, अस्य चायमभिसम्बन्धः—'इहाऽनन्तराध्ययने पापस्थानवर्जनमुक्तम्, तच्च संयतस्यैव, स च भोगर्द्धित्यागत एवेति स एव सञ्जयोदाहरणत इहोच्यते' इत्यनेन सम्बन्धेनायातस्यास्यादिसूत्रम्—

**कंपिल्ले नगरे राया, उदिन्नबलवाहणो । णामेणं संजए णामं, मिगव्वं उवणिग्गए ॥ १ ॥**

व्याख्या—काम्पिल्ये नगरे राजा, उदीर्णम्—उदयप्राप्तं बलं—चतुरङ्गं वाहनं च—गिल्लिथिल्ल्यादिरूपं यस्य सः, तथा स च नाम्ना सञ्जयः 'नामे'ति प्राकाश्ये, ततः सञ्जय इति प्रसिद्धः, 'मृगव्यां' मृगयां, पाठान्तरेण मृगवधं वा प्रतीति शेषः, 'उपनिर्गतः' निर्यातः तत एव नगरादिति गम्यते इति सूत्रार्थः ॥१॥ स च कीदृग् विनिर्गतः ? किं च कृतवान् ? इत्याह—

**हयाणीए गयाणीए, रहाणीए तहेव य । पायत्ताणीए महया, सव्वओ परिवारिए ॥ २ ॥**
**मिए छुभित्ता हयगओ, कंपिल्लुज्जाणकेसरे । भीए संते मिए तत्थ, वहेइ रसमुच्छिए ॥ ३ ॥**

व्याख्या—सुब्व्यत्ययाद् हयानीकेन गजानीकेन रथानीकेन, तथैव च पदातीनां समूहः पादातं तदनीकेन महता सर्वतः परिवारितः मृगान् 'क्षिप्त्वा' प्रेरयित्वा 'हयगतः' अश्वारूढः, "कंपिल्लुज्जाणकेसरे" त्ति काम्पिल्यस्य सम्बन्धिनि केशरनाम्न्युद्याने 'भीतान् त्रस्तान् 'श्रान्तान्' इतस्ततः प्रेरणेन खिन्नान् 'मितान्' परिमितान् 'तत्र' तेषु मृगेषु मध्ये "वहेइ" त्ति हन्ति रसमूर्च्छित इति सूत्रद्वयार्थः ॥ २–३ ॥ अत्रान्तरे यदभूत् तदाह—

**अह केसरम्मि उज्जाणे, अणगारे तवोधणे । सज्झायज्झाणसंजुत्ते, धम्मज्झाणं झियायइ ॥ ४ ॥**

**अप्फोवमंडवम्मी, झायइ झवियासवे । तस्सागए मिगे पासं, वहेइ से णराहिवे ॥ ५ ॥**

व्याख्या—'अथ' अनन्तरं केसरे उद्याने अनगारः तपोधनः स्वाध्यायध्यानसंयुक्तः अत एव धर्मध्यानं ध्यायति ॥ ''अप्फोवमंडवम्मि'' त्ति अप्फोव इति–वृक्षाद्याकीर्णः स चासौ मण्डपश्च–नागवल्ल्यादिसम्बन्धी अप्फोवमण्डपस्तस्मिन् ध्यायति धर्मध्यानमिति गम्यते, पुनरभिधानम् अतिशयख्यापकम्, ''झविय'' त्ति क्षपिता आश्रवाः–हिंसादयो येन स तथा, 'तस्य' अनगारस्य 'आगतान्' मृगान् 'पार्श्व' समीपं हन्ति स नराधिप इति सूत्रद्वयार्थः ॥ ४–५ ॥

**अह आसगओ राया, खिप्पमागम्म सो तहिं । हए मिगे उ पासित्ता, अणगारं तत्थ पासई ॥ ६ ॥**

व्याख्या—'अथ' अनन्तरम् अश्वगतो राजा क्षिप्रमाऽऽगत्य सः 'तस्मिन्' मण्डपे हतान् ''मिगे उ'' त्ति मृगानेव न पुनरनगारमित्यर्थः दृष्ट्वा अनगारं तत्र पश्यति च इति सूत्रार्थः ॥ ६ ॥ ततः किमकार्षीत्? इत्याह—

**अह राया तत्थ संभंतो, अणगारो मणाऽऽहओ । मए उ मंदपुन्नेणं, रसगिद्धेण घत्तुणा ॥ ७ ॥**
**आसं विसज्जइत्ता णं, अणगारस्स सो णिवो । विणएणं वंदई पाए, भगवं! एत्थ मे खमे ॥ ८ ॥**
**अह मोणेण सो भगवं, अणगारे झाणमस्सिए । रायाणं ण पडिमंतेइ, तओ राया भयद्दुओ ॥ ९ ॥**
**संजओ अहमस्सी ति, भगवं! वाहराहि मे । कुद्धे तेएण अणगारे, डहेज्ज णरकोडिओ ॥ १० ॥**

व्याख्या—अथ राजा 'तत्रे'ति तद्दर्शने सति 'सम्भ्रान्तः' मीतो यथा अनगारो 'मनाक्' स्तोकेनैव आहतः, तदासन्नमृगहननाद् इत्यभिप्रायः, मया 'तुः' पूरणे, मन्दपुण्येन रसगृद्धेन ''घत्तुण'' त्ति 'घातुकेन' हननशीलेन ॥ ततश्च अश्वं 'विसृज्य' विमुच्य ''णं'' प्राग्वद् अनगारस्य स नृपः विनयेन वन्दते पादौ, वक्ति च—यथा भगवन्! 'अत्र' मृगवधे ममाऽपराधमिति शेषः क्षमस्व ॥ अथ मौनेन स भगवान् अनगारो ध्यानम् 'आश्रितः' स्थितो राजानं 'न प्रतिमन्त्रयते'



सञ्जयराजवक्तव्यता।

न प्रतिवक्ति, यथा—अहं क्षमिष्ये न वेति, 'ततः' कारणाद् राजा 'भयद्रुतः' भयत्रस्तः, यथा—न ज्ञायते किं किमेष क्रुद्धः हरिष्यति ? इति ॥ उक्तमात्र—यथा सञ्जयनामा राजा अहमस्मि न तु नीच इत्यभिप्रायः, 'इति' अस्माद् हेतोर्भगवन् ! 'व्याहर' सम्भाषय 'मे' इति माम् । स्यात्—किमेवं भवान् भयद्रुतः ? इत्याह—क्रुद्धः 'तेजसा' तेजोलेश्यादिना अनगारो दहेद् नरकोटीः आस्तां शतं सहस्रं वेति, अतो भयद्रुतोऽहमिति सूत्रचतुष्टयार्थः ॥ ७–८–९–१० ॥ इत्थं तेनोक्ते यन्मुनिरुक्तवांस्तदाह—

सञ्जयराजवक्तव्यता ।

अभयं पत्थिवा ! तुब्भं, अभयदाया भवाहि य । अणिच्चे जीवलोगम्मि, किं हिंसाए पसज्जसि ? ॥ ११ ॥
जया सव्वं परिच्चज्ज, गंतव्वमवसस्स ते । अणिच्चे जीवलोगम्मि, किं रज्जम्मि पसज्जसि ? ॥ १२ ॥
जीवियं चेव रूवं च, विज्जुसंपायचंचलं । जत्थ तं मुज्झसि रायं !, पेच्चत्थं णाववुज्झसे ॥ १३ ॥
दाराणि य सुया चेव, मित्ता य तह बंधवा । जीवंतमणुजीवंति, मयं नाणुवयंति य ॥ १४ ॥
णीहरंति मयं पुत्ता, पियरं परमदुक्खिया । पियरो वि तहा पुत्ते, बंधू रायं ! तवं चरे ॥ १५ ॥
ततो तेणऽज्जिए दव्वे, दारे य परिरक्खिए । कीलंतऽन्ने नरा रायं !, हट्ठतुट्ठमलंकिया ॥ १६ ॥
तेणावि जं कयं कम्मं, सुहं वा जइ वा दुहं । कम्मुणा तेण संजुत्तो, गच्छई उ परं भवं ॥ १७ ॥

व्याख्या—अभयं पार्थिव ! तव । इत्थं समाश्वास्योपदेशमाह—अभयदाता च भव, यथा भवतो मृत्युभयम् एवमन्येषामपीति भावः, चशब्दो योजित एव । अनित्ये जीवलोके किं हिंसायां प्रसजसि ? नरकहेतुरियं न कर्तुमुचितेति भावः ॥ अन्यच्च—यदा 'सर्वं' कोशान्तःपुरादि परित्यज्य गन्तव्यं भवान्तरमिति शेषः 'अवशस्य' अस्वतन्त्रस्य 'ते' तव, ततोऽनित्ये जीवलोके किं राज्ये प्रसजसि ? ॥ जीवलोकानित्यत्वमेव भावयितुमाह—जीवितं चैव रूपं च विद्युत्सम्पातः—विद्यु-

— — जीविते रूपे च त्वं मुह्यसि राजन्! 'प्रेत्यार्थं' परलोकप्रयोजनं नावबुध्यसे ॥ तथा "दाराणि य"
चलनं तद्वत् चञ्चलं 'यत्र' जीविते रूपे च त्वं मुह्यसि राजन्! 'प्रेत्यार्थं' परलोकप्रयोजनं नावबुध्यसे ॥ तथा "दाराणि य"

त्ति दाराश्च सुताश्चैव मित्राणि च तथा बान्धवा जीवन्तम् 'अनुजीवन्ति' तदुपार्जितवित्ताद्युपभोगत उपजीवन्ति, मृतं नानुव्रजन्त्यपि, किं पुनः सह यास्यन्ति?, चशब्दस्य अप्यर्थत्वादिति, अतो दारादिष्वपि कृतघ्नेषु नाऽऽस्था विधेयेति भावः ॥ पुनस्तत्प्रतिबन्धनिराकरणायाह—"नीहरंति" त्ति निस्सारयन्ति मृतं पुत्राः पितरं 'परमदुःखिताः' अतिशयदुःखिता अपि, पितरोऽपि तथा पुत्रान्, "बंधु" त्ति बन्धवश्च बन्धूनिति शेषः, ततो राजन्! तपः 'चरेः' आसेवस्व ॥ अपरञ्च—'ततः' निःसारणादनन्तरं 'तेन' पित्रादिना अर्जिते द्रव्ये सति दारेषु च परिरक्षितेषु क्रीडन्ति तेनैव वित्तेन दारैश्चेति गम्यते अन्ये नरा राजन्! 'हृष्टतुष्टाऽलङ्कृताः' तत्र हृष्टाः—बहिःपुलकादिमन्तः तुष्टाः—आन्तरप्रीतिभाजः अलङ्कृताः—विभूषिताः, यत ईदृशी भवस्थितिस्ततो राजन्! तपश्चरेरिति सम्बन्धः ॥ मृतस्य को वृत्तान्तः? इत्याह—तेनाऽपि यत् कृतं कर्म शुभं वा 'यदि वा' इति अथवा अशुभं कर्मणा तेनैव न तु धनादिना संयुक्तो गच्छति, तुशब्दो योजित एव, 'परम्' अन्यं भवम्, यतश्च शुभाशुभयोरनुयायिता ततः शुभहेतुं तपश्चरेरिति भाव इति सूत्रसप्तकार्थः ॥११-१२-१३-१४-१५-१६-१७॥ ततस्तद्वचः श्रुत्वा राजा किमचेष्टत? इत्याह—

**सोऊण तस्स सो धम्मं, अणगारस्स अंतिए। महया संवेगणिव्वेगं, समावन्नो नराहिवो ॥ १८ ॥**

**संजओ चइउं रज्जं, णिक्खंतो जिणसासणे। गद्दभालिस्स भगवओ, अणगारस्स अंतिए ॥ १९ ॥**

व्याख्या—सुगममेव। नवरं "महय" त्ति महता आदरेणेति शेषः, सुब्व्यत्ययात् महत् 'संवेगनिर्वेदं' तत्र संवेगः—मोक्षाऽभिलाषः निर्वेदः—संसारोद्विग्नता ॥ १८ ॥ १९ ॥ स चैवंगृहीतप्रव्रज्योऽवगतहेयोपादेयविभागो दशविधचक्रवालसामाचारीरतश्च अनियतविहारितया विहरन् तथाविधसन्निवेशमाजगाम, तत्र च तस्य यद्भूत् तदाह—



सञ्जयराजवक्तव्यता।

**चेच्चा रट्ठं पव्वइओ, खत्तिए परिभासई । जहा ते दीसई रूवं, पसन्नं ते तहा मणो ॥ २० ॥**
**किं णामे ? किं गोत्ते ?, कस्सऽट्ठाए व माहणे ?। कहं पडियरसी बुद्धे ?, कहं विणीय त्ति वुच्चसी ? ॥२१॥**

व्याख्या—त्यक्त्वा राष्ट्रं प्रव्रजितः 'क्षत्रियः' अनिर्दिष्टनामा परिभाषते सञ्जयमुनिमित्युपस्कारः, स हि पूर्वजन्मनि वैमानिक आसीत्, ततश्च्युत्वा क्षत्रियकुलेऽजनि, तत्र च कुतश्चित् तथाविधनिमित्ततः स्मृतपूर्वजन्मा, तत एव चोत्पन्नवैराग्यः प्रव्रज्यां गृहीतवान्, विहरंश्च सञ्जयमुनिं दृष्ट्वा तद्विमर्शार्थमिदमुक्तवान्—यथा ते दृश्यते रूपं 'प्रसन्नं' विकाररहितं 'ते' तव 'तथा' तेनैव प्रकारेण प्रसन्नमिति प्रक्रमः 'मनः' चित्तम्, अन्तःकलुषितायां हि वहिरप्येवं प्रसन्नताऽसम्भवः ॥ तथा किं नामा ? किं गोत्रः ? "कस्सऽट्ठाए व" त्ति कस्मै वा अर्थाय 'माहनः' प्रव्रजितः ? 'कथं' केन प्रकारेण 'प्रतिचरसि' सेवसे 'बुद्धान्' आचार्यादीन् ? कथं विनीत इत्युच्यसे ? इति सूत्रद्वयार्थः ॥ २०–२१ ॥ सञ्जयमुनिराह—

**संजओ नाम नामेणं, तहा गोत्तेण गोयमे । गद्दभाली ममायरिया, विज्जाचरणपारगा ॥ २२ ॥**

व्याख्या—सञ्जयो नाम नाम्ना, तथा गोत्रेण गौतमोऽहमिति गम्यते । शेषप्रश्नत्रयनिर्वचनमाह—गर्दभालयो मम आचार्याः 'विद्याचरणपारगाः' श्रुतचारित्रपारगताः । एवं च वदतोऽयमाशयः—यतो गर्दभाल्यभिधानाचार्यैर्जीवघातान्निवर्त्तितोऽहम्, विद्याचरणपारगत्वाच्च तैस्तन्निवृत्तौ मुक्तिलक्षणं फलमुक्तम्, ततस्तदर्थं माहनोऽस्मि । यथा च तदुपदेशस्तथा गुरून् प्रतिचरामि, तदुपदेशासेवनाच्च विनीत इति सूत्रार्थः ॥ २२ ॥ इत्थं विमृश्य तद्गुणाकृष्टचेता अपृष्टोऽपि क्षत्रिय इदमाह—

**किरियं अकिरियं विणयं, अन्नाणं च महामुणी ! । एतेहिं चउहिं ठाणेहिं, मेयन्ने किं पभासइ ? ॥२३॥**

व्याख्या—'क्रिया' अस्तीत्येवंरूपा, प्राकृतत्वाद् नपुंसकनिर्देशः, 'अक्रिया' तद्विपरीता, 'विनयः' नमस्करणादिः,

सञ्जय-राजर्षे-र्वक्तव्यता ।

तथा 'अज्ञानं' तत्त्वानवगमः, 'चः' समुच्चये, महामुने! 'एतैः' क्रियादिभिश्चतुर्भिः स्थानैः
लिङ्गव्यत्ययः प्राग्वत्, "मेयन्ने" त्ति मेयं-ज्ञेयं जीवादिवस्तु तज्जानन्तीति मेयज्ञाः क्रियादिभिः स्वस्वाभिप्रायकल्पितैर्वस्तुतत्त्वपरिच्छेदिन इत्यर्थः,
'किमि'ति कुत्सितं "पहासइ" त्ति प्रभापन्ते, विचाराक्षमत्वात्। तथा हि—ये तावत् **क्रियावादिन**स्तेऽस्तिक्रिया-
विशिष्टमात्मानं मन्यमाना अपि विभुरविभुः कर्त्ता अकर्त्ता मूर्त्तोऽमूर्त्तोऽसौ इत्याद्येकान्तवादमभ्युपगताः, कुत्सितभापणं
चैतत्, युक्त्या-ऽऽगमबाधितत्वात्। **अक्रियावादिन**स्तु अस्तिक्रियाविशिष्टमात्मानं नेच्छन्त्येव, एतच्चासङ्गततरम्, प्रत्यक्षा-
दिप्रमाणप्रसिद्धत्वात् तस्य। **वैनयिकवादिन**स्तु सुर-नृपति-यति-करि-तुरग-गो-महिष्य-ऽजा-ऽश्व-शृगाल-काक-बक-
मकरादिनमस्करणात् क्लेशक्षयमभ्युपगताः, अयुक्तं चैतद्, लोकसमयवेदेषु गुणाधिकस्यैव विनयार्हत्वेन प्रसिद्धत्वात्,
तदितरविनयस्य चाशुभफलत्वात्। **अज्ञानवादिन**स्तु किमात्मादिस्वरूपज्ञानेन?, अपवर्गं प्रत्यनुपयोगित्वात् ज्ञानस्य; केवलं
कष्टं तप एव कार्यम्, नहि कष्टं विनेष्टसिद्धिरिति प्रतिपन्नाः, इदं च दुर्भाषिततरम्, ज्ञानमन्तरेण हेयोपादेयनिवृत्तिप्रवृत्त्य-
भावात्। अतः सर्वेऽप्यमी कुत्सितं प्रभाषन्त इति स्थितमिति सूत्रार्थः ॥ २३ ॥ न चैतत् स्वाभिप्रायेणोच्यते किन्तु—

**इइ पाउकरे बुद्धे, नायए परिनिव्वुडे। विज्जाचरणसंपन्ने, सच्चे सच्चपरक्कमे ॥ २४ ॥**

**व्याख्या**—'इती'त्येतत् क्रियादिवादिनः कुत्सितं प्रभाषन्त इत्येवंरूपं "पाउकरे" त्ति 'प्रादुरकार्षीत्' प्रकटितवान्,
'बुद्धः' अवगततत्त्वः, ज्ञात एव 'ज्ञातकः' क्षत्रियः, स चेह प्रस्तावाद् **महावीरः**। 'परिनिर्वृतः' कषायानलविध्यापनात्
शीतीभूतः विद्याचरणाभ्यां-क्षायिकज्ञानचारित्राभ्यां सम्पन्नो यः स तथा, अत एव 'सत्यः' सत्यवाक्, तथा 'सत्य-
पराक्रमः' सत्यवीर्य इति सूत्रार्थः ॥ २४ ॥ तेषां च फलमाह—

**पडंति नरए घोरे, जे णरा पावकारिणो। दिव्वं च गइं गच्छंति, चरित्ता धम्ममारियं ॥ २५ ॥**

व्याख्या—पतन्ति नरके घोरे ये नराः पापं-प्रस्तावाद् असत्प्ररूपणारूपं कर्तुं शीलमेषां ते पापकारिणः। ये तु एवंविधा न भवन्ति ते किम्? इत्याह—दिव्यां पुनर्गतिं, 'चः' पुनरर्थे गच्छन्ति चरित्वा धर्मम् आर्यम्। तदयमभिप्रायः—असत्प्ररूपणापरिहारेण सत्प्ररूपणापरेणैव भवता भाव्यमिति सूत्रार्थः ॥ २५ ॥ कथं पुनरमी पापकारिणः? इत्याह—

**मायावुइयमेयं तु, मुसाभासा निरत्थिया। संजममाणो वि अहं, वसामि इरियामि य ॥ २६ ॥**

व्याख्या—मायया-शाठ्येन "वुइय" ति उक्तं मायोक्तम् 'एतत्' यदनन्तरं क्रियादिवादिभिरुक्तम्, 'तुः' एवकारार्थः, स च मायोक्तमेव इत्यत्र योज्यः, अतश्चैतद् मृषाभाषा 'निरर्थिका' सम्यगभिधेयशून्या, तत एव च "संजममाणो वि" त्ति अपिरेवकारार्थः, ततः 'सयच्छन्नेव' उपरमन् एव तदुक्त्याकर्णनादिभ्यः 'अहमि'ति आत्मनिर्देशो विशेषेण तत्स्थिरीकरणार्थम्, उक्तं हि—"ठिओ ठावए परं" ति 'वसामि' तिष्ठामि उपाश्रय इति शेषः, "इरियामि य" त्ति 'ईरे च' गच्छामि गोचरादिष्विति सूत्रार्थः ॥ २६ ॥ कुतः पुनस्त्वं तदुक्त्याकर्णनादिभ्यः संयच्छसि? इत्याह—

**सव्वे ते विदिता मज्झं, मिच्छादिट्ठी अणारिया। विज्जमाणे परे लोए, सम्मं जाणामि अप्पगं ॥२७॥**

व्याख्या—सर्वे 'ते' क्रियादिवादिनो विदिता मम, यथाऽमी मिथ्यादृष्टयः तत एव 'अनार्याः' अनार्यकर्मप्रवृत्ताः। कथं पुनस्ते एवंविधास्त्वया विदिताः? इत्याह—विद्यमाने सति 'परलोके' अन्यस्मिन् जन्मनि सम्यग् जानामि आत्मानम्, ततः परलोकात्मनः सम्यग्वेदनाद् मम ते विदिताः, ततोऽहं तदुक्त्याकर्णनादिभ्यः संयच्छामीति सूत्रार्थः ॥ २७ ॥ कथं पुनस्त्वं महात्मन्! आत्मानमन्यजन्मनि जानासि? इत्याह—

**अहमासी महापाणे, जुइमं वरिससओवमे। जा सा पाली महापाली, दिव्वा वरिससओवमा ॥२८॥**

**से चुए बंभलोगाओ, माणुस्सं भवमागए। अप्पणो य परेसिं च, आउं जाणे जहा तहा ॥२९॥**

सञ्जय-राजर्षे-र्वक्तव्यता।

व्याख्या—''अहमासि'' त्ति अहमभूवं 'महाप्राणे' ब्रह्मलोकविमाने द्युतिमान्, ''वाससयोवमे'' त्ति वर्षशतजीविना उपमा यस्याऽसौ वर्षशतोपमः, मध्यपदलोपी समासः, अयमर्थः—यथेह वर्षशतजीवी इदानीं परिपूर्णायुरुच्यते एवमहमपि तत्र परिपूर्णायुरभूवम् । तथाहि—या सा पालिरिव पालिः—जीवितधारणाद् भवस्थितिः सा चोत्तरत्र महाशब्दोपादानादिह पल्योपमप्रमाणा 'महापाली' सागरोपमप्रमाणा, तस्या एव महत्त्वात् । दिवि भवा दिव्या वर्षशतैः—केशोद्धारहेतुभिरुपमा अर्थात् पल्यविषया यस्यां सा वर्षशतोपमा, तत्र मम महापाली दिव्या भवस्थितिरासीद् इत्युपस्कारः । अतश्चाहं वर्षशतोपमायुरभूवमिति भावः ॥ 'से' इत्यथ स्थितिपरिपालनानन्तरं च्युतो ब्रह्मलोकाद् मानुष्यं भवमागतः, इत्थमात्मनो जातिस्मरणलक्षणमतिशयमाख्याय अतिशयान्तरमाह—आत्मनश्च परेषां च आयुर्जाने 'यथा' येन प्रकारेण स्थितमिति गम्यते 'तथा' तेनैव प्रकारेण न त्वन्यथेत्यभिप्राय इति सूत्रद्वयार्थः ॥ २८—२९ ॥ इत्थं प्रसङ्गतोऽपृष्टमपि स्ववृत्तान्तमावेद्योपदेष्टुमाह—

**णाणा रुइं च छंदं च, परिवज्जेज्ज संजए । अणट्ठा जे य सव्वत्था, इति विज्जामणुसंचरे ॥ ३० ॥**

व्याख्या—'नाना' अनेकधा 'रुचिं च' प्रक्रमाच्च क्रियावाद्यादिमतविषयमभिलाषं 'छन्दश्च' स्वमतिविकल्पितमभिप्रायम्, इहापि नानेति सम्बन्धादनेकविधं परिवर्जयेत् संयतः, तथा 'अनर्थाः' निःप्रयोजना ये च व्यापारा इति गम्यते, ''सव्वत्था'' इति आकारस्यालाक्षणिकत्वात् 'सर्वत्र' क्षेत्रादौ तान् परिवर्जयेदिति सम्बन्धः, 'इति' इत्येवंरूपां 'विद्यां' सम्यग्ज्ञानात्मिकां 'अन्वि'ति लक्षीकृत्य 'सञ्चरेः' सम्यक् संयमाध्वनि याया इति सूत्रार्थः ॥ ३० ॥ अन्यच्च—

**पडिक्कमामि पसिणाणं, परमंतेहिं वा पुणो । अहो उट्ठिए अहोरायं, इति विज्जा तवं चरे ॥ ३१ ॥**

व्याख्या—'प्रतिक्रमामि' प्रतिनिवर्त्ते ''पसिणाणं'' ति 'प्रश्नेभ्यः' शुभाशुभसूचकेभ्यः अङ्गुष्ठप्रश्नादिभ्यः, तथा परे—

गृहस्थान्तेषां मन्त्राः–तत्कार्यालोचनरूपास्तेभ्यः, 'वा' समुच्चये, 'पुनः' विशेषणे, अतिसावद्यत्वं तेषां विशिनष्टि। सोपस्कारत्वात् सूत्रस्य अमुनाऽभिप्रायेण यः संयमं प्रत्युत्थानवान् सः 'अहो' इति विस्मये 'उत्थितः' धर्मं प्रत्युद्यतः। कश्चिदेव हि महात्मा एवंविधः सम्भवति, 'अहोरात्रम्' अहर्निशम् 'इति' एतद् अनन्तरोक्तं "विज्ज" त्ति 'विद्वान्' जानन् "तवं" ति गम्यमानत्वाद् अवधारणस्य तप एव न तु प्रश्नादि 'चरेः' आसेवस्वेति सूत्रार्थः ॥ ३१ ॥ अत्रान्तरे "अप्पणो य परेसिं चे"त्यादिना तस्यायुर्विज्ञतामवगम्य सञ्जयमुनिनोक्तम्—कथं भवानायुर्जानातीति पृष्टोऽसावाह—

सञ्जयराजर्षेर्वक्तव्यता।

**जं च मे पुच्छसी काले, सम्मं सुद्धेण चेयसा। ताइं पाउकरे बुद्धे, तं णाणं जिणसासणे ॥ ३२ ॥**

व्याख्या—यच्च 'मे' इति मां पृच्छसि 'काले' कालविषयं सम्यक् शुद्धेन चेतसा उपलक्षितः, "ताइं" ति सूत्रत्वात् तत् 'प्रादुःकृतवान्' प्रकटीकृतवान्, 'बुद्धः' सर्वज्ञः अत एव तद् ज्ञानं जिनशासने, सावधारणत्वाद् वाक्यस्य जिनशासन एव न त्वन्यस्मिन् सुगतादिशासने, अतो जिनशासन एव यत्नो विधेयो येन यथाऽहं जानामि तथा त्वमपि जानीषे। पूर्वोक्तश्च आयुर्विज्ञानविषयः सञ्जयमुनिना कृतः प्रश्नोऽस्मादेव प्रतिवचनात् लक्ष्यत इति सूत्रार्थः ॥ ३२ ॥ पुनरुपदेष्टुमाह—

**किरियं च रोयए धीरे, अकिरियं परिवज्जए। दिट्ठीए दिट्ठिसंपन्ने, धम्मं चर सुदुच्चरं ॥ ३३ ॥**

व्याख्या—'क्रियां च' अस्तिजीव इत्यादिरूपां रोचयेत् 'धीरः' अक्षोभ्यः, तथा 'अक्रियां' नास्त्यात्मेत्यादिकां परिवर्जयेत्, ततश्च 'दृष्ट्या' सम्यग्दर्शनात्मिकया उपलक्षितो दृष्टिः–बुद्धिः सा चेह प्रस्तावात् सम्यग्ज्ञानात्मिका तया सम्पन्नो दृष्टिसम्पन्नः, एवं च सम्यग्दर्शनज्ञानान्वितः सन् 'धर्मं' चारित्रधर्मं चर सुदुश्चरमिति सूत्रार्थः ॥ ३३ ॥ पुनः क्षत्रियमुनिरेव सञ्जयमुनिं महापुरुषोदाहरणैः स्थिरीकर्तुमाह—

एयं पुन्नपयं सोचा, अत्थधम्मोवसोहियं । भरहो वि भारहं वासं, चेचा कामाइं पव्वए ॥ ३४ ॥
सगरो वि सागरंतं, भरहवासं णराहिवो । इस्सरियं केवलं हेचा, दयाए परिनिव्वुडे ॥ ३५ ॥
चइत्ता भारहं वासं, चक्कवट्टी महिड्डिओ । पव्वज्जमब्भुवगओ, मघवं णाम महाजसो ॥ ३६ ॥
सणंकुमारो मणुस्सिंदो, चक्कवट्टी महिड्डिओ । पुत्तं रज्जे ठवेऊणं, सो वि राया तवं चरे ॥ ३७ ॥
चइत्ता भारहं वासं, चक्कवट्टी महिड्डिओ । संती संतिकरो लोए, पत्तो गइमणुत्तरं ॥ ३८ ॥
इक्खागरायवसभो, कुंथू णाम णरेसरो । विक्खायकित्ती भगवं, पत्तो गइमणुत्तरं ॥ ३९ ॥
सागरंतं चइत्ता णं, भरहं णरवरीसरो । अरो य अरयं पत्तो, पत्तो गइमणुत्तरं ॥ ४० ॥
चइत्ता भारहं वासं, चक्कवट्टी महिड्डिओ । चइत्ता उत्तमे भोगे, महापउमो तवं चरे ॥ ४१ ॥
एगच्छत्तं पसाहित्ता, महिं माणणिसूरणो । हरिसेणो मणुस्सिंदो, पत्तो गइमणुत्तरं ॥ ४२ ॥
अन्निओ रायसहस्सेहिं, सुपरिचाई दमं चरे । जयणामो जिणक्खायं, पत्तो गइमणुत्तरं ॥ ४३ ॥
दसन्नरज्जं मुइयं, चइत्ता णं मुणी चरे । दसन्नभद्दो निक्खंतो, सक्खं सक्केण चोइओ ॥ ४४ ॥
नमी नमेइ अप्पाणं, सक्खं सक्केण चोइओ । चइऊण गेहं वइदेही, सामन्ने पज्जुवट्ठिओ ॥ ४५ ॥
करकंडू कलिंगेसु, पंचालेसु य दुम्मुहो । णमी राया विदेहेसु, गंधारेसु य णग्गई ॥ ४६ ॥
एते णरिंदवसभा, णिक्खंता जिणसासणे । पुत्ते रज्जे ठवेऊणं, सामन्ने पज्जुवट्ठिया ॥ ४७ ॥
सोवीररायवसभो, चेचा रज्जं मुणी चरे । उदायणो पव्वइओ, पत्तो गइमणुत्तरं ॥ ४८ ॥
तहेव कासीराया वि, सेओसच्चपरक्कमो । कामभोगे परिचज्ज, पहणे कम्ममहावणं ॥ ४९ ॥

नट्ठेव विजओ राया, अणट्ठाकित्तिपव्वए । रज्जं तु गुणसमिद्धं, पयहित्तु महायसो ॥ ५० ॥
तहेवुग्गं तवं किच्चा, अव्वक्खित्तेण चेयसा । महाबलो रायरिसी, आदाय सिरसा सिरिं ॥ ५१ ॥

भरत-चक्रिणो वक्तव्यता।

व्याख्या—'एतद्' अनन्तरोक्तं पुण्यहेतुत्वात् पुण्यं पद्यते—गम्यतेऽनेनार्थ इति पदं—क्रियादिवादिस्वरूपं नानारुचिपरिवर्जनाकारकं शब्दसन्दर्भं श्रुत्वा, अर्थः—अर्थ्यमानतया स्वर्गापवर्गादिः धर्मः—तदुपायभूतः श्रुतधर्मादिः ताभ्यामुपशोभितमर्थधर्मोपशोभितं 'भरतोऽपि' प्रथमचक्रवर्त्ती, अपिशब्द उत्तरापेक्षया समुच्चये, भारतं वर्षं त्यक्त्वा "कामाइं" ति चस्य गम्यमानत्वात् कामांश्च "पव्वए" त्ति प्राव्राजीत् ॥ तथाहि—

अत्थि अवज्झाए नयरीए सिरिउसहनाहपढमसुओ, पुव्वभवकयमुणिजणवेयावच्चऽज्जियचक्किभोओ भरहो नाम पढमचक्कवट्टी । तस्स य णवण्हं निहीणं चउदसण्हं रयणाणं बत्तीसाए महाणरवइसहस्साणं चउसट्ठीए पवरावरोहजुवईसहस्साणं बावत्तरिपुरवरसहस्साणं छन्नउईगामकोडीणं चुलसीहयगयरहसयसहस्साणं छक्खंडस्स भरहस्साहेवच्चं करेंतस्स पत्थाहारदाणेण साहम्मियवच्छल्लं कुणमाणस्स उसभजिणनिव्वाणगमणाणंतरं च सयंकारियअट्ठावयसिहरसंठियचउमुहजोयणायामतिगाउसियएगजिणाययणमज्झपरिट्ठियमणिपीढिओवरिदेवच्छंदयसिरपत्तेयसिंहासणपइट्ठावियाणं नियनियतणुपमाणोववेयाणं उसभाइचउवीसजिणपडिमाणं वंदणऽच्चणं समायरंतस्स अइक्कंता पंच पुव्वलक्खा । अन्नया महाविभूईए उवट्ठियमज्जियदेहो सव्वालंकारविभूसियसरीरो आयरिसभवणमइगओ । तत्थ य सव्वंगिओ पुरिसो दीसइ । तत्थ मज्झेण पेच्छमाणस्स अंगुलेयगं पडियं, तं च तेण न नायं पडमाणं । पलोयंतस्स जाहे सा अंगुली दिट्ठिम्मि पडिया ताहे असोहंतिया दिट्ठा । तओ कडयं पि अवणेइ, एवमेकेक्कमवणिंतेण सव्वमाभरणमवणीयं । ताहे अप्पाणं उज्झियपउमं पउमसरं व असोहंतं पेच्छिय संवेगमावन्नो, चिंतिउं च पवत्तो—अहो ! आगंतुगदव्वेहिं भूसियं चेव रेहइ सरीरं न सहावसुंदरमेयं,

सुंदरं पि वत्थुं विणस्सए इमस्स संगेणं। तथाहि—मणुन्नमसणं पाणं, खाइमं साइमं वरं। सरीरसंगमावन्नं, सव्वं पि असुई भवे ॥१॥ वरं वत्थं वरं पुप्फं, वरं गंधविलेवणं। विणस्सए सरीरेण, वरं सयणमासणं ॥२॥ निहाणं सव्वरोगाणं, कयग्घमथिरं इमं। पंचासुइभूयमयं, अथक्कपरिकम्मणं ॥३॥ ता सव्वहा न जुत्तमेयस्स कारणे दुलहं मणुस्सजम्मं लद्धं पावकम्मकरणेण हारवित्तए। यत उक्तम्—"लोहाय नावं जलधौ भिनत्ति, सूत्राय वैडूर्यमणिं दृणाति। सचन्दनं प्लोषति भस्मनेऽसौ, यो मानुषत्वं नयतीन्द्रियार्थे ॥१॥" एवमाइ चिंतंतस्स जाओ चरणपरिणामो। पवड्ढमाणसुहज्झवसाणस्स य खवगसेढिपवन्नस्स उप्पन्नं केवलं नाणं। सक्को देवराया समागओ भणइ—दव्वलिंगं पडिवज्जह, जेण णिक्खमणमहिमं करेमि। तओ तेण पंचमुट्ठिओ लोओ कओ। देवयाए रजोहरणपडिग्गहाइयमुवगरणमुवणीयं। दसहिं रायसहस्सेहिं समं पव्वइओ। सेसा णव चक्किणो सहस्सपरिवारा णिक्खंता। सक्केण वंदिओ। विहरिओ य गामागरनगरेसुं भयवं। भव्वसत्ते पडिबोहंतो पुव्वसयसहस्सं केवलिपरियागं पाउणित्ता परिनिव्वुडो य। आइच्चजसो य सक्केण अहिसित्तो। एवं अट्ठजुगाणि[1] अहिसित्ताणि त्ति ॥

"सगरो वि" सूत्रम्। 'सगरः'[2] द्वितीयश्चक्रवर्ती सागरान्तं भारतं वर्षं नराधिप ऐश्वर्यं 'केवलं' परिपूर्णं हित्वा 'दयया' संयमेन 'परिनिर्वृतः' मुक्तः।

---

१ राया आइच्चजसे, महाजसे अइबले य बलभद्दे। बलविरिय कित्तिवीरिय, जलवीरिए दंडविरिए य ॥ १ ॥
राजा आदित्ययशा, महायशा अतिबलश्च बलभद्रः। बलवीर्यः कीर्त्तिवीर्यो, जलवीर्यो दण्डवीर्यश्च ॥ १ ॥
एएहिं अद्धभरहं, सयलं मुत्तं सिसेण धरिओ य। जिणसंतिओ य मउडो, सेसेहिं न चाइओ वोढुं ॥ २ ॥
एतैरर्द्धभरतं, सकलं भुक्तं शीर्षेण धृतश्च। जिनसत्कश्च मुकुटः, शेषैर्न शक्तः वोढुम् ॥ २ ॥

२ होही सगरो मघवं, सणंकुमारो य रायसद्दूलो। संती कुंथू य अरो, हवइ सुभूमो य कोरव्वो ॥ १ ॥
भविष्यति सगरो मघवान्, सनत्कुमारश्च राजशार्दूलः। शान्तिः कुन्थुश्च अरो, भवति सुभूमश्च कौरव्यः ॥ १ ॥

मृगापुत्रवक्तव्यता।

ततः किमस्या दुःखरूपत्वमिति भावः ॥ यतश्चैवमतः—"एगे"त्यादि सर्वं सुगममेव । नवरम्—एकः—एकाकी भूतः—संवृत्त एकभूतोऽरण्ये, 'वे'ति पूरणे, 'जहा उ' त्ति यथैव चरति मृग एवं चरिष्यामि संयमेन तपसा च हेतुभूतेन ॥ "को णं" ति क एनं "ताहि" त्ति तदा ॥ 'आहृत्य' आनीय 'प्रणामयेत्' अर्पयेत् ॥ कथं तर्हि तस्य निर्वहणम् ? इत्याह—यदा च स सुखी भवति स्वत एव रोगाभावतस्तदा गच्छति, गोरिव चरणं—भ्रमणं गोचरस्तम्, 'वल्लराणि' गहनानि ॥ खादित्वा निजभक्ष्यमिति गम्यते, पानीयं पीत्वा वल्लरेषु सरस्सु च, तथा मृगाणां चर्या—इतश्चेतश्चोत्प्लवनात्मकं चरणं मृगचर्या तां 'चरित्वा' आसेव्य गच्छति मृगाणां चर्या—चेष्टा स्वातन्त्र्योपवेशनादिका यस्यां सा मृगचर्या—मृगाश्रयभूस्ताम् ॥ इत्थं दृष्टान्तमुक्त्वा सूत्रद्वयेनोपसंहारमाह—'एवं' मृगवत् 'समुत्थितः' संयमानुष्ठानं प्रति उद्यतः तथाविधातङ्कोत्पत्तावपि न चिकित्साभिमुख इति भावः । 'एवमेव' मृगवदेव अनेकगः, यथा ह्यसौ वृक्षमूले नैकस्मिन्नेवाऽऽस्ते, किन्तु कदाचित् क्वचिद् एवम् एषोऽप्यनियतस्थानतया । स चैवं 'मृगचर्यां' निःप्रतिकर्मतादिरूपां चरित्वा अपगताऽशेषकर्मांश ऊर्ध्वं 'प्रक्रामति' गच्छति दिशम्, किमुक्तं भवति ?—सर्वोपरिस्थानस्थितो भवति ॥ मृगचर्यामेव स्पष्टयितुमाह—यथा मृगः "एग" त्ति 'एकः' अद्वितीयः 'अनेकचारी' अनियतचारी 'अनेकवासः' नैकत्रैव वासः—अवस्थानमस्येत्यनेकवासः 'ध्रुवगोचरश्च' सदागोचरश्च, सदा गोचरलब्धमेवाहारमाहारयतीति । एवं मृगवद् एकत्वादिविशेषणविशिष्टो मुनिर्गोचर्यां प्रविष्टो नो 'हीलयेत्' अवजानीयात् कदशनादीति गम्यते, नापि च 'खिंसयेत्' निन्देद् आहाराप्राप्तौ स्वं परं वेति सूत्राष्टकार्थः ॥ ७६-७७-७८-७९-८०-८१-८२-८३ ॥ एवं मृगचर्यास्वरूपमुक्त्वा यत् तेनोक्तं यच्च पितृभ्यां यच्चाऽसौ कृतवांस्तदाह—

**मिगचारियं चरिस्सामि, एवं पुत्ता! जहासुहं। अम्मापिईहिंऽणुण्णाओ, जहाति उवहिं तओ ॥८४॥**

**मिगचारियं चरिस्सामि, सव्वदुक्खविमोक्खणिं। तुब्भेहिं वा अणुण्णाओ, गच्छ पुत्त! जहासुहं ८५**

एवं सो अम्मापियरं, अणुमाणेत्ताण बहुविहं । ममत्तं छिंदती ताहे, महानागो व कंचुयं ॥ ८६ ॥
इड्ढी वित्तं च मित्ते य, पुत्त दारं च नायओ । रेणुयं व पडे लग्गं, निद्धुणित्ताण निग्गओ ॥ ८७ ॥

व्याख्या—स्पष्टमेव । नवरम्—मृगस्येव चर्या मृगचर्या तां निःप्रतिकर्मतादिरूपां चरिष्यामीति कुमारेणोक्ते पितृभ्यामभाणि—'एवं' यथा भवतोऽभिरुचितं तथा यथासुखं तेऽस्त्विति शेषः । एवं चानुज्ञातः 'जहाति' त्यजति 'उपधिं' परिग्रहं ततः ॥ उक्तमेवार्थं सविस्तरमाह—मृगचर्यां चरिष्यामि सर्वदुःखविमोक्षणीं युवाभ्यामहम् अनुज्ञातः सन् । तावाहतुः—गच्छ मृगचर्ययेति प्रक्रमः, पुत्र! 'यथासुखं' सुखानतिक्रमेण ॥ एवं सोऽम्बापितरौ 'अनुमान्य' अनुज्ञाप्य ॥ पूर्वमुपधित्याग उक्तः, अतस्तमेव विशेषत आह—'इड्ढी'त्यादि 'ऋद्धिं' करितुरगादिसम्पदमिति सूत्रचतुष्टयार्थः ॥ ८४-८५-८६-८७ ॥ ततोऽसौ कीदृग् जातः ? इत्याह—

पंचमहव्वयजुत्तो, पंचहिं समिओ तिगुत्तिगुत्तो य । सब्भिंतरबाहिरए, तवोकम्मम्मि उज्जुओ ॥८८॥
निम्ममो निरहंकारो, निस्संगो चत्तगारवो । समो य सव्वभूएसु, तसेसु थावरेसु य ॥ ८९ ॥
लाभालाभे सुहे दुक्खे, जीविए मरणे तहा । समो निंदापसंसासु, तहा माणावमाणओ ॥ ९० ॥
गारवेसु कसाएसु, दंडसल्लभएसु य । नियत्तो हाससोगाओ, अनियाणो अबंधणो ॥ ९१ ॥
अणिस्सिओ इहं लोए, परलोए अणिस्सिओ । वासीचंदणकप्पो य, असणेऽणसणे तहा ॥ ९२ ॥
अप्पसत्थेहिं दारेहिं, सव्वओ पिहियासवे । अज्झप्पज्झाणजोगेहिं, पसत्थदमसासणे ॥ ९३ ॥

व्याख्या—सुगमम् । नवरम्—गौरवादीनि पदानि सुब्व्यत्ययात् पञ्चम्यन्ततया व्याख्येयानि, 'निवृत्तः' इति सर्वत्र सम्बन्धनीयम् । 'अबन्धनः' रागद्वेषबन्धनरहितः ॥ "वासीचंदणकप्पे य" त्ति सूचकत्वात् सूत्रस्य वासीचन्दनव्यापारकयोः

मृगापुत्र-यकथ्यता ।

कल्पः–तुल्यो यः स तथा । 'अशने' आहारे 'अनशने' अशनाभावे तथाकल्प इत्यत्राऽपि द्रष्टव्यः ॥ अप्रशस्तेभ्यः 'द्वारेभ्यः' कर्मोपार्जनोपायेभ्यो हिंसादिभ्यः 'सर्वतः' सर्वेभ्यो निवृत्त इति गम्यते, तत एव 'पिहितास्रवः' निरुद्धकर्मसङ्कलनः, कैः पुनरेवंविधोऽयम् ? आत्मन्यधि अध्यात्मं तत्र ध्यानयोगाः–शुभध्यानव्यापारा अध्यात्मध्यानयोगास्तैः, प्रशस्तो दमः–उपशमः शासनं च–सर्वज्ञागमात्मकं यस्य स तथेति सूत्रषट्कार्थः ॥ ८८-८९-९०-९१-९२-९३ ॥ सम्प्रत्येतस्यैव भगवतः फलोपदर्शनायाह—

**एवं णाणेण चरणेण, दंसणेण तहेव य । भावणाहि य सुद्धाहिं, सम्मं भावेत्तु अप्पयं ॥ ९४ ॥**

**बहुयाणि य वासाणि, सामन्नमणुपालिया । मासिएण उ भत्तेणं, सिद्धिं पत्तो अणुत्तरं ॥ ९५ ॥**

व्याख्या—सुगममेव । नवरम्—"मासिएण उ भत्तेणं" मासे भवं मासिकं तेन, 'तुः' पूरणे 'भक्तेन' भोजनेन, मासोपलक्षणत्वादस्य मासोपवासेनेति भावः ॥ ९४–९५ ॥ सकलाध्ययनार्थोपसंहारद्वारेणोपदिशन्नाह—

**एवं करंति संबुद्धा, पंडिया पवियक्खणा । विणियट्टंति भोगेसु, मियापुत्ते जहा मिसी ॥ ९६ ॥**

व्याख्या—सुगमम् । नवरं—"जहा मिसि" त्ति यथा ऋषिः, मकारोऽलाक्षणिकः ॥ इत्थमन्योक्त्या उपदिश्य पुनर्भङ्ग्यन्तरेणोपदिशन्नाह—

**महापभावस्स महाजसस्स, मियाए पुत्तस्स णिसम्म भासियं ।**
**तवप्पहाणं चरियं च उत्तमं, गइप्पहाणं च तिलोगविस्सुयं ॥ ९७ ॥**
**वियाणिया दुक्खविवद्धणं धणं, ममत्तबंधं च महाभयावहं ।**
**सुहावहं धम्मधुरं अणुत्तरं, धारेह निव्वाणगुणावहं महं ॥ ९८ ॥ त्ति बेमि ॥**


॥२६६॥

व्याख्या—स्पष्टम्। नवरम्—"गइप्पहाणं च" त्ति प्रधानगतिं च ॥ ममत्वं बन्ध इव ममत्वबन्धस्तं महाभया- वहम्, तत एव नीरागादिभ्यो भयावाप्तेः। "निव्वाणगुणावहं" ति निर्वाणगुणाः—अनन्तज्ञानादयस्तदावहमिति सूत्रद्वयार्थः ॥ १७–१८ ॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥

मृगापुत्र-वक्तव्यता।

इति श्रीनेमिचन्द्रसूरिकृतायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां मृगापुत्रीयाख्यमेकोनविंशमध्ययनं समाप्तम् ॥

# अथ विंशतितमं महानिर्ग्रन्थीयाख्यमध्ययनम् ।

व्याख्यातमेकोनविंशमध्ययनम् । अधुना महानिर्ग्रन्थीयं विंशतितममारभ्यते, अस्य चायमभिसम्बन्धः—'अनन्तराध्ययने निःप्रतिकर्मतोक्ता, इयं चानाथत्वपरिभावनेनैव पालयितुं शक्येति महानिर्ग्रन्थहितमभिधातुमनाथतैवानेकधाऽनेनोच्यते' इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्याऽऽदिसूत्रम्—

**सिद्धाण नमोकिच्चा, संजताणं च भावओ । अत्थधम्मगइं तच्चं, अणुसट्ठिं सुणेह मे ॥ १ ॥**

व्याख्या—'सिद्धेभ्यः' तीर्थकरादिसिद्धेभ्यो नमस्कृत्य 'संयतेभ्यश्च' आचार्योपाध्यायसाधुभ्यः 'भावतः' भक्त्या, अर्थ्यः—हितार्थिभिः प्रार्थनीयः स चासौ धर्मश्च अर्थ्यधर्मस्तस्य गतिः—ज्ञानं यस्यां सा अर्थ्यधर्मगतिस्तां, ''तच्चं'' ति 'तथ्याम्' अविपरीतार्थाम् 'अनुशिष्टिं' शिक्षां शृणुत 'मे' मया कथ्यमानामिति शेषः । स्थविरवचनमेतदिति सूत्रार्थः ॥१॥

सम्प्रति धर्मकथानुयोगत्वादस्य धर्मकथाकथनव्याजेन प्रतिज्ञातमुपक्रमितुमाह—

**पभूयरयणो राया, सेणिओ मगहाहिवो । विहारजत्तं णिज्जाओ, मंडिकुच्छिंसि चेइए ॥ २ ॥**
**नाणादुमलयाइण्णं, नाणापक्खिनिसेवियं । नाणाकुसुमसंछन्नं, उज्जाणं नंदणोवमं ॥ ३ ॥**
**तत्थ सो पासई साहुं, संजयं सुसमाहियं । निसन्नं रुक्खमूलम्मि, सुकुमालं सुहोइयं ॥ ४ ॥**
**तस्स रूवं तु पासित्ता, राइणो तम्मि संजए । अच्चंतपरमो आसी, अतुलो रूवविम्हओ ॥ ५ ॥**
**अहो ! वण्णो अहो ! रूवं, अहो ! अज्जस्स सोमया । अहो ! खंती अहो ! मुत्ती, अहो ! भोगे असंगता ६**

तस्स पाए उ वंदित्ता, काऊण य पयाहिणं । णाइदूरमणासन्ने, पंजली पडिपुच्छई ॥ ७ ॥
तरुणो सि अज्जो पव्वइओ, भोगकालम्मि संजया । उवट्ठिओ सि सामन्ने, एयमट्ठं सुणेमि ता ॥ ८ ॥

व्याख्या—सुगमम् । नवरम्—"विहारजत्तं" ति 'विहारयात्रया' क्रीडार्थाश्ववाहनिकादिरूपया 'निर्यातः' निर्गतः पुरादिति गम्यम् । "एयमट्ठं सुणेमि" त्ति एनम् 'अर्थं' निमित्तं येनार्थेन त्वमीदृश्यामवस्थायां प्रव्रजितः, शृणोमि "ता" इति तावत्, पश्चाद् यत् त्वं भणिष्यसि तदपि श्रोष्यामीति भावः ॥ २-३-४-५-६-७-८ ॥ इत्थं राज्ञोक्ते मुनिराह—

अणाहो मि महाराय!, णाहो मज्झ न विज्जई । अणुकंपगं सुहिं वा वि, कंची णाभिसमेमऽहं ॥९॥

व्याख्या—अनाथोऽस्म्यहं महाराज!, किमिति? यतः 'नाथः' योगक्षेमविधाता मम न विद्यते, तथा 'अनुकम्पकम्' अनुकम्पाविधातारं सुहृदं वा कञ्चिद् 'नाभिसमेमी'ति नाभिसङ्गच्छाम्यहम् इति, अनेनार्थेन तारुण्येऽपि प्रव्रजित इति भाव इति सूत्रार्थः ॥ ९ ॥ एवं मुनिनोक्ते—

तओ सो पहसिओ राया, सेणिओ मगहाहिवो । एवं ते इड्ढिमंतस्स, कहं णाहो न विज्जई? ॥ १० ॥
होमि नाहो भयंताणं, भोगे भुंजाहि संजया! । मित्तनाईपरिवुडो, माणुस्सं खलु दुल्लहं ॥ ११ ॥

व्याख्या—सुगमम् । नवरम्—'एवमि'ति दृश्यमानप्रकारेण 'ऋद्धिमतः' विस्मयनीयवर्णादिसम्पत्तिमतः ॥१०-११॥ मुनिराह—

अप्पणावि अणाहो सि, सेणिआ! मगहाहिवा! । अप्पणा अणाहो संतो, कस्स णाहो भविस्ससि? ॥

व्याख्या—सुगमम् ॥ एवं च मुनिनोक्ते—

एवं वुत्तो नरिंदो सो, सुसंभंतो सुविम्हिओ । वयणं अस्सुयपुव्वं, साहुणा विम्हयं निओ ॥ १३ ॥

अनाथि-
निर्ग्रन्थस्य
वक्तव्यता ।

अस्सा हत्थी मणुस्सा मे, पुरं अंतेउरं च मे। भुंजामि माणुसे भोगे, आणाइस्सरियं च मे॥ १४ ॥
एरिसे संपयग्गम्मि, सव्वकामसमप्पिए। कहं अणाहो भवई?, मा हु भंते! मुसं वए॥ १५ ॥

व्याख्या—सुगममेव। नवरम्—आद्यस्य घटनैवम्—स श्रेणिकः 'विसयान्वितः' प्रागपि रूपादिविषयविसयोपेतः सन् 'एवम्' उक्तनीत्या वचनमश्रुतपूर्वमुक्तः सुसम्भ्रान्तः सुविस्मितश्च भूत्वोक्तवानिति शेषः ॥ यदुक्तवांस्तदाह—"आसे"त्यादि। इति ईदृशे 'सम्पदग्रे' सम्पत्प्रकर्षे "सव्वकामसमप्पिए" त्ति समर्पितसर्वकामे कथमनाथः "भवइ" त्ति पुरुषव्यत्ययेन भवामि ?। "मा हु" त्ति 'हुः' यस्मादर्थे, यत एवं तस्माद् मा भदन्त! 'मृषा' अलीकं "वदे" त्ति वादीः ॥ १३-१४-१५ ॥ यतिरुवाच—



न तुमं जाणे अणाहस्स, अत्थं पोत्थं व पत्थिवा!। जहा अणाहो हवई, सणाहो वा नराहिवा!॥१६॥
सुणेह मे महारायं!, अव्वक्खित्तेण चेयसा। जहा अणाहो हवई, जहा मे य पवत्तियं॥ १७ ॥
कोसंबी नाम नयरी, पुराणपुरभेयणी। तत्थ आसी पिया मज्झं, पभूयधणसंचओ॥ १८ ॥
पढमे वए महारायं!, अतुला मे अच्छिवेयणा। अहोत्था विउलो डाहो, सव्वंगेसु य पत्थिवा!॥ १९ ॥
सत्थं जहा परमतिक्खं, सरीरविवरंतरे। आवीलेज्ज अरी कुद्धो, एवं मे अच्छिवेयणा॥ २० ॥
तियं मे अंतरिच्छं च, उत्तिमंगं च पीडई। इंदासणिसमा घोरा, वेयणा परमदारुणा॥ २१ ॥
उवट्ठिया मे आयरिया, विज्जामंततिगिच्छगा। अईव सत्थकुसला, मंतमूलविसारया॥ २२ ॥
ते मे तिगिच्छं कुव्वंति, चाउप्पायं जहाहियं। न य दुक्खा विमोयंति, एसा मज्झ अणाहया॥ २३ ॥
पिया मे सव्वसारं पि, दिज्जाहि मम कारणा। न य दुक्खा विमोएंति, एसा मज्झ अणाहया॥ २४ ॥

अनाथि-निर्ग्रन्थस्य वक्तव्यता।

माया वि मे महाराय!, पुत्तसोगदुहट्टिया। न य दुक्खा विमोयंति, एसा मज्झ अणाहया ॥ २५ ॥
भायरो मे महाराय!, सगा जेट्ठकणिट्ठगा। न य दुक्खा विमोयंति, एसा मज्झ अणाहया ॥ २६ ॥
भइणीओ मे महाराय!, सगा जेट्ठकणिट्ठिया। न य दुक्खा विमोयंति, एसा मज्झ अणाहया ॥ २७ ॥
भारिया मे महाराय!, अणुरत्ता अणुव्वया। अंसुपुण्णेहिं नयणेहिं, उरं मे परिसिंचई ॥ २८ ॥
अन्नं पाणं च ण्हाणं च, गंध मल्ल विलेवणं। मए णायमणायं वा, सा बाला णो य भुंजई ॥ २९ ॥
खणं पि मे महाराय!, पासओ वि न फिट्टई। न य दुक्खा विमोयंति, एसा मज्झ अणाहया ॥ ३० ॥
ततो हं एवमाहंसु, दुक्खमा हु पुणो पुणो। वेयणा अणुभविउं जे, संसारम्मि अणंतए ॥ ३१ ॥
सइं च जइ मुच्चिज्जा, वेयणा विउला इओ। खंतो दंतो निरारंभो, पव्वइए अणगारियं ॥ ३२ ॥
एवं च चिंतइत्ताणं, पासुत्तो मि नराहिवा!। परियत्तंतीए राईए, वेयणा मे खयं गया ॥ ३३ ॥
तओ कल्ले पभायम्मि, आपुच्छित्ताण बंधवे। खंतो दंतो निरारंभो, पव्वइओ अणगारियं ॥ ३४ ॥
तोऽहं णाहो जाओ, अप्पणो य परस्स य। सव्वेसिं चेव जीवाणं, तसाणं थावराण य ॥ ३५ ॥

व्याख्या—सुगमान्येव । नवरम्—न त्वं जानीषे 'अनाथस्य' अनाथशब्दस्य 'अर्थम्' अभिधेयं 'प्रोत्थं वा' प्रकर्षेण उत्थाम्—उत्थानं मूलोत्पत्तिम् 'केनाऽभिप्रायेणाऽयं मयोक्तः' इत्येवंरूपाम् । अत एव यथाऽनाथो भवति सनाथो वा तथा न जानीषे इति सम्बन्धः ॥ शृणु 'मे' कथयत इति शेषः । किं तद्? इत्याह—यथाऽनाथो भवतीत्यनाथशब्दस्याभिधेयः पुरुषो भवति । यथा "मे य" त्ति मया च 'प्रवर्त्तितं' प्ररूपितमनाथत्वमिति प्रक्रमः । अनेनोत्थानमुक्तम् ॥ पुराणपुराणि भिनत्ति—स्वगुणैरसाधारणत्वाद् भेदेन व्यवस्थापयतीति पुराणपुरभेदिनी ॥ "अहोत्थ" त्ति अभूत् ॥ "सरीरविवरं-

तरे" त्ति शरीरविवराणि—कर्णरन्ध्रादीनि तेषाम् अन्तरं—मध्यं शरीरविवरान्तरं तस्मिन्, "आवीलेज्ज" त्ति 'आपीडयेत्' गाढमवगाहयेत् ॥ 'त्रिकं' कटिभागं कर्मभूतं 'अन्तरा' मध्ये 'इच्छां वा' अभिमतवस्त्वभिलाषं न केवलं बहिस्त्रिकाद्येवेति भावः, इन्द्राशनिः—इन्द्रवज्रं तत्समा अतिदाहोत्पादकत्वादिति भावः, 'घोरा' अपरेषामपि भयजनिका 'परमदारुणा' अतीवदुःखोत्पादिका ॥ उपस्थिता मे 'आचार्याः' इति प्राणाचार्या वैद्या इत्यर्थः, 'विद्यामन्त्रचिकित्सकाः' विद्या-मन्त्राभ्यां व्याधेः प्रतिकारकर्त्तारः ॥ "चाउप्पायं" ति 'चतुष्पादां' भिषग्भेषजातुरप्रतिचारकात्मकचतुर्भागचतुष्टयात्मिकां 'यथाहितं' हिताऽनतिक्रमेण ॥ 'पिता' जनकः, विमोएंति" त्ति सुब्व्यत्ययाद् विमोचयति ॥ "पासतो वि" त्ति पार्श्वतश्च । "फिट्टइ" त्ति अपयाति ॥ 'ततः' इति रोगाप्रतिकार्यताऽनन्तरमहम् 'एवं' वक्ष्यमाणप्रकारेण "आहंसु" त्ति उक्तवान् यथा 'दुःक्षमा' दुःसहा 'हु:' एवकारार्थः, ततो दुःक्षमा एव पुनः पुनर्वेदना अनुभवितुम्, "जे" इति निपातः पूरणे ॥ यतश्चैवमतः "सइं च" ति सकृदपि यदि मुच्येयमहमिति गम्यते, "वेयण" त्ति वेदनायाः "विउल" त्ति विपुलायाः 'इतः' अस्याः, ततः किम्? इत्याह—क्षान्तो दान्तो निरारम्भः "पव्वइए" त्ति 'प्रव्रजेयं' प्रतिपद्येयम् अनगारितां येन संसारोच्छित्तितो मूलत एव न वेदनासम्भवः स्यादिति भावः ॥ "एवं च चिंतइत्ताणं" ति एवं न केवलमुक्त्वा चिन्तयित्वा च प्रसुप्तोऽस्मि नराधिप!, 'परिवर्त्तमानायाम्' अतिक्रामन्त्यां रजन्यां वेदना मे क्षयं गता ॥ 'ततः' वेदनाऽपगमानन्तरं 'कल्यः' नीरोगः सन् ॥ 'ततः' प्रव्रज्याप्रतिपत्तेरिति विंशतिसूत्रार्थः ॥ १६-१७-१८-१९-२०-२१-२२-२३-२४-२५-२६-२७-२८-२९-३०-३१-३२-३३-३४-३५ ॥ किमिति प्रव्रज्याप्रतिपत्त्यनन्तरमेव 'नाथस्त्वं जातः? पुरा न? इत्याह—

**अप्पा नदी वेयरणी, अप्पा मे कूडसामली । अप्पा कामदुहा घेणू, अप्पा मे नंदणं वणं ॥ ३६ ॥**

अप्पा कत्ता विकत्ता य, दुक्खाण य सुहाण य। अप्पा मित्तममित्तं च, दुप्पट्ठियसुपट्ठिओ ॥३७॥

व्याख्या—'आत्मे'ति व्यवच्छेदफलत्वाद् वाक्यस्य आत्मैव नदी 'वैतरणी' नरकसम्बन्धिनी, तद्धेतुत्वात्। अत एवात्मैव कूटमिव जन्तुयातनाहेतुत्वात् शाल्मली कूटशाल्मली। तथा आत्मैव कामदुघा धेनुरिव धेनुः, इयं च रूढित उक्ता, एतदुपमत्वं चाभिलषितस्वर्गापवर्गावाप्तिहेतुतया। आत्मैव मे नन्दनं वनम्, एतदौपम्यं चास्य चित्तप्रह्लत्तिहेतुतया॥ यथा चैतदेवं तथाऽऽह—आत्मैव कर्त्ता दुःखानां सुखानां चेति योगः। 'विकरिता च' विक्षेपकः आत्मैव तेषामेव, अतआत्मैव मित्रममित्रं च, कीदृक् सन्? दुःप्रस्थितः—दुःप्रवृत्तः सुप्रस्थितः—सुप्रवृत्तः, एतयोर्विशेषणसमासः। एवं च प्रव्रज्यायामेव सुप्रस्थितत्वेनाऽऽत्मनोऽन्येषां च योगक्षेमकरणसमर्थत्वाद् नाथत्वमिति सूत्रद्वयार्थः॥ ३६-३७॥

पुनरन्यथाऽनाथत्वमाह—

इमा हु अण्णा वि अणाहया णिवा!, तमेगचित्तो निहुओ सुणेहि मे।
नियंठधम्मं लहियाण वी जहा, सीयंति एगे बहुकायरनरा॥ ३८॥
जो पव्वइत्ताण महव्वयाइं, सम्मं च नो फासयई पमाया।
अणिग्गहप्पा य रसेसु गिद्धे, न मूलओ छिंदइ बंधणं से॥ ३९॥
आउत्तया जस्स य नत्थि काई, इरियाए भासाए तहेसणाए।
आयाणनिक्खेव दुगंछणाए, न धीरजायं अणुजाइ मग्गं॥ ४०॥
चिरं पि से मुंडरुई भवित्ता, अथिरव्वए तवनियमेहिं भट्ठे।
चिरं पि अप्पाण किलेसइत्ता, न पारए होइ हु संपराए॥ ४१॥

अनाथि-
निर्ग्रन्थस्य
वक्तव्यता।

पोल्लेव मुट्ठी जह से असारे, अयंतिए कूडकहावणे वा ।
राढामणी वेरुलियप्पगासे, अमहग्घए होइ य जाणएसु ॥ ४२ ॥
कुसीललिंगं इह धारइत्ता, इसिज्झयं जीविय वूहइत्ता ।
असंजए संजय लप्पमाणे, विणिघायमागच्छइ से चिरं पि ॥ ४३ ॥
विसं पिवित्ता जह कालकूडं, हणाइ सत्थं जह कुग्गहीयं ।
एसेव धम्मो विसओववण्णो, हणाइ वेयाल इवाविवण्णो ॥ ४४ ॥
जे लक्खणं सुविण पउंजमाणे, निमित्तकोऊहलसंपगाढे ।
कुहेडविज्जासवदारजीवी, न गच्छई सरणं तम्मि काले ॥ ४५ ॥
तमंतमेणेव उ से असीले, सया दुही विप्परियासुवेइ ।
संधावई नरगतिरिक्खजोणी, मोणं विराहेत्तु असाहुरूवे ॥ ४६ ॥
उद्देसियं कीयगडं नियागं, न मुंचती किंचि अणेसणिज्जं ।
अग्गी विवा सव्वभक्खी भवित्ता, इओ चुए गच्छइ कट्टु पावं ॥ ४७ ॥
न तं अरी कंठछेत्ता करेति, जं से करे अप्पणिया दुरप्पा ।
से नाहिती मच्चुमुहं तु पत्ते, पच्छाणुतावेण दयाविहूणे ॥ ४८ ॥
निरट्ठिया णग्गरुई उ तस्स, जे उत्तिमट्ठे विवज्जासमेति ।
इमे वि से नत्थि परे वि लोगे, दुहओ वि से झिज्झइ तत्थ लोए ॥ ४९ ॥

एमेवऽहाछंदकुसीलरूवे, मग्गं विराहेत्तु जिणोत्तमाणं ।
कुररी विवा भोगरसाणुगिद्धा, निरट्ठसोगा परितावमेई ॥ ५० ॥

व्याख्या—'इयं च' वक्ष्यमाणा 'तुः' पूरणे, अन्याऽपि अनाथता नृप ! अस्तीति शेषः, 'ताम्' अनाथताम् एकचित्तः 'निभृतः' गिरः शृणु, का पुनरसौ ? इत्याह—निर्ग्रन्थधर्मं 'लहियाण वि'' त्ति लब्ध्वाऽपि 'यथे'त्युपप्रदर्शने 'सीदन्ति' तदनुष्ठानं प्रति शिथिलीभवन्ति 'एके' केचन बहवश्च ते कातरनराश्च बहुकातरनराः, सीदन्तश्च न आत्मानमन्यांश्च रक्षयितुं क्षमा इति, इयं सदनलक्षणाऽपराऽनाथतेति भावः ॥ सदनमेवाऽनेकधास्वरूपानुवादतः फलदर्शनार्थमाह—''जो पव्वइत्त'' इत्यादि सुगमम्—नवरम्—'न स्पृशति' न सेवते, 'बन्धनं' रागद्वेषात्मकम् ॥ 'आयुक्तता' उपयुक्तता 'काचिदि'ति स्वल्पाऽपि ''आयाणनिक्खेव'' त्ति सुब्लोपात् 'आदाननिक्षेपयोः' उपकरणग्रहणन्यासयोः, तथा जुगुप्सनायाम्, इह चोच्चारादीनां संयमाऽनुपयोगितया जुगुप्सनीयत्वेनैव परिष्ठापनात् परिष्ठापनैव जुगुप्सनोक्ता। स ईदृक् किम् ? इत्याह—न धीरैर्यातः—गतो धीरयातस्ताम् अनुयाति 'मार्गं' सम्यग्दर्शनात्मकं मुक्तिपथम् ॥ तथा च चिरमपि मुण्ड एव–मुण्डन एव निःशेषानुष्ठानपराङ्मुखतया रुचिर्यस्यासौ मुण्डरुचिः, अस्थिरव्रतः तपोनियमेभ्यो भ्रष्टः चिरमप्यात्मानं 'क्लेशयित्वा' लोचादिना बाधयित्वा न पारगो भवति, 'हु' वाक्यालङ्कारे, ''संपराए'' त्ति सुब्व्यत्ययात् 'सम्परायस्य' संसारस्य ॥ स चैवंविधः पोल्लेव' अन्तः सुषिरेव न मनागपि निविडा मुष्टिर्यथा असारा। ''अयंतिए'' त्ति अयन्त्रितः कूटकार्षापण इव, यथा ह्यसौ न केनचित् मूल्येन गृह्यते तथैषोऽपि निर्गुणत्वादुपेक्षणीयः। 'राढामणिः' काचमणिः वैडूर्यप्रकाशः अमहार्घको भवति, 'हु' अयमर्थे, ज्ञेषु ॥ 'कुशीललिङ्गं' पार्श्वस्थादिवेषम् 'इह' अस्मिन् जन्मनि धारयित्वा 'ऋषिध्वज' मुनिचिह्नं रजोहरणादि ''जीविय'' त्ति आर्षत्वात् जीविकार्थं 'बृंहयित्वा' इदमेव प्रधानमिति ख्यापनेनोपबृंह्य तत एवाऽसंयतः सन् ''संजय

अनाथि-
निर्ग्रन्थस्य
वक्तव्यता।

अनाथिनिर्ग्रन्थस्य वक्तव्यता।

लप्पमाणे" त्ति सोपरकारत्वात् संयतम् आत्मानं लपन् 'विनिघातं' विविधाभिघातरूपमागच्छति, सुचिरमपि आस्तामल्पकालं नरकादाविति भावः ॥ इहैव हेतुमाह—विषं 'तुः' चार्थे, स च योक्ष्यते, पीतं यथा कालकूटं "हणाइ" त्ति हन्ति शस्त्रं च यथा 'कुगृहीतं' दुर्गृहीतं "एसेव" त्ति एष एव विषादिवत् 'धर्मः' यतिधर्मः 'विषयोपपन्नः' शब्दादिविषययुक्तो हन्ति दुर्गतिपातहेतुत्वेन द्रव्ययतिमिति शेषः, वेताल इव, चस्य गम्यमानत्वाद् वेताल इव च 'अविपन्नः' अप्राप्तविपत् मन्त्रादिभिरनियन्त्रित इत्यर्थः ॥ यो लक्षणं स्वप्नं च 'प्रयुञ्जानः' व्यापारयन् निमित्तं च—भौमादि कौतुकं च—अपत्याद्यर्थं स्नपनादि तयोः सम्प्रगाढः—सक्तो यः सः, तथा "कुहेडविज्ज" त्ति कुहेटकविद्याः—अलीकाश्चर्यविधायिमन्त्रतन्त्रज्ञानात्मिकास्ता एव कर्मबन्धहेतुत्वाद् आश्रवद्वाराणि तैर्जीवितुं शीलमस्येति कुहेटविद्याश्रवद्वारजीवी 'न गच्छति' न प्राप्नोति शरणं 'तस्मिन्' फलोपभोगोपलक्षिते 'काले' समये ॥ अमुमेवार्थं भावयितुमाह—"तमंतमेणेव उ" त्ति अतिमिथ्यात्वोपहततया 'तमस्तमसैव' प्रकृष्टाज्ञानेनैव, 'तुः' पूरणे, 'सः' द्रव्ययतिः अशीलः सदा 'दुःखी' विराधनाजनितदुःखेनैव, "विप्परियासुवेइ" त्ति 'विपर्यासं' तत्त्वेषु वैपरीत्यमुपैति, ततश्च 'सन्धावति' सततं गच्छति नरकतिर्यग्योनीः 'मौनं' चारित्रं विराध्य 'असाधुरूपः' तत्त्वतोऽयतिस्वभावः सन्। अनेन च विराधनाया अनुबन्धवत् फलमुक्तम्॥ कथं पुनर्मौनं विराध्य कथं वा नरकतिर्यग्गतीः सन्धावति ? इत्याह—"उद्देसियमि"त्यादि "नियागं" नित्यपिण्डम्, अग्निरिव सर्वम्—अप्रासुकमपि भक्षयतीत्येवंशीलः सर्वभक्षी भूत्वा कृत्वा च पापमिति योगः, इतश्च्युतो गच्छति कुगतिमिति शेषः ॥ यतश्चैवं स्वदुश्चरितैरेव दुर्गतिप्राप्तिः अतः 'न' नैव 'तमि'ति प्रस्तावाद् अनर्थम् अरिः कण्ठच्छेत्ता करोति यं "से" तस्य करोत्यात्मीया 'दुरात्मता' दुष्टाचारप्रवृत्तिरूपा, न चैनामाचरन्नपि जन्तुर्मूढतया वेत्ति परं 'सः' दुरात्मताकर्त्ता ज्ञास्यति प्रक्रमाद् दुरात्मतां 'मृत्युमुखं तु' मरणसमयं पुनः प्राप्तः पश्चात् 'अनुतापेन' 'हा! दुष्टु

मयाऽनुष्ठितेयम्' इत्येवंरूपेण दया-संयमस्तद्विहीनः सन् ॥ यस्तु मृत्युमुखप्राप्तोऽपि न तां वेत्स्यति तस्य का वार्त्ता ? इत्याह—निरर्थिका, तुशब्दस्येह सम्बन्धात् 'निरर्थिकैव' निष्फलैव नाग्न्ये—श्रामण्ये रुचिर्नाग्न्यरुचिः तस्य यः "उत्तिमट्ठि" त्ति सुव्यत्ययाद् अपेर्गम्यमानत्वात् 'उत्तमार्थेऽपि' पर्यन्तसमयाराधनरूपे, आस्तां पूर्वम्, 'विपर्यासं' दुरात्मतायामपि सुन्दरात्मतापरिज्ञानरूपम 'एति' गच्छति, इतरस्य तु कथञ्चित् स्यादपि किञ्चित् फलमिति भावः ॥ किमेवम् ? उच्यते—यतः "इमे वि" त्ति 'अयमपि प्रत्यक्षो लोक इति सम्बन्धः "से" तस्य नास्ति, न केवलमयमेव 'परोऽपि' भवान्तररूपः, तत्रेहलोकाभावः शरीरक्लेशहेतुलोचादिसेवनात्, परलोकाभावश्च कुगतिगमनभावतः । तथा च "दुहतो वि" त्ति 'द्विधापि' ऐहिकपारत्रिकार्थाभावेन "से झिज्झइ" त्ति स ऐहिकपारत्रिकार्थसम्पत्तिमतो जनानवलोक्य 'धिङ् मामपुण्यभाजनमुभयभ्रष्टम्' इति चिन्तया क्षीयते 'तत्रे'त्युभयरूपे 'लोके' जगति ॥ यदुक्तम्—'स ज्ञास्यति पश्चादनुतापेन' इति तत्र यथासौ परितप्यते तथा दर्शयन् उपसंहारमाह—'एवमेव' उक्तरूपेणैव महाव्रतास्पर्शनादिना प्रकारेण यथाच्छन्दाः–स्वरुचिविरचिताचाराः कुशीलाः—कुत्सितशीलास्तद्रूपाः—तत्स्वभावाः 'कुररीव' पक्षिणीव "निरट्ठसोय" त्ति निरर्थः—निःप्रयोजनः शोको यस्याः सा निरर्थशोका 'परितापं' पश्चात्तापरूपमेति। यथा चैषाऽऽमिषगृद्धा पक्ष्यन्तरेभ्यो विपत्प्राप्तौ शोचते, न च ततः कश्चित् प्रतीकार इति, एवमसावपि भोगरसगृद्ध ऐहिकाऽऽमुष्मिकाऽपायप्राप्तौ; ततोऽस्य स्वपरपरित्राणाऽसमर्थत्वेनाऽनाथत्वमिति भाव इति सूत्रत्रयोदशकार्थः ॥ एतत् कृत्वा यत् कृत्यं तदुपदेष्टुमाह—

सोच्चाण मेहावि ! सुभासियं इमं, अणुसासणं णाणगुणोववेयं ।
मग्गं कुसीलाण जहाय सव्वं, महानियंठाण वए पहेणं ॥ ५१ ॥

व्याख्या—'श्रुत्वा' हे मेधाविन् ! सुष्ठु–शोभनप्रकारेण भाषितं सुभाषितम् 'इदम्' अनन्तरोक्तम् 'अनुशासनं'

अनाथि-
निर्ग्रन्थस्य
वक्तव्यता।

शिक्षणं ज्ञानेन गुणेन च–प्रस्तावाद् विरतिरूपेणोपेतं मार्गं कुशीलानां हित्वा सर्वं महानिर्ग्रन्थानां "वय" त्ति व्रजेस्त्वं "पहेणं" ति पथेति सूत्रार्थः ॥ ५१ ॥ ततः किं फलम्? इत्याह—

चरित्तमायारगुणन्निए तओ, अणुत्तरं संजम पालियाणं।
निरासवे संखविआण कम्मं, उवेइ ठाणं विउलुत्तमं धुवं ॥ ५२ ॥

व्याख्या—"चरित्तमायारगुणन्निय" त्ति मकारोऽलाक्षणिकः, चारित्राचारः–चारित्रसेवनं गुणः–ज्ञानरूपस्ताभ्यामन्वितश्चारित्राचारगुणान्वितः, 'ततः' महानिर्ग्रन्थमार्गगमनात् 'अनुत्तरं' प्रधानं "संजम पालियाणं" ति 'संयमं' यथाख्यातचारित्रात्मकं पालयित्वा निराश्रवः 'सङ्क्षपय्य' क्षयं नीत्वा कर्म उपैति स्थानम्, विपुलं च तद् अनन्तानामपि तत्रावस्थितेः उत्तमं च प्रधानत्वाद् विपुलोत्तमं 'ध्रुवं' नित्यं मुक्तिपदमित्यर्थ इति सूत्रार्थः ॥ ५२ ॥ सर्वोपसंहारमाह—

एवुग्गदंते वि महातवोधणे, महामुणी महापइण्णे महायसे।
महानियंठिज्जमिणं महासुअं, से काहए महया वित्थरेणं ॥ ५३ ॥

व्याख्या—'एवम्' उक्तप्रकारेण "से काहइ" त्ति 'सः' मुनिः कथयतीति सम्बन्धः। उग्रः कर्मशत्रुं प्रति, उग्रश्चासौ दान्तश्च उग्रदान्तः, 'अपिः' पूरणे, 'महाप्रतिज्ञः' दृढव्रताभ्युपगमः, अत एव महायशाः, महानिर्ग्रन्थेभ्यो हितं महानिर्ग्रन्थीयम्, 'इदम्' अनन्तरोक्तम्, शेषं स्पष्टमिति सूत्रार्थः ॥ ५३ ॥ ततश्च—

तुट्ठो अ सेणिओ राया, इणमुदाहु कयंजली। अणाहत्तं जहाभूयं, सुट्ठु मे उवदंसियं ॥ ५४ ॥

तुज्झं सुलद्धं खु मणुस्सजम्मं, लाभा सुलद्धा य तुमे महेसी!।
तुब्भे सणाहा य सबंधवा य, जं भे ठिया मग्गि जिणुत्तमाणं ॥ ५५ ॥

तं सि णाहो अणाहाणं, सव्वभूयाण संजया! । खामेमि ते महाभाग!, इच्छामि अणुसासिउं ॥५६॥
पुच्छिऊण मए तुब्भं, झाणविग्घो उ जो कओ । निमंतिया य भोगेहिं, तं सव्वं मरिसेहि मे ॥५७॥

व्याख्या—सुगममेव । नवरम्—तुष्टश्चेति 'च:' पुनरर्थे भिन्नक्रमश्च, ततः श्रेणिकः पुनरिदमाह—'यथाभूतं' यथावस्थितम् ॥ "सुलद्धं सु" त्ति सुलब्धमेव 'लाभाः' वर्णरूपादिप्राप्तिरूपाः 'यत्' यस्मात् "भे" भवन्तः ॥ "तं सी" ति पूर्वार्द्धेन पुनरुपबृंहणा कृता, उत्तरार्द्धेन तु क्षामणोपमन्त्रणे दर्शिते । अह तु 'ते' त्ति त्वाम्, "अणुसासिउं" ति अनुशासयितुमात्मानं भवतेति गम्यते ॥ पुनः क्षामणामेव विशेषेण आह—"पुच्छिऊणे"त्यादि, इति सूत्रचतुष्टयार्थः ॥ ५४-५५-५६-५७ ॥ सकलाध्ययनोपसंहारमाह—

एवं थुणित्ताण स रायसीहो, अणगारसीहं परमाए भत्तिए ।
सओरोहो य सपरियणो य, धम्माणुरत्तो विमलेण चेयसा ॥ ५८ ॥
ऊससियरोमकूवो, काऊण य पयाहिणं । अभिवंदिऊण सिरसा, अइयाओ नराहिवो ॥ ५९ ॥
इयरो वि गुणसमिद्धो, तिगुत्तिगुत्तो तिदंडविरओ य ।
विहग इव विप्पमुक्को, विहरइ वसुहं विगयमोहो ॥ ६० ॥ त्ति बेमि ॥

व्याख्या—"सओरोहो" त्ति 'सावरोधः' सान्तःपुरः । "विमलेण" त्ति विगतमिथ्यात्वमलेन चेतसा उपलक्षितः ॥ "अइयाओ" त्ति 'अतियातः' गतः स्वस्थानमिति गम्यते ॥ 'इतरः' मुनिः सोऽपि । शेषं गतार्थमिति सूत्रत्रयार्थः ॥ ५८-५९-६० ॥ 'इति:' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥

॥ इति श्रीनेमिचन्द्रसूरिकृतायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां महानिर्ग्रन्थीयाख्यं विंशतितममध्ययनं समाप्तम् ॥

अनाथि-निर्ग्रन्थस्य वक्तव्यता।

# अथ एकविंशं समुद्रपालीयाख्यमध्ययनम् ।

व्याख्यातं विंशतितममध्ययनम् । अधुनैकविंशं समुद्रपालीयनामकमारभ्यते, अस्य चायमभिसम्बन्धः—'अनन्तराध्ययनेऽनाथत्वमनेकधोक्तम्, इह तु तदालोचनाद् विविक्तचर्ययैव चरितव्यमित्यभिप्रायेण सैवोच्यते' इत्यनेन सम्बन्धेनायातस्यास्याऽऽदिसूत्रम्—

चंपाए पालिए नामं, सावए आसि वाणिए । महावीरस्स भगवओ, सीसे सो उ महप्पणो ॥१॥
निग्गंथे पावयणे, सावए से विकोविए । पोएण ववहरंते, पिहुंडं नगरमागए ॥ २ ॥
पिहुंडे ववहरंतस्स, वाणिओ देइ धूयरं । तं ससत्तं पइगेज्झ, सदेसमह पत्थिओ ॥ ३ ॥
अह पालियस्स घरणी, समुद्दम्मि पसवई । अह दारए तहिं जाए, समुद्दपालि त्ति नामए ॥ ४ ॥
खेमेण आगए चंपं, सावए वाणिए घरं । संवड्ढई घरे तस्स, दारए से सुहोइए ॥ ५ ॥
बावत्तरिं कलाओ अ, सिक्खिए नीइकोविए । जोव्वणेण य संपन्ने, सुरूवे पियदंसणे ॥ ६ ॥
तस्स रूववइं भज्जं, पिया आणेइ रूविणिं । पासाए कीलए रम्मे, देवो दोगुंदगो जहा ॥ ७ ॥
अह अन्नया कयाई, पासायालोयणे ठिओ । वज्झमंडणसोभागं, वज्झं पासइ वज्झगं ॥ ८ ॥
तं पासिऊण संविग्गो, समुद्दपालो इमं बवी । अहो! असुहाण कम्माणं, निज्जाणं पावगं इमं ॥९॥
संबुद्धो सो तहिं भयवं, परमं संवेगमागओ । आपुच्छऽम्मापियरो, पव्वए अणगारियं ॥ १० ॥

व्याख्या—सुगमान्येव । नवरम्—"सीसे सो उ" त्ति शिष्यः स पुनः ॥ "निग्गंथे" त्ति नैर्ग्रन्थ्ये "से विकोविए" त्ति

'सः' पालितः 'विकोविदः' विशेपेण कोविदः ॥ "वाणिओ देइ धूयरं" ति तद्गुणाकृष्टचेताः कश्चित् वणिग् ददाति दुहितरम्। "तं समत्तं पइगिज्झ" त्ति तां 'ससत्त्वां' सगर्भां प्रतिगृह्य ॥ "जोव्वणेण य संपन्ने" त्ति यौवनेन च सम्पन्नो जात इति गम्यते ॥ "आणेइ रूविणिं" ति 'आनयति' तथाविधकुलाद् आगमयति रूपिणीनामिकाम् ॥ वध्यमण्डनानि—रक्तचन्दनकरवीरादीनि तैः शोभा यस्य स वध्यमण्डनशोभाकस्तं 'वध्यं' वधार्हं कञ्चन तथाविधाकार्यकारिणं पश्यति, वध्यं गच्छति वध्यगस्तम्, वध्यशब्देन चोपचाराद् वध्यभूमिरुक्ता ॥ "इमं ववि" त्ति 'इदं' वक्ष्यमाणमब्रवीत् ॥ "निज्जाणं" ति 'निर्याणम्' अवसानम् ॥ एवं च परिभावयन् सम्बुद्धः सः "तहिं" ति तस्मिन्नेव प्रासादावलोकने । "आपुच्छऽम्मापियरो" त्ति आपृच्छ्य मातापितरौ "पव्वए" त्ति 'प्राव्राजीत्' प्रतिपन्नवान् अनगारितामिति सूत्रदशकार्थः ॥ १-२-३-४-५-६-७-८-९-१० ॥ प्रव्रज्य च यथाऽसौ आत्मानमनुशासितवांस्तथाऽऽह—

समुद्रपालस्य वक्तव्यता ।

जहित्तु संगं थ महाकिलेसं, महंतमोहं कसिणं भयावहं ।
परियायधम्मं चऽभिरोयएज्जा, वयाणि सीलाणि परीसहे य ॥ ११ ॥
अहिंस सच्चं च अतेणगं च, तत्तो य बंभं अपरिग्गहं च ।
पडिवज्जिया पंच महव्वयाणि, चरिज्ज धम्मं जिणदेसियं विऊ ॥ १२ ॥
सव्वेहिं भूएहिं दयाणुकंपी, खंतिक्खमे संजयबंभयारी ।
सावज्जजोगं परिवज्जयंतो, चरिज्ज भिक्खू सुसमाहिइंदिए ॥ १३ ॥
कालेण कालं विहरिज्ज रट्ठे, बलाबलं जाणिय अप्पणो उ ।
सीहो व सद्देण न संतसेज्जा, वइजोग सुच्चा न असब्भमाहु ॥ १४ ॥

उवेहमाणो उ परिव्वएज्जा, पियमप्पियं सव्व तितिक्खएज्जा ।
न सव्व सव्वत्थऽभिरोयएज्जा, न यावि पूयं गरहं च संजए ॥ १५ ॥
अणेग छंदा मिह माणवेहिं, जे भावओ संपकरेइ भिक्खू ।
भयभेरवा तत्थ उइंति भीमा, दिव्वा मणुस्सा अदुवा तिरिच्छा ॥ १६ ॥
परीसहा दुव्विसहा अणेगे, सीयंति जत्था बहुकायरा नरा ।
से तत्थ पत्ते न वहेज्ज भिक्खू, संगामसीसे इव णागराया ॥ १७ ॥
सीओसिणा दंसमसा य फासा, आयंका विविहा फुसंति देहं ।
अकुक्कुओ तत्थऽहियासएज्जा, रयाइं खेवेज्ज पुराकडाइं ॥ १८ ॥
पहाय रागं च तहेव दोसं, मोहं च भिक्खू सययं वियक्खणो ।
मेरु व्व वाएण अकंपमाणो, परीसहे आयगुत्ते सहेज्जा ॥ १९ ॥
अणुण्णए नावणए महेसी, न यावि पूयं गरहं च संजए ।
से उज्जुभावं पडिवज्ज संजए, निव्वाणमग्गं विरए उवेइ ॥ २० ॥
अरइरइसहे पहीणसंथवे, विरए आयहिए पहाणवं ।
परमट्ठपएहिं चिट्ठई, छिन्नसोए अममे अकिंचणे ॥ २१ ॥
विवित्तलयणाइं भएज्ज ताई, निरोवलेवाइं असंथडाइं ।
इसीहि चिण्णाइं महायसेहिं, काएण फासेज्ज परीसहाइं ॥ २२ ॥



समुद्रपालस्य
वक्तव्यता ।

स नाण-नाणोवगए महेसी, अणुत्तरं चरिउं धम्मसंचयं ।
अणुत्तरेनाणधरे जसंसी, ओभासई सूरिए वंतलिक्खे ॥ २३ ॥

समुद्रपालस्य वक्तव्यता।

व्याख्या—'हित्वा' त्यक्त्वा "संगं थ" त्ति 'मङ्गं' स्वजनादिसम्बन्धं 'थः' पूरणे निपातः, 'महाक्लेशं' महादुःखं "महंतमोहं" ति महामोहं 'कृत्स्नं' समस्तं, महाक्लेशरूपत्वादेव विवेकिनां भयावहम्, पर्यायः—प्रक्रमात् प्रव्रज्यापर्यायस्तत्र धर्मः पर्यायधर्मस्तं, 'तः' पूरणे, अभिरोचयेद् भवान् हे आत्मन्! इति प्रक्रमः। पर्यायधर्ममेव विशेषत आह—'व्रतानि' महाव्रतानि, 'शीलानि' उत्तरगुणरूपाणि 'परीषहानि'ति सीमन्यायेन परीषहसहनानि च ॥ एतदभिरुच्य अनन्तरं स यत् कृतं तदाह—अहिंसा सत्यमस्तेन्यकं च ततश्च 'ब्रह्म' ब्रह्मचर्यम् अपरिग्रहं च प्रतिपद्य एवं पञ्च महाव्रतान्येतानि 'चरेत्' सेवेत, नाङ्गीकृत्यैव तिष्ठेदिति भावः, 'धर्मं' श्रुत-चारित्ररूपं जिनदेशितं "विउ" त्ति विद्वान्॥ "सव्वेहिं भूएहिं" ति सर्वेषु भूतेषु दयया—रक्षणरूपया अनुकम्पनशीलो दयानुकम्पी, क्षान्त्या न त्वशक्त्या क्षमते—प्रत्यनीकोदीरितदुर्वचनादिक सहत इति क्षान्तिक्षमः, संयतते इति संयतः स चासौ ब्रह्मचारी च संयतब्रह्मचारी, पूर्वत्र ब्रह्मप्रतिपत्त्या गतत्वेऽपि पुनरस्याभिधानं ब्रह्मचर्यस्य दुरनुचरत्वख्यापनार्थम्॥ 'कालेन' पादोनपौरुष्यादिना 'कालमि'ति कालोचितं प्रत्युपेक्षणादिकृत्यं कुर्वन्निति शेषः विहरेत् 'राष्ट्रे' मण्डले 'बलाबलं' सहिष्णुत्वाऽसहिष्णुत्वलक्षणं ज्ञात्वा, आत्मनो यथा यथा संयमयोगहानिर्न जायते तथा तथेत्यभिप्रायः। अन्यच्च सिंह इव 'शब्देन' प्रस्तावाद् भयोत्पादकेन 'न सन्त्रस्येत्' नैव सत्रासं व्रजेद् भवानिति सर्वत्र गम्यते, अत एव च 'वाग्योगम्' अर्थाद् दुःखोत्पादकं श्रुत्वा 'न' नैव असभ्यं "आहु" त्ति आहितवान् ब्रूयात्॥ तर्हि किं कुर्यात्? इत्याह—'उपेक्षमाणः' तमवधीरयन् परिव्रजेत्, तथा प्रियमप्रियं "सव्व" त्ति सर्वं 'तितिक्षेत' सहेत। किञ्च न "सव्व" त्ति 'सर्वं' वस्तु सर्वत्र स्थाने अभिरोचयेद्, यथादृष्टाऽभिलाषुको मा भूदिति

भावः । न चाऽपि पूजां गर्हां च अभिरोचयेदिति सम्बन्धः । गर्हा चात्र परपरिवादरूपा ॥ ननु भिक्षोरपि किमन्यथाभावः सम्भवति ? येनेत्थमित्थं चाऽऽत्मानुशासनमसौ कृतवानित्याह—"अणेग" त्ति अनेके 'छन्दाः' अभिप्रायाः सम्भवन्तीति गम्यते, 'इह' जगति "माणवेहि" त्ति मानवेषु 'ये' इति यान् छन्दान् 'भावतः' तत्त्ववृत्त्या 'सम्प्रकरोति' संविधत्ते "भिक्खु" त्ति अपेर्गम्यमानत्वाद् 'भिक्षुरपि' अनगारोऽपि सन्, अत इत्थमित्थं चाऽऽत्मानुशासनमिति भावः, अपरं च 'भयभैरवाः' भयोत्पादकत्वेन भीषणाः 'तत्रे'ति व्रतपतिपत्तौ "उइंति" त्ति उद्यन्ति, भयभैरवा इत्यनेनाऽपि गते 'भीमाः' इति पुनरभिधानम् अतिरौद्रताख्यापनायोक्तम् । दिव्या मानुष्यका अथवा तैरश्चा उपसर्गा इति गम्यते ॥ तथा परीषहा दुर्विषहा अनेके उद्यन्तीति सम्बन्धः । 'सीदन्ति' संयमं प्रति शिथिलीभवन्ति "जत्थ" त्ति 'यत्र' येषु उपसर्गेषु परीषहेषु च सत्सु बहुकातरा नराः, 'से' इत्यथ 'तत्र' तेषु प्राप्तः 'न व्यथेत' न सत्त्वात् चलेत् भिक्षुः सङ्ग्रामशीर्ष इव नागराजः ॥ शीतोष्णे दंशमशकाः, चशब्द उत्तरत्र योक्ष्यते, 'स्पर्शाः' तृणस्पर्शादयः आतङ्काश्च विविधाः 'स्पृशन्ति' उपतापयन्ति देहं भवत इति गम्यते, "अकुक्कुउ" त्ति आर्षत्वात् कुत्सितं कूजति कुकूजो न तथा अकुकूजः 'तत्र' शीतादिस्पर्शने अधिसहेत । अनेन चानन्तरसूत्रोक्त एवार्थो विस्पष्टतार्थमन्वयेनोक्तः । एवंविधश्च 'रजांसि' जीवमालिन्यहेतुतया कर्माणि "खवेज्ज" त्ति क्षपयेत् पुराकृतानि ॥ "पहाये"त्यादि स्पष्टम् । नवरम्—"आयगुत्ते" त्ति गुप्तात्मा "सहेज्ज" त्ति सहेत परीषहानिति गम्यते । अनेन परीषहसहनोपाय उक्तः ॥ किञ्च—अनुन्नतो नाऽवनतो महर्षिः, न चाऽपि पूजां गर्हां च प्रतीति शेषः, "संजए" त्ति 'सज्जेत्' सङ्गं कुर्यात्, 'से' इति स एवात्मानुशासकः 'ऋजुभावम्' आर्जवं प्रतिपद्य संयतो निर्वाणमार्गं विरतः सन् 'उपैति' विशेषेण प्राप्नोति, तत्कालापेक्षया च वर्त्तमाननिर्देश इति ॥ ततः स तदा कीदृशः किं करोति ? इत्याह—अरतिरती संयमाऽसंयमविषये सहते—ताभ्यां न बाध्यत इति अरतिरतिसहः,



समुद्रपालस्य वक्तव्यता ।

"पहीणसंथवे" त्ति संस्तवप्रहीणः, संस्तवश्च पूर्वपश्चात्संस्तवरूपः, विरत आत्महितः, प्रधानः—सर्वसंयमो मुक्तिहेतुत्वात् स यस्याऽस्त्यसौ प्रधानवान्, परमोऽर्थः परमार्थः—मोक्षस्तस्य पदानि—सम्यग्दर्शनादीनि तेषु तिष्ठति छिन्नशोकः अममः अकिञ्चनः। इह च संयमस्थानानां बाहुल्यात् तदभिधायिनां पदानां पुनः पुनर्वचनेऽपि न पौनरुक्त्यम्॥ 'विविक्तलयनानि' स्त्र्यादिविरहितोपाश्रयाः "भएज्ज" त्ति भजति त्रायी 'निरुपलेपानि' तदर्थं नोपलिप्तानि 'असंसृतानि' बीजादिभिरव्याप्तानि, अत एव ऋषिभिः 'चीर्णानि' सेवितानि महायशोभिः, कायेन "फासेज्ज" त्ति सुब्व्यत्ययात् 'स्पृशति' सहते परीषहान्॥ ततः कीदृगभूद् ? इत्याह—'सः' समुद्रपालनामा मुनिर्ज्ञानं—श्रुतज्ञानं तेन ज्ञानम्—अवगमः प्रक्रमाद् यथावत् क्रियाकलापस्य तेन उपगतः—युक्तो ज्ञानज्ञानोपगतो महर्षिरनुत्तरं चरित्वा 'धर्मसञ्चयं' क्षान्त्यादिधर्मसमूहं "अणुत्तरेनाणधरे" त्ति प्रकारस्याऽलाक्षणिकत्वाद् अनुत्तरं ज्ञानं—केवलाख्यं तद्धरो यशस्वी 'अवभासते' प्रकाशते सूर्यवद् अन्तरिक्षे इति सूत्रत्रयोदशकार्थः॥ ११-१२-१३-१४-१५-१६-१७-१८-१९-२०-२१-२२-२३॥ अध्ययनार्थमुपसंहरंस्तस्यैव फलमाह—

दुविहं खवेऊण य पुण्णपावं, निरंगणे सव्वओ विप्पमुक्के।
तरित्ता समुद्दं व महाभवोघं, समुद्दपाले अपुणागमं गए॥ २४॥ त्ति बेमि॥

'द्विविधं' घातिकर्म-भवोपग्राहिभेदेन द्विभेदं 'पुण्यपापं' शुभाऽशुभप्रकृतिरूपम् अर्थात् कर्म 'निरङ्गनः' प्रस्तावात् संयमं प्रति निश्चलः शैलेश्यवस्थाप्राप्त इत्यर्थः, अत एव 'सर्वतः' इति बाह्यादान्तराच्च प्रक्रमादभिष्वङ्गहेतोर्विप्रमुक्तः तीर्त्वा समुद्रमिव 'महाभवौघं' बृहज्जन्मसन्तानं समुद्रपालः अपुनरागमां गतिं गत इति सूत्रार्थः॥ २४॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत्॥

॥ इति श्रीनेमिचन्द्रसूरिविरचितायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां समुद्रपालीयाख्यमेकविंशमध्ययनं समाप्तम्॥

समुद्रपालस्य वक्तव्यता।

# अथ द्वाविंशं रथनेमीयाख्यमध्ययनम् ।

व्याख्यातमेकविंशमध्ययनम्, अधुना रथनेमीयं द्वाविंशमारभ्यते । अस्य चायमभिसम्बन्धः—'अनन्तराध्ययने विविक्तचर्या उक्ता, सा च चरणे धृतिमतैव शक्यते कर्तुम्, अतश्चरणे कथञ्चिदुत्पन्नविश्रोतसिकेनाऽपि धृतिराधेया रथनेमिवत्' इत्यनेन सम्बन्धेनायातस्यास्याऽऽदिसूत्रम्—

सोरियपुरम्मि नयरे, आसि राया महिड्ढिए । वसुदेवे त्ति नामेणं, रायलक्खणसंजुए ॥ १ ॥
तस्स भज्जा दुवे आसि, रोहिणी देवकी तहा । तासिं दोण्हं पि दो पुत्ता, इट्ठा राम-केसवा ॥ २ ॥
सोरियपुरम्मि नयरे, राया आसि महिड्ढिए । समुद्दविजए नामं, रायलक्खणसंजुए ॥ ३ ॥
तस्स भज्जा सिवा नाम, तीसे पुत्ते महायसे । भगवं अरिट्ठनेमि त्ति, लोगनाहे दमीसरे ॥ ४ ॥
सोऽरिट्ठनेमिनामो उ, लक्खणस्सरसंजुओ । अट्ठसहस्सलक्खणधरो, गोयमो कालगच्छवी ॥ ५ ॥
वज्जरिसहसंघयणो, समचउरंसो झसोदरो । तस्स राईमई कण्णं, भज्जं जायइ केसवो ॥ ६ ॥
अह सा रायवरकण्णा, सुसीला चारुपेहिणी । सव्वलक्खणसंपुन्ना, विज्जुसोआमणिप्पहा ॥ ७ ॥
अहाह जणओ तीसे, वासुदेवं महिड्ढियं । इहागच्छउ कुमारो, जा से कण्णं दलामि हं ॥ ८ ॥
सव्वोसहीहिं ण्हविओ, कयकोउयमंगलो । दिव्वजुयलपरिहिओ, आहरणेहिं विभूसिओ ॥ ९ ॥
मत्तं च गंधहत्थिं, वासुदेवस्स जेट्ठगं । आरूढो सोहए अहियं, सिरे चूडामणी जहा ॥ १० ॥

अह ऊसिएण छत्तेण, चामराहि य सोहिओ । दसारचक्केण य सो, सव्वओ परिवारिओ ॥ ११ ॥
चउरंगिणीए सेणाए, रइयाए जहक्कमं । तुडियाण सन्निनाएणं, दिव्वेणं गगणं फुसे ॥ १२ ॥
एयारिसीए इड्ढीए, जुईए उत्तिमाए य । नियगाओ भवणाओ, निज्जाओ वण्हिपुंगवो ॥ १३ ॥
अह सो तत्थ निज्जंतो, दिस्स पाणे भयद्दुए । वाडेहिं पंजरेहिं च, सन्निरुद्धे सुदुक्खिए ॥ १४ ॥
जीवियंतं तु संपत्ते, मंसट्ठा भक्खियव्वए । पासित्ता से महापण्णे, सारहिं इणमब्बवी ॥ १५ ॥
कस्स अट्ठा इमे पाणा, एए सव्वे सुहेसिणो । वाडेहिं पंजरेहिं च, सन्निरुद्धा य अच्छहिं? ॥ १६ ॥

व्याख्या—सुगमैव । नवरम्—राजलक्षणानि चक्रस्वस्तिकादीनि । पुनः सौर्यपुराभिधानं च सूत्रे समुद्रविजय-वसुदेवयोरेकनगरनिवासितानिदर्शनार्थम् । 'समुद्रविजयसूनुः अरिष्टनेमिरि'ति च श्रुते अनेन भगवता कस्मिन् भवे तीर्थङ्करनामकर्म निबद्धम्? इति विनेयकौतुकापनोदाय तच्चरितं लेशतो लिख्यते—

एगम्मि सन्निवेसे गामाहिवस्स सुतो आसि धणनामो कुलपुत्तओ । माउलदुहिया धणवई तस्स भारिया । अन्नया ताइं गिम्हयाले मज्झण्हे गयाइं पओयणवसेणमरन्नं । दिट्ठो य तत्थ पंथपरिब्भट्ठो तण्हाछुहापरिस्समाइरेगेण निमीलियलोयणो सुक्कतालुओ भूमितलमइगतो किससरीरो एगो मुणी । तं च दट्ठूण 'अहो! महातवस्सी एस कोइ इममवत्थं पत्तो' त्ति संजायभत्तिकरुणेहिं सित्तो जलेण, वीइओ चेलंचलेण, संवाहियाणि य धणेण अंगाइं । जातो समासत्थो नीओ सगामं, पडिलाभिओ य पच्छाऽऽहाराईहिं । मुणिणा वि दिन्नो उवएसो, जहा—इह दुहपउरे संसारे परलोगहियं अवस्सं जाणएण कायव्वं, ता तुम्हे वि ताव मंस-मज्ज-पारद्धिमाईणं करेह निवित्तिं जइ सक्केह पालेउं, जतो बहुदोसाणि एयाणि, तहाहि—'पंचिंदियवहभूयं, मंसं दुग्गंधमसुइ बीभत्थं । रक्खसपरितुलियभक्खग-आमयजणयं

कुगइमूलं ॥१॥ तहा—गुरुमोह-कलह-निद्दा-परिहव-उवहास-रोस-मयहेऊ । मज्जं दोग्गइमूलं, हिरि-सिरि-मइ-धम्मनासकरं ॥२॥ अवि य—मज्जे महुम्मि मंसे य, नवणीयम्मि चउत्थए । उप्पज्जंति असंखा, तवण्णा तत्थ जंतुणो ॥३॥ तहा—सपरोवघायजणया, इहेव तह नरयतिरियगइमूलं । दुहमारणसयहेऊ, पारद्धी वेरवुड्ढिकरा ॥४॥" एवं च सोऊण संविग्गेहिं तेहिं भणियं—भयवं ! देहि अम्ह अप्पणयं धम्मं गिहत्थावत्थोचियं । तेणावि 'सो धम्मो जत्थ दया, दसट्ठदोसा न जस्स सो देवो । सो हु गुरू जो णाणी, आरंभपरिग्गहोविरतो ॥१॥' इच्चाइ सवित्थरं कहिऊण दिन्नो सम्मत्तमूलो य सावयधम्मो । परितुट्ठाइं ताइं अणुसासियाइं मुणिणा, जहा—"तत्थ वसेज्जा सड्ढो, जहिं नह जत्थ होइ संजोगो । जत्थ य चेइयभवणं, अन्ने वि य जत्थ साहम्मी ॥१॥ देवगुरूण तिसंझं, करेज्ज तह परमवंदणं विहिणा । तह पुप्फवत्थमाईहिं पूयणं सव्वकालं पि ॥२॥ अन्नं च—अपुव्वनाणगहणं, पच्चक्खाणं सुधम्मसवणं च । कुज्जा सइ जहसत्ती, तवसज्झायाइ जोगं च ॥३॥ अन्नं च—भोयणसमए सयणे, विबोहणे पवसणे भए वसणे । पंचनमोक्कारं खलु, सुमरेज्जा सव्वकज्जेसु ॥४॥" एवमाइधम्मे थिरीकाऊण ताइं आपुच्छिऊण य गतो अहाविहारं साहू । ताइं वि कुणंति साहूवइट्ठमणुट्ठाणं, वद्धं च तेहिं तवस्सिवच्छल्लपययं सुहाणुबंधि महंतं पुन्नं । अवि य—"वेयावच्चं कीरइ, समणाणं सुविहियाण जं किंचि । पारंपरेण जायइ, मोक्खसुहप्पसाहगं तं पि ॥१॥" पडिवन्नो य तेहिं कालेण जइधम्मो । कालं काऊण सोहम्मे सामाणितो जातो धणो, इयरा वि जातो तस्सेव मित्तो । तत्थ दिव्वं सुरसुहमणुभविउं चुतो संतो धणो उववन्नो वेयड्ढे सूरतेयराइणो पुत्तो चित्तगइनामा विज्जाहरराया । धणवई वि सूररायकन्नगा होऊण जाया तस्सेव भारिया रयणवई नाम । आसेवियमुणिधम्मो माहिंदे धणो सामाणितो, इयरा य तम्मित्तो जातो । ततो चुतो धणो अवराजितो नाम राया जातो, सा वि पिइमई तस्स पत्ती । काऊण समणधम्मं गयाइं आरणके कप्पे । धणो सामाणितो

न्नाओ, इयरा वि तन्मित्तो। ततो चुओ धणो संखराया जातो, सा वि जसमई तस्सेव कंता। तत्थ संखो पडिवन्नमुणिधम्मो अरहंतवच्छल्लाइहेऊहिं निबद्धतित्थयरनामो उववन्नो अवराइयविमाणे। जसमई वि साहुधम्मपहावेण तत्थेवोववण्णा। ततो चविऊण धणो सोरियपुरे नयरे दसण्हं दसाराणं जेट्ठस्स समुद्दविजयस्स राइणो सिवादेवीए भारियाए कुच्छिंसि चोद्दसमहासुमिणसूइतो कत्तियकिण्हबारसीए उववन्नो पुत्तत्ताए। उचियसमएण य सावणसुद्धपंचमीए पसूया सिवादेवी दारयं। दिसाकुमारिकयजायकम्मसुरासुरविहियजम्माभिसेयाणंतरं कयं राइणा वद्धावणयं। दिट्ठो रिट्ठरयणमतो नेमी सुमिणे गब्भगए इमम्मि सिवाए त्ति 'अरिट्ठनेमि' त्ति कयं पिउणा नामं। जातो अट्ठवरिसो। एत्थंतरे य हरिणा कंसे विणिवाइए जीवजसावयणेण जायवाणमुवरि आसुरुत्तो जरासंधो महाराया। तयासंकाए गया पच्छिमसमुद्दं ते जायवा। तत्थ केसवाराहियवेसमणकयाए सव्वकंचणमयाए बारसजोयणायामाए नवजोयणवित्थराए बारवईए सुहेण चिट्ठंति। कालेण य निहयजरासंधा राम-केसवा भरहद्धाहिवइणो राया जाया। अरिट्ठनेमी य भयवं जोव्वणमणुपत्तो विसयपरम्मुहो विसिट्ठकीलाहिं कीलंतो सव्वजायवपिओ हिंडइ जहिच्छाए। अन्नया समाणवय-वेसा-ऽऽयारेहिं निवकुमारेहिं सह रमंतो गतो हरिणो आउहसालाए, दिट्ठाइं देवयाहिट्ठियाइं अणेगाइं आउहाइं। ततो दिव्वं कालवट्ठं गेण्हंतो पाएसु निवडिऊण भणितो आउहपालेण—कुमार! किमणेण सयंभुरमणवाहुतरणविब्भमेण असक्काणुट्ठाणेणं?, न खलु महुमहणं वज्जिय सदेवमणुयासुरे वि लोए इमं आरोविउं कोइ सत्तो। ततो ईसिहसंतेण तमवगणिऊणं आरोवियं लीलाए, अप्फालिया जीवा। तीए रवेण य कंपिया मेइणी, थरहरिउमारद्धा गिरिणो, उत्तट्ठहियया इतो ततो पलायंति जल-थल-खहचारिणो जंतुगणा। ततो अच्चंतविम्हियाणाऽऽरक्खियनराणं मोत्तूण कालवट्ठं पुणरुत्तं वारंताण वि गहिओ पंचयण्णो संखो, आऊरितो य कोउगेण। तस्स सद्देण वहिरियं सव्वं पि भुयणं, आकंपियं सदेवमणुयासुरं पि

जयं, विसेसतो सा नयरी । ततो 'किमेस पलयकालसन्निहो संखोहो?' त्ति विगप्पंतस्स हरिणो निवेइतो आउहपालेहिं जहट्ठितो वइयरो । विम्हितो हरी । ततो मुणियकुमारसामत्थेण भणितो बलदेवो हरिणा—जस्सेरिसं बालस्स वि सामत्थं नेमिणो सो वड्ढंतो रज्जं हरिस्सइ, तो पुणो बलं परिक्खिय रज्जरक्खणोवायं चिंतेमो । बलदेवेण भणियं—अलमेयाए संकहाए त्ति, 'जहचिंतियदिण्णफलो, एसो पणईण कप्परुक्खो व्व । सो कह नरिंद ! रज्जं, घेच्छइ कुमरो तुमाहिंतो ? ॥१॥' जेण पुव्वं केवलिनिद्दिट्ठो उप्पण्णो एस बावीसइमो नेमितित्थयरो, तुमं पुण भरहद्धसामी नवमवासुदेवो, ता एस भयवं अकयरज्जो परिचत्तसयलसावज्जजोगो पव्वज्जं काहिति । अणुदियहं पि रज्जहरणसंकाए वारिज्जंतेणावि हरिणा उज्जाणमुवगतो भणितो नेमी—कुमार ! नियनियबलपरिक्खणनिमित्तं बाहुजुद्धेण जुज्झामो । नेमिणा भणियं—किमणेण बुहजणणिंदणिज्जेण इयरजणबहुमएणं बाहुजुज्झववसाएणं ?, विउसजणपसंसणिज्जेणं वायाजुज्झेण जुज्झामो, अण्णं च मए डहरएण तुज्झाभिभूयस्स महंतो अयसो । हरिणा पलत्तं—केलीए जुज्झंताण केरिसो अयसो ? । ततो पसारिया वामा बाहुलया नेमिणा—एयाए नामियाए विजितो मि त्ति । अवि य—'उवहासं खलु जम्हा, जुज्झं गोविंद ! तेण बाहाए । वालियमित्ताए च्चिय, विजितो हं नत्थि संदेहो ॥१॥ अंदोलिया वि दूरं, नियसामत्थेण विण्हुणा बाहा । थेवं पि सा न चलिया, मणं व मयणस्स बाणेहिं ॥२॥'' एवं च विनियत्तरज्जहरणसंकस्स दसारचक्कपरिवुडस्स हरिणो समइक्कंतो कोइ कालो । अन्नया संपत्तजोव्वणं विसयसुहनिप्पिवासं नेमिं निएऊण भणितो समुद्दविजयाइणा दसारचक्केण केसवो—तहा उवयरसु कुमारं जहा झत्ति पयट्टए विसएसु । तेण वि य भणियातो रुप्पिणि-सच्चभामापमुहातो नियभारियाओ । ताहिं वि जहावसरं सपणयं भणितो एसो कुमारो—सव्वतिहुयणाइक्कंतं तुह रूवं, निरुवमसोहग्गाइगुणोववेयं निरामयं देहं, सुरसुंदरीण वि उम्मायजणणं तारुण्णं, ता अणुरूवदारसंगहेण करेसु सफलं दुल्लहलंभं मणुय-

तणं । ततो हसिऊण भणियं **नेमिनाहेण**—मुद्धातो ! असुइरूवाणं वहुदोसालयाणं तुच्छसुहनिबंधणाणं अथिरसंगमाणं रमणीणं सगेण न होइ सफलं नरत्तणं, अवि य एगंतसुद्धाए निकलंकाए निरुवमसुहाए सासयसंजोगाए सिद्धिवहूए चेवो-वज्जणेण तस्स सफलत्तं । जतो—"माणुसत्ताइसामग्गी, तुच्छभोगाण कारणे । कोडिं वराडियाए व, हारिंति अवुहा जणा ॥१॥" अहं सिद्धिनिमित्तमेव जइस्सं । साहितो ताहिं कुमाराभिप्पातो **हरिणो** । तओ तेण सयं चिय भणितो **नेमी**—कुमार ! **उसभाइणो** वि तित्थयरा काऊण दारसंगहं जणिऊण तणए पूरिऊण पणइजणमणोरहे पच्छिमवयम्मि पव्वइया तहा वि संपत्ता मोक्खं, तो एस परमत्थो—दारसंगहेण पूरेसु दसारचक्कस्स मणोरहे । ततो निब्बंधं नाऊण भाविपरिणामं च वियाणंतेण पडिवन्नं हरिवयणं **नेमिणा** । कहियं च तं दसारचक्कस्स **हरिणा** । तेण वि संजायहरिसा-इरेगेण भणितो **हरी**—वरेसु कुमाराणुरूवं रायकुमारियं । दिट्ठा गवेसंतेण **उग्गसेण**रायदुहिया **रायमई** कन्नगा । सा पुण **धणवइजीवो अपराजिय**विमाणातो चविऊण य तत्थोववन्ना । ततो 'सा चेवाणुरूव' त्ति मग्गितो **उग्ग-सेणो** । तेण वि सहरिसेण 'मणोरहाइरित्तो एस अणुग्गहो' त्ति भणिऊण दिन्ना । ततो कारावियं दोसु वि कुलेसु वद्धा-वणयं । अन्नदियहम्मि कारावितो वारेज्जमहूसवो । तओ निव्वत्तिएसु तयणुरूवेसु भत्तवत्थालंकाराईसु करणिज्जेसु पर-माणंदेण पत्तो वारिज्जियवासरो । जहाविहिं पउंखिया **रायमई**, कया सव्वालंकारसारा । कुमारो वि पसाहितो दिव्व-रमणीहिं समारूढो मत्तवारणं । समागया दसारा सह **वलदेव-वासुदेवेहिं** । समाहयाइं तूराइं, ऊसियं सियायवत्तं, आऊरिया जमलसंखा, पगाइयाइं मंगलाइं, जयजयावियं मागहेहिं । ततो थुवंतो नरदेवसंघेण अहिलसिज्जंतो सुरनर-रमणीहिं पेच्छिज्जंतो सव्वलोएणं महाविच्छड्डेण पत्तो विवाहमंडवासन्नं । **रायमई** वि **नेमिकुमारं** दट्ठूण आणंदपरव्वसा संजाया । अवि य—का हं ? किमेत्थ वट्टइ ?, कत्थ व चिट्ठामि ? को इमो कालो ? । जिणदंसणुत्थपहरिस-हरियमणा

रियमहादाणनिमित्तं च पडिवन्नं संवच्छरमेत्तमवत्थाणं । भयवया तप्पभिंतिं च आढत्तं किमिच्छियं महादाणं । जंभगा य देवा भयवतो भवणे हिरण्णधन्नवत्थाइवासं वासिउमाढत्ता । पडिपुण्णे य संवच्छरे आपुच्छिऊण अम्मापियरो सावणसुद्धछट्ठीए सदेवमणुयाए परिसाए परिवुडो निग्गंतूण नयरीए सहसंबवणे उज्जाणे तिन्नि वाससयाइं अगारवासमावसित्ता छट्ठेणं भत्तेणं पुरिससहस्सेण सद्धिं निक्खंतो विहरइ तवसंजमरतो । इओ य भयवतो भाया रहनेमी अणुरायपरो रायमइं उवयरइ, भणिया य तेण—सुयणु ! मा करेह विसायं, तुमं सोहग्गनिहिं को को न पत्थेइ ?, भयवं पुण वीयरागो न करेइ विसयाणुबंधं, तो पडिवज्जसु ममं, तुहाणाकारी सव्वकालमहं । तीए भणियं—जइ वि अहं नेमिनाहेणं चत्ता तहा वि तमहं न परिच्चएमि जेण भयवओ चेव सिस्सिणी भविस्सामि, ता उज्झसु तुममेयमत्थाणुबंधं । ततो ठितो कइ वि दिणे सो अवहेरीए । पुणो वि अन्नम्मि दिणे पत्थिया । ततो तीए तप्पडिबोहणत्थं तप्पच्चक्खमेव पाऊण खीरं मयणफलपाणेण वमिऊण सोवण्णियकच्चोले समुवणीयं रहनेमिणो, भणितो य—पियसु इमं । तेण भणियं—कहं वंतं पियासि ? । तीए भणियं—किमेयं जाणसे तुमं ? । तेण भणियं—बालो वि एयं वियाणइ । तीए भणियं—जइ एवं ता कीस मं नेमिनाहेण वंतमापिउमिच्छसि ? । इमं भणिओ सो उवरतो तदज्झवसाणातो । सा वि दिक्खाभिमुही तवोवहाणेहिं सोसंती चिट्ठइ सरीरयं । एत्थंतरे चउप्पन्नं दिणाइं अन्नत्थ विहरित्ता आगतो रेवयगिरिसहसंबवणे दिक्खाठाणे उज्जाणे भयवं । उप्पन्नं तत्थ सुहज्झवसाणस्स आसोयअमावसाए अट्ठमभत्तंते केवलं नाणं । कयं देवेहिं समोसरणं । अवि य—वंतरसुरा कुणंति उ, वाओदयरयणभूमिनिव्वत्तिं । पणवन्नविंटसंठिय-कुसुमाणं पयरणं चेव ॥१॥ अब्भिंतरमज्झबहिं, विमाण-जोइ-भवणाहिवकयातो । पायारा तिन्नि भवे, रयणे कणगे य रयए य ॥२॥ मणिरयणहेममइया, कविसीसा सव्वरयणिया दारा । मणिकणगरयणचित्ता, य तोरणा धयवडाइन्ना ॥३॥ मज्झे असोगरुक्खो, तदहो

पीढं न तत्थ सुरछंदो । तस्संतो सीहासण-मुवरिं छत्ताइछत्तं च ॥४॥ जक्खकरत्थे पासे, सुचामरे पउमसंठियं चक्कं । पडिरूवपरमतोरण-माई य करेंति वंतरिया ॥५॥ साहारणओसरणे, एवं जत्थिड्ढिमं तु ओसरई । एक्को चिय तं सव्वं, करेइ भयणा उ इयरेसिं ॥६॥ निव्वत्ते य तम्मि पुव्वदारेण दोहिं पउमेहिं पाए ठवंतो सत्तहिं य अणुगम्ममाणो पविट्ठो भयवं चेइयतरुं पयक्खिणीकाऊण तित्थपणामं च काऊग उवविट्ठो पुव्वाभिमुहो सिंहासणे जातो चउमुहो । मिलिया चउव्विहा वि सुरसंघा । समागया समुद्दविजय-केसवाइजायवगणा । परितुट्ठमणा य रायमई वि पत्ता समोसरणं । तत्थ भयवंत केई वंदंति, केई थुणंति, केई पूयंति, केई जयजयावंति, केई गायंति, केई वज्जाइं वायंति, के वि नच्चंति, अंतरा य सुरचारणा पढंति । अवि य—तुज्झ निरुवम रूवसंपत्ति, जयपवरु सोहग्गु तुहु । तुज्झ पुण्णु लावण्णु उत्तमु, अइलडहु तारुण्णु तुहु ॥१॥ गुणह रासि तुहुं सयलु सत्तमु, अज्जवि झूरहिं तरुणियण निब्भरु तइं अणुरत्तु । तह वि हु सामिय ! मयणसरु, तुह उरि सगु न पत्तु ॥२॥ देवदाणवखयरनरराय जा खोहइ, मिउवयणकुडिलहासकुडिलावलोयण, मुणिवग्गो वि वसिकरइ परमरूवलावन्नजोव्वण । सा पइं उज्झिय राइमई, निब्भरनेहरुयंत । मयणमडप्फरु भग्गु इह, पइं पर सामि ! पसंत ॥३॥ एवमाइमहापमोएण निव्वित्ताए केवलमहिमाए जहारिहं निविट्ठासु परिसासुं । अवि य—"मुणि-वेमाणिणि-समणी, सभवण-वण-जोइदेविदेवा य । वेमाणिय-नर-नारी, ठंतऽग्गेयाइ विदिसासु ॥१॥ उद्धत्था समणीतो, नरित्थितो केइ सुरवहूओ

---

१ तव निरुपमा रूपसम्पत्तिः, जगत्प्रवर सौभाग्यं तव । तव पुण्यं लावण्यमुत्तमं, अतिसुन्दरं तारुण्यं तव ॥ १ ॥ गुणानां राशिस्त्वं सकलः सत्तमः, अद्यापि क्षीयते तरुणीजनो निर्भरं त्वयि अनुरक्त । तथापि खलु स्वामिन्' मदनशरस्तवोरसि सङ्गं न प्राप्त ॥२॥ देव-दानव-खचर-नरराजान् या क्षोभयति, मृदुवचनकुटिलहास्यकुटिलावलोकना, मुनिवर्गमपि वशीकरोति परमरूपलावण्ययौवना । सा त्वया उज्झिता राजीमती, निर्भरस्नेहरुदन्ती । मदनाडम्बरो भग्न इह त्वयि पर स्वामिन् ! प्रशान्ता ॥ ३ ॥

वेयइ न किं पि ॥१॥ एत्थंतरे कलुणरावे सोऊण जाणंतेण वि **नेमिनाहेण** पुच्छितो सारही—भो ! काण पुण मरणभीरुयाणं च एस कलुणो सद्दो ? । तेण कहियं—देव ! एए हरिणाइणो सत्ता तुज्झ वारेज्जयपरमाणंदे वावाइय लोगो भोयाविज्जिस्सइ । ततो तस्साऽऽहरणाणि पणामिऊण भणिया लोगा **नेमिणा**—'भो ! भो ! केरिसो परमाणंदो जम्मि निरवराहाण दीणाण भीयाण एयाण वहो कीरइ ?, ता किं इमिणा संसारपरिभमणहेउणा वारिज्जएणं ?' ति भणिऊण वालाविओ करी । सारहिणा वि भयवओ अहिप्पायं नाऊण मोइया ते सत्ता । **नेमिं** च वलंतं विरत्तचित्तं पेच्छिय अयंडवज्जपहारताडिय व्व मुच्छावसेण निवडिया धरणीए **रायमई** । ससंभमेण य सहीयणेण सित्ता सीयलजलेण, वीइता तालविंटेण, लद्धचेयणा पभणिउं पयत्ता—अहो ! मे मूढया जमप्पाणमयाणिऊण अच्चंतदुलभे भुवणनाहे अणुरायं कुणंतीए लहुईकतो अप्पा, किं कयाइ कायकंठिया परममोत्तियहारसंगं पावइ ? । गरुयाणुराएण य जिणमुद्दिसिउं विलवइ—'धी मे सुकुलुप्पत्ती, धी रूवं जोव्वणं च मे नाह ! । धी मे कलाकुसलया, पडिवज्जिय जं तुमे चत्ता ॥१॥ नीहरइ जीवियं पिव, अंगाइं व नाह ! मह विलिज्जंति । फुडइ व्व हिययमेयं, सहसुज्झणदुक्खसंतवियं ॥२॥ हारो खारसरिच्छो, जल-चंदण-चंदिमा वि तावेंति । तुह विरहे मह सामिय !, जलइ व्व समंततो भुवणं ॥३॥ किं संजाया चक्खू ? उइयं किं मज्झ असुहयं कम्मं ? । किं किं पि सुयं दिट्ठं, व विप्पियं ? जं ममं चयसि ॥४॥ दिट्ठिं पि देसु सामिय !, आलवणं पि हु करेसु खणमेक्कं । मा मे पेम्मपराए, भवाहि एगंतनिरवेक्खो ॥५॥ अहवा सिद्धिवहुक्कंठियस्स तुह अमरसुंदरीतो वि । न हरंति नाह ! हिययं, माणुसमेत्तेहि का गणणा ? ॥६॥' एवं च महासोयभरोत्थया विलवंती 'पियसहितो ! अलंघणिज्जो दिव्वपरिणामो, ता अवलंबेसु धीरयं, अलमेत्थ विलविएणं, सत्तपहाणातो होंति रायधूयाओ' त्ति भणिऊण संठविया सा सहियणेण । भणियं च तीए—पियसहीतो ! अज्जं चेव मे सुमिणए आगतो एरावणारूढो

बहुदेवदाणवपरिवुडो दुवारदेसे एगो दिव्वपुरिसो, तक्खणं च नियत्तिय सो समारूढो सुरसेलं, निसन्नो सीहासणे, अणेगे समागया जंतुणो, अहं पि तत्थेव गया, सो चउरो चउरो सारीरमाणसदुहपणासगाणि कप्पपायवफलाणि तेसिं दिंतो मए भणिओ—भयवं! मम वि देसु इमाणि, दिन्नाणि य तेण, तयणंतरं च पडिवुद्धा अहं। सहीहिं भणियं—पियसहि! मुहकडुओ वि ते एस सुमिणतो झत्ति परिणामसुंदरो होहि त्ति। इतो तत्तो नियत्तो नेमिनाहो। चलियासणेहिं पडिबोहिओ 'भयवं! सव्वजगज्जीवहियं तित्थं पवत्तेहि' त्ति भणंतेहिं लोगंतियदेवेहिं गतो जणणि-जणयसयासे, विरइयकरकमलमउलेण य भणियं—अम्मो! विरत्तं मे भवचारगाओ चित्तं, तं इच्छामि अहं तुब्भेहिं अणुण्णातो पव्वउं। इमं च सोऊण सोयसंवट्टनिरुद्धहियया कंपिरसरीरा चुण्णियवलया निवडिया महीयले। मिलियं तत्थ दसारचक्कं। जलाभिसेयाइणा लद्धसन्ना इमं भणिउमाढत्ता—कीस जाय! पसरंतमणोरहवल्लिउम्मूलणेण सोयसायरे खिवेसि अम्हे?, कीस वा पडिवन्नपत्थणाभंगेण जणेसि मणसंतावाइरेगं दसारचक्कस्स?, अन्नं च—जाय! एवं कीरमाणे सयंमग्गियरायमइकन्नगो हरी कहं दाविस्सइ उग्गसेणरायस्स मुहं? कहं वा भविस्सइ जीवंतमयगा वराई रायमई?, ता अम्होवरोहेण चेव तीए करेसु पाणिग्गहणं, परिणयवतो य काहिसि पव्वज्जं। ततो भणियं भयवया—अम्मो! मा करेसु मणसंतावं, परिभावेसु अणिच्चत्तं सव्वभावाणं, चिंतेसु विवागदारुणत्तं अतित्तिजणगत्तं च विसयाणं, तहा—अथिरत्तणं जोव्वणस्स, चंचलत्तं च रिद्धीणं, सञ्झासमयसमागमेक्कतरुवासिसउणाणं व थोवसंजोगत्तं पियपुत्ताइसंगुणाणं, अयंडपहारित्तणं मच्चुस्स, जम्मजरामरणरोगाइदुक्खपउरत्तं च संसारस्स आलोएसु, ता अणुजाणसु मं इमातो भवपलीवणाओ नीहरंतं। एत्थंतरे दसारचक्केण विरइयकरंजलिणा भणितो नेमी—कुमार! तए संपइ चेव परिचत्तस्स जायवबग्गस्स अत्थमइ व्व जियलोओ, ता पडिच्छाहि ताव कंचि कालं। ततो उवरोहसीलयाए संवच्छ-

रियमहादाणनिमित्तं च पडिवन्नं संवच्छरमेत्तमवत्थाणं । भयवया तप्पभितिं च आढत्तं किमिच्छियं महादाणं । जंभगा य देवा भयवतो भवणे हिरण्णधन्नवत्थाइवासं वासिउमाढत्ता । पडिपुण्णे य संवच्छरे आपुच्छिऊण अम्मापियरो सावणसुद्धछट्ठीए सदेवमणुयाए परिसाए परिवुडो निग्गंतूण नयरीए सहसंबवणे उज्जाणे तिन्नि वाससयाइं अगारवा-समावसित्ता छट्ठेणं भत्तेणं पुरिससहस्सेण सद्धिं निक्खंतो विहरइ तवसंजमरतो । इओ य भयवतो भाया रहनेमी अणुरायपरो रायमइं उवयरइ, भणिया य तेण—सुयणु! मा करेह विसायं, तुमं सोहग्गनिहिं को को न पत्थेइ ?, भयवं पुण वीयरागो न करेइ विसयाणुवंधं, तो पडिवज्जसु ममं, तुहाणाकारी सव्वकालमहं । तीए भणियं—जइ वि अहं नेमिनाहेणं चत्ता तहा वि तमहं न परिच्चएमि जेण भयवओ चेव सिस्सिणी भविस्सामि, ता उज्झसु तुममेयमत्थाणुवंधं । ततो ठितो कइ वि दिणे सो अवहेरीए । पुणो वि अन्नम्मि दिणे पत्थिया । ततो तीए तप्पडिबोहणत्थं तप्पच्चक्खमेव पाऊण खीरं मयणफलपाणेण वमिऊण सोवण्णियकच्चोले समुवणीयं रहनेमिणो, भणितो य—पियसु इमं । तेण भणियं—कहं वंतं पियामि ? । तीए भणियं—किमेयं जाणसे तुमं ? । तेण भणियं—वालो वि एयं वियाणइ । तीए भणियं—जइ एवं ता कीस मं नेमिनाहेण वंतमापिउमिच्छसि ? । इमं भणिओ सो उवरतो तदज्झवसाणातो । सा वि दिक्खाभिमुही तवोवहाणेहिं सोसंती चिट्ठइ सरीरयं । एत्थंतरे चउप्पन्नं दिणाइं अन्नत्थ विहरित्ता आगतो रेवयगिरिसहसंबवणे दिक्खाठाणे उज्जाणे भयवं । उप्पन्नं तत्थ सुहज्झवसाणस्स आसोयअमावसाए अट्ठमभत्तंते केवलं नाणं । कयं देवेहिं समोसरणं । अवि य—वंतरसुरा कुणंति उ, वाओदयरयणभूमिनिव्वत्तिं । पणवन्नविंटसंठिय-कुसुमाणं पयरणं चेव ॥१॥ अब्भिंतरमज्झवहिं, विमाण-जोइ-भवणाहिवकयातो । पायारा तिन्नि भवे, रयणे कणगे य रयए य ॥२॥ मणिरयणहेम-मइया, कविसीसा सव्वरयणिया दारा । मणिकणगरयणचित्ता, य तोरणा धयवडाइन्ना ॥३॥ मज्झे असोगरुक्खो, तदहो

पीढं च तत्थ सुरछंदो । तस्संतो सीहासण-मुवरिं छत्ताइछत्तं च ॥४॥ जक्खकरत्थे पासे, सुचामरे पउमसंठियं चक्कं । पडिरूवपरगतोरण-माई य करेंति वंतरिया ॥५॥ माहारणओसरणे, एवं जत्थिड्ढिमं तु ओसरई । एक्को चिय तं सव्वं, करेइ भयणा उ इयरेसिं ॥६॥ निव्वत्ते य तम्मि पुव्वदारेण दोहिं पउमेहिं पाए ठवंतो सत्तहिं य अणुगम्ममाणो पविट्ठो भयवं चेइयरुक्खं पयक्खिणीकाऊण तित्थपणामं च काऊग उवविट्ठो पुव्वाभिमुहो सिंहासणे जातो चउमुहो । मिलिया चउव्विहा वि सुरसंघा । समागया समुद्दविजय-केसवाइजायवगणा । परितुट्ठमणा य रायमई वि पत्ता समोसरणं । तत्थ भयवंतं केई वंदंति, केई थुणंति, केई पूयंति, केई जयजयावंति, केई गायंति, केई वज्जाइं वायंति, के वि नच्चंति, अंतरा य सुरचारणा पढंति । अवि य—तुज्झ निरुवम रूवसंपत्ति, जयपवरु सोहग्गु तुहु । तुज्झ पुण्णु लावण्णु उत्तमु, अइलडहु तारुण्णु तुहु ॥१॥ गुणह रासि तुहुं सयलु सत्तमु, अज्जवि झूरहिं तरुणियण निब्भरु तइं अणुरत्तु । तह वि हु सामिय ! मयणसरु, तुह उरि संगु न पत्तु ॥२॥ देवदाणवखयरनरराय जा खोहइ, मिउवयणकुडिलहासकुडिलावलोयण, मुणिवग्गो वि वसिकरइ परमरूवलावन्नजोव्वण । सा पइं उज्झिय राइमई, निब्भरनेहरुयंत । मयणमडप्फरु भग्गु इह, पइं पर सामि ! पसंत ॥३॥ एवमाइमहापमोएण निव्वित्ताए केवलमहिमाए जहारिहं निविट्ठासु परिसासुं । अवि य—"मुणि-वेमाणिणि-समणी, सभवण-वण-जोइदेविदेवा य । वेमाणिय-नर-नारी, ठंतऽग्गेयाइ विदिसासु ॥१॥ उद्धत्था समणीतो, नरित्थितो केइ सुरवहूओ

---

१ तव निरुपमा रूपसम्पत्तिः, जगत्प्रवर सौभाग्य तव । तव पुण्यं लावण्यमुत्तम, अतिसुन्दर तारुण्यं तव ॥ १ ॥ गुणानां राशिस्त्वं सकलः सत्तमः, अद्यापि क्षीयते तरुणीजनो निर्भरं त्वयि अनुरक्तः । तथापि खलु स्वामिन् ! मदनशरस्तवोरसि सङ्गं न प्राप्तः ॥२॥ देव-दानव-खचर-नरराजान् या क्षोभयति, मृदुवचनकुटिलहासकुटिलावलोकना, मुनिवर्गमपि वशीकरोति परमरूपलावण्ययौवना । सा त्वया उज्झिता राजीमती, निर्भरस्नेहरुदन्ती । मदनाडम्बरो भग्न इह त्वयि परं स्वामिन् ! प्रशान्ता ॥ ३ ॥

'पश्चिमाः' पश्चिमजिनमुनयः, मध्यमाः पुनः ऋजुप्रज्ञाः 'तेन' हेतुना धर्मो द्विधा कृतः ॥ यदि नाम पूर्वादय एवंविधास्तथापि कथमेतद् द्वैविध्यम्? इत्याह—"पुरिमाणं" ति पूर्वेषां दुर्विशोध्यः ऋजुजडत्वादेव, 'कल्पः' इति सम्बध्यते, 'तुः' पूरणे, चरमाणां दुःखेनाऽनुपाल्यते दुरनुपालः स एव दुरनुपालको वक्रजडत्वात्, 'कल्पः' यतिक्रियाकलापः मध्यमकानां तु ऋजुप्रज्ञत्वात् सुविशोध्यः सुपालकश्च, चस्य गम्यमानत्वादिति । विचित्रप्रज्ञविनेयानुग्रहाय द्वैविध्यं धर्मस्य देशितम् । प्रसङ्गतश्चेहाऽऽद्यजिनाभिधानमिति सूत्रत्रयार्थः ॥ २५-२६-२७ ॥ इत्थं **गौतमेनोक्ते केशिराह—**

**साहु गोयम! पन्ना ते, छिन्नो मे संसओ इमो। अन्नोऽवि संसओ मज्झं, तं मे कहसु गोयमा! ॥२८॥**
**अचेलओ अ जो धम्मो, जो इमो संतरुत्तरो। देसिओ वद्धमाणेणं, पासेण य महामुणी ॥ २९ ॥**
**एगकज्जपवन्नाणं, विसेसे किं नु कारणं?। लिंगे दुविहे मेहावी!, कहं विप्पच्चओ न ते? ॥ ३० ॥**

**व्याख्या—**साधु गौतम! प्रज्ञा ते, छिन्नो मे संशयः "इमो" त्ति अयं त्वयेति विनेयापेक्षं चेत्थमभिधानम्, अन्यथा तु तस्य ज्ञानत्रयसंयुतस्यैवंविधसंशयासम्भवः ॥ लिङ्गे 'द्विविधे' अचेलकतया विविधवस्त्रधारितया च द्विभेदे । शेषं किञ्चित् सुगमं किञ्चिच्च प्राग् व्याख्यातमेवेति सूत्रत्रयार्थः ॥ २८-२९-३० ॥ ततश्च—

**केसिं एवं बुवाणं तु, गोयमो इणमब्बवी। विन्नाणेण समागम्म, धम्मसाहणमिच्छियं ॥ ३१ ॥**
**पच्चयत्थं च लोगस्स, नाणाविहविगप्पणं। जत्तत्थं गहणत्थं च, लोगे लिंगपओयणं ॥ ३२ ॥**
**अह भवे पइन्ना उ, मोक्खसब्भूयसाहणा। णाणं च दंसणं चेव, चरित्तं चेव निच्छए ॥ ३३ ॥**

**व्याख्या—**विशिष्टं ज्ञानं विज्ञानं तच्च केवलमेव तेन 'समागम्य' यद् यस्योचितं तत् तथैव ज्ञात्वा 'धर्मसाधनं' धर्मोपकरणं–वर्षाकल्पादि "इच्छियं" ति 'इष्टम्' अनुमतं **पार्श्व-वर्द्धमान**जिनाभ्यामिति प्रक्रमः । चरमाणां हि रक्त-

त्रयोविंशं केशिगौतमीयाख्यमध्ययनम् ।

केशिगौतमयोः प्रश्नोत्तराणि ।

केशिगौतमयोः प्रश्नोत्तराणि।

वस्त्रानुज्ञाने वक्रजडत्वेन वस्त्ररञ्जनादिषु प्रवृत्तिर्दुर्निवारैव स्यादिति न तेन तदनुज्ञातम्। पार्श्वशिष्यास्तु न तथेति रक्तादीनामपि तेनानुज्ञानं कृतमिति भावः॥ किञ्च 'प्रत्ययार्थं च' अमी व्रतिन इति प्रतीतिनिमित्तं च, कस्य? लोकस्य, अन्यथा हि यथाऽभिरुचितं वेषमादाय पूजादिनिमित्तं विडम्बकादयोऽपि 'वयं व्रतिनः' इत्यभिदधीरन्, ततो व्रतिष्वपि न लोकस्य व्रतिनः इति प्रतीतिः स्यात्। किं तदेवम्? इत्याह—'नानाविधविकल्पनं' प्रक्रमात् नानाप्रकारोपकरणपरिकल्पनम्, नानाविधं हि वर्षाकल्पाद्युपकरणं यथावद् यतिष्वेव सम्भवतीति कथं न तत्प्रत्ययहेतुः स्यात्?, तथा यात्रा—संयमनिर्वाहस्तदर्थम्? विना हि वर्षाकल्पादिकं वृष्ट्यादौ संयमबाधैव स्यात्, ग्रहणं—ज्ञानं तदर्थं च, कथञ्चित् चित्तविप्लवोत्पत्तावपि गृह्णातु—यथाऽहं व्रतीति, एतदर्थं लोके लिङ्गस्य प्रयोजनमिति—प्रवर्त्तनं लिङ्गप्रयोजनम्॥ 'अथे'त्युपन्यासे, "भवे पइन्ना उ" त्ति तुशब्दस्यैवकारार्थत्वाद् भिन्नक्रमत्वाच्च भवेदेव 'प्रतिज्ञा' अभ्युपगमः, प्रक्रमात् पार्श्ववर्द्धमानयोः प्रतिज्ञास्वरूपमाह—"मोक्खसब्भूयसाहण" त्ति मोक्षस्य सद्भूतानि च तानि तात्त्विकत्वात् साधनानि च हेतुत्वात् मोक्षसद्भूतसाधनानि, कानि? इत्याह—ज्ञानं च दर्शनं चैव चारित्रं च 'एवः' अवधारणे, स च लिङ्गस्य मुक्तिसद्भूतसाधनतां व्यवच्छिनत्ति—ज्ञानाद्येव मुक्तिसाधनं न तु लिङ्गम्। श्रूयते हि भरतादीनां लिङ्गं विनाऽपि केवलोत्पत्तिः, 'निश्चये' निश्चयनये विचार्ये न तु व्यवहारे, इति लिङ्गस्य तत्त्वतोऽकिञ्चित्करत्वात् न तद्भेदो विदुषां विप्रत्ययहेतुः, शेषं स्पष्टमिति सूत्रत्रयार्थः॥ ३१-३२-३३॥

**साहु गोयम! पन्ना ते, छिन्नो मे संसओ इमो। अन्नोऽवि संसओ मज्झं, तं मे कहसु गोयमा!॥३४॥**

व्याख्या—प्राग्वत्। इत्थं महाव्रतात्मकधर्मविषयं वेषात्मकलिङ्गभेदविषयं च शिष्याणां विप्रत्ययमपनीय प्रसङ्गतस्तेषामेव व्युत्पत्त्यर्थं जानन्नपि अपरमपि वस्तुतत्त्वं पृच्छन् केशिः 'अन्योऽपि संशयः' इत्यादि पुनराह॥ ३४॥

अणेगाण सहस्साणं, मज्झे चिट्ठसि गोयमा !। ते य ते अभिगच्छंति, कहं ते निज्जिया तुमे ? ॥३५॥
एगे जिए जिया पंच, पंच जिए जिया दस । दसहा उ जिणित्ताणं, सव्वसत्तू जिणामहं ॥ ३६ ॥
सत्तू य इइ के वुत्ते ?, केसी गोयममब्बवी । तओ केसिं बुवंतं तु, गोयमो इणमब्बवी ॥ ३७ ॥
एगप्पा अजिए सत्तू, कसाया इंदियाणि य । ते जिणित्तु जहानायं, विहरामि अहं मुणी ॥ ३८ ॥

व्याख्या—'अनेकानां' बहूनां 'सहस्राणां' प्रक्रमात् शत्रुसम्बन्धिनां मध्ये तिष्ठसि गौतम ! 'ते' शत्रवः 'ते' इति त्वामभिलक्षीकृत्य गच्छन्ति अर्थात् जेतुम्, कथं ते निर्जितास्त्वया ? ॥ गौतम आह—'एकस्मिन्' प्रक्रमात् शत्रौ जिते जिताः पञ्च, तथा "पंच जिए" त्ति सूत्रत्वात् पञ्चसु जितेषु जिता दश, 'दशधा तु' दशप्रकारान् पुनर्जित्वा 'सर्वशत्रून्' अनेकसंख्यान् जयाम्यहम् ॥ ततश्च—"सत्तू य इइ" 'चः' पूरणे, 'इति' भिन्नक्रमो जातौ चैकवचनम्, ततः शत्रुः क उक्तः ? इति केशिः गौतममब्रवीत् । शेषं सुगमम् ॥ नवरम्—एकः 'आत्मा' चित्तं, तदभेदोपचाराद् अजितोऽनेकानर्थावाप्तिहेतुत्वात् शत्रुरिव शत्रुः, तथा कषाया अजिताः शत्रव इति वचनविपरिणामेन योज्यते, एते चाऽऽत्मसहिताः प्रागुक्ताः पञ्च भवन्ति, तथेन्द्रियाणि शत्रवोऽजितानि, एते च सर्वे प्रागुद्दिष्टा दश जाताः, चशब्दात् नोकषायाद्युत्तरोत्तरभेदाश्च सर्वेऽपि शत्रवोऽजिताः । सम्प्रत्युपसंहारव्याजेन तज्जये फलमाह—'तान्' उक्तरूपान् शत्रून् जित्वा 'यथान्यायं' यथोक्तनीत्यनतिक्रमेण ततो विहरामि, तन्मध्येऽपि तिष्ठन्नप्रतिबद्धविहारितयेति गम्यते इति सूत्रचतुष्टयार्थः ॥३५-३६-३७-३८॥ एवं गौतमेनोक्ते—

साहु गोयम ! पन्ना ते, छिन्नो मे संसओ इमो । अन्नोऽवि संसओ मज्झं, तं मे कहसु गोयमा ! ॥३९॥
दीसंति बहवे लोए, पासबद्धा सरीरिणो । मुक्कपासो लहुब्भूओ, कहं तं विहरसि मुणी ? ॥ ४० ॥
ते पासे सव्वसो छित्ता, निहंतूण उवायओ । मुक्कपासो लहुब्भूओ, विहरामि अहं मुणी ॥ ४१ ॥

पासा य इइ के वुत्ता ?, केसी गोयममब्बवी । केसिं एवं बुवंतं तु, गोयमो इणमब्बवी ॥ ४२ ॥
रागदोसादओ तिव्वा, नेहपासा भयंकरा । ते छिंदित्तु जहानायं, विहरामि जहक्कमं ॥ ४३ ॥

व्याख्या—स्पष्टमेव । नवरम्—'लघुभूतः' वायुभूतो लघुभूत इव लघुभूतः, सर्वत्राऽप्रतिबद्धत्वात् ॥ 'ते' इति तान् "सव्वसो" त्ति सूत्रत्वात् सर्वान् 'छित्त्वा' त्रोटयित्वा 'निहत्य' पुनर्बन्धाभावेन विनाश्य, कथम् ? 'उपायतः' सद्भूतभावनाभ्यासरूपात् ॥ रागद्वेषादयः, आदिशब्दाद् मोहपरिग्रहः, 'तीव्राः' गाढाः, तथा "नेह" त्ति स्नेहाः—पुत्रादिसम्बन्धाः पाशा इव पाशाः 'यथाक्रमं' क्रमः—यतिविहित आचारस्तदनतिक्रमेणेति सूत्रपञ्चकार्थः ॥३९-४०-४१-४२-४३॥

साहु गोयम! पन्ना ते, छिन्नो मे संसओ इमो । अन्नोऽवि संसओ मज्झं, तं मे कहसु गोयमा! ॥ ४४ ॥
अंतोहियसंभूता, लया चिट्ठई गोयमा! । फलेइ विसभक्खीणं, सा उ उद्धरिया कहं ? ॥ ४५ ॥
तं लयं सव्वसो छित्ता, उद्धरित्ता समूलियं । विहरामि जहानायं, मुक्को मि विसभक्खणा ॥ ४६ ॥
लया य इति का वुत्ता ?, केसी गोयममब्बवी । केसिमेवं बुवंतं तु, गोयमो इणमब्बवी ॥ ४७ ॥
भवतण्हा लया वुत्ता, भीमा भीमफलोदया । तमुच्छित्तु जहानायं, विहरामि महामुणी ॥ ४८ ॥

व्याख्या—स्पष्टम् । नवरम्—"अंतोहियसंभूय" त्ति हृदयान्तः सम्भूता । "विसभक्खीणं" ति आर्षत्वाद् विषवद्भक्ष्यन्ते इति 'विषभक्ष्याणि' पर्यन्तदारुणतया विषोपमानि फलानीति गम्यते । 'सा तु' सा पुनः ॥ "सव्वसो" त्ति सर्वां 'समूलिकां' रागद्वेषादिमूलयुक्ताम् । मुक्तोऽस्मि "विसभक्खण" त्ति 'विषभक्षणात्' विषफलाभ्यवहारोपमात् क्लिष्टकर्मणः ॥ भवे तृष्णा—लोभो भवतृष्णा 'भीमा' भयदा स्वरूपतः, भीमा—दुःखहेतुतया फलानाम् अर्थात् क्लिष्टकर्मणामुदयः—विपाको यस्याः सा तथा, शेषमुपसंहाराभिधायीति सूत्रपञ्चकार्थः ॥ ४४-४५-४६-४७-४८ ॥

केशिगौतमयोः प्रश्नोत्तराणि ।

साहु गोयम! पन्ना ते, छिन्नो मे संसओ इमो। अन्नोऽवि संसओ मज्झं, तं मे कह सु गोयमा!॥४९॥
संपज्जलिया घोरा, अग्गी चिट्ठई गोयमा!। जे डहंति सरीरत्था, कहं विज्झाविया तुमे?॥ ५० ॥
महामेहप्पसूयाओ, गिज्झ वारि जलुत्तमं। सिंचामि सययं ते उ, सित्ता नो व डहंति मे ॥ ५१ ॥
अग्गी य इति के वुत्ता?, केसी गोयममब्बवी। ततो केसिं बुवंतं तु, गोयमो इणमब्बवी ॥ ५२ ॥
कसाया अग्गिणो वुत्ता, सुयसीलतवो जलं। सुयधाराभिहता संता, भिन्ना हु न डहंति मे ॥ ५३ ॥

व्याख्या—स्पष्टम्। नवरम्—"अग्गि" त्ति अग्नयो ये दहन्तीव दहन्ति ॥ महामेघप्रसू तात् श्रोतस इति गम्यते, "गिज्झ" त्ति गृहीत्वा "ते उ" त्ति तुशब्दो भिन्नक्रमः, 'तान्' अग्नीन् सिक्तांस्तु "नो व" त्ति नैव दहन्ति "मे" त्ति माम् ॥ "अग्गी ये"त्यादि अग्निप्रश्नो महामेघादिप्रश्नोपलक्षणम् ॥ श्रुतं च—उपचारात् कषायोपशमहेतवः श्रुतान्तर्गतोपदेशाः शीलं च—महाव्रतरूपं तपश्च—प्रतीतं श्रुतशीलतप इति समाहारः, 'जलं' वारि, उपलक्षणत्वाचाऽस्य महामेघः सर्वजगदानन्दकतया तीर्थकृत्, श्रोतश्च तत उत्पन्न आगमः, उक्तमेवार्थं सविशेषमुपसंहरन्नाह—श्रुतस्य उपलक्षत्वात् शीलतपसोश्च धारा इव धाराः—तत्परिभावनादिरूपास्ताभिरभिहताः सन्तः प्रक्रमादुक्तरूपा अग्नयः 'भिन्नाः' विदारितास्तदभिघातेन लवमात्रीकृता इत्यर्थः, 'हु' पूरणे इति सूत्रपञ्चकार्थः ॥ ४९-५०-५१-५२-५३ ॥

साहु गोयम! पन्ना ते, छिन्नो मे संसओ इमो। अन्नोऽवि संसओ मज्झं, तं मे कहसु गोयमा!॥ ५४ ॥
अयं साहसिओ भीमो, दुट्ठस्सो परिधावई। जंसि गोयम! आरूढो, कहं तेण न हीरसी?॥ ५५ ॥
पहावंतं निगिण्हामि, सुयरस्सीसमाहियं। न मे गच्छइ उम्मग्गं, मग्गं च पडिवज्जइ ॥ ५६ ॥
असे य इति के वुत्ते?, केसी गोयममब्बवी। तओ केसिं बुवंतं तु, गोयमो इणमब्बवी ॥ ५७ ॥

मगो साहसिओ भीमो, दुट्ठस्सो परिधावई। तं सम्मं तु निगिण्हामि, धम्मसिक्खाए कंथगं ॥५८॥

व्याख्या—'अयं' प्रत्यक्षः सहसा—असमीक्ष्य प्रवर्त्तत इति साहसिकः, "जंसि" त्ति यस्मिन् ॥ 'प्रधावन्तम्' उन्मार्गाभिमुखं गच्छन्तं निगृह्णामि, 'श्रुतरश्मिसमाहितम्' आगमवल्गानिबद्धम् ॥ 'धर्मशिक्षायै' धर्माभ्यासनिमित्तं 'कन्थकः' जात्याश्वः, ततश्च कन्थकमिव कन्थकम्, किमुक्तं भवति?—दुष्टाश्वोऽपि निग्रहणयोग्यः कन्थकप्राय एव। शेषं स्पष्टमिति सूत्रपञ्चकार्थः ॥ ५४-५५-५६-५७-५८ ॥

साहु गोयम! पन्ना ते, छिन्नो मे संसओ इमो। अन्नोऽवि संसओ मज्झं, तं मे कहसु गोयमा! ॥ ५९ ॥
कुप्पहा बहवे लोए, जेसिं नासंति जंतवो। अद्धाणे कह वट्टंतो, तं न नाससि गोयमा!? ॥ ६० ॥
जे य मग्गेण गच्छंति, जे य उम्मग्गपट्ठिया। ते सव्वे विदिता मज्झं, तो न नस्सामहं मुणी! ॥ ६१ ॥
मग्गे य इति के वुत्ते?, केसी गोयममब्बवी। तओ केसिं बुवंतं तु, गोयमो इणमब्बवी ॥ ६२ ॥
कुप्पवयणपासंडी, सव्वे उम्मग्गपट्ठिया। सम्मग्गं तु जिणक्खायं, एस मग्गे हि उत्तमे ॥ ६३ ॥

व्याख्या—स्पष्टमेव। नवरम्—"मग्गे य" त्ति 'मार्गः' सन्मार्गः उपलक्षणत्वात् कुमार्गश्च ॥ ते कुप्रवचनपाखण्डिनः सर्वे उन्मार्गप्रस्थिताः, अनेन च कुप्रवचनानि कुपथा इत्युक्तं भवति। 'सन्मार्गं तु' सत्पथं पुनर्जानीयादिति शेषः, जिनाख्यातम्, कुतः? इत्याह—एष मार्गः 'ही'ति यस्मात् 'उत्तमः' अन्यमार्गेभ्यः प्रधान इति सूत्रपञ्चकार्थः ॥ ५९-६०-६१-६२-६३ ॥

साहु गोयम! पन्ना ते, छिन्नो मे संसओ इमो। अन्नोऽवि संसओ मज्झं, तं मे कहसु गोयमा! ॥६४॥
महाउदगवेगेणं, वुज्झमाणाण पाणिणं। सरणं गई पइट्ठा च, दीवं कं मन्नसी? मुणी! ॥ ६५ ॥
अत्थि एगो महादीवो, वारिमज्झे महालओ। महाउदगवेगस्स, गई तत्थ न विज्जई ॥ ६६ ॥

दीवे य इति के वुत्ते ?, केसी गोयममब्बवी । तओ केसिं बुवंतं तु, गोयमो इणमब्बवी ॥ ६७ ॥
जरामरणवेगेणं, वुज्झमाणाण पाणिणं । धम्मो दीवो पइट्ठा य, गई सरणमुत्तमं ॥ ६८ ॥

व्याख्या—स्पष्टमेव । नवरम्—'शरणं' तन्निवारणक्षमम्, अत एव गम्यमानत्वाद् गतिम् तत एव "पइट्ठा य" त्ति 'प्रतिष्ठां' स्थिरावस्थानहेतुं, 'चः' समुच्चये ॥ "दीवे य" त्ति द्वीपप्रश्न उदकवेगप्रश्नोपलक्षणम्, "जरामरणवेगेणं" ति जरामरणे एव वेगः–रयः प्रक्रमाद् उदकस्य तेनेति सूत्रपञ्चकार्थः ॥ ६४-६५-६६-६७-६८ ॥

साहु गोयम ! पन्ना ते, छिन्नो मे संसओ इमो । अन्नोऽवि संसओ मज्झं, तं मे कहसु गोयमा ! ॥ ६९ ॥
अन्नवंसि महोहंसि, नावा विपरिधावई । जंसि गोयममारूढो, कहं पारं गमिस्ससी ? ॥ ७० ॥
जा उ अस्साविणी नावा, न सा पारस्स गामिणी । जा निरस्साविणी नावा, सा उ पारस्स गामिणी ७१
नावा य इति का वुत्ता ?, केसी गोयममब्बवी । तओ केसिं बुवंतं तु, गोयमो इणमब्बवी ॥ ७२ ॥
सरीरमाहु नाव त्ति, जीवो वुच्चइ नाविओ । संसारो अन्नवो वुत्तो, जं तरंति महेसिणो ॥ ७३ ॥

व्याख्या—स्पष्टम् । नवरम्—'अर्णवे' समुद्रे 'महौघे' बृहज्जलप्रवाहे नौः 'विपरिधावति' विशेपेण परिव्रजति "जंसि" त्ति यस्यां गौतम ! त्वमारूढः ॥ "जा उ" त्ति या 'तुः' पूरणे, 'आश्राविणी' जलसङ्ग्राहिणी, या पुनः तुशब्दस्य पुनरर्थस्येह सम्बन्धात् "निरस्साविणि" त्ति निष्क्रान्ता आश्राविभ्यः–प्रक्रमात् सन्धिभ्यो निराश्राविणी सा पारस्य गामिनी । ततोऽहं निराश्राविणीमारूढः, अतः पारगामी भविष्यामीति भावः ॥ "नावे"त्यादि अत्र नौः तरितृतार्योपलक्षणम्, अत एवोत्तरमाह—'शरीरे'त्यादि । सूत्रपञ्चकार्थः ॥ ६९-७०-७१-७२-७३ ॥

साहु गोयम ! पन्ना ते, छिन्नो मे संसओ इमो । अन्नोऽवि संसओ मज्झं, तं मे कहसु गोयमा ! ॥७४॥

अंधयारे तमे घोरे, चिट्ठंति पाणिणो बहू। को करिस्सइ उज्जोयं, सव्वलोगम्मि पाणिणं? ॥ ७५ ॥
उग्गओ विमलो भाणू, सव्वलोगप्पभंकरो। सो करिस्सइ उज्जोयं, सव्वलोगम्मि पाणिणं ॥ ७६ ॥
भाणू य इति के वुत्ते?, केसी गोयममब्बवी। तओ केसिं वुवंतं तु, गोयमो इणमब्बवी ॥ ७७ ॥
उग्गओ खीणसंसारो, सव्वण्णू जिणभक्खरो। सो करिस्सइ उज्जोयं, सव्वलोगम्मि पाणिणं ॥७८॥

केशिगौतमयोः प्रश्नोत्तराणि।

व्याख्या—अन्धमिवान्धम् अर्थाद् जनं करोतीत्यन्धकारं तस्मिन् 'तमसि' प्रतीते। शेषं सुगममेव इति सूत्रपञ्चकार्थः ॥ ७४-७५-७६-७७-७८ ॥

साहु गोयम! पन्ना ते, छिन्नो मे संसओ इमो। अन्नो वि संसओ मज्झं, तं मे कहसु गोयमा! ॥७९॥
सारीरमाणसे दुक्खे, वज्झमाणाण पाणिणं। खेमं सिवं अणाबाहं, ठाणं किं मन्नसी मुणी!? ॥८०॥
अत्थि एगं धुवं ठाणं, लोगग्गम्मि दुरारुहं। जत्थ नत्थि जरा मच्चू, वाहिणो वेयणा तहा ॥ ८१ ॥
ठाणे य इति के वुत्ते?, केसी गोयममब्बवी। केसिमेवं वुवंतं तु, गोयमो इणमब्बवी ॥ ८२ ॥
णिव्वाणं ति अबाहं ति, सिद्धी लोगग्गमेव य। खेमं सिवं अणाबाहं, जं चरंति महेसिणो ॥ ८३ ॥
तं ठाणं सासयंवासं, लोगग्गम्मि दुरारुहं। जं संपत्ता न सोयंति, भवोहंतकरा मुणी! ॥ ८४ ॥

व्याख्या—स्पष्टमेव। नवरम्—"सारीरमाणसे" त्ति शारीरमानसैः "दुक्खि" त्ति दुःखैः "वज्झमाणाणं" ति बध्यमानानां 'क्षेमं' व्याधिविरहतः 'शिवं' सर्वोपद्रवाभावतः 'अनाबाधं' स्वाभाविकबाधाऽपगमतः ॥ 'वेदनाश्च' शारीरमानसदुःखानुभवात्मिकाः, ततश्च व्याध्यभावेन क्षेमत्वम्, जरामरणाऽभावेन शिवत्वम्, वेदनाऽभावेनाऽनाबाधत्वमिति ॥ "निव्वाणं ति" इतिशब्दः स्वरूपपरामर्शकः, यत्राऽपि नास्ति तत्राप्यध्याहर्त्तव्यः, तत उच्यते इति अध्याहारात्—

निर्वाणमिति अव्याबाधमिति सिद्धिरिति लोकाग्रमिति यदुच्यत इति व्याख्येयम् । 'एवे'ति पूरणे, 'चः' समुच्चये, क्षेमं शिवम् अनाबाधमिति च प्राग्वत्, यत् 'चरन्ति' गच्छन्ति ॥ तत् स्थानमुक्तमिति प्रक्रमः ॥ सविशेषणस्य पृष्टत्वात् तदेव विशिनष्टि—"सासयंवासं" ति बिन्दोरलाक्षणिकत्वात् 'शाश्वतवासं' नित्यावस्थिति लोकाग्रे दुरारोहं उपलक्षणत्वात् जराद्यभाववच्च, प्रसङ्गतस्तन्माहात्म्यमाह—"जं संपत्ते"त्यादि ॥ सूत्रषट्कार्थः ॥ ७९-८०-८१-८२-८३-८४ ॥

**साहु गोयम! पन्ना ते, छिन्नो मे संसओ इमो । नमो ते संसयाईय!, सबसुत्तमहोयही! ॥ ८५ ॥**

व्याख्या—सुगमम् । नवरम्—उत्तरार्द्धेनोपबृंहणागर्भं स्तवनमाह ॥ ८५ ॥ पुनस्तद्वक्तव्यतामेवाह—

**एवं तु संसए छिन्ने, केसी घोरपरक्कमे । अभिवंदित्ता सिरसा, गोयमं तु महायसं ॥ ८६ ॥**
**पंचमहव्वयं धम्मं, पडिवज्जति भावओ । पुरिमस्स पच्छिमम्मी, मग्गे तत्थ सुहावहे ॥ ८७ ॥**

व्याख्या—सुगमम् । नवरम्—'एवं तु' अमुनैव क्रमेण ॥ क्व पुनरयं पञ्चयामो धर्मः ? इत्याह—"पुरिमस्स" त्ति पूर्वस्य सोपस्कारत्वात् सूत्रस्य तीर्थकृतोऽभिमते 'पश्चिमे' पश्चिमतीर्थकृत्सम्बन्धितया मार्गे 'तत्रे'ति प्रक्रान्ते शुभावहे इति सूत्रद्वयार्थः ॥ ८६-८७ ॥ सम्प्रत्यध्ययनार्थोपसंहारव्याजेन महापुरुषसङ्गफलमाह—

**केसीगोयमओ निच्चं, तम्मि आसि समागमे । सुयसीलसमुक्करिसो, महत्थऽत्थविणिच्छओ ॥ ८८ ॥**

व्याख्या—'केशिगौतमतः' इति केशिगौतमौ आश्रित्य 'नित्यं' तत्पुर्यवस्थानापेक्षया 'तस्मिन्' प्रक्रान्तस्थाने आसीत्, समागमः 'श्रुतशीलसमुत्कर्षः' ज्ञानचरणप्रकर्षः, तथा महार्थाः—महाप्रयोजना मुक्तिसाधकत्वेन येऽर्थास्तेषां विनिश्चयः—निर्णयो महार्थार्थविनिश्चयः, तच्छिष्याणामिति गम्यत इति सूत्रार्थः ॥ ८८ ॥ तथा—

**तोसिया परिसा सव्वा, सम्मग्गं समुवट्ठिया। संथुया ते पसीयंतु, भयवं केसीगोयमे ॥८९॥ त्ति बेमि।**

केशिगौतम-वर्णन-समाप्तिः।

व्याख्या—तथा तोषिता पर्षत् सर्वा 'सन्मार्गं' मुक्तिपथम् अनुष्ठातुमिति गम्यते, 'समुपस्थिता' उद्यता, अनेन पर्षदः फलमाह। इत्थं तच्चरितवर्णनद्वारेण तयोः स्तवनमुक्त्वा प्रणिधानमाह—संस्तुतौ तौ प्रसीदतां भगवत्केशिगौतमाविति सूत्रार्थः ॥ ८९ ॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥

॥ इति श्रीनेमिचन्द्रसूरिकृतायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां केशिगौतमीयाख्यं त्रयोविंशमध्ययनं समाप्तम् ॥

# अथ प्रवचनमात्राख्यं चतुर्विंशमध्ययनम् ।

व्याख्यातं त्रयोविंशमध्ययनम् । सम्प्रति प्रवचनमातृनामकं चतुर्विंशमारभ्यते, अस्य चायमभिसम्बन्धः— 'अनन्तराध्ययने परेषामपि चित्तविप्लुतिः केशिगौतमवदपनेया इत्युक्तम्, तदपनयनं च सम्यग्वाग्योगत एव, स च प्रवचनमातृस्वरूपपरिज्ञानत इति तत्स्वरूपमुच्यते' अनेन सम्बन्धेनायातस्यास्याऽऽदिसूत्रम्—

**अट्ठ प्पवयणमायाओ, समिती गुत्ती तहेव य । पंचेव य समिईओ, तओ गुत्तीउ आहिया ॥ १ ॥**

**इरियाभासेसणादाणे, उच्चारे समिई इय । मणगुत्ती वयगुत्ती, कायगुत्ती उ अट्ठमा ॥ २ ॥**

**एयाओ अट्ठ समिईओ, समासेण वियाहिया । दुवालसंगं जिणक्खायं, मायं जत्थ उ पवयणं ॥३॥**

व्याख्या—सुगममेव । नवरम्—"समिइ" त्ति समितयः, "गुत्ति" त्ति गुप्तयः, तथैव 'चः' समुच्चये, "आहिय" त्ति आख्याताः ॥ ता एव नामत आह—"इरिए"त्यादि आदानं—ग्रहणं निक्षेपोपलक्षणम्, "उच्चारे समिई इय" त्ति चस्य भिन्नक्रमत्वाद् उच्चारशब्दस्य चोपलक्षणत्वाद् उच्चारादिपरिष्ठापनायां च समितिः, इदं च प्रत्येकं योज्यते, 'इतिः' परिसमाप्तौ एतावत्य एव समितयः ॥ निगमनमाह—एता अष्ट 'समितयः' समिति—सम्यक् सर्ववित्प्रवचनानुसारितया इतयः—आत्मनश्चेष्टाः समितय इत्यन्वर्थे गुप्तीनामपि समितिशब्दवाच्यत्वमस्तीत्येवमुपन्यासः । यत्तु भेदेनोपादानं तत् समितीनां प्रवीचाररूपत्वेन गुप्तीनां तु प्रवीचाराऽप्रवीचारात्मकत्वेन कथञ्चिद् भेदख्यापनार्थम् । 'मायं' ति तुशब्दस्योत्तरस्येह योगाद् मातमेव, तथाहि—सर्वा अप्यमूश्चारित्ररूपाः, ज्ञानदर्शनाऽविनाभावि च चारित्रम्, न चैतत्त्रयातिरिक्तमन्यदर्थतो द्वादशाङ्गमित्येतासु प्रवचनं मातमुच्यते इति सूत्रत्रयार्थः ॥ १-२-३ ॥ तत्रेर्यासमितिस्वरूपमाह—



प्रवचनमातृनामानि ।

आलंबणेण कालेणं, मग्गेणं जयणाइ य। चउकारणपरिसुद्धं, संजए इरियं रिए ॥ ४ ॥
तत्थ आलंबणं णाणं, दंसणं चरणं तथा। काले य दिवसे वुत्ते, मग्गे उप्पहवज्जिए ॥ ५ ॥
दव्वओ खेत्तओ चेव, कालओ भावओ तहा। जयणा चउव्विहा वुत्ता, तं मे कित्तयओ सुण ॥ ६ ॥
दव्वओ चक्खुसा पेहे, जुगमित्तं च खित्तओ। कालओ जाव रीएज्जा, उवउत्तो य भावओ ॥ ७ ॥
इंदियत्थे विवज्जित्ता, सज्झायं चेव पंचधा। तम्मुत्ती तप्पुरक्कारे, उवउत्ते रियं रिए ॥ ८ ॥

व्याख्या—स्पष्टम्। नवरम्—"चउकारणपरिसुद्धं" ति सुब्व्यत्ययात् चतुःकारणपरिशुद्ध्या "इरियं" ति 'ईर्यया' गत्या 'रीयेत' गच्छेत् ॥ "दव्वओ चक्खुसा पेहे" त्ति 'द्रव्यतः' द्रव्यमाश्रित्य यतना चक्षुषा प्रेक्षेत प्रक्रमात् जीवादिद्रव्यम्, युगमात्रं च प्रस्तावात् क्षेत्रं प्रेक्षेत इति योगः, क्षेत्रतो यतना, कालतो यावद्रीयेत तावत्कालमानेति गम्यते, उपयुक्तश्च भावतः ॥ उपयुक्ततामेव स्पष्टयति—इन्द्रियार्थान् विवर्ज्य स्वाध्यायं चैव पञ्चधा, ततश्च तस्यामेव—ईर्यायां मूर्त्तिः अर्थाद् व्याप्रियमाणा यस्याऽसौ तन्मूर्त्तिः, तथा तामेव पुरस्करोति—तत्रैवोपयुक्ततया प्राधान्येनाङ्गीकुरुते तत्पुरस्कारः, 'उपयुक्तः' सयत ईर्यया रीयेतेति सूत्रपञ्चकार्थः ॥ ४-५-६-७-८ ॥ भाषासमितिमाह—

कोहे माणे य माया य, लोभे य उवउत्तया। हासे भय मोहरिए, विगहासु तहेव य ॥ ९ ॥
एयाइं अट्ठ ठाणाइं, परिवज्जित्तु संजए। असावज्जं मियं काले, भासं भासिज्ज पन्नवं ॥ १० ॥

व्याख्या—सुगममेव। नवरम्—एतान्यष्ट स्थानानि परिवर्ज्येति, कोऽर्थः? क्रोधादिवशेन मृषादिरूपमसद्वाग्योगं परिहरन् संयतः 'असावद्यां' निर्दोषां 'मितां' परिमितां 'काले' प्रस्तावे इति सूत्रद्वयार्थः ॥ ९-१० ॥ एषणासमितिमाह—

गवेसणाए गहणे य, परिभोगेसणा य जा। आहारोवहिसिज्जाए, एए तिन्नि विसोहए ॥ ११ ॥

समिति-स्वरूपम्।

**विसोहिज्ज जयं जई ॥ १२ ॥**

**उग्गमुप्पायणं पढमे, बीए सोहिज्ज एसणं । परिभोगम्मि चउक्कं,**

व्याख्या—गवेपणायां ग्रहणे च उभयत्र एषणेति सम्बध्यते, ततो गवेपणायामेषणा ग्रहणे चैषणा परिभोगैषणा च या "आहारोवहिसेज्जाए" त्ति वचनव्यत्ययाद् आहारोपधिशय्यासु "एए तिन्नि" त्ति 'एताः' एषणाः तिस्रः 'विशोधयेत्' निर्दोषा विदध्यात् ॥ कथं विशोधयेत् ? इत्याह—"उग्गमुप्पायणं" ति सूचनात् सूत्रमिति उद्गमोत्पादना-दोषान् "पढमे" त्ति 'प्रथमायां' गवेपणैषणायां, "बीए" त्ति 'द्वितीयायां' ग्रहणैषणायां शोधयेत् "एषणं" ति एषणा-दोषान्, "परिभोगम्मि" त्ति परिभोगैषणायां 'चतुष्कं' संयोजनाऽप्रमाणाऽङ्गारधूमकारणात्मकम्, अङ्गारधूमयोर्मोह-नीयान्तर्गतत्वेनैकतया विवक्षितत्वात् विशोधयेत् "जयं" ति यतमानो यतिः । पुनः क्रियाभिधानमतिशयख्यापनार्थमिति सूत्रद्वयार्थः ॥ ११-१२ ॥ चतुर्थसमितिमाह—

**ओहोवहोवग्गहियं, भंडयं दुविहं मुणी । गिण्हंतो निक्खिवंतो य, पउंजिज्ज इमं विहिं ॥ १३ ॥**

**चक्खुसा पडिलेहित्ता, पमज्जिज्ज जयं जई । आदिए निक्खिविज्जा वा, दुहओ वि समिए सया ॥१४॥**

व्याख्या—"ओहोवहोवग्गहियं" ति उपधिशब्दो मध्यनिर्दिष्टत्वाद् उभयत्र सम्बध्यते, तत ओघोपधिमौपग्रहिको-पधिं च 'भाण्डकम्' उपकरणं रजोहरणदण्डकादि 'द्विविधम्' उक्तभेदतो द्विभेदं मुनिर्गृह्णन् निक्षिपंश्च प्रयुञ्जीत इमं विधिम् ॥ तमेवाह—चक्षुषा प्रत्युपेक्ष्य प्रमार्जयेद् रजोहरणादिना यतमानो यतिः, तत आददीत निक्षिपेद् वा "दुहओ वि" त्ति द्वावपि प्रक्रमाद् औधिकौपग्रहिकोपधी 'समितः' उपयुक्तः सदेति सूत्रद्वयार्थः ॥ १३-१४ ॥ पञ्चमसमितिमाह—

**उच्चारं पासवणं, खेलं सिंघाण जल्लियं । आहारं उवहिं देहं, अन्नं वा वि तहाविहं ॥ १५ ॥**

**अणावायमसंलोए, अणावाए चेव होइ संलोए । आवायमसंलोए, आवाए चेव संलोए ॥ १६ ॥**

**अणावायमसंलोए, परस्सऽणुवघाइए । समे अज्झुसिरे वा वि, अचिरकालकयम्मि य ॥ १७ ॥**
**विच्छिन्ने दूरमोगाढे, णासन्ने विलवज्जिए । तसपाणवीयरहिए, उच्चारादीणि वोसिरे ॥ १८ ॥**

समिति-स्वरूपम् ।

व्याख्या—उच्चार प्रस्रवणं खेलं सिंहानं "जल्लियं" ति जल्लं आहारं उपधि देहं 'अन्यद्वा' कारणतो गृहीतं गोमयादि, 'अपि:' पूरणे, 'तथाविधं' परिष्ठापनार्हं प्रक्रमात् स्थण्डिले व्युत्सृजेद् इत्युत्तरेण सम्बन्धः ॥ स्थण्डिलं च दशविशेषणपदविशिष्टम्, तत्र चाऽऽद्यविशेषणपदयोर्भङ्गरचनामाह—अनापातम् असंलोकम्, अनापातं चैव भवति संलोकम्, आपातम् असंलोकम्, आपातं चैव संलोकम् । इह चाऽऽपातं संलोकं च अर्शआदेराकृतिगणत्वात् मत्वर्थीयेऽनि सिद्धम् ॥ दशविशेषणपदपरिज्ञानार्थमुच्चारादीनि यादृशे स्थण्डिले व्युत्सृजेत् तदाह—अनापाते असंलोके, कस्य ? 'परस्य' स्वपक्षादेः, तथा 'अनुपघातिके' संयमात्मप्रवचनोपघातरहिते, समे अशुषिरे च प्रतीते, अचिरकालकृते च, चिरकृते पुनः सम्मूर्च्छन्त्येव पृथिव्यादयः ॥ 'विस्तीर्णे' जघन्यतोऽपि हस्तमात्रे, 'दूरमवगाढे' जघन्यतोऽपि चतुरङ्गुलमधोऽचित्तीभूते, नासन्ने ग्रामारामादेः, बिलवर्जिते त्रसप्राणबीजरहिते उच्चारादीनि व्युत्सृजेदिति सूत्रचतुष्टयार्थः ॥ १५-१६-१७-१८ ॥ सम्प्रत्युक्तमर्थमुपसंहरन् वक्ष्यमाणार्थसम्बन्धार्थमाह—

**एयाओ पंच समिईओ, समासेण वियाहिया । इत्तो य तओ गुत्तीओ, वोच्छामि अणुपुव्वसो ॥१९॥**

व्याख्या—सुगमम् । नवरम्—"अणुपुव्वसो" त्ति आनुपूर्व्या ॥ १९ ॥ तत्राद्यामाह—

गुप्ति-स्वरूपम् ।

**सच्चा तहेव मोसा य, सच्चामोसा तहेव य । चउत्थी असच्चमोसा य, मणगुत्ती चउव्विहा ॥ २० ॥**
**संरंभसमारंभे, आरंभे य तहेव य । मणं पवत्तमाणं तु, नियत्तिज्ज जयं जई ॥ २१ ॥**

व्याख्या—स्पष्टमेव । नवरम्—सत्यादयो मनोयोगास्तद्विषया मनोगुप्तिरपि उपचारात् सत्यादिरुक्ता ॥ अस्या एव

स्वरूपं निरूपयन् काकोपदेष्टुमाह—संरम्भः–सङ्कल्पः स च मानसस्तथाऽहं ध्यास्यामि यथाऽसौ मरिष्यतीत्येवंविधः, समारम्भः–परपीडाकरोच्चाटनादिनिबन्धनं ध्यानम् अनयोः समाहारस्तस्मिन्, 'आरम्भे' परप्राणापहारक्षमाऽशुभध्यानरूपे, 'चः' समुच्चये, 'तथैव' तेनैवाऽऽगमप्रतीतेन प्रकारेण मनः प्रवर्त्तमानं 'तुः' विशेषणे, निवर्त्तयेत् यतमानो यतिः । विशेषश्चायम्—शुभसङ्कल्पेषु मनः प्रवर्त्तयेदिति सूत्रद्वयार्थः ॥ २०-२१ ॥ वाग्गुप्तिमाह—

**सच्चा तहेव मोसा य, सच्चामोसा तहेव य । चउत्थी असच्चमोसा य, वयगुत्ती चउव्विहा ॥ २२ ॥**
**संरंभसमारंभे, आरंभे य तहेव य । वयं पवत्तमाणं तु, नियत्तिज्ज जयं जई ॥ २३ ॥**

व्याख्या—अनन्तरव्याख्यातमेव । नवरम्—वाग्गुप्तिरुच्चारयितव्या । वाचिकश्च संरम्भः–परव्यापादनक्षममन्त्रादिपरावर्त्तनासङ्कल्पसूचको ध्वनिरेवोपचारात् सङ्कल्पशब्दवाच्यः सन् समारम्भः–परपीडाकरमन्त्रादिपरावर्त्तनम्, 'आरम्भः' परव्यपरोपणक्षममन्त्रादिजपनमिति सूत्रद्वयार्थः ॥ २२-२३ ॥ कायगुप्तिमाह—

**ठाणे निसीयणे चेव, तहेव य तुयट्टणे । उल्लंघण पल्लंघण, इंदियाण य जुंजणे ॥ २४ ॥**
**संरंभसमारंभे, आरंभे य तहेव य । कायं पवत्तमाणं तु, नियत्तिज्ज जयं जई ॥ २५ ॥**

व्याख्या—'स्थाने' ऊर्द्धस्थाने 'निषीदने चैव' प्रतीते, तथैव च 'त्वग्वर्त्तने' शयने 'उल्लङ्घने' गर्त्तादेरुत्क्रमणे 'प्रलङ्घने' सामान्येन गमने, उभयत्र सूत्रत्वात् सुपो लुक् । इन्द्रियाणां च "जुंजणे" त्ति 'योजने' शब्दादिषु व्यापारणे, सर्वत्र वर्त्तमान इति शेषः ॥ संरम्भः–अभिघातो यष्टिमुष्ट्यादिसंस्थानमेव सङ्कल्पसूचकमुपचारात् सङ्कल्पशब्दवाच्यं सत् समारम्भः–परितापकरो मुष्ट्याद्यभिघातः अनयोः समाहारस्तस्मिन्, 'आरम्भे' प्राणिवधात्मनि कायं प्रवर्त्तमानं निवर्त्तयेत् । शेषं प्राग्वदिति सूत्रद्वयार्थः ॥ २४-२५ ॥ सम्प्रति समितिगुप्त्योः परस्परं विशेषमाह—

एयाओ पंच समिईओ, चरणस्स य पवत्तणे। गुत्ती नियत्तणे वुत्ता, असुभत्थेसु य सव्वसो ॥२६॥

व्याख्या—'एताः' पञ्च समितयः चरणं–चारित्रं सच्चेष्टेत्यर्थः तस्य प्रवर्त्तने, पूर्वचशब्दस्यैवार्थस्य भिन्नक्रमत्वात् प्रवर्त्तन एव, किमुक्तं भवति ?—सच्चेष्टासु प्रवृत्तावेव समितयः। तथा "गुत्ति" त्ति गुप्तयो निवर्त्तनेऽप्युक्ताः, "असुभत्थेसु" त्ति 'अशुभार्थेभ्यः' अशोभनमनोयोगादिभ्यः "सव्वसो" त्ति सर्वेभ्यः, अपिशब्दात् चरणप्रवर्त्तनेऽपीति सूत्रार्थः ॥ २६ ॥ सम्प्रति अध्ययनार्थमुपसंहरन् एतदाचरणफलमाह—

समिति-गुप्त्योः परस्परं भेद एतदाचरणफलञ्च ।

एया पवयणमाया, जे सम्मं आयरे मुणी। सो खिप्पं सव्वसंसारा, विप्पमुच्चइ पंडिए ॥२७॥ त्ति बेमि ॥

व्याख्या—स्पष्टमेव ॥ २७ ॥

॥ इति श्रीनेमिचन्द्रसूरिकृतायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां प्रवचनमात्राख्यं चतुर्विंशमध्ययनं समाप्तम् ॥

# अथ पञ्चविंशतितमं यज्ञीयाख्यमध्ययनम् ॥

व्याख्यातं चतुर्विंशमध्ययनम् । अधुना यज्ञीयाख्यं पञ्चविंशमध्ययनं समारभ्यते, अस्य चाऽयमभिसम्बन्धः—'अनन्तराध्ययने प्रवचनमातरोऽभिहिताः, इह तु ता ब्रह्मगुणस्थितस्यैव तत्त्वतो भवन्तीति विजयघोषचरितवर्णनद्वारेण ब्रह्मगुणा उच्यन्ते' इत्यनेन सम्बन्धेनायातस्याऽस्य प्रस्तावनाय विजयघोषचरितं लेशतस्तावदुच्यते—

वाणारसीए नयरीए दो विप्पा भायरो जमला जयघोस-विजयघोसाभिहाणा आसि । अन्नया जयघोसो ण्हाइउं गंगं गओ, तत्थ पेच्छइ—सप्पेण मंडुक्को गसिज्जइ, सप्पो वि मज्जारेण अक्कंतो, तहा वि सप्पो मंडुक्कं चिंचियंतं खायइ, मज्जारो वि सप्पं चडप्फडंतं खायइ । अन्नमन्नघायं पासित्ता—'अहो !!! संसारस्स असारया जो जस्स पहवइ सो तमेत्थ गसइ, कयंतो पुण सव्वस्स पभवइ, अओ सव्वं पि गसइ, ता धन्नो चेवेत्थ सव्ववसणेहिंतो रक्खगो' त्ति चिंतंतो पडिबुद्धो गंगमुत्तरिऊण साहुसगासे समणो जाउ त्ति ॥ साम्प्रतं सूत्रं व्याख्यायते, तच्चेदम्—

माहणकुलसंभूओ, आसि विप्पो महायसो । जाजाई जमजन्नम्मि, जयघोसे त्ति नामओ ॥ १ ॥
इंदियग्गामनिग्गाही, मग्गगामी महामुणी । गामाणुगामं रीयंते, पत्ते वाणारसिं पुरिं ॥ २ ॥
वाणारसीइ बहिया, उज्जाणम्मि मणोरमे । फासुए सेज्जसंथारे, तत्थ वासमुवागए ॥ ३ ॥

व्याख्या—स्पष्टैव । नवरम्—ब्राह्मणकुलसम्भूतोऽपि जननीजात्यन्यथात्वेन ब्राह्मणो न स्याद् अत आह—विप्रः 'जाजाइ' त्ति अवश्यं यायजीति यायाजी, क ? इत्याह—यम इव प्राण्युपसंहारकारितया यमः स चासौ यज्ञश्च—

पशुमेधादिर्यैर्मयज्ञस्तस्मिन्, गार्हस्थ्याऽपेक्षया चैतदुक्तम् । श्रामण्याऽपेक्षया चेन्द्रियग्रामनिग्राही इत्यादीति सूत्रत्रयार्थः ॥ १-२-३ ॥ तदा च तत्पुरि यद् वर्त्तते यच्चासौ विधत्ते तदाह—

**अह तेणेव कालेण, पुरीए तत्थ माहणे । विजयघोसे त्ति नामेणं, जन्नं जयति वेयवी ॥ ४ ॥**
**अह से तत्थ अणगारे, मासक्खमणपारणे । विजयघोसस्स जन्नम्मि, भिक्खमट्ठा उवट्ठिए ॥ ५ ॥**

व्याख्या—"तेणेव कालेणं" ति तस्मिन्नेव काले शेपं स्पष्टमिति सूत्रद्वयार्थः ॥४-५॥ तत्र च यदसौ याजकः कृतवांस्तदाह—

**समुवट्ठियं तहिं संतं, जायगो पडिसेहए । न हु दाहामि ते भिक्खं, भिक्खू ! जायाहि अण्णओ ॥६॥**
**जे य वेदविऊ विप्पा, जन्नमऽट्ठा य जे दिया । जोइसंगविऊ जे य, जे य धम्माण पारगा ॥ ७ ॥**
**जे समत्था समुद्धत्तुं, परं अप्पाणमेव य । तेसिं अन्नमिणं देयं, भो भिक्खू ! सव्वकामियं ॥ ८ ॥**

व्याख्या—ये विप्रा जातितः, "जन्नट्ठा य" त्ति 'यज्ञार्थाश्च' यज्ञप्रयोजना ये तत्रैव व्याप्रियन्ते 'द्विजाः' संस्कारापेक्षया द्वितीयजन्मानः, ज्योतिपं—ज्योतिःशास्त्रं अङ्गानि च विदन्ति ये ते ज्योतिषाङ्गविदः, अङ्गत्वेऽपि ज्योतिपः पृथगुपादानं प्राधान्यख्यापकम्, 'धर्माणाम्' उपलक्षणत्वाद् धर्मशास्त्राणां पारगाः, अशेपविद्यास्थानोपलक्षणमेतत्, शेषं सुगममिति सूत्रत्रयार्थः ॥ ६-७-८ ॥ एवमुक्तो मुनिः कीदृग् जातः ? किं वा कृतवान् ? इत्याह—

**सो तत्थ एव पडिसिद्धो, जायगेण महामुणी । नवि रुट्ठो नवि तुट्ठो, उत्तमट्ठगवेसओ ॥ ९ ॥**
**नऽण्णट्ठं पाणहेउं वा, नवि निव्वाहणाय वा । तेसिं विमोक्खणट्ठाए, इमं वयणमब्बवी ॥ १० ॥**
**नवि जाणासि वेदमुहं, नवि जन्नाण जं मुहं । नक्खत्ताण मुहं जं च, जं च धम्माण वा मुहं ॥ ११ ॥**
**जे समत्था समुद्धत्तुं, परं अप्पाणमेव य । न ते तुमं विजाणासि, अह जाणसि तो भण ॥ १२ ॥**

व्याख्या—उत्तमार्थः–मोक्षस्तद्गवेषको मोक्षार्थीत्यर्थः ॥ 'न' नैव अन्नार्थं पानहेतुं वा नापि 'निर्वाहणाय वा' वस्त्रादिना यापनार्थमात्मन इति गम्यते, शेषं स्पष्टमिति सूत्रचतुष्टयार्थः ॥ ९-१०-११-१२ ॥ एवमुक्तो मुनिना स किं कृतवान् ? इत्याह—

तस्सऽक्खेवपमोक्खं च, अचयंतो तहिं दिओ। सपरिसो पंजलिहोउं, पुच्छई तं महामुणिं ॥ १३ ॥
वेयाणं च मुहं बूहि, बूहि जन्नाण जं मुहं । नक्खत्ताण मुहं बूहि, बूहि धम्माण वा मुहं ॥ १४ ॥
जे समत्था समुद्धत्तुं, परं अप्पाणमेव य। एयं मे संसयं सव्वं, साहू ! कहय पुच्छिओ ॥ १५ ॥

व्याख्या—'तस्य' मुनेः आक्षेपस्य–प्रश्नस्य प्रमोक्षं–प्रतिवचनं, 'चः' पूरणे, "अचयंतो" त्ति अशक्नुवन् दातुमिति गम्यते ॥ शेषं सुगममिति सूत्रत्रयार्थः ॥ १३-१४-१५ ॥ इत्थं पृष्टो मुनिराह—

अग्गिहुत्तमुहा वेया, जन्नट्ठी वेयसां मुहं। नक्खत्ताण मुहं चंदो, धम्माणं कासवो मुहं ॥ १६ ॥
जहा चंदं गहाईया, चिट्ठंते पंजलीउडा । वंदमाणा नमंसंता, उत्तमं मणहारिणो ॥ १७ ॥
अजाणगा जन्नवाई, विज्जामाहणसंपया। गूढा सज्झायतवसा, भासच्छन्ना इवऽग्गिणो ॥ १८ ॥
जो लोए बंभणो वुत्तो, अग्गी वा महिओ जहा। सदा कुसलसंदिट्ठं, तं वयं बूम माहणं ॥ १९ ॥
जो न सज्जइ आगंतुं, पव्वयंतो न सोअई। रमए अज्जवयणम्मि, तं वयं बूम माहणं ॥ २० ॥
जायरूवं जहामट्ठं, निद्धंतमलपावगं । रागद्दोसभयातीतं, तं वयं बूम माहणं ॥ २१ ॥
तसपाणे वियाणित्ता, संगहेण य थावरे। जो न हिंसइ तिविहेणं, तं वयं बूम माहणं ॥ २२ ॥
कोहा वा जइ वा हासा, लोहा वा जइ वा भया। मुसं न वयई जो उ, तं वयं बूम माहणं ॥ २३ ॥

चित्तमंतमचित्तं वा, अप्पं वा जइ वा बहुं । न गिण्हई अदत्तं जो, तं वयं ब्रूम माहणं ॥ २४ ॥
दिव्वमाणुस्सतेरिच्छं, जो न सेवइ मेहुणं । मणसा कायवक्केणं, तं वयं ब्रूम माहणं ॥ २५ ॥
जहा पोमं जले जायं, नोवलिप्पइ वारिणा । एवं अलित्तं कामेहिं, तं वयं बूम माहणं ॥ २६ ॥
अलोलुयं मुहाजीविं, अणगारं अकिंचणं । असंसत्तं गिहत्थेहिं, तं वयं ब्रूम माहणं ॥ २७ ॥
जहित्ता पुव्वसंजोगं, नाइसंगे य बंधवे । जो न सज्जइ एएसुं, तं वयं ब्रूम माहणं ॥(पाठा०)
पसुबंधा सव्ववेया, जट्ठं च पावकम्मुणा । न तं तायंति दुस्सीलं, कम्माणि बलवंतिह ॥ २८ ॥
नवि मुंडिएण समणो, न ॐकारेण बंभणो । न मुणी रण्णवासेणं, कुसचीरेण तावसो ॥ २९ ॥
समयाए समणो होइ, बंभचेरेण बंभणो । नाणेण य मुणी होइ, तवेणं होइ तावसो ॥ ३० ॥
कम्मुणा बंभणो होइ, कम्मुणा होइ खत्तिओ । वइस्सो कम्मुणा होइ, सुद्दो होइ उ कम्मुणा ॥३१॥
एए पाउकरे बुद्धे, जेहिं होइ सिणायओ । सव्वकम्मविणिम्मुक्कं, तं वयं ब्रूम माहणं ॥ ३२ ॥
एवं गुणसमाउत्ता, जे भवंति दिउत्तमा । ते समत्था उ उद्धत्तुं, परं अप्पाणमेव य ॥ ३३ ॥

व्याख्या—प्रायः स्पष्टान्येव । नवरम्—अग्निहोत्रम्–अग्निकारिका, सा चेह—"कर्मेन्धनं समाश्रित्य, दृढा सद्भावनाहुतिः । धर्मध्यानाग्निना कार्या, दीक्षितेनाऽग्निकारिका ॥१॥" इत्यादिरूपा परिगृह्यते, तदेव मुखं–प्रधानं येषां तेऽग्निहोत्रमुखा वेदाः, वेदानां हि दध्न इव नवनीतम् आरण्यकं प्रधानम्, तत्र च—'सत्यं तपश्च सन्तोषः, क्षमा चारित्रमार्जवम् । श्रद्धा धृतिरहिंसा च, संवरश्च तथा परः ॥१॥' इति दशप्रकार एव धर्म उक्तः, तदनुसारि चोक्तरूपमेवाग्निहोत्रमिति । तथा यज्ञः–प्रस्तावाद् भावयज्ञः संयमरूपस्तदर्थी 'वेदसां' यागानां 'मुखम्' उपायः, ते हि सत्येव यज्ञार्थिनि

प्रवर्त्तन्ते । नक्षत्राणां 'मुखं' प्रधानं चन्द्रः । धर्माणां 'काश्यपः' भगवान् ऋषभदेवः 'मुखम्' उपायः, तस्यैवाऽऽदित-स्तत्प्ररूपकत्वात् ॥ काश्यपस्यैव माहात्म्यख्यापनतो धर्ममुखत्वं समर्थयितुमाह—यथा चन्द्रं ग्रहादिकाः "पंजलीयड" त्ति कृतप्राञ्जलयः 'वन्दमानाः' स्तुवन्तः 'नमस्यन्तः' नमस्कुर्वन्तः 'उत्तमं' प्रधानं "मणोहारिणो" त्ति विनीततया चित्ता-क्षेपकारिणस्तिष्ठन्तीति सम्बन्धः, तथैनमपि भगवन्तं देवेन्द्रप्रमुखा इत्युपस्कारः, अनेन प्रश्नचतुष्टयप्रतिवचनमुक्तम् ॥ पञ्चमप्रश्नमधिकृत्याऽऽह—"अजाणग" त्ति अज्ञाः, के ते? यज्ञवादिनो ये भवतः पात्रत्वेनाऽभिमताः, कासाम्? इत्याह—"विज्जामाहणसंपय" त्ति सुब्व्यत्ययाद् 'विद्याब्राह्मणसंपदां' विद्याश्च—आरण्यक-ब्रह्माण्डपुराणाख्यधर्मशास्त्रात्मिकाः ता एव ब्राह्मणसम्पदो विद्याब्राह्मणसम्पदः, तात्त्विकब्राह्मणानां हि निःकिञ्चनत्वेन विद्या एव सम्पदः । तथा 'गूढाः' बहिःसं-वृतिमन्तः, केन हेतुना? 'स्वाध्यायतपसा' वेदाध्ययनोपवासादिना, अत एव "भासच्छन्ना इवऽग्गिणो" त्ति भस्मच्छन्नाः अग्नय इव, ते हि बहिरुपशमभाज आभान्ति अथ चान्तः कषायवत्तया ज्वलिताः, एवं च भवदभिमतब्राह्मणानामात्मपरो-द्धरणक्षमत्वं दूरापास्तमिति भावः ॥ कस्तर्हि भवदभिप्रायेण ब्राह्मणो यः पात्रम्? इत्याह—यो लोके ब्राह्मण उक्तः कुशलै-रिति गम्यते, सूत्रत्वाच्च सर्वत्र वचनव्यत्ययः, "अग्गी वा महिउ" त्ति 'वे'ति पूरणे, 'यथे'ति भिन्नक्रमः, ततो यथाऽग्निः यत्तदोर्नित्याऽभिसम्बन्धात् तथा महितः सन् 'सदा' सर्वदा, उपसंहारमाह—'कुशलसन्दिष्टं' तत्त्वाभिज्ञकथितं तं वयं ब्रूमो ब्राह्मणम् ॥ इत उत्तरसूत्रैः कुशलसन्दिष्टस्वरूपमेव ब्राह्मणमाह—यो न 'स्वजति' स्वजनाऽभिष्वङ्गं करोति 'आगंतुं' आगत्य स्वजनादिस्थानमिति गम्यते, 'प्रव्रजन्' तत एव स्थानान्तरं गच्छन्न शोचते, रमते 'आर्यवचने' तीर्थकृद्वचसि ॥ तथा 'जातरूपं' स्वर्णं यथा 'आमृष्टं' तेजःप्रकर्षारोपणाय मनःशिलादिना परामृष्टम्, अनेनाऽस्य बाह्यो गुण उक्तः । "निद्धंतमलपावगं" ति 'पावकनिर्ध्मातमलं' ज्वलनदग्धकिट्टम्, अनेन चान्तरः । ततो जातरूपवद् बाह्याभ्यन्तरगुणान्वितः,

अत एव रागाद्यतीतत्र यस्तं वयं ब्रूमो ब्राह्मणम् ॥ त्रसप्राणिनो विज्ञाय 'सङ्ग्रहेण' सङ्क्षेपेण, चशब्दाद् विस्तरेण च, तथा स्थावरान् यो न हिनस्ति 'त्रिविधेन' योगेनेति गम्यते ॥ "एवमलित्तं कामेहिं" ति 'एवमि'ति पद्मवदलिप्तः कामैः, तज्जातोऽपि यस्तं वयं ब्रूमो ब्राह्मणम् ॥ "असंसत्तं गिहत्थेसु" त्ति असंसक्तं गृहस्थैः ॥ केचित्–पठन्ति—"जहित्ता पुव्वसंजोगं, नाइसंगे य बंधवे । जो न सज्जइ एएहिं, वयं बूम माहणं ॥ १ ॥" अत्र च 'पूर्वसयोगं' मात्रादिसम्बन्धं 'ज्ञातिसङ्गान्' स्वस्रादिसङ्गान्, चस्य भिन्नक्रमत्वात् 'बान्धवांश्च' भ्रात्रादीन् ॥ स्यादेतद्—वेदाध्ययनं यजनं च भवात् त्रायकमिति तद्योगादेव ब्राह्मणो न तु यथा त्वयोक्त इत्याशङ्क्याह—पशूनां बन्धः–विनाशाय नियमनं यैर्हेतुभिस्तेऽमी पशुबन्धाः 'सर्ववेदाः' ऋग्वेदादयः, "जट्ठं" ति 'इष्टं' यजनं, 'चः' समुच्चये, 'पापकर्मणा' पापहेतुपशुबन्धाद्यनुष्ठानेन न तं यष्टारं त्रायन्ते भवादिति गम्यते, 'दुःशीलं' दुराचारं यतः कर्माणि 'बलवन्ति' दुर्गतिनयनं प्रति समर्थानि 'इह' वेदाध्ययने यजने च भवन्तीति गम्यते, अतो नैतद्योगाद् ब्राह्मणो भवति, किन्त्वनन्तरोक्तगुण एवेति भावः ॥ अन्यच्च 'न' नैव 'अपिः' पूरणे, मुण्डितेन 'श्रमणः' निर्ग्रन्थः । न ॐकारेणोपलक्षणत्वाद् "ॐ भूर्भुवःस्वः" इत्यादिना ब्राह्मणः । न मुनिः अरण्यवासेन । कुशः–दर्भस्तन्मयं चीवरं कुशचीवरं वल्कलोपलक्षणमेतत्, तेन तापसः ॥ कथममी तर्हि भवन्ति ? इत्याह—'समतये'त्यादि ॥ तथा 'कर्मणा' क्रियया ब्राह्मणो भवति । उक्तं हि—"क्षमा दानं दमो ध्यानं, सत्यं शौचं धृतिर्घृणा । ज्ञान विज्ञानमास्तिक्य-मेतद्ब्राह्मणलक्षणम् ॥ १ ॥" तथा 'कर्मणा' क्षतत्राणलक्षणेन भवति क्षत्रियः । वैश्यः 'कर्मणा' कृषिपाशुपाल्यादिना भवति । शूद्रो भवति तु 'कर्मणा' शोचनादिहेतुप्रेषणादिसम्पादनरूपेण । कर्माभावे हि ब्राह्मणादिव्यपदेशानामसत्त्वेवेति । ब्राह्मणप्रक्रमे च यच्छेषाभिधानं तद्व्याप्तिदर्शनार्थम् ॥ किमिदं स्वमनीषिकयैवोच्यते ? इत्याह—'एतान्' अनन्तरोक्तान् अहिंसाद्यर्थान् 'प्रादुरकार्षीत्' प्रकटितवान् 'बुद्धः' सर्वज्ञो यैर्भवति 'स्नातकः' केवली ।

ततश्च सर्वकर्मविनिर्मुक्तमिव सर्वकर्मविनिर्मुक्तं स्नातकं तत्त्वतो वयं ब्रूमो ब्राह्मणम्॥ सम्प्रत्युपसंहर्त्तुमाह—'एवमि'त्यादि "ते समत्था उ" त्ति इत्यत्र 'तुः' पूरणे, इत्यष्टादशसूत्रार्थः॥ १६-१७-१८-१९-२०-२१-२२-२३-२४-२५-२६-२७-२८-२९-३०-३१-३२-३३॥ अभिधाय चेदमवस्थितो मुनिः। ततश्च—

एवं तु संसए छिन्ने, विजयघोसे य माहणे। समुदाय तओ तं तु, जयघोसं महामुणिं॥ ३४॥
तुट्ठे य विजयघोसे, इणमुदाहु कयंजली। माहणत्तं जहाभूयं, सुट्ठु मे उवदंसियं॥ ३५॥
तुब्भे जइया जण्णाणं, तुब्भे वेयविऊ विऊ। जोइसंगविऊ तुब्भे, तुब्भे धम्माण पारगा॥ ३६॥
तुब्भे समत्था उद्धत्तुं, परं अप्पाणमेव य। तमणुग्गहं करेहऽम्हं, भिक्खेणं भिक्खुउत्तमा!॥३७॥

व्याख्या—'एवम्' उक्तप्रकारेण, 'तुः' वाक्यान्तरोपन्यासे, संशये छिन्ने विजयघोषः, 'चः' पूरणे, ब्राह्मणः "समुदाय" त्ति आर्षत्वात् 'समादाय' सम्यग् गृहीत्वाऽवधार्येत्यर्थः, 'ततः' संशयच्छेदानन्तरं तं 'तुः' पूरणे, जयघोषं महामुनिम्॥ यथैप मम भ्राता किं कृतवान्? इत्याह—"तुट्ठे"त्यादि॥ "जइय" त्ति यष्टारः "भिक्खेणं" ति भिक्षाग्रहणेन, शेषं सुगममिति सूत्रचतुष्टयार्थः॥ ३४-३५-३६-३७॥ एवं द्विजेनोक्ते मुनिराह—

न कज्जं मज्झ भिक्खेणं, खिप्पं निक्खमसू दिया!। मा भमिहिसि भयावत्ते, घोरे संसारसागरे॥३८॥
उवलेवो होइ भोगेसु, अभोगी नोवलिप्पई। भोगी भमइ संसारे, अभोगी विप्पमुच्चई॥ ३९॥
उल्लो सुक्को य दो छूढा, गोलया मट्टियामया। दोऽवि आवडिया कुड्डे, जो उल्लो सोऽत्थ लग्गई॥४०॥
एवं लग्गंति दुम्मेहा, जे नरा कामलालसा। विरत्ता उ न लग्गंति, जहा से सुक्कगोलए॥ ४१॥

व्याख्या—"भयावत्ते" त्ति भयानि–इहलोकभयादीनि आवर्त्ता इवाऽऽवर्त्ता यत्र स तथा तस्मिन्। शेषं सुगमनिति सूत्रचतुष्टयार्थः ॥ ३८-३९-४०-४१ ॥ यदित्थं प्रज्ञापितोऽसौ कृतवांस्तदाह—

एवं से विजयघोसे, जयघोसस्स अंतिए। अणगारस्स निक्खंतो, धम्मं सुच्चा अणुत्तरं ॥ ४२ ॥

व्याख्या—स्पष्टम् ॥ ४२ ॥ अध्ययनार्थमुपसंहरन्ननयोर्निःक्रमणफलमाह—

खवित्ता पुव्वकम्माइं, संजमेण तवेण य। जयघोसविजयघोसा, सिद्धिं पत्ता अणुत्तरं ॥४३॥ त्ति बेमि॥

व्याख्या—स्पष्टमेव ॥ ४३ ॥

इति श्रीनेमिचन्द्रसूरिकृतायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां यज्ञीयाख्यं पञ्चविंशमध्ययनं समाप्तम् ॥

विजयघोषेण जयघोषान्तिके दीक्षास्वीकरणम्। द्वयोर्मुक्तिः।

# अथ सामाचार्याख्यं षड्विंशमध्ययनम् ।

व्याख्यातं पञ्चविंशमध्ययनम् । अधुना सामाचारीनामकं षड्विंशमारभ्यते, अस्य चायमभिसम्बन्धः—'अनन्तराध्ययने ब्रह्मगुणा उक्ताः, तद्वांश्च यतिरेव भवति, तेन चाऽवश्यं सामाचारी विधेया, साऽस्मिन्नभिधीयते' इत्यभिसम्बन्धागतस्याऽस्याऽऽदिसूत्रम्—

**सामायारिं पवक्खामि, सव्वदुक्खविमुक्खणिं । जं चरित्ताण निग्गंथा, तिण्णा संसारसागरं ॥ १ ॥**

व्याख्या—सुगमम् ॥ १ ॥ यथाप्रतिज्ञातमाह—

**पढमा आवस्सिया नामं, बिइया य निसीहिया । आपुच्छणा य तइया, चउत्थी पडिपुच्छणा ॥ २ ॥**
**पंचमी छंदणा नामं, इच्छाकारो य छट्ठओ । सत्तमो मिच्छकारो य, तहक्कारो य अट्ठमो ॥ ३ ॥**
**अब्भुट्ठाणं नवमा, दसमा उवसंपया । एसा दसंगा साहूणं, सामायारी पवेइया ॥ ४ ॥**

व्याख्या—स्पष्टमेव ॥ २-३-४ ॥ एनामेव प्रत्यवयवं विषयप्रदर्शनपूर्वकं विधेयतयाऽभिधातुमाह—

**गमणे आवस्सियं कुज्जा, ठाणे कुज्जा निसीहियं । आपुच्छणा सयंकरणे, परकरणे पडिपुच्छणा ॥ ५ ॥**
**छंदणा दव्वजाएणं, इच्छकारो अ सारणे । मिच्छकारो अ निंदाए, तहक्कारो पडिस्सुए ॥ ६ ॥**
**अब्भुट्ठाणं गुरुपूया, अच्छणे उवसंपया । एवं दुपंचसंजुत्ता, सामायारी पवेइया ॥ ७ ॥**

व्याख्या—'आप्रच्छना' इदमहं कुर्यां न वा इत्येवंरूपा तां स्वयं—आत्मनः करणं—कस्यचित् कार्यस्य निर्वर्त्तनं स्वयंकरणं तस्मिन्, तथा 'परकरणे' अन्यप्रयोजनविधाने 'प्रतिप्रच्छना' गुरुनियुक्तोऽपि हि पुनः प्रवृत्तिकाले प्रतिपृच्छत्येव

षड्विंशं सामाचार्याख्यमध्ययनम् ।

दशविधा यतिसामाचारी ।

गुरुम् ॥ 'छन्दना' निमन्त्रणा 'द्रव्यजातेन' द्रव्यविशेषेण पूर्वगृहीतेनेति गम्यते । यदुक्तम्—"पुव्वगहिएण छंदणनिमंतणा होइ अगहिएणं" ति । इच्छाकारः 'सारणे' आत्मनः परस्य वा कृत्यं प्रति प्रवर्त्तने, तत्राऽऽत्मसारणे, यथा—इच्छाकारेण युष्मच्चिकीर्षितं कार्यमिदं करोमीति, अन्यसारणे च—मम पात्रलेपनादि इच्छाकारेण कुरुत । 'तथाकारः' इदमित्थमेवे-त्यभ्युपगमः, स च 'प्रतिश्रुते' प्रतिश्रवणे गुरौ वाचनादिकं यच्छत्येवमेतदित्यभ्युपगमरूपे । 'अभी'त्याभिमुख्येन उत्थानम्—अभ्युत्थानं, "गुरुपूय" त्ति सूत्रत्वाद् गुरुपूजायां, सा च गौरवार्हाणामाचार्यग्लानादीनां यथोचिताहारादिसम्पादनम् । इह च सामान्याभिधानेऽप्यभ्युत्थानं निमन्त्रणारूपमेव ग्राह्यम्, अत एव निर्युक्तिकृता एतत्स्थाने निमन्त्रणैवाऽभिहिता "छंदणा य निमंतण" त्ति । तथा "अच्छणे" त्ति 'आसने' प्रक्रमाद् आचार्यान्तरादिसन्निधानावस्थाने 'उपसम्पद्' इयन्तं कालं भवदन्तिके मयाऽऽसितव्यमित्येवंरूपा । 'एवम्' उक्तप्रकारेण "दुपंचसंजुत्त" त्ति 'द्विपञ्चकसंयुक्ता' दशसंख्यायुता सामाचारी 'प्रवेदिता' कथिता । शेषं स्पष्टमिति सूत्रत्रयार्थः ॥ ५-६-७ ॥ एतावता दशविधां सामाचारीमभिधाय ओघसामाचारीं विवक्षुरिदमाह—

दशविधा यतिसामाचारी ।

**पुव्विल्लम्मि चउब्भागे, आइच्चम्मि समुट्ठिए । भंडयं पडिलेहित्ता, वंदित्ता य तओ गुरुं ॥ ८ ॥**
**पुच्छिज्जा पंजलिउडो, किं कायव्वं मए इहं ? । इच्छं निओइउं भंते !, वेयावच्चे व सज्झाए ॥ ९ ॥**
**वेयावच्चे निउत्तेणं, कायव्वमगिलायओ । सज्झाए वा निउत्तेणं, सव्वदुक्खविमोक्खणे ॥ १० ॥**

ओघसामाचारी ।

व्याख्या—पूर्वस्मिंश्चतुर्भागे आदित्ये 'समुत्थिते' समुद्गते इत्यर्थः, इह च किञ्चिदूनोऽपि चतुर्भागश्चतुर्भाग उक्तः, ततोऽयमर्थः—बुद्ध्या नभश्चतुर्धा विभज्यते, तत्र पूर्वदिक्सम्बद्धे किञ्चिदूननभश्चतुर्भागे यदाऽऽदित्यः समुदेति तदा पादोनपौरुष्यामित्यर्थः, भाण्डमेव 'भाण्डकं' पतद्ग्रहाद्युपकरणं प्रतिलिख्य वन्दित्वा च 'ततः' प्रतिलेखनानन्तरं 'गुरुम्' आचार्यादिं

पृच्छेत् कृतप्राञ्जलिः, यथा—किं कर्त्तव्यं मया 'इह' अस्मिन् समये इति गम्यते। एतदेव व्यनक्ति—"इच्छं" ति इच्छामि "निओइउं" ति नियोजयितुं युष्माभिरात्मानमिति शेषः। "भंते" ति भदन्त! वैयावृत्त्ये, वाशब्दो भिन्नक्रमः, ततः स्वाध्याये वा॥ एवं च पृष्ट्वा यत् कृत्यं तदाह—वैयावृत्त्ये नियुक्तेन कर्त्तव्यं प्रक्रमाद् वैयावृत्त्यम् "अगिलायउ" त्ति अग्लान्यैव, स्वाध्याये वा नियुक्तेन सर्वदुःखविमोक्षणे स्वाध्यायोऽग्लान्यैव कर्त्तव्य इति प्रक्रम इति सूत्रत्रयार्थः॥ ८-९-१०॥

इत्थं सकलौघसामाचारीमूलत्वात् प्रतिलेखनायाः कालं सदा विधेयत्वाद् गुरुपारतन्त्र्यं चाभिधायौत्सर्गिकं दिनकृत्यमाह—



**दिवसस्स चउरो भागे, कुज्जा भिक्खू वियक्खणो। तओ उत्तरगुणे कुज्जा, दिणभागेसु चउसु वि ११**

**पढमं पोरिसिं सज्झायं, बीयं झाणं झियायई। तइयाए भिक्खायरियं, पुणो चउत्थीए सज्झायं॥१२॥**

व्याख्या—स्पष्टमेव। नवरम्—"तओ" त्ति 'ततः' चतुर्भागकरणानन्तरं 'उत्तरगुणान्' स्वाध्यायादीन्॥ प्रथमां पौरुषीं 'स्वाध्यायं' वाचनादिकं कुर्यात्, द्वितीयायां ध्यानं ध्यायेत्, ध्यानं चेहार्थपौरुषीत्वादस्या अर्थविषय एव मानसादिव्यापारणमुच्यते, ध्यायेदिति वा, अनेकार्थत्वाद् धातूनां कुर्यादिति सूत्रद्वयार्थः॥ ११-१२॥ यदुक्तं प्रथमां पौरुषीमिति तत्परिज्ञानार्थमाह—

**आसाढे मासे दुपया, पोसे मासे चउप्पया। चित्तासोएसु मासेसु, तिपया हवइ पोरिसी॥ १३॥**

**अंगुलं सत्तरत्तेणं, पक्खेण य दुअंगुलं। वड्ढए हायए वा वि, मासेणं चउरंगुलं॥ १४॥**

**आसाढबहुलपक्खे, भद्दवए कत्तिए य पोसे य। फग्गुणवइसाहेसु य, नायव्वा ओमरत्ता उ॥ १५॥**

व्याख्या—'सप्तरात्रेणे'ति दिनाविनाभावित्वाद् रात्रीणां सप्ताहोरात्रेण वर्द्धते दक्षिणायने, हीयते उत्तरायणे। इह च

सप्तरात्रेणेत्यत्र सार्द्धेनेति शेषो द्रष्टव्यः, पक्षेण द्व्यङ्गुलवृद्ध्यभिधानात् । अन्यच्च केषुचिद् मासेषु दिनचतुर्दशकेनाऽपि पक्षः सम्भवति, तत्र च सप्तरात्रेणाप्यङ्गुलवृद्धिहान्या न कश्चिद्विरोधः ॥ केषु पुनर्मासेषु दिनचतुर्दशकेनाऽपि पक्षसम्भव इत्याह—

"ओम" त्ति 'अवमा' न्यूना एकेनेति शेषः, "रत्त" त्ति उपलक्षणत्वादहोरात्रा, एवं चैकैकदिनाऽपहारे दिनचतुर्दशकेनैव कृष्णपक्ष एतेष्विति भावः । शेषं स्पष्टमेवेति सूत्रत्रयार्थः ॥ १३-१४-१५ ॥ इत्थं पौरुषीपरिज्ञानोपायमभिधाय प्राक् प्रतिलेखनाकालत्वेन निर्दिष्टायाः पादोनपौरुष्याः परिज्ञानोपायमाह—

**जिट्ठामूले आसाढ-सावणे छहिं अंगुलेहिं पडिलेहा । अट्ठहिं बीयतइयम्मि, तइए दस अट्ठहिं चउत्थे ॥**

व्याख्या—'ज्येष्ठामूले' ज्येष्ठे आषाढे श्रावणे षड्भिरङ्गुलैः प्रत्यहं प्रागुद्दिष्टपौरुषीमाने प्रक्षिप्तैरिति गम्यते, 'प्रतिलेखा' प्रतिलेखना, अष्टभिर्द्वितीये, 'त्रिके' तृतीये दशभिः, अष्टाभिश्चतुर्थे त्रिके इति योग इति सूत्रार्थः ॥ १६ ॥

पौरुष्याः स्थापना चेयम्—

| | |
|---|---|
| ज्येष्ठे पद २ अंगुल ४ | मार्गशीर्षे पद ३ अंगुल ८ |
| आषाढे पद २ | पौषे पद ४ |
| श्रावणे पद २ अंगुल ४ | माघे पद ३ अंगुल ८ |
| भाद्रपदे पद २ अंगुल ८ | फाल्गुने पद ३ अंगुल ४ |
| आश्विने पद ३ | चैत्रे पद ३ |
| कार्तिके पद ३ अंगुल ४ | वैशाखे पद २ अंगुल ८ |

पादोनपौरुष्याः स्थापना चेयम्—

| | |
|---|---|
| जेष्ठे पद २ अंगुल १० | मार्गशीर्षे पद ४ अंगुल ६ |
| आषाढे पद २ अंगुल ६ | पौषे पद ४ अंगुल १० |
| श्रावणे पद २ अंगुल १० | माघे पद ४ अंगुल ६ |
| भाद्रपदे पद ३ अंगुल ४ | फाल्गुने पद ४ |
| आश्विने पद ३ अंगुल ८ | चैत्रे पद ३ अंगुल ८ |
| कार्तिके पद ४ | वैशाखे पद ३ अंगुल ४ |

इत्थं दिनकर्त्तव्यमभिधाय रात्रौ यद्विधेयं तदाऽऽह—

**रत्तिं पि चउरो भाए, भिक्खू कुज्जा वियक्खणो । तओ उत्तरगुणे कुज्जा, राइभागेसु चउसु वि ॥१७॥**

**पढमं पोरिसिं सज्झायं, बिइयं झाणं झियायई । तइयाए निद्दमुक्खं तु, चउत्थी भुज्जो वि सज्झायं १८**

व्याख्या—स्पष्टमेव । नवरम्—रात्रिमपि न केवलं दिनमित्यपिशब्दार्थः, द्वितीयायां 'ध्यानं' धर्मध्यानं तृतीयायां 'निद्रामोक्षं' स्वापं कुर्यादिति सर्वत्र प्रक्रमाद् वृषभापेक्षं चैतत्, सामस्त्येन तु प्रथमचरमप्रहरजागरणमेव, तथा चागमः—"सव्वेसि पढमजामे, दोण्णि उ वसहाण आइमा जामा । तइओ होइ गुरूणं, चउत्थओ होइ सव्वेसिं॥१॥" इति सूत्रद्वयार्थः॥ १७-१८ ॥ सम्प्रति रात्रिभागचतुष्टयपरिज्ञानोपायमुपदर्शयन् समस्तं यतिकृत्यमाह—

**जं नेइ जया रत्तिं, नक्खत्तं तम्मि नहचउब्भाए । संपत्ते विरमेज्जा, सज्झाय पओसकालम्मि ॥१९॥**

**तम्मेव य नक्खत्ते, गयण चउब्भागसावसेसम्मि । वेरत्तियं पि कालं, पडिलेहित्ता मुणी कुज्जा ॥२०॥**

व्याख्या—यद् नयति समाप्तिमिति गम्यते, यदा रात्रिं नक्षत्रं तस्मिन् नभश्चतुर्भागे सम्प्राप्ते विरमेत "सज्झाय" त्ति स्वाध्यायात् प्रदोषकाले प्रारब्धादिति शेषः॥ तस्मिन्नेव नक्षत्रे प्रक्रमात् प्राप्ते "गयण" त्ति गगने, कीदृशि ? चतुर्भागेन गम्येन सावशेषं चतुर्भागसावशेषं तस्मिन् 'वैरात्रिकं' तृतीयम् अपिशब्दात् निजनिजसमये प्रादोषिकादिकं च कालं "पडिलेहित्त" त्ति 'प्रत्युपेक्ष्य' जागर्य मुनिः 'कुर्यात्' करोतेः सर्वधात्वर्थत्वाद् गृह्णीयात्॥ इह च प्रथमादिषु नभश्चतुर्भागेषु सम्प्राप्ते नेतरि नक्षत्रे रात्रेः प्रथमादयः प्रहरा इति सामर्थ्यादुक्तं भवतीति सूत्रद्वयार्थः॥ १९-२० ॥ इत्थं सामान्येन दिनरजनिकृत्यमुपदर्श्य पुनर्विशेषतस्तदेव दर्शयंस्तावद् दिनकृत्यमाह—

**पुव्विल्लम्मि चउब्भागे, पडिलेहित्ताण भंडयं । गुरुं वंदित्तु सज्झायं, कुज्जा दुक्खविमुक्खणं ॥ २१ ॥**

**पोरिसीए चउब्भाए, वंदित्ताण तओ गुरुं । अपडिक्कमित्ता कालस्स, भायणं पडिलेहए ॥ २२ ॥**

१ "सर्वेषां प्रथमयामो, द्वौ तु वृषभाणामाद्यौ यामौ । तृतीयो भवति गुरूणां, चतुर्थको भवति सर्वेषाम् ॥ १ ॥"

मुहपत्तिं पडिलेहित्ता, पडिलेहिज्ज गोच्छयं । गोच्छगलइयंगुलिओ, वत्थाइं पडिलेहए ॥ २३ ॥
उड्ढं थिरं अतुरियं, पुव्वं ता वत्थमेव पडिलेहे । तो बिइयं पप्फोडे, तइयं च पुणो पमज्जिज्जा ॥ २४ ॥
अणच्चावियं अवलियं, अणाणुबंधिं अमोसलिं चेव । छप्पुरिमा नव खोडा, पाणीपाणिविसोहणं २५
आरभडा सम्मद्दा, वज्जेयव्वा य मोसली तइया । पप्फोडणा चउत्थी, विक्खित्ता वेइया छट्ठा ॥२६॥
पसिढिल-पलंब-लोला, एगामोसा अणेगरूवधुणा । कुणइ पमाणि पमायं, संकिए गणणोवगं कुज्जा ॥
अणूणाइरित्तपडिलेहा, अविवच्चासा तहेव य । पढमं पयं पसत्थं, सेसाणि उ अप्पसत्थाणि ॥ २८ ॥
पडिलेहणं कुणंतो, मिहो कहं कुणइ जणवयकहं वा । देइ व पच्चक्खाणं, वाएइ सयं पडिच्छइ वा २९
पुढवी आउक्काए, तेऊ-वाऊ-वणस्सइ-तसाणं । पडिलेहणापमत्तो, छण्हं पि विराहओ होइ ॥ ३० ॥
तइयाए पोरिसीए, भत्तं पाणं गवेसए । छण्हं अण्णयरागम्मि, कारणम्मि समुट्ठिए ॥ ३१ ॥
वेयणवेयावच्चे, इरियट्ठाए य संजमट्ठाए । तह पाणवत्तियाए, छट्ठं पुण धम्मचिंताए ॥ ३२ ॥
निग्गंथो धिइमंतो, निग्गंथी वि न करिज्ज छहिं चेव । ठाणेहिं तु इमेहिं, अणइक्कमणा य से होइ ॥३३॥
आयंके उवसग्गे, तितिक्खया बंभचेरगुत्तीसु । पाणिदयातवहेउं, सरीरवुच्छेयणट्ठाए ॥ ३४ ॥
अवसेसं भंडगं गिज्झा, चक्खुसा पडिलेहए । परमद्धजोअणाओ, विहारं विहरए मुणी ॥ ३५ ॥
चउत्थीए पोरिसीए, निक्खिवित्ताण भायणं । सज्झायं च तओ कुज्जा, सव्वभावविभावणं ॥ ३६ ॥
पोरिसीए चउब्भाए, वंदित्ताण तओ गुरुं । पडिक्कमित्ता कालस्स, सिज्जं तु पडिलेहए ॥ ३७ ॥
पासवणुच्चारभूमिं च, पडिलेहिज्ज जयं जई ।

व्याख्या—सूत्रद्वयं व्याख्यातप्रायमेव । नवरम्—'पूर्वस्मिंश्चतुर्भागे' प्रथमपौरुषीलक्षणे प्रक्रमाद् दिनस्य प्रत्युपेक्ष्य 'भाण्डकं' वर्षाकल्पादिक आदित्योदयसमय इति शेपः ॥ द्वितीयसूत्रे पौरुष्याश्चतुर्थभागे अवशिष्यमाण इति गम्यते, अप्रतिक्रम्य कालस्य चतुर्थपौरुष्यामपि स्वाध्यायस्य विधास्यमानत्वात् ॥ प्रतिलेखनाविधिमेवाह—मुखवस्त्रिकां प्रतिलेख्य प्रतिलेखयेत् 'गोच्छकं' पात्रकोपरिवर्त्युपकरणम्, ततश्च "गोच्छगलइयंगुलिउ" त्ति प्राकृतत्वाद् अङ्गुलिलातगोच्छकः 'वस्त्राणि' पटलकरूपाणि 'प्रतिलेखयेत्' प्रस्तावात् प्रमार्जयेदित्यर्थः ॥ इत्थं तथावस्थितान्येव पटलकानि गोच्छकेन प्रमृज्य पुनर्यत् कुर्यात् तदाऽऽह—'ऊर्ध्वं' कायतो वस्त्रतश्च, तत्र कायत उत्कुटुकः, वस्त्रतस्तिर्यक्प्रसारितवस्त्रः, 'स्थिरं' दृढग्रहणेन 'अत्वरितम्' अद्रुतं यथा भवत्येवं 'पूर्वं' प्रथमं "ता" इति तावत् 'वस्त्रं' पटलकरूपं जातावेकवचनम्, पटलकप्रक्रमेऽपि सामान्यवाचकवस्त्रशब्दाभिधानं वर्षाकल्पादिप्रत्युपेक्षणायामप्ययमेव विधिरिति ख्यापनार्थम् । एवशब्दो भिन्नक्रमः, ततः प्रत्युपेक्षेतैव आरतः परतश्चैव निरीक्षेतैव न तु प्रस्फोटयेत्, तत्र च यदि जन्तून् पश्यति ततो यतनयाऽन्यत्र सङ्क्रामयति, तददर्शने च "तो" इति 'ततः' प्रत्युपेक्षणानन्तरं द्वितीयमिदं कुर्यात्—यदुत प्रस्फोटयेत्, तृतीयं च पुनरिदं कुर्यात्—यदुत 'प्रमृज्यात्' प्रत्युपेक्ष्य प्रस्फोट्य च हस्तगतान् प्राणिनः प्रमृज्यादित्यर्थः ॥ कथं पुनः प्रस्फोटयेत् प्रमृज्येद् वा ? इत्याह—'अनर्तितं' वस्त्रं वपुर्वा यथा नर्त्तितं न भवति, 'अवलितं' यथाऽऽत्मनो वस्त्रस्य च वलितं—मोटनं न भवति, 'अननुबन्धि' अनुबन्धेन—नैरन्तर्यलक्षणेन युक्तमनुबन्धि न तथा अननुबन्धि, कोऽर्थः ? अलक्ष्यमाणविभागं यथा न भवति, "अमोसलिं" ति सूत्रत्वादामर्शवत् तिर्यगूर्ध्वमधो वा कुड्यादिपरामर्शवद् यथा न भवति तथा, किम् ? इत्याह—"छप्पुरिम" त्ति पट् पूर्वाः—पूर्वं क्रियमाणतया तिर्यक्कृतवस्त्रप्रस्फोटनात्मकाः क्रियाविशेषा येषां ते षट्पूर्वाः, नव 'खोटकाः' प्रस्फोटनरूपाः कर्त्तव्या इति शेपः, पाणौ प्राणिनां—कुन्थ्वादीनां विशोधनं त्रिक-

त्रिस्फोत्तरकालं त्रिकत्रिकसङ्ख्यं पाणिप्राणिविशोधनं कर्त्तव्यम् ॥ प्रतिलेखनादोषपरिहारार्थमाह—'आरभटा' विपरीतक-
रणमुच्यते, त्वरितं वा अन्यान्यवस्त्रग्रहणेनाऽसौ भवेत्, उक्तं हि—"[1]वितहकरणमारभडा तुरियं वा अन्नमन्नगहणेण"।
मम्मर्दनं मम्मर्दा रूढित्वात् स्त्रीलिङ्गता, वस्त्रान्तःकोणसञ्चलनम्, उपधेर्वा उपरि निपदनम्, उक्तञ्च—"[2]अंतो व होज्ज
कोणा निसियण तत्थेव सम्मद्दा" वर्जयितव्येति सर्वत्र सम्बध्यते। 'चः' पूरणे, "मोसलि" त्ति तिर्यगूर्ध्वमधो वा घट्टना
तृतीया। 'प्रस्फोटना' प्रकर्षेण रेणुगुण्डितस्येव वस्त्रस्य स्फोटना चतुर्थी। विक्षेपणं विक्षिप्ता पञ्चमीति गम्यते, रूढित्वात्
स्त्रीलिङ्गता, सा च प्रत्युपेक्षितवस्त्रस्याऽन्यत्राऽप्रत्युपेक्षिते क्षेपणं प्रत्युपेक्षमाणो वा वस्त्राञ्चलं यदूर्ध्वं क्षिपति। वेदिका
"उट्ट" त्ति षष्ठी, अत्र सम्प्रदायः—"[3]वेइया पंचविहा पन्नत्ता, तं जहा—उड्ढवेइया, अहोवेइया, तिरियवेइया, उभओ-
वेइया, एगओवेइया। तत्थ उड्ढवेइया—उवरिं जण्णुगाणं हत्थे काऊणं पडिलेहेइ, अहोवेइया—अहोजण्णुगाणं हत्थे
काऊण पडिलेहेइ, तिरियवेइया—संडासयाणं मज्झेणं हत्थे नेऊण पडिलेहेइ, उभओवेइया—वाहाणं अंतरे दो वि जाणुगा
काऊण पडिलेहेइ, एगओवेइया—एगं जण्णुगं वाहाणं अंतरे काऊण पडिलेहेइ"। एवमेते दोषाः प्रतिलेखनायां
परिहर्त्तव्याः ॥ तथा प्रशिथिलं नाम दोषः—यददृढम् अनिरायतं वा वस्त्रं गृह्यते। प्रलम्बः—यद्विषमग्रहणेन प्रत्युपेक्ष्य-
माणवस्त्रकोणानां लम्बनं लोलः—भूमौ करे वा प्रत्युपेक्ष्यमाणवस्त्रस्य लोलनममीषां द्वन्द्वः। एकामर्शनं एकामर्शा प्राग्वत्
स्त्रीलिङ्गता, मध्ये गृहीत्वा ग्रहणदेशं यावदुभयतो वस्त्रस्य यदेककालं सङ्कर्षणमाकर्षणम्। "अणेगरूवधुण" त्ति अनेकरूपा

[1] "वितथकरणं आरभटा त्वरितं वा अन्याऽन्यग्रहणेन"। [2] "अन्तर्वा भवेयुः कोणा निषीदनं तत्रैव सम्मर्दा"। [3] "वेदिका पञ्चविधा प्रज्ञप्ता, तद्यथा—ऊर्ध्ववेदिका अधोवेदिका तिर्यग्वेदिका उभयतोवेदिका एकतोवेदिका, तत्रोर्ध्ववेदिका—उपरि जानुनोर्हस्तौ कृत्वा प्रतिलेखयति, अधोवेदिका—अधो जान्वोर्हस्तौ कृत्वा प्रतिलेखयति, तिर्यग्वेदिका—संदंशकयोर्मध्ये हस्तेन गृहीत्वा प्रतिलेखयति, उभयतोवेदिका—बाह्वोरन्तरे द्वे अपि जानुनी कृत्वा प्रतिलेखयति, एकतोवेदिका—एकं जानु बाह्वोरन्तरे कृत्वा प्रतिलेखयति"।

॥२१३॥

तथा यत् करोति 'प्रमाणे' चासौ सङ्ख्यात्रयातिक्रमणतो युगपदनेकवस्त्रग्रहणतो वा धूनना च-कम्पना अनेकरूपधूनना । तथा यत् करोति 'प्रमाणे' प्रस्फोटनादिसङ्ख्यालक्षणे प्रमादं यच्च 'शङ्किते' प्रमादतः प्रमाणं प्रति शङ्कोत्पत्तौ गणना-अङ्गुलिरेखास्पर्शनादिना एकद्वित्रिसङ्ख्यात्मिका तामुपगच्छति गणनोपगं यथा भवत्येवं गम्यमानत्वात् प्रस्फोटनादि कुर्यात् सोऽपि दोषः । सर्वत्र पूर्वसूत्रादनुवर्त्य वर्जनक्रिया योजनीया । एवं चानन्तरोक्तदोषैरन्विता सदोषा प्रत्युपेक्षणा, वियुक्ता तु निर्दोषेत्यर्थादुक्तम् ॥ साम्प्रतं त्वेनामेव भङ्गकदर्शनद्वारेण साक्षात् सदोषां निर्दोषां च किञ्चिद्विशेषतो वक्तुमाह—"अणूणाइरित्त" त्ति ऊना चासावतिरिक्ता चोनातिरिक्ता न तथा अनूनातिरिक्ता प्रतिलेखा, इह च न्यूनताधिक्ये प्रस्फोटनाप्रमार्जनवेलां चाश्रित्य वाच्ये, यत उक्तम्—"खोडणपमज्जवेलासु चेव ऊणाहिया मुणेयव्वा" । "अविवच्चास" त्ति विविधो व्यत्यासः-विपर्यासो यस्यां सा विव्यत्यासा न तथा 'अविव्यत्यासा' पुरुषोपधिविपर्यासरहिता कर्त्तव्येति शेषः । अत्र च त्रिभिर्विशेषणपदैरष्टौ भङ्गाः सूचिता भवन्ति । स्थापना चेयम्—

| SSS | ISS | SIS | IIS | SSI | ISI | SII | III |
|---|---|---|---|---|---|---|---|

तेषु च कः शुद्धः ? को वाऽशुद्धः ? इत्याह—'प्रथमं पदम्' आद्यभङ्गकरूपं प्रशस्तम्, शेषाणि तु अप्रशस्तानि ॥ निर्दोषामप्येनां कुर्वता यत् परिहर्त्तव्यं तत् काकोपदेष्टुमाह—"पडिलेहे"त्यादि वाचयति अन्यं स्वयं 'प्रतीच्छति' वा आलापादिकं गृह्णाति य इति गम्यते ॥ स किम् ? इत्याह—"पुढवी"त्यादि स्पष्टम् । नवरं षट्कायविराधक एवम्—प्रमत्तो हि कुम्भकारशालादौ स्थितो जलभृतघटादिकमपि प्रलोठयेत्, ततस्तज्जलेन मृदग्निबीजकुन्थ्वादयः प्लाव्यन्ते, यत्र चाग्निस्तत्र चावश्यं वायुरिति षण्णामपि विराधना । तदनेन प्रतिलेखनाकाले हिंसाहेतुत्वाद् मिथः कथादीनां परिहार्यत्वमुक्तम्, इत्थं प्रथमपौरुषीकृत्यमुक्तम् । द्वितीयपौरुषीकृत्यम् "बीए झाणं झियायई" इत्यनेनोक्तमेव । उभयं चैतदवश्यं कर्त्तव्यम् । अतस्तृतीयपौरुषीकृत्यमप्येवम् उत कारण एवोत्पन्ने ? इत्याशङ्क्याह—"तइए" इत्यादि सुगमम् । नवरम्—औत्सर्गिकमेव तृतीयपौरुषीभक्त-

पानगवेषणम्, अन्यथा स्थविरकल्पिकानां यथाकालमेव भक्तादिगवेषणम्, तथा चाह—"सइकाले चरे भिक्खु"[1] त्ति ॥ तान्येव षट् कारणान्याह—"वेयण" त्ति सुब्लोपाद् वेदनाशब्दस्य चोपलक्षणत्वात् क्षुत्पिपासावेदनोपशमनाय, तथा "वेयावच्चे" त्ति वैयावृत्त्याय, तथा 'ईर्ये'ति ईर्यासमितिः सैव ह्यर्थस्तस्मै, 'चः' समुच्चये, तथा संयमार्थाय, तथा "पाणवत्तियाए" त्ति 'प्राणप्रत्ययं' जीवितनिमित्तम्, अविधिना ह्यात्मनोऽपि प्राणोपक्रमणे हिंसा स्यात्, षष्ठं पुनरिदं कारणम्—यदुत 'धर्मचिन्तायै' धर्मध्यानचिन्तायै भक्तपानं गवेषयेदिति सर्वत्राऽनुवर्त्तते ॥ आह—एतत्कारणोत्पत्तौ किमवश्यं भक्तपानगवेषणं कर्त्तव्यमुताऽन्यथा? इत्याह—"निग्गंथे"त्यादि सुगमम्, नवरम्—किमिति न कुर्यात्? इत्याह—"अणइक्कमणाइ" त्ति सूत्रत्वाद् 'अनतिक्रमणं' संयमयोगानामनुल्लङ्घनं, चशब्दो यस्मादर्थे, यस्मात् "से" तस्य निर्ग्रन्थादेर्भवति, अन्यथा तदतिक्रमणसम्भवात् ॥ षट् स्थानान्याह—'आतङ्के' ज्वरादौ 'उपसर्गे' दिव्यादौ सति, उभयत्र तन्निवारणार्थमिति गम्यते । तथा तितिक्षा–सहनं तया, ब्रह्मचर्यगुप्तिषु विषये, तथा "पाणिदयातवहेउं" ति 'प्राणिदयाहेतोः' वर्षादौ निपतत्यप्कायादिजीवरक्षायै, तपः–चतुर्थादि तद्धेतोश्च, तथा शरीरव्यवच्छेदनार्थं उचितकालेऽनशनं कुर्वन् भक्तपानगवेषणं न कुर्यादिति योज्यम् ॥ तद्गवेषणां च कुर्वन् केन विधिना कियत्क्षेत्रं पर्यटेत्? इत्याह—अपगतशेषमशेषं समस्तमित्यर्थः 'भाण्डकम्' उपकरणं गृहीत्वा चक्षुषा प्रत्युपेक्ष्येति गम्यते, ततः प्रतिलेखयेत्, उपलक्षणत्वाच्चाऽस्य तदाऽऽदाय 'परम्' उत्कृष्टम् अर्द्धयोजनमाश्रित्य ल्यब्लोपे पञ्चमी, परतो हि क्षेत्रातीतमशनादि स्यात्, विहरत्यस्मिन् प्रदेशे इति विहारस्तं 'विहरेत्' चरेत् मुनिः ॥ इत्थं विहृत्योपाश्रयं चागत्य गुर्वालोचनादिपुरस्सरं भोजनादि कृत्वा यत् कुर्यात् तदाह—"चउत्थी"-त्यादि 'निक्षिप्य' प्रत्युपेक्षणापूर्वकं बद्ध्वा ॥ पौरुष्याः प्रक्रमात् चतुर्थ्याश्चतुर्भागे शेष इति गम्यते ॥ "पासवणुच्चार-

---

1 सत्काले चरेद् भिक्षुः ।

भूमिं च" त्ति चशब्दात् कालभूमिं "जयं" ति 'यतम्' आरम्भादुपरतं यथा भवति, शेषं स्पष्टमिति सार्द्धसप्तदशसूत्रार्थः ॥ २१-२२-२३-२४-२५-२६-२७-२८-२९-३०-३१-३२-३३-३४-३५-३६-३७ ॥ इत्थं विशेषतो दिनकृत्यमभिधाय रात्रिकृत्यमाह—

काउस्सग्गं तओ कुज्जा, सव्वदुक्खविमुक्खणं ॥ ३८ ॥
देसियं च अईयारं, चिंतिज्ज अणुपुव्वसो । नाणम्मि दंसणे चेव, चरित्तम्मि तहेव य ॥ ३९ ॥
पारियकाउस्सग्गो, वंदित्ता य तओ गुरुं । देसियं तु अईयारं, आलोइज्ज जहक्कमं ॥ ४० ॥
पडिक्कमित्ताण निस्सल्लो, वंदित्ताण तओ गुरुं । काउस्सग्गं तओ कुज्जा, सव्वदुक्खविमुक्खणं ॥ ४१ ॥
सिद्धाणं संथवं किच्चा, वंदित्ताण तओ गुरुं । थुइमंगलं च काऊणं, कालं संपडिलेहए ॥ ४२ ॥
पढमं पोरिसिं सज्झायं, वीयं झाणं झियायइ । तइयाए निद्दमुक्खं तु, चउत्थी भुज्जो वि सज्झायं ॥ ४३ ॥
पोरिसीए चउत्थीए, कालं तु पडिलेहिया । सज्झायं तु तओ कुज्जा, अवोहंतो असंजए ॥ ४४ ॥
पोरिसीए चउब्भाए, वंदित्ताणं तओ गुरुं । पडिक्कमित्तु कालस्स, कालं तु पडिलेहए ॥ ४५ ॥
आगए कायवुस्सग्गे, सव्वदुक्खविमुक्खणे । काउस्सग्गं तओ कुज्जा, सव्वदुक्खविमुक्खणं ॥ ४६ ॥
राईयं च अईयारं, चिंतिज्ज अणुपुव्वसो । नाणम्मि दंसणम्मि य, चरित्तम्मि तवम्मि य ॥ ४७ ॥
पारियकाउस्सग्गो, वंदित्ताण तओ गुरुं । राईयं तु अईयारं, आलोइज्ज जहक्कमं ॥ ४८ ॥
पडिक्कमित्तु निस्सल्लो, वंदित्ताण तओ गुरुं । काउस्सग्गं तओ कुज्जा, सव्वदुक्खविमुक्खणं ॥ ४९ ॥
किं तवं पडिवज्जामि ?, एवं तत्थ विचिंतए । काउस्सग्गं तु पारित्ता, करिज्जा जिणसंथवं ॥ ५० ॥

**पारियकाउस्सग्गो, वंदित्ताण तओ गुरुं। तवं संपडिवज्जित्ता, करिज्ज सिद्धाण संथवं ॥५१॥**



व्याख्या—"तउ" त्ति 'ततः' प्रस्रवणादिभूमिप्रविलेखनानन्तरम् प्रतिक्रम्य 'निःशल्यः' मायादिशल्यरहितः, सूचकत्वान् सूत्रस्य वन्दनकपूर्वकं क्षमयित्वा च वन्दित्वा ततो गुरुं 'कायोत्सर्गं' चारित्रदर्शनज्ञानशुद्धिनिमित्तं व्युत्सर्गत्रयलक्षणं जातावेकवचनम्॥ "थुइमंगलं च काऊणं" ति 'स्तुतिमङ्गलं' स्तुतित्रयरूपं कृत्वा कालं सम्प्रत्युपेक्षते, कोऽर्थः? प्रतिजागर्ति उपलक्षणत्वाद् गृह्णाति च॥ "पढमम्मि"त्यादि गतमेव। नवरं पुनरभिधानमस्य पुनः पुनरुपदेष्टव्यमेव गुरुभिर्न प्रयासो मन्तव्य इति ख्यापनार्थम्॥ कथं पुनश्चतुर्थपौरुष्यां स्वाध्यायं कुर्यात्? इत्याह—पौरुष्यां चतुर्थ्यां 'कालं' वैरात्रिकं 'तुः' पूरणे, 'प्रत्युपेक्ष्य' प्रतिजागर्य प्राग्वद् गृहीत्वा च स्वाध्यायं ततः कुर्याद् 'अवोधयन्' अनुत्थापयन् असयतान्॥ 'पौरुष्याः' प्रक्रमात् चतुर्थ्याश्चतुर्भागेऽवशिष्यमाणे इति शेषः, वन्दित्वा ततो गुरुं प्रतिक्रम्य 'कालस्य' वैरात्रिकस्य 'कालं' प्राभातिकं तुशब्दो वक्ष्यमाणविशेषद्योतकः "पडिलेहए" त्ति 'प्रत्युपेक्षेत' प्राग्वद् गृह्णीयाच्च। इह च साक्षात् प्रत्युपेक्षणस्यैव पुनः पुनरभिधानं वहुतरविषयत्वात्। अत्र च सम्प्रदायः—"[1]ताहे गुरू उट्ठित्ता गुणंति जाव चरिमो जामो पत्तो, चरिमे जामे सव्वे उट्ठित्ता वेरत्तियं घेत्तुं सज्झायं करेंति ताहे गुरू सुवंति, पत्ते पाभाइए काले जो पाभाइयं कालं घेच्छिति सो कालस्स पडिक्कमिउं पाभाइयं कालं गेण्हइ, सेसा कालवेलाए कालस्स पडिक्कमंति, तओ आवस्सगं कुणंति"। मध्यमप्रक्रमापेक्षं च कालत्रयग्रहणमुक्तम्, अन्यथा ह्युत्सर्गत उत्कर्षेण चत्वारो जघन्येन त्रयः काला अपवादतस्तूत्कर्षेण द्वौ जघन्येनैकोऽप्यनुज्ञात एव, यत उक्तम्—"[2]कालचउक्कं उक्कोसएण, जहन्नओ तिन्नि हुंति वोधव्वा।

---

१ "तदा गुरव उत्थाय गुणयन्ति यावत् चरमो याम. प्राप्तः, चरमे यामे सर्वे उत्थाय वैरात्रिक गृहीत्वा स्वाध्यायं कुर्वन्ति तदा गुरवः स्वपन्ति, प्राप्ते प्राभातिके काले यः प्राभातिकं कालं ग्रहीष्यति स कालस्य प्रतिक्रम्य प्राभातिक कालं गृह्णाति, शेषाः कालवेलायां कालस्य प्रतिक्राम्यन्ति, तत आवश्यक कुर्वन्ति"। २ "कालचतुष्कं उत्कृष्टेन जघन्यतः त्रयो भवन्ति वोद्धव्याः। द्वितीयपदे द्विकं तु, मायामदविप्रमुक्तानाम्॥१॥"

बीयपयम्मि दुगं तु, मायासयविप्पमुक्काणं ॥१॥" अत्र च तुशब्दादेकस्याऽप्यनुज्ञा, तथा च चूर्णिकारः—"एवं अमायाविणो[1] तिन्नि दो वा अगिण्हंतस्स एक्को भवई" ॥ 'आगते' प्राप्ते 'कायव्युत्सर्गे' उपचारात् कायव्युत्सर्गसमये शेषं प्राग्वत्। यच्चेह कायोत्सर्गस्य सर्वदुःखविमोक्षणविशेषणं पुनः पुनरुच्यते तदस्याऽत्यन्तनिर्जराहेतुत्वख्यापनार्थम् । यदुक्तम्—"कोउस्सग्गे[2] जह सुट्ठियस्स भज्जंति अंगमंगाइं । इय भिंदंति मुणिवरा, अट्ठविहं कम्मसंघायं ॥१॥" तथेह कायोत्सर्गग्रहणेन चारित्र-दर्शनज्ञानशुद्ध्यर्थं कायोत्सर्गत्रयं गृह्यते, तत्र च तृतीये रात्रिकोऽतीचारश्चिन्त्यते, तथा चाह—रात्रौ भवं रात्रिकं, 'चः' पूरणे, अतीचारं चिन्तयेत् "अणुपुव्वसो" त्ति 'आनुपूर्व्या' क्रमेण ज्ञाने दर्शने चारित्रे तपसि चशब्दाद् वीर्ये च । शेषकायोत्सर्गेषु चतुर्विंशतिस्तवचिन्तनं प्रतीतमिति नोक्तम् ॥ ततश्च "पारिए" सूत्रत्रयं प्रतीतमेव । तृतीयसूत्रोत्तरार्द्धोक्तार्थानुवादतः सामाचारीविशेषमाह—"पारिए"त्यादि प्राग्वत् । नवरम्—यो यथाशक्ति चिन्तितं प्रतिपद्य कुर्यात् सिद्धानां 'संस्तवं' स्तुतित्रयरूपम्, तदनु च यत्र चैत्यानि सन्ति तत्र तद्वन्दनं विधेयम् । आह च—"वंदित्तु[3] निवेयंति कालं तो चेइयाइं जइ अत्थि" त्ति, इति सार्धत्रयोदशसूत्रार्थः ॥ ३८-३९-४०-४१-४२-४३-४४-४५-४६-४७-४८-४९-५०-५१॥

अध्ययनार्थमुपसंहरन्नाह—

**एसा सामायारी, समासेण वियाहिया । जं चरित्ता बहू जीवा, तिन्ना संसारसागरं ॥५२॥ ति बेमि॥**

व्याख्या—सुगममेव ॥

**इति श्रीनेमिचन्द्रसूरिकृतायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां सामाचार्याख्यं षड्विंशमध्ययनं समाप्तम् ॥**

१ "एवं अमायाविनस्त्रीन् द्वौ वा अगृह्णत एको भवति" । २ "कायोत्सर्गे यथा सुस्थितस्य भज्यन्तेऽङ्गोपाङ्गानि । एवं भिन्दन्ति मुनिवराः, अष्टविधं कर्मसङ्घातम् ॥ १ ॥" ३ "वन्दित्वा निवेदयन्ति कालं ततश्चैत्यानि यदि सन्ति" इति ।

# अथ खलुङ्कीयाख्यं सप्तविंशमध्ययनम् ।

सुशिष्य-स्वरूपम् ।

व्याख्यातं षड्विंशमध्ययनम् । सम्प्रति खलुङ्कीयाख्यं सप्तविंशमध्ययनमारभ्यते, अस्य चायमभिसम्बन्धः—'अनन्त-राध्ययने सामाचारी प्रतिपादिता, सा चाऽशठतयैव पालयितुं शक्या, साऽपि तद्विपक्षभूतशठतापरिहारेणैव भवतीत्यतो दृष्टान्ततः शठतास्वरूपं निरूप्यते' इत्यनेन सम्बन्धेनाऽऽयातस्याऽस्याऽऽदिसूत्रम्—

**थेरे गणहरे गग्गे, मुणी आसि विसारए । आइन्ने गणिभावम्मि, समाहिं पडिसंधए ॥ १ ॥**

व्याख्या—धर्मे अस्थिरान् स्थिरीकरोतीति स्थविरः गणं–गुणसमूहं धारयति–आत्मन्यवस्थापयतीति गणधरः 'गर्गः' गर्गनामा मुणति–प्रतिजानीते सर्वसावद्यविरतिमिति मुनिः 'आसीत्' अभूत् 'विशारदः' सर्वशास्त्रेषु कुशलः 'आकीर्णः' आचार्यगुणैर्व्याप्तः 'गणिभावे' आचार्यत्वे स्थित इति गम्यते, 'समाधिं' चित्तसमाधानरूपं 'प्रतिसन्धत्ते' कुशिष्यैस्त्रोटितमपि सङ्घट्टयति आत्मन इति गम्यत इति सूत्रार्थः ॥ १ ॥ स च समाधिं सन्दधद् यत् परिभावयति तदाऽऽह—

**वहणे वहमाणस्स, कंतारं अइवत्तए । जोए वहमाणस्स, संसारो अइवत्तए ॥ २ ॥**

व्याख्या—'वहने' शकटादौ "वहमाणस्स" त्ति अन्तर्भावितण्यर्थतया वाहयमानस्य अर्थात् पामरादेः उत्तरत्र खलुङ्क-ग्रहणाद् इह विनीतगवादिमिति गम्यते, कान्तारम् 'अतिवर्तते' सुखातिवर्त्तितया स्वयमेवाऽतिक्रामतीति दृष्टान्तः । उपनय-माह—'योगे' संयमव्यापारे 'वाहयमानस्य' प्रवर्त्तयतः आचार्यादेः सुशिष्यानिति गम्यते, संसारः 'अतिवर्त्तते' प्राग्वत्

स्वयमेवाऽतिक्रामति, तद्विनीततादर्शनाद् आत्मनो विशेषतः समाधिसम्भवादिति भावः ॥ २ ॥ इत्थमात्मनः समाधिप्रतिसन्धानाय विनीतस्वरूपं परिभाव्य स एव अविनीतस्वरूपं यथा परिभावयति तथाऽऽह—

खलुंके जो उ जोएइ, विहम्माणो किलिस्सई । असमाहिं च वेएइ, तुत्तओ य से भज्जई ॥ ३ ॥
एगं डसइ पुच्छम्मि, एगं विंधइऽभिक्खणं । एगो भंजइ समिलं, एगो उप्पहपट्ठिओ ॥ ४ ॥
एगो पडइ पासेणं, निवेसइ निविज्जई । उक्कुदइ उप्फिडई, सढे बालगवी वए ॥ ५ ॥
माई मुद्धेण पडई, कुद्धे गच्छइ पडिवहं । मयलक्खेण चिट्ठाई, वेगेण य पहावई ॥ ६ ॥
छिन्नाले छिंदई सिल्लिं, दुद्दंते भंजई जुगं । से वि य सुस्सुयाइत्ता, उज्जुहित्ता पलायई ॥ ७ ॥
खलुंका जारिसा जुज्जा, दुस्सीसा वि हु तारिसा । जोइया धम्मजाणम्मि, भज्जंति धिइदुब्बला ॥८॥
इड्ढीगारविए एगे, एगित्थ रसगारवे । सायागारविए एगे, ऐगे सुचिरकोहणे ॥ ९ ॥
भिक्खालसिए एगे, एगे ओमाणभीरुए थद्धे । एगं च अणुसासम्मी, हेऊहिं कारणेहि य ॥ १० ॥
सो वि अंतरभासिल्लो, दोसमेव पकुव्वई । आयरियाणं तं वयणं, पडिकूलेइ अभिक्खणं ॥ ११ ॥
न सा मम वियाणाइ, नवि सा मज्झ दाहिई । निग्गया होहिई मन्ने, साहू अन्नोऽत्थ वच्चउ ॥ १२ ॥
पेसिया पलिउंचंति, ते परियंति समंतओ । रायविट्ठिं व मन्नंता, करेंति भिउडिं मुहे ॥ १३ ॥
वाइया संगहिया चेव, भत्तपाणेण पोसिया । जायपक्खा जहा हंसा, पक्कमंति दिसोदिसिं ॥ १४ ॥

व्याख्या—'खलुङ्कान्' गलिवृषभान् यः 'तुः' विशेषणे योजयति वहने इति प्रक्रमः । स किम्? इत्याह—"विहम्माणो" त्ति सूत्रत्वात् 'विध्यमानः' ताडयन् क्लिश्यति, अत एवाऽसमाधिं वेदयते, 'तोत्रकश्च' प्राजनकः "से" इति



कुशिष्यस्वरूपम् ।

कुशिष्य-स्वरूपम् ।

'तम्य' खलुङ्कयोजयितुर्भज्यते ॥ ततश्चाऽतिरुष्टः सन् स यत् करोति तदाऽऽह—एकं 'दशति' दशनैर्भक्षयति पुच्छे, एकं 'विन्धति' आरया तुदति 'अभीक्ष्णं' पुनः पुनः । अथ ते किं कुर्वन्ति ? इत्याह—एको भनक्ति समिलाम्, एक उत्पथप्रस्थितो भवतीति शेषः ॥ एकः पतति पार्श्वेन, 'निविशति' उपविशति, "निविज्जइ" त्ति शेते, 'उत्कूर्दति' ऊर्द्ध्वं गच्छति, "उप्फिडइ" त्ति मण्डूकवत् प्लवते, शठो 'बालगवीम्' अवृद्धां गां "वए" त्ति 'व्रजेत्' तदभिमुखं धावेत्, एक इति सर्वत्र गम्यते ॥ मायी 'मूर्ध्ना' मस्तकेन पतति, क्रुद्धः सन् 'गच्छति प्रतिपथं' पश्चाद्वलति, 'मृतलक्ष्येण' मृतव्याजेन तिष्ठति, कथञ्चित् प्रवणीकृतोऽपि 'वेगेन च प्रधावति' यथा द्वितीयो गन्तुं न शक्नोति तथा गच्छतीत्यर्थः ॥ 'छिन्नालः' तथाविधदुष्टजातिः छिनत्ति 'सिर्लिं' रज्जुम्, दुर्दान्तो भनक्ति युगम्, सोऽपि च युगं भङ्क्त्वा "सुस्सुयाइत्त" त्ति सूत्कारान् कृत्वा "उज्जुहित्त" त्ति प्रेर्य स्वामिनं पलायते इति गम्यते ॥ इत्थं दृष्टान्तं परिभाव्य दार्ष्टान्तिकं यथा भावयत्यसौ तथाऽऽह—खलुङ्का यादृशा 'योज्याः' योजनीया दुःशिष्या अपि तादृशा एव 'हुः' एवकारार्थः अनुयोज्याः, किमिति ? यतो योजिता धर्मयाने भज्यन्ते धृतिदुर्बलाः ॥ धृतिदुर्बलत्वमेव भावयितुमाह—ऋद्ध्या गौरवं—ऋद्धिमन्तः श्राद्धा मे वश्याः सम्पद्यते च चिन्तितमुपकरणमित्यात्मन्यबहुमानरूपमृद्धिगौरवं तदस्यास्तीति ऋद्धिगौरविको न गुरुनियोगे प्रवर्त्तते एकः, एकः 'अत्रे'ति दुःशिष्याधिकारे रसेषु—मधुरादिषु गौरवं यस्य स रसगौरवो ग्लानाद्याहारदानतपसोर्न प्रवर्त्तते, सातगौरविक एकः सुखप्रतिबद्धोऽसौ अप्रतिबद्धविहारादौ न प्रवर्त्तते, एकः सुचिरक्रोधनो दीर्घरोषतयैव न कृत्येषु प्रवर्त्तते ॥ 'भिक्षालस्यिकः' भिक्षालस्यवान् एको न विहर्त्तुमिच्छति, एकोऽपमानभीरुः भिक्षां भ्रमन्नपि न यस्य तस्यैव गृहे प्रवेष्टुमिच्छति, 'स्तब्धः' अहङ्कारवान् न निजकुमहाग्रमयितुं शक्य एक इति प्रक्रमः । 'एकं च' दुःशिष्यं "अणुसासम्मि" त्ति अनुशास्मि अहं 'हेतुभिः कारणैश्च' उक्तस्वरूपैः ॥ 'सोऽपि' 'अनुशिष्यमाणः अन्तरभाषावान् 'दोषमेव' अपराधमेव प्रकरोति न त्वनुशिष्यमाणोऽपि

तद्विच्छेदमिति भावः, आचार्याणां सतामस्माकं 'तदि'ति अनुशिष्ट्यभिधायकं वचनं प्रतिकूलयति अभीक्ष्णम् ॥ यथा प्रतिकूलयति तथाऽऽह—न सा मां विजानाति, किमुक्तं भवति ? —कदाचिदस्माभिरमुकस्याः श्राविकायाः गृहात् पथ्यादि ग्लानाद्यर्थमानीयतामित्युक्तोऽपि वक्रोत्तरमाह—'न सा मां जानाति, 'न वे'ति नैव मह्यं दास्यति, यदि वा निर्गता गृहात् सा भविष्यतीति मन्ये' इति वक्ति, अथवा 'साधुरन्यो 'अत्र' प्रयोजने व्रजतु किमहमेवैकः साधुरस्मि ?' इत्यभिधत्ते ॥ अन्यच्च—प्रेषिताः क्वचित् प्रयोजने "पलिउंचंति" त्ति तत्प्रयोजनाऽनिष्पादने पृष्टाः सन्तः 'अपह्नुवते' क्व वयमुक्ताः ?, गता वा तत्र वयं न त्वसौ दृष्टेति 'ते' कुशिष्याः 'परियन्ति' पर्यटन्ति 'समन्ततः' सर्वासु दिक्षु न गुरुसन्निधावासते, मा कदाचिदेतेषां किञ्चित् कृत्यं भविष्यतीति । कथञ्चित् कर्तुं प्रवृत्तौ च राजवेष्टिमिव मन्यमाना कुर्वन्ति भ्रुकुटिं मुखे, तदन्यवपुर्विकारोपलक्षणमेतत् ॥ अपरञ्च—'वाचिताः' सूत्रं पाठिताः उपलक्षणत्वात् तदर्थं ग्राहिताः 'सङ्गृहीताः' परिग्रहे कृताः चशब्दाद् दीक्षिताः स्वयमिति गम्यते 'एवे'ति पूरणे, भक्तपानेन पोषिताः, तथाऽपि जातपक्षा यथा हंसाः तथैतेऽपि प्रक्रामन्ति "दिसोदिसिं" ति दिशि दिशि यदृच्छाविहारिणो भवन्तीत्यर्थः । प्रागेकप्रक्रमेऽपि यदिह बह्वभिधानं तदीदृशां भूयस्त्वख्यापनार्थमिति सूत्रद्वादशकार्थः ॥ ३-४-५-६-७-८-९-१०-११-१२-१३-१४ ॥ इत्थं कुशिष्यस्वरूपं परिभाव्य तैरेव प्रापितक्षमासमाधिर्यदसावचेष्टत तदाह—

**अह सारही विचिंतेइ, खलुंकेहिं समागओ । किं मज्झ दुट्ठसीसेहिं ?, अप्पा मे अवसीअई ॥ १५ ॥**
**जारिसा मम सीसा उ, तारिसा गलिगद्दहा । गलिगद्दहे चइत्ताणं, दढं पगिण्हई तवं ॥ १६ ॥**

**व्याख्या**—'अथे'ति पूर्ववर्णितचिन्ताऽनन्तरं सारथिरिव सारथिः धर्मयान इति प्रक्रमः, गर्गाचार्यः विचिन्तयति खलुङ्कैरिव 'खलुङ्कैः' कुशिष्यैः 'समागतः' संयुक्तः, 'किं ?' न किञ्चिद् मम प्रयोजनं सिध्यतीति गम्यते दुष्टशिष्यैः

केवलमात्मा मे अवसीदति, एतत्प्रेरणाव्यग्रतया स्वकृत्यहानेः तद्वरमेतत्त्यागत उद्यतविहारेण प्रक्रमात् प्रेरितैः, किं न क्रियते? इत्याह—यादृशा मम शिष्याः 'तुः' पूरणे, विहृतमिति भावः ॥ अथैतत्प्रेरणान्तराले स्वकृत्यमपि किं न क्रियते? इत्याह—यादृशा मम शिष्याः 'तुः' पूरणे, तादृशा गलिगर्दभा यदि परमिति गम्यते, गर्दभग्रहणम् अतिकुत्साख्यापकम्, ते हि स्वरूपतोऽपि अतिप्रेरणयैव प्रवर्त्तन्ते, ततस्तत्प्रेरणयैव कालोऽतिक्रामति न तु तदन्तरालसम्भव इति भावः। यतश्चैवम् अतो गलिगर्दभानिव 'गलिगर्दभान्' दुःशिष्यान् त्यक्त्वा दृढं परिगृह्णाति गर्गनामा 'तपः' अनशनादीति सूत्रद्वयार्थः ॥ १५-१६ ॥ एतदेवाह—

कुशिष्यत्यागः।

**मिउ मद्दवसंपन्ने, गंभीरे सुसमाहिए। विहरई महिं महप्पा, सीलभूएण अप्पण ॥१७॥ त्ति बेमि ॥**

व्याख्या—'मृदुः' बहिर्वृत्त्या विनयवान् 'मार्दवसम्पन्नः' अन्तःकरणतोऽपि तादृगेव, 'गम्भीरः' अलब्धमध्यः 'सुसमाहितः' सुष्ठु समाधिमान् विहरति महीं महात्मा 'शीलभूतेन' चारित्रप्राप्तेन आत्मना उपलक्षितः। यतश्चैवं खलुङ्कताऽऽत्मनो गुरूणां चेहैव दोषहेतुः अतस्तत्त्यागतोऽशठतैव सेवितव्येत्यध्ययनतात्पर्यार्थः ॥ १७ ॥ 'इतिः' परिसमाप्तौ ब्रवीमीति पूर्ववत् ॥

इति श्रीनेमिचन्द्रसूरिविरचितायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां खलुङ्कीयाख्यं सप्तविंशमध्ययनं समाप्तम् ॥

# अथ अष्टाविंशं मोक्षमार्गीयाख्यमध्ययनम् ।



व्याख्यातं सप्तविंशमध्ययनम्। अधुना मोक्षमार्गगत्याख्यमष्टाविंशमारभ्यते, अस्य चायमभिसम्बन्धः—'अनन्तराध्ययनेऽशठतोक्ता, तद्व्यवस्थितस्य मोक्षमार्गगतिप्राप्तिरिति तदभिधायकमिदमारभ्यते' इत्यनेन सम्बन्धेनाऽऽयातस्यास्यादिसूत्रम्—

**मोक्खमग्गगइं तच्चं, सुणेह जिणभासियं । चउकारणसंजुत्तं, नाणदंसणलक्खणं ॥ १ ॥**

मोक्षमार्गगतिस्वरूपम् ।

**व्याख्या**—मोक्षः–अष्टविधकर्मोच्छेदस्तस्य मार्गः–ज्ञानादिरूपो यो मोक्षमार्गस्तेन गतिः–सिद्धिगमनरूपा मोक्षमार्गगतिस्तां कथ्यमानामिति गम्यते, "तच्चं" ति 'तथ्याम्' अवितथां शृणुत जिनभाषिताम्, चत्वारि कारणानि–वक्ष्यमाणानि तैः संयुक्ता चतुःकारणसंयुक्ता ताम् । नन्वमूनि चत्वारि कारणानि कर्मक्षयलक्षणस्य मोक्षस्यैव, गतेस्तु तदनन्तरभावित्वात् स एवेति कथं चतुःकारणवतीत्वमस्याः ? उच्यते—व्यवहारतः कारणकारणस्यापि कारणत्वाभिधानात् । अत एवानन्तरकारणस्यैव कारणत्वम् इत्याशङ्कापोहार्थमस्य विशेषणस्योपन्यासः, अन्यथा हि मोक्षमार्गेण गतिरिति विग्रहे गतिं प्रति मार्गस्य कारणत्वं प्रतीयते एव, तद्रूपाणि चाऽमूनि चत्वारि कारणानि । तथा ज्ञानदर्शने लक्षणं–स्वरूपं यस्याः सा तथा तामिति सूत्रार्थः ॥ १ ॥ यदुक्तं 'मोक्षमार्गगतिं शृणुत' इति तत्र मोक्षमार्गगतिं तावदाह—

**नाणं च दंसणं चेव, चरित्तं च तवो तहा । एस मग्गो त्ति पन्नत्तो, जिणेहिं वरदंसिहिं ॥ २ ॥**

**व्याख्या**—सुगममेव ॥ २ ॥ सम्प्रत्येतस्यैवाऽनुवादद्वारेण फलमुपदर्शयितुमाह—

**नाणं च दंसणं चेव, चरित्तं च तवो तहा । एयं मग्गमणुप्पत्ता, जीवा गच्छंति सोग्गइं ॥ ३ ॥**

**व्याख्या**—प्रतीतमेव । नवरम्—"एयं" ति 'एनम्' अनन्तरमुक्तम् ॥ ३ ॥ ज्ञानादीन्येव यथाक्रममभिधातुमाह—

**तत्थ पंचविहं नाणं, सुयमाभिणियोहियं । ओहिनाणं तइयं, मणनाणं च केवलं ॥ ४ ॥**

व्याख्या—स्पष्टमेव । नवरम्—'तत्रे'ति तेषु ज्ञानादिषु मध्ये "मणनाणं" ति मनःपर्यायज्ञानं, 'चः' समुच्चये भिन्नक्रमः, ततः केवलं च । आह—नन्द्यादिषु मतिज्ञानानन्तरं श्रुतज्ञानमुक्तम्, तदिह किमर्थमादित एव श्रुतोपादानम् ? उच्यते, शेषज्ञानानामपि स्वरूपपरिज्ञानस्य प्रायस्तदधीनत्वेन प्राधान्यख्यापनार्थमिति सूत्रार्थः ॥ ४ ॥ साम्प्रतं ज्ञानशब्दस्य सम्बन्धिशब्दत्वाद् येषां तज्ज्ञानं तान्यभिधातुमाह—

**एयं पंचविहं नाणं, दव्वाण य गुणाण य । पज्जवाणं च सव्वेसिं, नाणं नाणीहिं देसियं ॥ ५ ॥**

व्याख्या—एतत्पञ्चविधं ज्ञानं द्रव्याणां च 'गुणानाञ्च' रूपादीनां 'पर्यवाणां च' द्रव्यगुणावस्थाविशेषरूपाणां सर्वेषां केवलापेक्षया च सर्वशब्दोपादानम्, शेषज्ञानानां प्रतिनियतपर्यायग्राहितत्वात् । 'ज्ञानम्' अवबोधकं 'ज्ञानिभिः' अर्थात् केवलिभिः 'दर्शितं' कथितमिति सूत्रार्थः ॥५॥ अनेन द्रव्यादिविषयत्वं ज्ञानस्योक्तम्, तत्र च द्रव्यादीनि किंलक्षणानि ? इत्याह—

**गुणाणमासओ दव्वं, एगदव्वस्सिया गुणा । लक्खणं पज्जवाणं तु, उभओ अस्सिया भवे ॥ ६ ॥**

व्याख्या—गुणानामाश्रयो द्रव्यम्, अनेन रूपादय एव वस्तु न तु तद्व्यतिरिक्तमन्यदिति सुगतमतमपास्तम् । तथा एकस्मिन् द्रव्ये–आधारभूते आश्रिताः–स्थिता एकद्रव्याश्रिता गुणाः, एतेन च ये द्रव्यमेवेच्छन्ति न तद्व्यतिरिक्ता रूपादयः तन्मतं निराकृतम् । लक्षणं पर्यवाणां 'तुः' विशेषणे 'उभयोः' द्वयोः–प्राकृतत्वाद् द्रव्यगुणयोराश्रिताः "भवे" त्ति भवेयुरिति सूत्रार्थः ॥ ६ ॥ 'गुणानामाश्रयो द्रव्यमि'त्युक्तम् । तत्र कतिभेदं द्रव्यम् ? इत्याशङ्क्याऽऽह—

**धम्मो अहम्मो आगासं, कालो पुग्गलजंतवो । एस लोगो त्ति पन्नत्तो, जिणेहिं वरदंसिहिं ॥ ७ ॥**

व्याख्या—'धर्मः' इति धर्मास्तिकायः 'अधर्मः' इत्यधर्मास्तिकायः 'आकाशम्' इत्याकाशास्तिकायः 'कालः' अद्धा-

समगात्मकः 'पुद्गलजन्तवः' इति पुद्गलास्तिकायः जीवास्तिकायः, एतानि द्रव्याणीति शेषः । प्रसङ्गतो लोकस्वरूपमप्याह—

'एषः' अनन्तरोक्तो द्रव्यसमूहः, शेषं स्पष्टमिति सूत्रार्थः ॥ ७ ॥ धर्मादीन्येव द्रव्याणि भेदत आह—

**धम्मो अहम्मो आगासं, दवं इक्किक्कमाहियं । अणंताणि य दव्वाणि, कालो पुग्गलजंतवो ॥ ८ ॥**

व्याख्या—स्पष्टमेव ॥ ८ ॥ एतान्येव लक्षणत आह—

मोक्षमार्गगतिस्वरूपम् ।

**गइलक्खणो उ धम्मो, अहम्मो ठाणलक्खणो । भायणं सव्वदव्वाणं, नहं ओगाहलक्खणं ॥ ९ ॥**
**वत्तणालक्खणो कालो, जीवो उवओगलक्खणो । नाणेणं दंसणेणं च, सुहेण य दुहेण य ॥ १० ॥**
**नाणं च दंसणं चेव, चरित्तं च तवो तहा । वीरियं उवओगो य, एयं जीवस्स लक्खणं ॥ ११ ॥**
**सदंधयार उज्जोओ, पहा छायाऽऽतवे इ वा । वन्न-रस-गंध-फासा, पुग्गलाणं तु लक्खणं ॥ १२ ॥**

व्याख्या—गतिलक्षणः 'तुः' पूरणे 'धर्मः' धर्मास्तिकायः 'अधर्मः' अधर्मास्तिकायः स्थानं—स्थितिस्तल्लक्षणः, 'भाजनम्' आधारः सर्वद्रव्याणां नभः अवगाहः—अवकाशस्तल्लक्षणम् ॥ तथा वर्त्तन्ते—भवन्ति भावास्तेन तेन रूपेण तान् प्रति प्रयोजकत्वं वर्त्तना तल्लक्षणः कालः, जीव उपयोगलक्षणः, अत एव ज्ञानेन दर्शनेन च सुखेन दुःखेन च प्रक्रमाद् लक्ष्यत इति गम्यते ॥ सम्प्रति विनेयानां दृढतरसंस्काराऽऽधानाय उक्तलक्षणमनूद्य लक्षणान्तरमाह—ज्ञानं च दर्शनं चैव चारित्रं च तपः तथा 'वीर्यं' सामर्थ्यम् 'उपयोगः' अवहितत्वम्, एतद् जीवस्य लक्षणम् ॥ शब्दोऽन्धकारः उभयत्र सुपो लुक्, 'उद्योतः' रत्नादिप्रकाशः' 'प्रभा' चन्द्रादिरुचिः, 'छाया' शैत्यगुणा, 'आतपः' रविबिम्बजनितोष्णप्रकाशः, इतिशब्द आदिशब्दार्थः, ततश्च सम्बन्धभेदादीनां परिग्रहः, 'वा' समुच्चये, तथा वर्ण-रस-गन्ध-स्पर्शाः पुद्गलानां 'तु' पुनरर्थे लक्षणम् । एभिरेव तेषां लक्ष्यमाणत्वादिति सूत्रचतुष्टयार्थः ॥ ९-१०-११-१२ ॥ द्रव्यलक्षणमुक्तम् । पर्यायलक्षणमाह—

**एगत्तं च पुहुत्तं च, संखा संठाणमेव य । संजोगा य विभागा य, पज्जवाणं तु लक्खणं ॥ १३ ॥**

व्याख्या—'एकत्वं' भिन्नेष्वपि परमाण्वादिषु यदेकोऽयं घटादिरिति प्रतीतिहेतुः, 'पृथक्त्वं च' अयमस्मात् पृथगिति प्रत्ययनिबन्धनम्, 'सङ्ख्या' यत एको द्वौ त्रय इत्यादिका प्रतीतिरुपजायते, 'संस्थानं' परिमण्डलोऽयमित्यादिबुद्धिनिबन्धनम्, 'एवे'ति पूरणे, 'चः' सर्वत्र समुच्चये, 'संयोगाः' अयमङ्गुल्याः संयोग इत्यादिव्यपदेशहेतवः, 'विभागाश्च' अयमितो विभक्त इति बुद्धिहेतवः, उभयत्र व्यक्त्यपेक्षं बहुवचनम्, उपलक्षणत्वाद् नवपुराणत्वादीनि च पर्यवाणां 'तुः' पूरणे लक्षणम् । गुणानां तु लक्षणाऽनभिधानं रूपादिरूपाणां तेषामतिप्रतीतत्वादिति सूत्रार्थः ॥१३॥ इत्थं स्वरूपतो विषयतश्च ज्ञानमभिधाय दर्शनमुपदर्शयितुमाह—

**जीवाऽजीवा य बंधो य, पुन्नपावाऽऽसवो तहा । संवरो निज्जरा मोक्खो, संतेए तहिया नव ॥१४॥**

**तहियाणं तु भावाणं, सब्भावे उवएसणं । भावेण सद्दहंतस्स, सम्मत्तं तं वियाहियं ॥ १५ ॥**

व्याख्या—'जीवाः' प्रतीताः, 'अजीवाः' धर्मास्तिकायादयः, 'बन्धश्च' जीवकर्मणोः संश्लेषः, 'पुण्यं' शुभप्रकृतिरूपं शातादि, 'पापम्' अशुभं मिथ्यात्वादि, 'आश्रवः' कर्मोपादानहेतुः हिंसादिः, पुण्यादीनां च कृतद्वन्द्वानां निर्देशः, 'तथे'ति समुच्चये, 'संवरः' गुप्त्यादिभिराश्रवनिरोधः, 'निर्जरा' विपाकात् तपसो वा कर्मपरिशाटः, 'मोक्षः' कृत्स्नकर्मक्षयः, सन्त्येते तथ्याः नव भावा इति शेषः ॥ यद्यमी नव तथ्यास्ततः किम्? इत्याह—तथ्यानां तु भावानां 'सद्भावे' सद्भावविषयम् अवितथसत्ताभिधायकमित्यर्थः उपदेशनं—गुर्वादिसम्बन्धिनमुपदेशं 'भावेन' अन्तःकरणेन 'श्रद्दधतः' तथेति प्रतिपद्यमानस्य 'सम्यक्त्वं' सम्यक्त्वमोहनीयकर्माणुक्षयक्षयोपशमोपशमसमुत्थात्मपरिणामरूपं 'तदि'ति भावरूपं श्रद्धानं 'व्याख्यातं' विशेषेणाख्यातं तीर्थकृदादिभिरिति गम्यते, इति सूत्रद्वयार्थः ॥१४–१५॥ इत्थं सम्यक्त्वस्वरूपमभिधाय तद्भेदानाह—

मोक्षमार्ग-
गति-
स्वरूपम् ।

मोक्षमार्गगतिस्वरूपम् ।

निसग्गुवएसरुई, आणारुई सुत्त-बीयरुइमेव। अभिगम-वित्थाररुई, किरिया-संखेव-धम्मरुई ॥१६॥

व्याख्या—"निसग्गुवएसरुइ" त्ति रुचिशब्दः प्रत्येकं योज्यते, ततो निसर्गः—स्वभावस्तेन रुचिः—तत्त्वाभिलापरूपाऽस्येति निसर्गरुचिः, उपदेशः—गुर्वादिना कथनं तेन रुचिर्यस्येत्युपदेशरुचिः, आज्ञा—सर्वज्ञवचनात्मिका तया रुचिर्यस्य सः, तथा "सुत्तवीयरुइमेव" त्ति इहापि रुचिशब्दस्य प्रत्येकमभिसम्बन्धात् सूत्रेण—आगमेन रुचिर्यस्य स सूत्ररुचिः, वीजमिव वीजं यदेकमप्यनेकार्थप्रबोधोत्पादकं वचस्तेन रुचिर्यस्य स वीजरुचिः, अनयोः समाहारद्वन्द्वः, 'एवे'ति समुच्चये, अभिगमः—विज्ञानं विस्तारः—व्यासः ताभ्यां प्रत्येकं रुचिशब्दो योज्यते ततोऽभिगमरुचिर्विस्ताररुचिश्चेति, तथा क्रिया—अनुष्ठानं सङ्क्षेपः—सङ्ग्रहः धर्मः—श्रुतधर्मादिः तेषु रुचिर्यस्येति प्रत्येकं रुचिशब्दसम्बन्धात् क्रियारुचिः सङ्क्षेपरुचिः धर्मरुचिश्च भवति, विज्ञेय इति शेषः। यच्चेह सम्यक्त्वस्य जीवाऽनन्यत्वेनाभिधानं तद्गुणगुणिनोः कथञ्चिदनन्यत्वख्यापनार्थमिति सूत्रसङ्क्षेपार्थः ॥ १६ ॥ व्यासार्थं तु स्वत एवाह सूत्रकृत्—

भूयत्थेणाहिगया, जीवाऽजीवा य पुन्न पावं च। सहसम्मइयाऽऽसव-संवरे य रोएइ उ निसग्गो १७
जो जिणदिट्ठे भावे, चउविहे सद्दहाइ सयमेव। एमेय नऽन्नह त्ति य, स निसग्गरुइ त्ति नायव्वो ॥१८॥
एए चेव उ भावे, उवइट्ठे जो परेण सद्दहइ। छउमत्थेण जिणेण व, उवएसरुइ त्ति नायव्वो ॥१९॥
रागो दोसो मोहो, अन्नाणं जस्स अवगयं होइ। आणाए रोयंतो, सो खलु आणारुई नाम ॥२०॥
जो सुत्तमहिज्जंतो, सुएण ओगाहई उ सम्मत्तं। अंगेण बाहिरेण व, सो सुत्तरुई त्ति नायव्वो ॥२१॥
एगेण अणेगाइं, पयाइं जो पसरई उ सम्मत्तं। उदए व्व तेल्लबिंदू, सो बीयरुइ त्ति नायव्वो ॥२२॥
सो होइ अभिगमरुई, सुअनाणं जेण अत्थओ दिट्ठं। एक्कारसमंगाइं, पइन्नगं दिट्ठिवाओ य ॥२३॥

॥३२०॥

दव्वाण सव्वभावा, सव्वपमाणेहिं जस्स उवलद्धा। सव्वाहिं नयविहीहि य, वित्थाररुइ त्ति नायव्वो ॥२४॥
दंसण-नाण-चरित्ते, तव-विणए सच्च-समिइ-गुत्तीसु। जो किरियाभावरुई, सो खलु किरियारुई नाम॥
अणभिग्गहियकुदिट्ठी, संखेवरुइ त्ति होइ नायव्वो। अविसारओ पवयणे, अणभिग्गहिओ य सेसेसु॥
जो अत्थिकायधम्मं, सुयधम्मं खलु चरित्तधम्मं च। सद्दहइ जिणाभिहियं, सो धम्मरुइ त्ति नायव्वो॥

व्याख्या—भावप्रधानत्वात् निर्देशस्य 'भूतार्थत्वेन' सद्भूता अमी अर्था इत्येवंरूपेण 'अधिगताः' परिच्छिन्ना येनेति गम्यते, जीवा अजीवाश्च पुण्यं पापं च, कथमधिगताः ? इत्याह—"सहसम्मइय" त्ति सोपस्कारत्वात् सूत्रत्वाच्च सहाऽऽत्मना या मङ्गता मतिः सा सहसम्मतिः, कोऽर्थः ? परोपदेशनिरपेक्षतया जातिस्मरणप्रतिभादिरूपया, "आसवसंवरे य" त्ति आश्रवसंवरौ, चशब्दोऽनुक्तबन्धादिसमुच्चये, ततो बन्धादयश्च, तथा 'रोचते तु' रोचते एव योऽन्यस्याऽश्रुतत्वादनन्त-रोपायेनाऽधिगतान् जीवादीनेव 'निसर्गः' इति निसर्गरुचिर्ज्ञेयः स इति शेषः ॥ अमुमेवार्थं पुनः स्पष्टतरमेवाह—यो जिनदृष्टान् भावान् 'चतुर्विधान्' द्रव्यक्षेत्रकालभावभेदतो नामादिभेदतो वा श्रद्दधाति 'स्वयमेव' परोपदेशं विना, "एमेय" त्ति एवमेतत् यथा जिनैर्दृष्टं जीवादि नान्यथेति, 'चः' समुच्चये, स निसर्गरुचिरिति ज्ञातव्यः ॥ उपदेश-रुचिमाह—एतांश्चैव 'तुः' पूरणे भावान् उपदिष्टान् यः परेण श्रद्दधाति छद्मस्थेन जिनेन वा स उपदेशरुचिरिति ज्ञातव्यः ॥ आज्ञारुचिमाह—रागो द्वेषः 'मोहः' शेषमोहनीयम् अज्ञानं च, चस्य गम्यमानत्वाद् यस्याऽपगतं भवति, सर्वथा चाऽस्यैतदपगमाऽसम्भवाद् देशत इति गम्यते, एतदपगमाच्च "आणाए" त्ति आज्ञयैवाऽऽचार्यादिसम्बन्धिन्या 'रोच-मानः' कश्चित्कुमहाऽभावात् जीवादि तथेति प्रतिपद्यमानो माषतुषादिवत् 'खलु' निश्चितम् आज्ञारुचिर्नामेत्यभ्युप-गन्तव्यः ॥ सूत्ररुचिमाह—यः सूत्रम् 'अधीयानः' पठन् 'श्रुतेन' अधीयमानेन 'अवगाहते' प्राप्नोति 'तुः' पूरणे

मोक्षमार्ग-गति-स्वरूपम्।

सम्यक्त्वम् 'अङ्गेन' आचारादिना 'बाह्येन वा' अनङ्गप्रविष्टेन स सूत्ररुचिरिति ज्ञातव्यः ॥ बीजरुचिमाह—'एकेन' पदेन जीवादिना "अणेगाइं पयाइं" ति सुब्व्यत्ययाद् अनेकेषु पदेष्वजीवादिषु यः प्रसरति 'तु:' एवकारार्थः प्रक्रमात् पदेन जीवादिना "अणेगाइं पयाइं" ति सुब्व्यत्ययाद् अनेकेषु पदेष्वजीवादिषु यः प्रसरति 'तु:' एवकारार्थः प्रसरत्येव सम्यक्त्वमित्यनेन रुचिरत्रोपलक्षिता, तदभेदोपचारादात्माऽपि सम्यक्त्वमुच्यते, उपचारनिमित्तं च रुचिरूपेणैव आत्मनः प्रसरणम्, 'उदक इव तैलबिन्दुः' यथोदकैकदेशगतोऽपि तैलबिन्दुः समस्तमुदकमाक्रामति तथैकदेशोत्पन्नरुचिरप्यात्मा तथाविधक्षयोपशमाद् अशेषतत्त्वेषु रुचिमान् भवति स एवंविधो बीजरुचिर्ज्ञातव्यः ॥ अभिगमरुचिमाह—स भवति अभिगमरुचिः श्रुतज्ञानं येनार्थतः 'दृष्टम्' उपलब्धम् एकादशाङ्गानि प्रकीर्णकमिति जातावेकवचनम्, ततः प्रकीर्णकान्युत्तराध्ययनादीनि 'दृष्टिवादः' द्वादशं अङ्गम् चशब्दादुपाङ्गानि ॥ विस्ताररुचिमाह—'द्रव्याणां' धर्मास्तिकायादीनां 'सर्वभावाः' एकत्व-पृथक्त्वाद्यशेषपर्यायाः 'सर्वप्रमाणैः' प्रत्यक्षादिभिर्यस्य 'उपलब्धाः' यस्य यत्र व्यापारस्तेनैव प्रमाणेन ते प्रतीताः । "सव्वाहिं" ति सर्वैः 'नयविधिभिः' नैगमादिभेदैः असुं भावं अयम् असुं चायं नयभेद इच्छतीति, 'च:' समुच्चये, स विस्ताररुचिरिति ज्ञातव्यः ॥ क्रियारुचिमाह—दर्शनं च ज्ञानं च चारित्रं च दर्शनज्ञानचारित्रं तस्मिन् तपोविनये सत्यसमितिगुप्तिषु यः क्रियाभावरुचिः, किमुक्तं भवति ?—दर्शनाद्याऽऽचारानुष्ठाने यस्य भावतो रुचिरस्ति स खलु क्रियारुचिः 'नामे'त्यभ्युपगमः ॥ सङ्क्षेपरुचिमाह—अनभिगृहीतकुदृष्टिः सङ्क्षेपरुचिरिति भवति ज्ञातव्यः, 'अविशारदः' अकुशलः प्रवचने "अणभिग्गहिओ य" त्ति अविद्यमानम् अभी ति—आभिमुख्येन गृहीतं—ग्रहणं ज्ञानमस्येत्यनभिगृहीतः 'च:' समुच्चये, 'शेषेषु' कपिलादिप्रणीतप्रवचनेषु, अयमाशयः—य उक्तविशेषणः सङ्क्षेपेणैव चिलातीपुत्रवत् पदत्रयेण तत्त्वरुचिमवाप्नोति स सङ्क्षेपरुचिः ॥ धर्मरुचिमाह—योऽस्तिकायानां धर्मः—गत्युपष्टम्भादिः अस्तिकायधर्मस्तं श्रुतधर्मं 'खलुः' वाक्यालङ्कारे चारित्रधर्मं वा, चस्य वार्थत्वात्, श्रद्धाति जिनाभिहितं स धर्मरुचिर्ज्ञा-

तव्यः । शिष्यमतिव्युत्पादनार्थं चेत्थमुपाधिभेदेन सम्यक्त्वभेदाभिधानम्, अन्यथा हि निसर्गोपदेशयोरधिगमादौ वा कचित् केषाञ्चिदन्तर्भाव इति भावनीयमिति सूत्रैकादशकार्थः ॥ १७-१८-१९-२०-२१-२२-२३-२४-२५-२६-२७ ॥ कैः पुनर्लिङ्गैरिदं सम्यक्त्वमुत्पन्नमस्तीति श्रद्धेयम् ? इत्याह—

**परमत्थसंथवो वा, सुदिट्ठपरमत्थसेवणा वा वि । वावन्नकुदंसणवज्जणा य सम्मत्तसद्दहणा ॥ २८ ॥**

व्याख्या—परमाश्च ते–तात्त्विका अर्थाश्च–जीवादयः परमार्थास्तेषु संस्तवः–परिचयः परमार्थसंस्तवः, वाशब्दः समुच्चये, तथा सुष्ठु दृष्टाः–उपलब्धाः परमार्था यैस्ते सुदृष्टपरमार्थाः–आचार्यादयस्तत्सेवनं, 'वे' त्यनुक्तसमुच्चये, ततो यथाशक्ति तद्वैयावृत्त्यप्रवृत्तिश्च, 'अपिः' समुच्चये, "वावन्नकुदंसण" त्ति दर्शनशब्दः प्रत्येकं सम्बध्यते, ततो व्यापन्नं–विनष्टं दर्शनं येषां ते व्यापन्नदर्शना निह्नवादयः तथा कुत्सितं दर्शनं येषां ते कुदर्शनाः–शाक्यादयस्तेषां वर्जनं व्यापन्नकुदर्शनवर्जनम्, सर्वत्र सूत्रत्वात् स्त्रीलिङ्गनिर्देशः, 'चः' समुच्चये, सम्यक्त्वं श्रद्धीयतेऽनेनेति सम्यक्त्वश्रद्धानमिति सूत्रार्थः ॥ २८ ॥ इत्थं सम्यक्त्वस्य लिङ्गान्यभिधाय तस्यैव माहात्म्यमुपदर्शयन्नाह—

**नत्थि चरित्तं सम्मत्तविहूणं दंसणे उ भइयव्वं । सम्मत्त-चरित्ताइं, जुगवं पुव्वं व सम्मत्तं ॥ २९ ॥**

**नादंसणिस्स नाणं, नाणेण विणा न हुंति चरणगुणा ।**
**अगुणिस्स नत्थि मोक्खो, नत्थि अमोक्खस्स निव्वाणं ॥ ३० ॥**

व्याख्या—नास्ति चारित्रं सम्यक्त्वविहीनं 'दर्शने तु' सम्यक्त्वे पुनः सति 'भक्तव्यं' भवति वा न वा प्रक्रमात् चारित्रम्, किमित्येवम् ? अत आह—सम्यक्त्वचारित्रे युगपत् समुत्पद्येते इति शेषः, 'पूर्वं वा' चारित्रोत्पत्तेः सम्यक्त्वमुत्पद्यते, ततो यदा युगपदुत्पादस्तदा तयोः सहभावः, यदा तु पूर्वं सम्यक्त्वं तदा तस्मिन् चारित्रं भाज्यम् ॥ अन्यच्च—

नाऽदर्शनिनो ज्ञानं, ज्ञानेन विना न भवन्ति चरणान्तर्गता गुणाश्चरणगुणाः, 'अगुणिनः' अनन्तरोक्तगुणरहितस्य नास्ति मोक्षः कर्मण इति गम्यते, नास्त्यमुक्तस्य निर्वाणम् । तदत्र पूर्वसूत्रेण मुक्त्यनन्तरहेतोरपि चरणस्य सम्यक्त्वभाव एव भवनं तन्माहात्म्यमुक्तम्, अनन्तरसूत्रेण तूत्तरोत्तरव्यतिरेकदर्शनेनाऽशेषगुणानामिति सूत्रद्वयार्थः ॥ २९-३० ॥ अस्य चाष्टविधाचारसहितस्यैवोत्तरोत्तरगुणप्राप्तिहेतुतेति तमादर्शयितुमाह—

**निस्संकिय निक्कंखिय, निव्वितिगिच्छा अमूढदिट्ठी य। उववूह-थिरीकरणे, वच्छल्ल-पभावणे अट्ठ ३१**

**व्याख्या**—शङ्कनं शङ्कितं–देशसर्वशङ्कात्मकं तदभावो निःशङ्कितम्, तथा काङ्क्षणं काङ्क्षितम्–अन्याऽन्यदर्शनग्रहात्मकं तदभावो निःकाङ्क्षितम्, विचिकित्सा–फलं प्रति सन्देहः विदः–विज्ञाः ते च तत्त्वतः साधव एव तज्जुगुप्सा वा तदभावो निर्विचिकित्सं निर्विजुगुप्सं वा, आर्षत्वाच्च सूत्रे एवं पाठः । अमूढा–ऋद्धिमत्कुतीर्थिकदर्शनेऽप्यविगीतमस्मद्दर्शनमिति मोहरहिता सा चासौ दृष्टिश्च–बुद्धिरूपा अमूढदृष्टिः, स चायं चतुर्विधोऽपि आन्तर आचारः । बाह्यं तु आह— उपबृंहा–दर्शनादिगुणवतां प्रशंसया तत्तद्गुणपरिवर्द्धनं सा च स्थिरीकरणञ्च–अभ्युपगतधर्मानुष्ठानं प्रति सीदतां स्थैर्योऽऽपादनमुपबृंहास्थिरीकरणे, वात्सल्यं–साधर्मिकजनस्योचितप्रतिपत्तिकरणं तच्च प्रभावना च–स्वतीर्थोन्नतिहेतुचेष्टासु प्रवर्त्तनं वात्सल्यप्रभावने, अष्टैते दर्शनाचारा भवन्तीति शेष इति सूत्रार्थः ॥ ३१ ॥ इत्थं ज्ञानदर्शनाख्यं मुक्तिमार्गमभिधाय तमेव चारित्ररूपमाह—

**सामाइय त्थ पढमं, छेओवट्ठावणं भवे वीयं। परिहारविसुद्धीयं, सुहुमं तह संपरायं च ॥ ३२ ॥**
**अकसायं अहक्खायं, छउमत्थस्स जिणस्स वा। एयं चयरित्तकरं, चारित्तं होइ आहियं ॥ ३३ ॥**

व्याख्या—समः—रागद्वेषरहितः स चेह प्रस्तावात् चित्तपरिणामस्तस्मिन् आयः—गमनं समायः स एव 'सामायिकं' सर्वसावद्यपरिहारः, 'त्थ' इति पूरणे, 'प्रथमम्' आद्यम्। एतच्च द्विधा—इत्वरं यावत्कथिकं च। तत्र इत्वरं भरतैरावतयोः, प्रथमचरमतीर्थंकरतीर्थयोरुपस्थापनायां छेदोपस्थापनीयभावेन तत्र तद्व्यपदेशाभावात्। यावत्कथिकं च तयोरेव, मध्यमतीर्थंकरतीर्थेषु महाविदेहेषु चोपस्थापनाया अभावेन तद्व्यपदेशस्य यावज्जीवमपि सम्भवात्। तथा छेदः—सातिचारस्य यतेर्निरतिचारस्य वा शिक्षकस्य तीर्थान्तरसम्बन्धिनो वा तीर्थान्तरं प्रतिपद्यमानस्य पूर्वपर्यायव्यवच्छेदरूपः तद्युक्तोपस्थापना—महाव्रतारोपणरूपा यस्मिन् तत् छेदोपस्थापनं भवेद् द्वितीयम्। तथा परिहरणं परिहारः—विशिष्टतपोरूपस्तेन विशुद्धिरस्मिन्निति परिहारविशुद्धिकम्। तच्चैतद्गाथाभ्योऽवसेयम्—"[1]परिहारियाण उ तवो, जहन्न मज्झो तहेव उक्कोसो। सीउण्हवासकाले, भणिओ धीरेहिं पत्तेयं ॥ १ ॥ तत्थ जहन्नो गिम्हे, चउत्थ छट्ठं तु होइ मज्झिमओ। अट्ठममिह्उक्कोसो, एत्तो सिसिरे पवक्खामि ॥ २ ॥ सिसिरे उ जहन्नाई, छट्ठाई दसमचरिमगो होइ। वासासु अट्ठमाई, बारसपज्जंतगो नेओ ॥ ३ ॥ पारणगे आयामं, पंचसु पगहो दोसऽभिग्गहो भिक्खे। कप्पट्ठिया य पइदिण, करंति एमेव आयामं ॥ ४ ॥ एवं छम्मासतवं, चरिउं परिहारिया अणुचरंति। अणुचरए परिहारगपयट्ठिए जाव छम्मासा ॥ ५ ॥ कप्पट्ठिओ वि एवं, छम्मासतवं करेइ सेसा उ। अणुपरिहारगभावं, चरंति कप्पट्ठियत्तं च ॥६॥ एवेसो अट्ठारसमासपमाणो उ वन्निओ कप्पो।

मोक्षमार्गगति-स्वरूपम्।

---

[1] "परिहारिकाणां तु तपः, जघन्यं मध्यमं तथैवोत्कृष्टम्। शीतोष्णवर्षाकालेषु, भणितं धीरैः प्रत्येकम् ॥ १ ॥ तत्र जघन्यं ग्रीष्मे, चतुर्थं षष्ठं तु भवति मध्यमकः। अष्टममिहोत्कृष्टं, इतः शिशिरे प्रवक्ष्यामि ॥ २ ॥ शिशिरे तु जघन्यादि, षष्ठादि दशमचरमकं भवति। वर्षास्वष्टमादि, द्वादशपर्यन्तकं ज्ञेयम् ॥ ३ ॥ पारणके आचामाम्लं, पञ्चानां प्रग्रहो द्वयोरभिग्रहो भिक्षायाम्। कल्पस्थिताश्च प्रतिदिनं, कुर्वन्त्येवमेवाचामाम्लम् ॥ ४ ॥ एवं षण्मासतप., चरित्वा परिहारिका अनुचरन्ति। अनुचरकाः परिहारकपदस्थिताः यावत् षण्मासाः ॥५॥ कल्पस्थितोऽपि एवं, षण्मासतपः करोति शेषास्तु। अनुपरिहारकभावं, चरन्ति कल्पस्थितत्वं च ॥ ६ ॥ एवमेषोऽष्टादशमासप्रमाणस्तु वर्णितः कल्पः।

# अथ एकोनत्रिंशं सम्यक्त्वपराक्रमाख्यमध्ययनम् ।

अनन्तराऽध्ययने मोक्षमार्गगतिरुक्ता, सा च वीतरागत्वपूर्विकेति यथा तद्भवति तथाऽधुनाऽभिधीयत इति सम्बद्धस्यैकोनत्रिंशाध्ययनस्य सम्यक्त्वपराक्रमाख्यस्याऽऽदिसूत्रम्—

**सुयं मे आउसं! तेणं भगवया एवमक्खायं—इह खलु सम्मत्तपरक्कमे नामऽज्झयणे समणेणं भगवया महावीरेणं कासवेणं पवेइए, जं सम्मं सद्दहइत्ता पत्तियाइत्ता रोयइत्ता फासइत्ता पालइत्ता तीरइत्ता किट्टइत्ता सोहइत्ता आराहइत्ता आणाए अणुपालइत्ता बहवे जीवा सिज्झंति बुज्झंति मुच्चंति परिनिव्वायंति सव्वदुक्खाणमंतं करेंति ॥१॥**

**व्याख्या**—श्रुतं 'मे' मया 'आयुष्मन्!' इति शिष्यामन्त्रणम्, एतच्च सुधर्मस्वामी जम्बूस्वामिनमाह । 'तेने'ति यः सर्वजगत्प्रतीतः, 'भगवता' प्रक्रमात् महावीरेण 'एवमि'ति वक्ष्यमाणप्रकारेणाऽऽख्यातम् । तमेव प्रकारमाह—'इह' अस्मिन् प्रवचने 'खलु' निश्चितं सम्यक्त्वे सति पराक्रमः—उत्तरोत्तरगुणप्रतिपत्त्या कर्मारिजयसामर्थ्यलक्षणोऽर्थात् जीवस्य वर्ण्यतेऽस्मिन्निति सम्यक्त्वपराक्रमं नामाध्ययनमस्तीति गम्यते, तच्च केन प्रणीतम्? इत्याह—श्रमणेन भगवता महावीरेण काश्यपेन प्रवेदितम्, स्वतः प्रविदितमेव भगवता ममेदमाख्यातं इत्युक्तं भवति। अस्यैव फलमाह—'यदि'ति प्रस्तुताऽध्ययनं सम्यक् 'श्रद्धाय' शब्दार्थोभयरूपं सामान्येन प्रतिपद्य 'प्रतीत्य' विशेषत इत्थमेवेति निश्चित्य 'रोचयित्वा' तदध्ययनादिविषयमभिलाषमात्मन उत्पाद्य, 'स्पृष्ट्वा' योगत्रिकेण, तत्र मनसा सूत्रार्थयोश्चिन्तनेन, वचसा वाचनादिना, कायेन भङ्गकरचनादिना, 'पालयित्वा' परावर्त्तनादिनाऽभिरक्ष्य 'तीरयित्वा' अध्ययनादिना परिसमाप्य 'कीर्त्तयित्वा' गुरोर्विनय-



सम्यक्त्वपराक्रमाध्ययनस्य फलम् ।

पूर्वक्रमिदमित्थं मयाऽधीतमिति निवेद्य 'शोधयित्वा' गुरुमुखकथनेन शुद्धिं विधाय 'आराध्य' उत्सूत्रप्ररूपणादिपरिहारेण योगयित्वा, एतत् सर्वं स्वमनीषिकातोऽपि स्याद् अत आह—'आज्ञये'ति जिनाज्ञया 'अनुपाल्य' सततमासेव्य बहवो जीवाः 'सिध्यन्ति' इहैवागमसिद्धत्वादिना, 'बुध्यन्ते' घातिकर्मक्षयेण, 'विमुच्यन्ते' भवोपग्राहिकर्मचतुष्टयेन, ततश्च 'परिनिर्वान्ति' कर्मदावानलोपशमेन, अत एव 'सर्वदुःखानां' शारीरमानसानाम् 'अन्तं' पर्यन्तं कुर्वन्ति मुक्तिपदाऽवाप्त्येति सूत्रार्थः ॥ १ ॥ सम्प्रति विनेयाऽनुग्रहार्थं सम्बन्धाभिधानपुरस्सरं प्रस्तुताऽध्ययनार्थमाह—

त्रिसप्तति-पदाभिधानम् ।

**तस्स णं अयमट्ठे एवमाहिज्जंति, तंजहा—संवेगे निव्वेदे धम्मसद्धा गुरुसाहम्मियसुस्सूसणया आलोयणया निंदणया गरहणया सामाइए चउवीसत्थए वंदणे पडिक्कमणे काउस्सग्गे पच्चक्खाणे थयथुइमंगले कालपडिलेहणया पायच्छित्तकरणे खमावणया सज्झाए वायणया पडिपुच्छणया परियट्टणया अणुप्पेहा धम्मकहा सुयस्स आराहणया एगग्गमणसन्निवेसणया संजमे तवे वोदाणे सुहसाते अप्पडिबद्धया विवित्तसयणासणसेवणया विणिवट्टणया संभोगपच्चक्खाणे उवहिपच्चक्खाणे आहारपच्चक्खाणे कसायपच्चक्खाणे जोगपच्चक्खाणे सरीरपच्चक्खाणे सहायपच्चक्खाणे भत्तपच्चक्खाणे सब्भावपच्चक्खाणे पडिरूवणया वेयावच्चे सव्वगुणसंपुण्णया वीयरागता खंती मुत्ती मद्दवे अज्जवे भावसच्चे करणसच्चे जोगसच्चे मणगुत्तया वइगुत्तया कायगुत्तया मणसमाहारणया वइसमाहारणया कायसमाहारणया नाणसंपन्नया दंसणसंपन्नया चरित्तसंपन्नया सोतिंदियनिग्गहे चक्खिंदियनि-**

संखेवओ विसेसो, विसेससुत्ताउ नायव्वो ॥ ७ ॥ कप्पसमत्तीए तयं, जिणकप्पं वा उवेंति गच्छं वा । पडिवज्जमाणगा पुण, जिणस्सगासे पवज्जंति ॥ ८ ॥ तित्थयरसमीवासेवगस्स पासे व णो य अन्नस्स । एएसिं जं चरणं, परिहारविसुद्धिगं तं तु ॥ ९ ॥'' ''सुहुमं तह संपरायं च'' त्ति 'तथा' इत्यानन्तर्ये, छन्दोभङ्गभयाच्चैवमुपन्यस्तः, सूक्ष्मः—किट्टीकरणतः सम्परायः—लोभाख्यः कषायो यस्मिन् तत् सूक्ष्मसम्परायम् । उक्तञ्च—''लोभाणु वेयंतो, जो खलु उवसामगो व खवगो वा । सो सुहुमसंपराओ, अहखाया ऊणओ किंचि ॥ १ ॥'' तथा 'अकषायं' क्षपितोपशमितकषायाऽवस्थाभावि 'यथाख्यातम्' अर्हत्कथितस्वरूपानतिक्रमवत्, छद्मस्थस्य जिनस्य वा यथैतत् पञ्चविधमपि चारित्रशब्दवाच्यं तथाऽन्वर्थत आह—'एतद्' सामायिकादि चयस्य—राशेः प्रस्तावात् कर्मणां रिक्तं—विरेकोऽभाव इत्यर्थः तत्करोतीति चयरिक्तकरं चारित्रमिति नैरुक्तो विधिर्भवति आख्यातमर्हदादिभिरिति गम्यत इति सूत्रद्वयार्थः ॥ ३२–३३ ॥ सम्प्रति तपोरूपं चतुर्थकारणमाह—

**तवो य दुविहो वुत्तो, बाहिरब्भिंतरो तहा । बाहिरो छव्विहो वुत्तो, एवमब्भिंतरो तवो ॥ ३४ ॥**

व्याख्या—स्पष्टम् ॥ ३४ ॥ परः प्राह—आहैषां मुक्तिमार्गत्वे कस्य कतरो व्यापारः ? उच्यते—

**नाणेण जाणई भावे, दंसणेण य सद्दहे । चरित्तेण न गेण्हाइ, तवेणं परिसुज्झई ॥ ३५ ॥**

---

सङ्क्षेपतो विशेषो, विशेषसूत्राद् ज्ञातव्यः ॥ ७ ॥ कल्पसमाप्तौ तकं, जिनकल्पं वा उपेयन्ति गच्छं वा । प्रतिपद्यमानकाः पुनर्जिनसकाशे प्रपद्यन्ते ॥ ८ ॥ तीर्थकरसमीपासेवकस्य पार्श्वे वा नैवान्यस्य । एतेषां यच्चरणं, परिहारविशुद्धिकं तत्तु ॥ ९ ॥''

१ ''लोभाणु वेदयन् यः खलूपशमको वा क्षपको वा । स सूक्ष्मसम्परायो यथाख्यातादूनकः किञ्चित् ॥ १ ॥''

व्याख्या—'ज्ञानेन' मत्यादिना जानाति भावान्, दर्शनेन च श्रद्धत्ते, चारित्रेण च 'न गृह्णाति' नाऽऽदत्ते कर्मेति गम्यते, तपसा 'परिशुध्यति' पुरोपचितकर्मक्षपणतः शुद्धो भवतीति सूत्रार्थः ॥ ३५ ॥ अनेन मार्गस्य फलं मोक्ष उक्तः । सम्प्रति मोक्षफलभूतां गतिमाह—

मोक्षमार्ग-गति-स्वरूपम् ।

**खवित्ता पुव्वकम्माइं, संजमेण तवेण य। सव्वदुक्खप्पहीणट्ठा, पक्कमंति महेसिणो ॥३६॥ त्ति बेमि ॥**

व्याख्या—क्षपयित्वा पूर्वकर्माणि संयमेन तपसा च "सव्वदुक्खप्पहीणट्ठ" त्ति प्राकृतत्वात् प्रक्षीणानि सर्वदुःखानि यत्र तत्तथा तच्च सिद्धिक्षेत्रमेव तदर्थयन्ति ये ते तथाविधाः प्रक्रामन्ति सिद्धिमिति शेषः "महेसिणो" त्ति महर्षय इति सूत्रार्थः ॥ ३६ ॥ 'इतिः' परिसमाप्तौ ब्रवीमीति पूर्ववत् ॥

इति श्रीनेमिचन्द्रसूरिविनिर्मितायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां मोक्षमार्गीयाख्यमष्टाविंशतितममध्ययनं समाप्तम् ॥

# अथ एकोनत्रिंशं सम्यक्त्वपराक्रमाख्यमध्ययनम् ।

अनन्तराऽध्ययने मोक्षमार्गगतिरुक्ता, सा च वीतरागत्वपूर्विकेति यथा तद्भवति तथाऽधुनाऽभिधीयत इति सम्बद्धस्यैकोनत्रिंशाध्ययनस्य सम्यक्त्वपराक्रमाख्यस्याऽऽदिसूत्रम्—

**सुयं मे आउसं! तेणं भगवया एवमक्खायं—इह खलु सम्मत्तपरक्कमे नामऽज्झयणे समणेणं भगवया महावीरेणं कासवेणं पवेइए, जं सम्मं सद्दहइत्ता पत्तियाइत्ता रोयइत्ता फासइत्ता पालइत्ता तीरइत्ता किट्टइत्ता सोहइत्ता आराहइत्ता आणाए अणुपालइत्ता वहवे जीवा सिज्झंति वुज्झंति मुचंति परिनिवायंति सवदुक्खाणमंतं करेंति ॥१॥**

**व्याख्या**—श्रुतं 'मे' मया 'आयुष्मन्!' इति शिष्यामन्त्रणम्, एतच्च सुधर्मस्वामी जम्बूस्वामिनमाह । 'तेने'ति यः सर्वजगत्प्रतीतः, 'भगवता' प्रक्रमात् महावीरेण 'एवमि'ति वक्ष्यमाणप्रकारेणाऽऽख्यातम् । तमेव प्रकारमाह—'इह' अस्मिन् प्रवचने 'खलु' निश्चितं सम्यक्त्वे सति पराक्रमः–उत्तरोत्तरगुणप्रतिपत्त्या कर्मारिजयसामर्थ्यलक्षणोऽर्थात् जीवस्य वर्ण्यतेऽस्मिन्निति सम्यक्त्वपराक्रमं नामाध्ययनमस्तीति गम्यते, तच्च केन प्रणीतम्? इत्याह—श्रमणेन भगवता महावीरण काश्यपेन प्रवेदितम्, स्वतः प्रविदितमेव भगवता ममेदमाख्यातं इत्युक्तं भवति। अस्यैव फलमाह—'यदि'ति प्रस्तुताऽध्ययनं सम्यक् 'श्रद्धाय' शब्दार्थोभयरूपं सामान्येन प्रतिपद्य 'प्रतीत्य' विशेषत इत्थमेवेति निश्चित्य 'रोचयित्वा' तदध्ययनादिविपयमभिलापमात्मन उत्पाद्य, 'स्पृष्ट्वा' योगत्रिकेण, तत्र मनसा सूत्रार्थयोश्चिन्तनेन, वचसा वाचनादिना, कायेन भङ्गकरचनादिना, 'पालयित्वा' परावर्त्तनादिनाऽभिरक्ष्य 'तीरयित्वा' अध्ययनादिना परिसमाप्य 'कीर्त्तयित्वा' गुरोर्विनय-



सम्यक्त्वपराक्रमाध्ययनस्य फलम् ।

पूर्वं क्षमिद्मित्थं मयाऽधीतमिति निवेद्य 'शोधयित्वा' गुरुमुखकथनेन शुद्धिं विधाय 'आराध्य' उत्सूत्रप्ररूपणादिपरिहारेण बोधयित्वा, एतत् सर्वं स्वमनीषिकातोऽपि स्याद् अत आह—'आज्ञये'ति जिनाज्ञया 'अनुपाल्य' सततमासेव्य बहवो जीवाः 'सिध्यन्ति' इहैवागमसिद्धत्वादिना, 'बुध्यन्ते' घातिकर्मक्षयेण, 'विमुच्यन्ते' भवोपग्राहिकर्मचतुष्टयेन, ततश्च 'परिनिर्वान्ति' कर्मदावानलोपशमेन, अत एव 'सर्वदुःखानां' शारीरमानसानाम् 'अन्तं' पर्यन्तं कुर्वन्ति मुक्तिपदाऽवाप्त्येति सूत्रार्थः ॥ १ ॥ सम्प्रति विनेयाऽनुग्रहार्थं सम्बन्धाभिधानपुरस्सरं प्रस्तुताऽध्ययनार्थमाह—

तस्स णं अयमट्ठे एवमाहिज्जंति, तंजहा—संवेगे निव्वेदे धम्मसद्धा गुरुसाहम्मियसुस्सूसणया आलोयणया निंदणया गरहणया सामाइए चउवीसत्थए वंदणे पडिक्कमणे काउस्सग्गे पच्चक्खाणे थयथुइमंगले कालपडिलेहणया पायच्छित्तकरणे खमावणया सज्झाए वायणया पडिपुच्छणया परियट्टणया अणुप्पेहा धम्मकहा सुयस्स आराहणया एगग्गमणसन्निवेसणया संजमे तवे वोदाणे सुहसाते अप्पडिबद्धया विवित्तसयणासणसेवणया विणिवट्टणया संभोगपच्चक्खाणे उवहिपच्चक्खाणे आहारपच्चक्खाणे कसायपच्चक्खाणे जोगपच्चक्खाणे सरीरपच्चक्खाणे सहायपच्चक्खाणे भत्तपच्चक्खाणे सब्भावपच्चक्खाणे पडिरूवणया वेयावच्चे सव्वगुणसंपुण्णया वीयरागता खंती मुत्ती मद्दवे अज्जवे भावसच्चे करणसच्चे जोगसच्चे मणगुत्तया वइगुत्तया कायगुत्तया मणसमाहारणया वइसमाहारणया कायसमाहारणया नाणसंपन्नया दंसणसंपन्नया चरित्तसंपन्नया सोतिंदियनिग्गहे चक्खिदियनि-

त्रिसप्तति-पदाभिधानम् ।

**ग्गहे घाणिंदियनिग्गहे जिब्भिंदियनिग्गहे फासिंदियनिग्गहे कोहविजए माणविजए मायाविजए लोभविजए पिज्जदोसमिच्छादंसणविजए सेलेसी अकम्मय त्ति ॥ २ ॥**

व्याख्या—'तस्ये'ति सम्यक्त्वपराक्रमाऽध्ययनस्य, 'णमि'ति सर्वत्र वाक्यालङ्कारे, 'अयमि'त्यनन्तरमेव वक्ष्यमाणः 'अर्थः' अभिधेयः 'एवम्' अमुना वक्ष्यमाणप्रकारेण 'आख्यायते' कथ्यते महावीरेणेति गम्यते, 'तद्यथे'ति वक्ष्यमाणतदर्थोपन्यासार्थः । [१]संवेगः, [२]निर्वेदः, [३]धर्मश्रद्धा, "गुरुसाहम्मियसुस्सूसणया" त्ति [४]साधर्मिकजनगुरुशुश्रूषणम्, आर्षत्वाच्च इहोत्तरत्र च सूत्रेष्वन्यथा पाठः, [५]आलोचना, [६]निन्दा, [७]गर्हा, [८]सामायिकम्, [९]चतुर्विंशतिस्तवः, [१०]वन्दनम्, [११]प्रतिक्रमणम्, [१२]कायोत्सर्गः, [१३]प्रत्याख्यानम्, [१४]स्तवस्तुतिमङ्गलम्, [१५]कालप्रत्युपेक्षणा, [१६]प्रायश्चित्तकरणम्, [१७]क्षामणा, [१८]स्वाध्यायः, [१९]वाचना, [२०]परिप्रच्छना, [२१]परावर्त्तना, [२२]अनुप्रेक्षा, [२३]धर्मकथा, [२४]श्रुतस्याऽऽराधना, [२५]एकाग्रमनःसन्निवेशना, [२६]संयमः, [२७]तपः, [२८]व्यवदानम्, [२९]सुखशाते, [३०]अप्रतिबन्धता, [३१]विविक्तशयनासनसेवना, [३२]विनिवर्त्तना, [३३]सम्भोगप्रत्याख्यानम्, [३४]उपधिप्रत्याख्यानम्, [३५]आहारप्रत्याख्यानम्, [३६]कषायप्रत्याख्यानम्, [३७]योगप्रत्याख्यानम्, [३८]शरीरप्रत्याख्यानम्, [३९]सहायप्रत्याख्यानम्, [४०]भक्तप्रत्याख्यानम्, [४१]सद्भावप्रत्याख्यानम्, [४२]प्रतिरूपणा, [४३]वैयावृत्त्यम्, [४४]सर्वगुणसम्पूर्णता, [४५]वीतरागता, [४६]क्षान्तिः, [४७]मुक्तिः, [४८]मार्दवम्, [४९]आर्जवम्, [५०]भावसत्यम्, [५१]करणसत्यम्, [५२]योगसत्यम्, [५३]मनोगुप्तता, [५४]वाग्गुप्तता, [५५]कायगुप्तता, [५६]मनःसमाधारणा, [५७]वाक्समाधारणा, [५८]कायसमाधारणा, [५९]ज्ञानसम्पन्नता, [६०]दर्शनसम्पन्नता, [६१]चारित्रसम्पन्नता, [६२]श्रोत्रेन्द्रियनिग्रहः, [६३]चक्षुरिन्द्रियनिग्रहः, [६४]घ्राणेन्द्रियनिग्रहः, [६५]जिह्वेन्द्रियनिग्रहः, [६६]स्पर्शनेन्द्रियनिग्रहः, [६७]क्रोधविजयः, [६८]मानविजयः, [६९]मायाविजयः, [७०]लोभविजयः, [७१]प्रेमद्वेषमिथ्यादर्शनविजयः, [७२]शैलेशी, [७३]अकर्मता इति, इत्यक्षरसंस्कारः ॥ २ ॥ साम्प्रतमिदमेव प्रतिपदं फलोपदर्शनद्वारेण व्याचिख्यासुराह सूत्रकारः—

**संवेगेणं भंते ! जीवे किं जणइ ? संवेगेणं अणुत्तरं धम्मसद्धं जणति, अणुत्तराए धम्म-**


॥३२५॥

सद्धाए संवेगं हव्वमागच्छति, अणंताणुबंधिकोहमाणमायालोभे खवेइ, नवं च कम्मं न बंधति, तप्पच्चइयं च णं मिच्छत्तविसोहिं काऊण दंसणाराहए भवइ, दंसणविसोहीए य णं विसुद्धाए अत्थेगइए तेणेव भवग्गहणेण सिज्झति, सोहीए य णं विसुद्धाए तच्चं पुण भवग्गहणं नातिक्कमति ॥ १ ॥ निव्वेएणं भंते! जीवे किं जणइ? निव्वेएणं दिव्वमाणुसतेरिच्छिएसु कामभोगेसु निव्वेयं हव्वमागच्छइ, सव्वविसएसु विरज्जति, सव्वविसएसु विरज्जमाणे आरंभपरिग्गहपरिच्चायं करेइ, आरंभपरिग्गहपरिच्चायं करेमाणे संसारमग्गं वोच्छिंदति, सिद्धिमग्गं पडिवण्णे य भवति ॥ २ ॥ धम्मसद्धाए णं भंते! जीवे किं जणइ? धम्मसद्धाए णं सायासोक्खेसु रज्जमाणे विरज्जइ आगारधम्मं च णं चयइ, अणगारिए णं जीवे सारीरमाणसाणं दुक्खाणं छेयणभेयणसंजोगाईणं वुच्छेयं करेइ अव्वाबाहं च णं सुहं निव्वत्तेइ ॥ ३ ॥ गुरुसाहम्मियसुस्सूसणयाए णं भंते! जीवे किं जणेइ? गुरुसाहम्मियसुस्सूसणयाए णं विणयपडिवत्तिं जणेइ, विणयपडिवन्ने णं जीवे अणच्चासायणसीले नेरइयतिरिक्खजोणियमणुस्सदेवदुग्गईओ निरुंभेइ, वण्णसंजलणभत्तिबहुमाणयाए माणुस्सदेवसुग्गईओ निबंधइ, सिद्धिसुगइं च विसोहेइ, पसत्थाइं च णं विणयमूलाइं सव्वकज्जाइं साहेइ, अन्ने य बहवे जीवे विणइत्ता हवइ ॥ ४ ॥ आलोयणाए णं भंते! जीवे किं जणइ? आलोयणाए णं मायानियाणमिच्छादरिसणसल्लाणं मुक्खमग्गविग्घाणं अणंतसंसारवद्धणाणं उद्धरणं करेइ उज्जुभावं च जणेइ, उज्जुभावं पडिवन्ने य णं जीवे अमाई इत्थीवेयं

त्रिसप्तति-पदानां फल-निरूपणम्।

नपुंसगवेयं च न बंधइ, पुव्वबद्धं च णं निज्जरइ ॥ ५ ॥ निंदयाए णं भंते ! जीवे किं जणेइ ? निंदयाए णं पच्छाणुतावं जणइ, पच्छाणुतावेणं विरज्जमाणे करणगुणसेढिं पडिवज्जइ, करणगुणसेढिं पडिवण्णे य अणगारे मोहणिज्जं कम्मं उग्घाएइ ॥ ६ ॥ गरिहणाए णं भंते ! जीवे किं जणेइ ? गरिहणाए णं अपुरक्कारं जणेइ, अपुरक्कारगए णं जीवे अप्पसत्थेहिंतो जोगेहिंतो नियत्तइ पसत्थेहि य पडिवज्जइ, पसत्थजोगपडिवण्णे य णं अणगारे अणंतघाईपज्जवे खवेइ ॥ ७ ॥ सामाइएणं भंते ! जीवे किं जणेइ ? सामाइएणं सावज्जजोगविरइं जणयइ ॥ ८ ॥ चउवीसत्थएणं भंते ! जीवे किं जणेइ ? चउवीसत्थएणं दंसणविसोहिं जणेइ ॥ ९ ॥ वंदणएणं भंते ! जीवे किं जणेइ ? वंदणएणं नीयागोयं कम्मं खवेइ उच्चागोयं निबंधइ, सोहग्गं च णं अप्पडिहयं आणाफलं निवत्तेइ, दाहिणभावं च णं जणेइ ॥ १० ॥ पडिक्कमणेणं भंते ! जीवे किं जणेइ ? पडिक्कमणेणं वयछिद्दाइं पिहेइ, पिहियवयछिद्दे पुण जीवे निरुद्धासवे असबलचरित्ते अट्ठसु पवयणमायासु उवउत्ते अपुहुत्ते सुप्पणिहिए विहरइ ॥ ११ ॥ काउस्सग्गेणं भंते ! जीवे किं जणेइ ? काउस्सग्गेणं तीयपडुपण्णं पायच्छित्तं विसोहेइ, विसुद्धपायच्छित्ते य जीवे निव्वुयहियए ओहरियभरु व्व भारवहे धम्मज्झाणोवगए सुहंसुहेणं विहरइ ॥ १२ ॥ पच्चक्खाणेणं भंते ! जीवे किं जणइ ? पच्चक्खाणेणं आसवदाराइं निरुंभइ ॥ १३ ॥ थयथुइमंगलेणं भंते ! जीवे किं जणइ ? थयथुइमंगलेणं नाणदंसणचरित्तबोहिलाभं संजणइ, नाणदंसणचरित्तबोहिलाभसंपन्ने णं जीवे

अंतकिरियं कप्पविमाणोववत्तियं आराहणं आराहेइ ॥ १४ ॥ कालपडिलेहणाए णं भंते ! जीवे किं जणेइ? कालपडिलेहणाए णं नाणावरणिज्जं कम्मं खवेइ ॥१५॥ पायच्छित्तकरणेणं भंते! जीवे किं जणेइ? पायच्छित्तकरणेणं पावकम्मविसोहिं जणेइ निरइयारे आवि भवइ, सम्मं च णं पायच्छित्तं पडिवज्जमाणे मग्गं च मग्गफलं च विसोहेइ, आयारं आयारफलं च आराहेइ ॥ १६ ॥ खमावणयाए णं भंते ! जीवे किं जणेइ ? खमावणयाए णं पल्हायणभावं जणेइ, पल्हायणभावमुवगए य सव्वपाणभूयजीवसत्तेसु मित्तीभावं उप्पाएइ, मित्तीभावमुवगए य जीवे भावविसोहिं काऊण निब्भए भवइ ॥ १७ ॥ सज्झाएणं भंते ! जीवे किं जणेइ ? सज्झाएणं नाणावरणिज्जं कम्मं खवेइ ॥ १८ ॥ वायणाए णं भंते ! जीवे किं जणेइ? वायणाए णं निज्जरं जणेइ, सुयस्स य अणुसज्जणाए अणासायणाए वट्टइ, सुयस्स य अणुसज्जणाए अणासायणाए वट्टमाणे तित्थधम्मं अवलंबेइ, तित्थधम्ममवलंबमाणे महानिज्जराए महापज्जवसाणे हवइ ॥ १९ ॥ पडिपुच्छणाए णं भंते ! जीवे किं जणेइ ? पडिपुच्छणाए णं सुत्तत्थतदुभयाइं विसोहेइ, कंखामोहणिज्जं कम्मं वुच्छिंदेइ ॥ २० ॥ परियट्टणयाए णं भंते ! जीवे किं जणेइ ? परियट्टणयाए णं वंजणाइं जणेइ वंजणलद्धिं च उप्पाएइ ॥ २१ ॥ अणुप्पेहाए णं भंते ! जीवे किं जणेइ ? अणुप्पेहाए णं आउयवज्जाओ सत्त कम्मपयडीओ धणियबंधणबद्धाओ सिढिलबंधणबद्धाओ पकरेइ, दीहकालट्ठिईयाओ हस्सकालट्ठिईयाओ पकरेइ, तिव्वाणुभावाओ मंदाणुभावाओ पकरेइ, बहुप्पएसग्गाओ

त्रिसप्तति-
पदानां फल-
निरूपणम् ।

पच्चक्खाणेणं एगीभावं जणेइ, एगीभावभूए य जीवे एगग्गं भावेमाणे अप्पसद्दे अप्पझंझे अप्पकलहे अप्पकसाए अप्पतुमंतुमे संजमबहुले संवरबहुले समाहिए आवि भवइ ॥ ३९ ॥ भत्तपच्चक्खाणेणं भंते! जीवे किं जणेइ? भत्तपच्चक्खाणेणं अणेगाइं भवसयाइं निरुंभइ ॥ ४० ॥ सब्भावपच्चक्खाणेणं भंते! जीवे किं जणेइ? सब्भावपच्चक्खाणेणं अणियट्टिं जणेइ, अनियट्टिं पडिवन्ने य अणगारे चत्तारि केवलिकम्मंसे खवेइ, तंजहा—वेयणिज्जं आउयं नामं गोयं, तओ पच्छा सिज्झइ बुज्झइ मुच्चइ परिनिव्वाइ सव्वदुक्खाणमंतं करेइ ॥ ४१ ॥ पडिरूवयाए णं भंते! जीवे किं जणेइ? पडिरूवयाए णं लाघवियं जणेइ, लहुभूए णं जीवे अप्पमत्ते पागडलिंगे पसत्थलिंगे विसुद्धसम्मत्ते सत्तसमिइसमत्ते सव्वपाणभूयजीवसत्तेसु वीससणिज्जरूवे अप्पडिलेहे जिइंदिए विपुलतवसमिइसमन्नागए आवि भवइ ॥४२॥ वेयावच्चेणं भंते! जीवे किं जणेइ? वेयावच्चेणं तित्थयरनामगुत्तं कम्मं निबंधइ ॥ ४३ ॥ सव्वगुणसंपुण्णयाए णं भंते! जीवे किं जणेइ? सव्वगुणसंपुन्नयाए णं अपुणरावत्तिं जणेइ, अपुणरावत्तिं पत्तए णं जीवे सारीरमाणसाणं दुक्खाणं नो भागी भवइ ॥ ४४ ॥ वीयरागयाए णं भंते! जीवे किं जणेइ? वीयरागयाए णं नेहाणुबंधणाणि तण्हाणुबंधणाणि य वुच्छिदइ, मणुण्णामणुण्णेसु सद्दरूवरसफरिसगंधेसु सचित्ताचित्तमीसएसु चेव विरज्जइ ॥ ४५ ॥ खंतीए णं भंते! जीवे किं जणेइ? खंतीए णं परीसहे जिणेइ ॥ ४६ ॥ मुत्तीए णं भंते! जीवे किं जणेइ? मुत्तीए णं अकिंचणं जणेइ, अकिंचणे य जीवे अत्थलोलाणं पुरि-



त्रिसप्ततिपदानां फलनिरूपणम् ।

त्रिसप्तति-
पदानां फल-
निरूपणम् ।

साणं अपत्थणिज्जे भवइ ॥ ४७ ॥ अज्जवयाए णं भंते ! जीवे किं जणेइ ? अज्जवयाए णं काउज्जुययं भावुज्जुययं भासुज्जुययं अविसंवायणं जणेइ, अविसंवायणसंपन्नयाए णं जीवे धम्मस्स आराहए भवइ ॥ ४८ ॥ मद्दवयाए णं भंते ! जीवे किं जणेइ ? मद्दवयाए णं अणुस्सियत्तं जणेइ, अणुस्सियत्ते णं जीवे मिउमद्दवसंपन्ने अट्ठ मयट्ठाणाइं निट्ठवेइ ॥४९॥ भावसच्चेणं भंते ! जीवे किं जणेइ ? भावसच्चेणं भावविसोहिं जणेइ, भावविसोहीए वट्ट-माणे अरहंतपन्नत्तस्स धम्मस्स आराहणयाए अब्भुट्ठेइ, अरहंतपन्नत्तस्स धम्मस्स आरा-हणयाए अब्भुट्ठित्ता परलोगधम्मस्स आराहए भवइ ॥ ५० ॥ करणसच्चेणं भंते ! जीवे किं जणइ ? करणसच्चेणं करणसत्तिं जणेइ, करणसच्चे वट्टमाणे जहावाई तहाकारी भवइ ॥ ५१ ॥ जोगसच्चेणं भंते ! जीवे किं जणेइ ? जोगसच्चेणं जोगे विसोहेइ ॥ ५२ ॥ मण-गुत्तयाए णं भंते ! जीवे किं जणेइ ? मणगुत्तयाए णं एगग्गं जणेइ, एगग्गचित्तेणं मण-गुत्ते संजमाराहए भवइ ॥ ५३ ॥ वयगुत्तयाए णं भंते ! जीवे किं जणेइ ? वयगुत्तयाए णं निव्विकारत्तं जणेइ, निव्विकारे णं जीवे वइगुत्ते जोगे अज्झप्पजोगसाहणजुत्ते यावि भवइ ॥ ५४ ॥ कायगुत्तयाए णं भंते ! जीवे किं जणेइ ? कायगुत्तयाए णं संवरं जणयइ, संवरेणं कायगुत्ते णं पुणो पावासवनिरोहं करेइ ॥ ५५ ॥ मणसमाधारणयाए णं भंते ! जीवे किं जणेइ ? मणसमाधारणयाए णं एगग्गं जणेइ, एगग्गं जणइत्ता नाणपज्जवे जणेइ, नाण-पज्जवे जणइत्ता सम्मत्तं विसोहेइ मिच्छत्तं च निज्जरेइ ॥ ५६ ॥ वयसमाहारणयाए णं

अप्पपएसग्गाओ पक .., आउं च णं कम्मं सिय बंधइ सिय नो बंधइ, अस्सायावेयणिज्जं च णं कम्मं नो भुज्जो भुज्जो उवचिणइ, अणाइयं च णं अणवयग्गं दीहमद्धं चाउरंतसंसार-कंतारं खिप्पामेव वीइवयइ ॥ २२ ॥ धम्मकहाए णं भंते! जीवे किं जणेइ? धम्मकहाए णं निज्जरं जणेइ, धम्मकहाए णं पवयणं पभावेइ, पवयणपभावए णं जीवे आगमिस्सभद्दाए कम्मं निबंधइ ॥ २३ ॥ सुयस्स आराहणयाए णं भंते! जीवे किं जणेइ? सुयस्स आराहणयाए णं अण्णाणं खवेइ, न य संकिलिस्सइ ॥ २४ ॥ एगग्गमणसन्निवेसणाए णं भंते! जीवे किं जणेइ? एगग्गमणसन्निवेसणाए णं चित्तनिरोहं करेइ ॥ २५ ॥ संजमेणं भंते! जीवे किं जणेइ? संजमेणं अणण्हयत्तं जणेइ ॥ २६ ॥ तवेणं भंते! जीवे किं जणेइ? तवेणं वोयाणं जणेइ ॥ २७ ॥ वोयाणेणं भंते! जीवे किं जणेइ? वोयाणेणं अकिरियं जणेइ, अकिरियाए भवित्ता तओ पच्छा सिज्झति बुज्झति मुचति परिनिव्वाइ सव्वदुक्खाणमंतं करेइ ॥ २८ ॥ सुहसाएणं भंते! जीवे किं जणेइ?। सुहसाएणं अणुस्सुयत्तं जणेइ, अणुस्सुए णं जीवे अणुकंपए अणुब्भडे विगयसोगे चरित्तमोहणिज्जं कम्मं खवेइ ॥ २९ ॥ अपडिबद्धयाए णं भंते! जीवे किं जणेइ? अपडिबद्धयाए णं निस्संगत्तं जणेइ, निस्संगत्तेणं जीवे एगे एगग्गचित्ते दिया य राओ य असज्जमाणे अपडिबद्धे आवि विहरइ ॥३०॥ विवित्तसयणासणयाए णं भंते! जीवे किं जणेइ? विवित्तसयणासणयाए णं चरित्तगुत्तिं जणइ, चरित्तगुत्ते णं जीवे विवित्ताहारे दढचरित्ते एगंतरए मुक्खभावपडिवन्ने अट्ठविहं



त्रिसप्तति-
पदानां फल-
निरूपणम्।

कम्मगंठिं निज्जरेइ ॥ ३१ ॥ विणिवट्टणयाए णं भंते ! जीवे किं जणेइ ? विणिवट्टणयाए णं पावकम्माणं अकरणयाए अब्भुट्ठेइ, पुव्वबद्धाण य निज्जरणयाए पावं नियत्तेइ, तओ पच्छा चाउरंतं संसारकंतारं वीईवयइ ॥ ३२ ॥ संभोगपच्चक्खाणेणं भंते ! जीवे किं जणेइ ? संभोगपच्चक्खाणेणं आलंबणाइं खवेइ, निरालंबणस्स य आययट्ठिया जोगा भवंति, सएणं लाभेणं संतूसइ, परस्स लाभं नो आसाएइ नो तक्केइ नो पीहेइ नो पत्थेइ नो अभिलसइ, परस्स लाभं अणासाएमाणे अतक्केमाणे अपीहेमाणे अपत्थेमाणे अणभिलसेमाणे दुच्चं सुहसिज्जं उवसंपज्जित्ता णं विहरइ ॥ ३३ ॥ उवहिपच्चक्खाणेणं भंते ! जीवे किं जणेइ ? उवहिपच्चक्खाणेणं अपलिमंथं जणेइ, निरुवहिए णं जीवे निक्कंखे उवहिमंतरेण य न संकिलिस्सइ ॥ ३४ ॥ आहारपच्चक्खाणेणं भंते ! जीवे किं जणेइ ? आहारपच्चक्खाणेणं जीवियासंसप्पओगं वुच्छिंदइ, जीवियासंसप्पओगं वुच्छिंदित्ता जीवे आहारमंतरेण न संकिलिस्सइ ॥ ३५ ॥ कसायपच्चक्खाणेणं भंते ! जीवे किं जणेइ ? कसायपच्चक्खाणेणं वीयरायभावं जणेइ, वीयरायभावं पडिवन्नेवि य णं जीवे समसुहदुक्खे भवइ ॥ ३६ ॥ जोगपच्चक्खाणेणं भंते ! जीवे किं जणेइ ? जोगपच्चक्खाणेणं अजोगयं जणेइ, अजोगी णं जीवे नवं कम्मं न बंधइ, पुव्वबद्धं निज्जरेइ ॥ ३७ ॥ सरीरपच्चक्खाणेणं भंते ! जीवे किं जणेइ ? सरीरपच्चक्खाणेणं सिद्धाइसयगुणत्तणं निव्वत्तेइ, सिद्धाइसयगुणसंपन्ने य णं जीवे लोगग्गभावमुवगए परमसुही भवइ ॥ ३८ ॥ सहायपच्चक्खाणेणं भंते ! जीवे किं जणेइ ? सहाय-

त्रिसप्तति-
पदानां फल-
निरूपणम् ।

पच्चक्खाणेणं एगीभावं जणेइ, एगीभावभूए य जीवे एगग्गं भावेमाणे अप्पसद्दे अप्पझंझे अप्पकलहे अप्पकसाए अप्पतुमंतुमे संजमबहुले संवरबहुले समाहिए आवि भवइ ॥ ३९ ॥ भत्तपच्चक्खाणेणं भंते ! जीवे किं जणेइ ? भत्तपच्चक्खाणेणं अणेगाइं भवसयाइं निरुंभइ ॥ ४० ॥ सब्भावपच्चक्खाणेणं भंते ! जीवे किं जणेइ ? सब्भावपच्चक्खाणेणं अणियट्टिं जणेइ, अनियट्टिं पडिवन्ने य अणगारे चत्तारि केवलिकम्मंसे खवेइ, तंजहा—वेयणिज्जं आउयं नामं गोयं, तओ पच्छा सिज्झइ बुज्झइ मुच्चइ परिनिव्वाइ सव्वदुक्खाणमंतं करेइ ॥ ४१ ॥ पडिरूवयाए णं भंते ! जीवे किं जणेइ ? पडिरूवयाए णं लाघवियं जणेइ, लहुभूए णं जीवे अप्पमत्ते पागडलिंगे पसत्थलिंगे विसुद्धसम्मत्ते सत्तसमिइसमत्ते सव्वपाणभूयजीवसत्तेसु वीससणिज्जरूवे अप्पडिलेहे जिइंदिए विपुलतवसमिइसमन्नागए आवि भवइ ॥४२॥ वेयावच्चेणं भंते ! जीवे किं जणेइ ? वेयावच्चेणं तित्थयरनामगुत्तं कम्मं निबंधइ ॥ ४३ ॥ सव्वगुणसंपुण्णयाए णं भंते ! जीवे किं जणेइ ? सव्वगुणसंपुन्नयाए णं अपुणरावत्तिं जणेइ, अपुणरावत्तिं पत्तए णं जीवे सारीरमाणसाणं दुक्खाणं नो भागी भवइ ॥ ४४ ॥ वीयरागयाए णं भंते ! जीवे किं जणेइ ? वीयरागयाए णं नेहाणुबंधणाणि तण्हाणुबंधणाणि य वुच्छिंदइ, मणुण्णामणुण्णेसु सद्दरूवरसफरिसगंधेसु सचित्ताचित्तमीसएसु चेव विरज्जइ ॥ ४५ ॥ खंतीए णं भंते ! जीवे किं जणेइ ? खंतीए णं परीसहे जिणेइ ॥ ४६ ॥ मुत्तीए णं भंते ! जीवे किं जणेइ ? मुत्तीए णं अकिंचणं जणेइ, अकिंचणे य जीवे अत्थलोलाणं पुरि-

त्रिसप्तति-
पदानां फल-
निरूपणम् ।

साणं अपत्थणिज्जे भवइ ॥ ४७ ॥ अज्जवयाए णं भंते! जीवे किं जणेइ? अज्जवयाए णं काउज्जुययं भावुज्जुययं भासुज्जुययं अविसंवायणं जणेइ, अविसंवायणसंपन्नयाए णं जीवे धम्मस्स आराहए भवइ ॥ ४८ ॥ मद्दवयाए णं भंते! जीवे किं जणेइ? मद्दवयाए णं अणुस्सियत्तं जणेइ, अणुस्सियत्ते णं जीवे मिउमद्दवसंपन्ने अट्ठ मयट्ठाणाइं निट्ठवेइ ॥४९॥ भावसच्चेणं भंते! जीवे किं जणेइ? भावसच्चेणं भावविसोहिं जणेइ, भावविसोहीए वट्टमाणे अरहंतपन्नत्तस्स धम्मस्स आराहणयाए अब्भुट्ठेइ, अरहंतपन्नत्तस्स धम्मस्स आराहणयाए अब्भुट्ठित्ता परलोगधम्मस्स आराहए भवइ ॥ ५० ॥ करणसच्चेणं भंते! जीवे किं जणइ? करणसच्चेणं करणसत्तिं जणेइ, करणसच्चे वट्टमाणे जहावाई तहाकारी भवइ ॥ ५१ ॥ जोगसच्चेणं भंते! जीवे किं जणेइ? जोगसच्चेणं जोगे विसोहेइ ॥ ५२ ॥ मणगुत्तयाए णं भंते! जीवे किं जणेइ? मणगुत्तयाए णं एगग्गं जणेइ, एगग्गचित्तेणं मणगुत्ते संजमाराहए भवइ ॥ ५३ ॥ वयगुत्तयाए णं भंते! जीवे किं जणेइ? वयगुत्तयाए णं निव्विकारत्तं जणेइ, निव्विकारे णं जीवे वइगुत्ते जोगे अज्झप्पजोगसाहणजुत्ते यावि भवइ ॥ ५४ ॥ कायगुत्तयाए णं भंते! जीवे किं जणेइ? कायगुत्तयाए णं संवरं जणयइ, संवरेणं कायगुत्ते णं पुणो पावासवनिरोहं करेइ ॥ ५५ ॥ मणसमाधारणयाए णं भंते! जीवे किं जणेइ? मणसमाधारणयाए णं एगग्गं जणेइ, एगग्गं जणइत्ता नाणपज्जवे जणेइ, नाणपज्जवे जणइत्ता सम्मत्तं विसोहेइ मिच्छत्तं च निज्जरेइ ॥ ५६ ॥ वयसमाहारणयाए णं

दंसणावरणिज्जं पंचविहं अंतरायं एए तिन्नि कम्मंसे जुगवं खवेइ, तओ पच्छा अणुत्तरं अणंतं कसिणं पडिपुन्नं निरावरणं वितिमिरं विसुद्धं लोगालोगप्पभासगं केवलवरणाणदंसणं समुप्पाडेइ, जाव सजोगी हवइ ताव य इरियावहियं कम्मं निबंधइ—सुहफरिसं दुसमयट्ठिईयं, तं पढमसमए बद्धं विइयसमए वेइयं तइयसमए निज्जिन्नं, तं बद्धं पुट्ठं उदीरियं वेइयं निज्जिन्नं, सेयाले अकम्मं चावि भवइ ॥ ७१ ॥ अहाउयं पालइत्ता अंतोमुहुत्तद्धावसेसाऊए जोगनिरोहं करेमाणो सुहुमकिरियं अप्पडिवाइं सुक्कज्झाणं झायमाणे तप्पढमयाए मणजोगं निरुंभइ, आणापाणनिरोहं करेइ, ईसिपंचहस्सक्खरुच्चारणद्धाए य णं अणगारे समुच्छिन्नकिरियं अणियट्टिसुक्कज्झाणं झियायमाणो वेयणिज्जं आउयं नामं गुत्तं च एए चत्तारि वि कम्मंसे जुगवं खवेइ ॥ ७२ ॥ तओ ओरालियं कम्माइं च सव्वाहिं विप्पजहणाहिं विप्पजहित्ता उज्जुसेढीपत्ते अफुसमाणगई उड्ढं एगसमएणं अविग्गहेणं तत्थ गंता सागारोवउत्ते सिज्झइ जाव अंतं करेइ ॥ ७३ ॥

व्याख्या—'सवेगेन' मोक्षाभिलापेण 'भदन्ते'ति पूज्यामन्त्रणम्, जीवः किं जनयति? कतरं गुणमुत्पादयतीत्यर्थः इति शिष्यप्रश्नः। अत्र प्रज्ञापक उत्तरमाह—संवेगेन अनुत्तरां धर्मश्रद्धां जनयति, तया संवेगं तमेव अर्थाद् विशिष्टतरं "हवं" ति शीघ्रमागच्छति। ततोऽनन्तानुवन्धिक्रोधमानमायालोभान् क्षपयति, तथा 'कर्म' प्रस्तावाद् अशुभं न बध्नाति, 'तत्प्रत्ययिकां च' कपायक्षयहेतुकां च 'मिथ्यात्वविशुद्धिं' सर्वथा मिथ्यात्वक्षयं कृत्वा दर्शनस्य—प्रस्तावात् क्षायिकसम्यक्त्वस्याराधको दर्शनाराधको भवति, दर्शनविशुद्ध्या च 'विशुद्ध्या' निर्मलया अस्त्येककः कश्चित् तेनैव भवग्रहणेन सिध्यति



त्रिसप्ततिपदानां फलनिरूपणम्।

मरुदेवीस्वामिनीवत् । यस्तु न तेनैव सिद्ध्यति स किम्? इत्याह—'शुद्ध्या' प्रक्रमाद् दर्शनस्य विशुद्ध्या तृतीयं पुनर्भवग्रहणं
नातिक्रामति, उत्कृष्टदर्शनाराधनाऽपेक्षमेतद् । यत उक्तम्—"उक्कोसदंसणेणं भंते! जीवे कइहिं भवग्गहणेहिं सिज्झेज्जा?
गोयमा! उक्कोसेणं तेणेव, तइयं पुण नाइक्कमइ ॥"[1] उत्तरत्र सर्वेषु सूत्रेषु प्रश्ननिर्वचनेषु च सुगमपदानि न व्याख्या-
स्यन्ते॥ 'निर्वेदेन' सामान्यतः संसारविरागेण 'सर्वविषयेषु' समस्तसांसारिकवस्तुषु, शेषं सुगमम् ॥ २ ॥ 'धर्मश्रद्धया'
धर्माभिलाषेण साता—सातवेदनीयं तज्जनितानि सौख्यानि सातसौख्यानि तेषु वैषयिकसुखेष्वित्यर्थः, 'अगारधर्मं च'
गृहाचारं गार्हस्थ्यमित्यर्थः त्यजति, ततः 'अनगारः' यतिः सन् जीवः, शेषं स्पष्टम् । नवरं संयोगः—प्रस्तावादनिष्टस-
म्बन्धः ॥ ३ ॥ 'गुरुसाधर्मिकशुश्रूषणेन' तदुपासनारूपेण 'विनयप्रतिपत्तिम्' उचितकृत्यकरणाङ्गीकाररूपाम् अनत्याशात-
नाशीलः, कोऽर्थः? गुरुपरिवादादिपरिहारकृत्, तया वर्णः—श्लाघा तेन सञ्ज्वलनं—गुणोद्भासनं भक्तिः—अभ्युत्था-
नादिका बहुमानः—आन्तरा प्रीतिः, एषां द्वन्द्वे भावप्रत्यये च वर्णसञ्ज्वलनभक्तिबहुमानता तया प्रक्रमाद् गुरूणां सिद्धि-
सुगतिं विशोधयति, तन्मार्गभूतसम्यग्दर्शनादिविशोधनेन 'सर्वकार्याणि' श्रुतज्ञानादीनि, "विणइत्ति" त्ति 'विनेता' विनयं
ग्राहिता भवति, स्वय सुस्थितस्योपादेयवचनत्वाद् । अन्यत् प्रकटम् ॥४॥ आलोचनासूत्रं स्पष्टमेव ॥५॥ निन्दनम्—आत्मनैवा-
ऽऽत्मदोषपरिभावनं तेन पश्चादनुतापेन 'विरज्यमानः' वैराग्यं गच्छन् करणेन—अपूर्वकरणेन गुणश्रेणिः करणगुणश्रेणिः,
सा चोपरितनस्थितेर्मोहनीयादिकर्मदलिकान्युपादायोदयसमयात्प्रभृति द्वितीयादिसमयेष्वसङ्ख्यातगुणपुद्गलप्रक्षेपरूपा । यत
उक्तम्—"उवरिमठिईण दलियं, हेट्ठिमठाणेसु कुणइ गुणसेढी । गुणसंकमकरणं पुण, असुहाओ सुहम्मि पक्खिवइ ॥१॥"[2]

त्रिसप्ति-
पदानां फल-
निरूपणम् ।

[1] "उत्कृष्टदर्शनेन भदन्त! जीवः कतिभिर्भवग्रहणैः सिध्येत्? गौतम! उत्कर्षेण तेनैव, तृतीयं पुनर्नातिक्राम्यति ॥"
[2] "उपरितनस्थितेर्दलिकमधस्तनस्थानेषु करोति गुणश्रेणिः । गुणसङ्क्रमकरणं पुनरशुभाः शुभे प्रक्षिपति ॥ १ ॥"

भंते ! जीवे किं जणेइ ? वयसमाहारणयाए णं वयसाहारणं दंसणपज्जवे विसोहेइ, वइसाहारणं दंसणपज्जवे विसोहित्ता सुलहबोहियत्तं च निव्वत्तेइ दुल्लहबोहियत्तं निज्जरेइ ॥ ५७ ॥ कायसमाधारणयाए णं भंते ! जीवे किं जणेइ ? कायसमाधारणयाए णं चरित्तपज्जवे विसोहेइ, चरित्तपज्जवे विसोहित्ता अहक्खायचरित्तं विसोहेइ, अहक्खायचरित्तं विसोहित्ता चत्तारि केवलिकम्मंसे खवेइ, तओ पच्छा सिज्झइ बुज्झइ मुच्चइ परिनिव्वाइ सव्वदुक्खाणमंतं करेइ ॥ ५८ ॥ नाणसंपन्नयाए णं भंते ! जीवे किं जणेइ ? नाणसंपन्नयाए णं सव्वभावाभिगमं जणेइ, नाणसंपन्ने णं जीवे चाउरंते संसारकंतारे न विणस्सई—"जहा सूई ससुत्ता, पडिया न विणस्सई । तहा जीवे ससुत्ते, संसारे न विणस्सई ॥ १ ॥" नाणविणयतवचरित्तजोगे संपाउणइ, ससमयपरसमयविसारए य असंघायणिज्जे भवइ ॥५९॥ दंसणसंपन्नयाए णं भंते ! जीवे किं जणेइ ? दंसणसंपन्नयाए णं भवमिच्छत्तछेयणं करेइ परं न विज्झायइ, अणुत्तरेणं नाणदंसणेणं अप्पाणं संजोएमाणे सम्मं भावेमाणे विहरइ ॥ ६० ॥ चरित्तसंपन्नयाए णं भंते ! जीवे किं जणेइ ? चरित्तसंपन्नयाए णं सेलेसी भावं जणेइ, सेलेसिं पडिवन्ने अणगारे चत्तारि कम्मंसे खवेइ, तओ पच्छा सिज्झइ बुज्झइ मुच्चइ परिनिव्वाइ सव्वदुक्खाणमंतं करेइ ॥ ६१ ॥ सोइंदियनिग्गहेणं भंते ! जीवे किं जणेइ ? सोइंदियनिग्गहेणं मणुण्णामणुन्नेसु सद्देसु रागद्दोसनिग्गहं जणेइ, तप्पच्चइयं च णं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ ॥ ६२ ॥ चक्खिंदियनिग्गहेणं भंते ! जीवे किं जणेइ ?

एकोनत्रिंशं सम्यक्त्वपराक्रमाख्यमध्ययनम् ।

त्रिसप्तति-पदानां फल-निरूपणम् ।

॥ ३२९ ॥

चक्खिंदियनिग्गहेणं मणुन्नामणुन्नेसु रूवेसु रागद्दोसनिग्गहं जणेइ, तप्पच्चइयं च णं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ ॥ ६३ ॥ घाणिंदियनिग्गहेणं भंते! जीवे किं जणेइ? घाणिंदियनिग्गहेणं मणुन्नामणुन्नेसु गंधेसु रागद्दोसनिग्गहं जणेइ, तप्पच्चइयं च णं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ ॥ ६४ ॥ जिब्भिंदियनिग्गहेणं भंते! जीवे किं जणेइ?, जिब्भिंदियनिग्गहेणं मणुन्नामणुन्नेसु रसेसु रागद्दोसनिग्गहं जणेइ, तप्पच्चइयं च णं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ ॥ ६५ ॥ फासिंदियनिग्गहेणं भंते! जीवे किं जणेइ? फासिंदियनिग्गहेणं मणुन्नामणुन्नेसु फासेसु रागद्दोसनिग्गहं जणेइ, तप्पच्चइयं च णं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ ॥ ६६ ॥ कोहविजएणं भंते! जीवे किं जणेइ? कोहविजएणं खंतिं जणेइ, कोहवेयणिज्जं कम्मं न बंधइ, पुव्वनिबद्धं च निज्जरेइ ॥ ६७ ॥ माणविजएणं भंते! जीवे किं जणेइ? माणविजएणं मद्दवं जणेइ, माणवेयणिज्जं कम्मं न बंधइ, पुव्वनिबद्धं च निज्जरेइ ॥६८॥ मायाविजएणं भंते! जीवे किं जणइ? मायाविजएणं अज्जवं जणेइ, मायावेयणिज्जं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ ॥ ६९ ॥ लोभविजएणं भंते! जीवे किं जणेइ? लोभविजएणं संतोसं जणेइ, लोभवेयणिज्जं कम्मं न बंधइ, पुव्वनिबद्धं च निज्जरेइ ॥ ७० ॥ पिज्जदोसमिच्छादंसणविजएणं भंते! जीवे किं जणेइ? पिज्जदोसमिच्छादंसणविजएणं नाणदंसणचरित्ताराहणयाए अब्भुट्ठेइ, अट्ठविहस्स कम्मस्स कम्मगंठिविमोयणयाए तप्पढमयाए जहाणुपुव्विं अट्ठावीसइविहं मोहणिज्जं कम्मं उग्घाएइ, पंचविहं नाणावरणिज्जं नवविहं

त्रिसप्तति-पदानां फल-निरूपणम्।

दंसणावरणिज्जं पंचविहं अंतरायं एए तिन्नि कम्मंसे जुगवं खवेइ, तओ पच्छा अणुत्तरं अणंतं कसिणं पडिपुन्नं निरावरणं वितिमिरं विसुद्धं लोगालोगप्पभासगं केवलवरणाणदंसणं समुप्पाडेइ, जाव सजोगी हवइ ताव य इरियावहियं कम्मं निबंधइ—सुहफरिसं दुसमयट्ठिईयं, तं पढमसमए बद्धं बिइयसमए वेइयं तइयसमए निज्जिन्नं, तं बद्धं पुट्ठं उदीरियं वेइयं निज्जिन्नं, सेयाले अकम्मं चावि भवइ ॥ ७१ ॥ अहाउयं पालइत्ता अंतोमुहुत्तद्धावसेसाऊए जोगनिरोहं करेमाणो सुहुमकिरियं अप्पडिवाइं सुक्कज्झाणं झायमाणे तप्पढमयाए मणजोगं निरुंभइ, आणापाणनिरोहं करेइ, ईसिपंचहस्सक्खरुच्चारणद्धाए य णं अणगारे समुच्छिन्नकिरियं अणियट्टिसुक्कज्झाणं झियायमाणो वेयणिज्जं आउयं नामं गुत्तं च एए चत्तारि वि कम्मंसे जुगवं खवेइ ॥ ७२ ॥ तओ ओरालियं कम्माइं च सव्वाहिं विप्पजहणाहिं विप्पजहित्ता उज्जुसेढीपत्ते अफुसमाणगई उड्ढं एगसमएणं अविग्गहेणं तत्थ गंता सागारोवउत्ते सिज्झइ जाव अंतं करेइ ॥ ७३ ॥

व्याख्या—'संवेगेन' मोक्षाभिलाषेण 'भदन्ते'ति पूज्यामन्त्रणम्, जीवः किं जनयति ? कतरं गुणमुत्पादयतीत्यर्थः इति शिष्यप्रश्नः । अत्र प्रज्ञापक उत्तरमाह—संवेगेन अनुत्तरां धर्मश्रद्धां जनयति, तया संवेगं तमेव अर्थाद् विशिष्टतरं "हव्वं" ति शीघ्रमागच्छति । ततोऽनन्तानुबन्धिक्रोधमानमायालोभान् क्षपयति, तथा 'कर्म' प्रस्तावाद् अशुभं न बध्नाति, 'तत्प्रत्ययिकां च' कषायक्षयहेतुकां च 'मिथ्यात्वविशुद्धिं' सर्वथा मिथ्यात्वक्षयं कृत्वा दर्शनस्य—प्रस्तावात् क्षायिकसम्यक्त्वस्याराधको दर्शनाराधको भवति, दर्शनविशुद्ध्या च 'विशुद्ध्या' निर्मलया अस्त्येककः कश्चित् तेनैव भवग्रहणेन सिध्यति

त्रिसप्ति-पदानां फल-निरूपणम्।

मरुदेवीस्वामिनीवत्। यस्तु न तेनैव सिद्ध्यति स किम्? इत्याह—'शुद्ध्या' प्रक्रमाद् दर्शनस्य विशुद्ध्या तृतीयं पुनर्भवग्रहणं नातिक्रामति, उत्कृष्टदर्शनाराधनाऽपेक्षमेतद्। यत उक्तम्—"उक्कोसदंसणेणं भंते! जीवे कइहिं भवग्गहणेहिं सिज्झेज्जा? गोयमा! उक्कोसेणं तेणेव, तइयं पुण नाइक्कमइ॥" उत्तरत्र सर्वेषु सूत्रेषु प्रश्ननिर्वचनेषु च सुगमपदानि न व्याख्यास्यन्ते॥ 'निर्वेदेन' सामान्यतः संसारविरागेण 'सर्वविषयेषु' समस्तसांसारिकवस्तुषु, शेषं सुगमम्॥ २॥ 'धर्मश्रद्धया' धर्माभिलाषेण साता—सातवेदनीयं तज्जनितानि सौख्यानि सातसौख्यानि तेषु वैषयिकसुखेष्वित्यर्थः, 'अगारधर्मं च' गृहाचारं गार्हस्थ्यमित्यर्थः त्यजति, ततः 'अनगारः' यतिः सन् जीवः, शेषं स्पष्टम्। नवरं संयोगः—प्रस्तावादनिष्टसम्बन्धः॥ ३॥ 'गुरुसाधर्मिकशुश्रूषणेन' तदुपासनारूपेण 'विनयप्रतिपत्तिम्' उचितकृत्यकरणाङ्गीकाररूपाम् अनत्याशातनाशीलः, कोऽर्थः? गुरुपरिवादादिपरिहारकृत्, तथा वर्णः—श्लाघा तेन सञ्ज्वलनं—गुणोद्भासनं भक्तिः—अभ्युत्थानादिका बहुमानः—आन्तरा प्रीतिः, एषां द्वन्द्वे भावप्रत्यये च वर्णसञ्ज्वलनभक्तिबहुमानता तया प्रक्रमाद् गुरूणां सिद्धिसुगतिं विशोधयति, तन्मार्गभूतसम्यग्दर्शनादिविशोधनेन 'सर्वकार्याणि' श्रुतज्ञानादीनि, "विणइत्ति" त्ति 'विनेता' विनयं ग्राहिता भवति, स्वयं सुस्थितस्योपादेयवचनत्वाद्। अन्यत् प्रकटम्॥४॥ आलोचनासूत्रं स्पष्टमेव॥५॥ निन्दनम्—आत्मनैवाऽऽत्मदोषपरिभावनं तेन पश्चादनुतापेन 'विरज्यमानः' वैराग्यं गच्छन् करणेन—अपूर्वकरणेन गुणश्रेणिः करणगुणश्रेणिः, सा चोपरितनस्थितेर्मोहनीयादिकर्मदलिकान्युपादायोदयसमयात्प्रभृति द्वितीयादिसमयेष्वसङ्ख्यातगुणपुद्गलप्रक्षेपरूपा। यत उक्तम्—"उवरिगठिईए दलियं, हेट्ठिमठाणेसु कुणइ गुणसेढी। गुणसंकमकरणं पुण, असुहाओ सुहम्मि पक्खिवइ॥१॥"

---

१ "उत्कृष्टदर्शनेन भदन्त! जीवः कतिभिर्भवग्रहणैः सिध्येत्? गौतम! उत्कर्षेण तेनैव, तृतीयं पुनर्नातिक्राम्यति॥"

२ "उपरितनस्थितेर्दलिकमधस्तनस्थानेषु करोति गुणश्रेणिः। गुणसङ्क्रमकरणं पुनरशुभाः शुभे प्रक्षिपति॥ १॥"

५२

उपलक्षणत्वात् स्थितिघात-रसघात-गुणसङ्क्रम-स्थितिबन्धाश्च विशिष्टाः, अथवा करणगुणेन—अपूर्वकरणादिमाहात्म्येन
श्रेणिः करणगुणश्रेणिः प्रक्रमात् क्षपकश्रेणिरेव तां प्रतिपद्यते ॥६॥ 'गर्हणेन' परसमक्षमात्मनो दोषोद्भावनेन "अपुरक्कारं"
ति अपुरस्कारम् अवज्ञास्पदत्वं जनयत्यात्मन इति गम्यते, अपुरस्कारगतः तद्वीत्यैवाऽप्रशस्तेभ्यो योगेभ्यो निवर्त्तते,
अनन्तविपयतया अनन्ते—ज्ञानदर्शने घ्नन्तीत्यनन्तघातिनस्तान् 'पर्यवान्' ज्ञानावरणादिकर्मणः परिणतिविशेषान्, उपलक्षणं
चैतद् मुक्तिप्राप्तेः, तदर्थत्वात् सर्वप्रयासस्य । एवमनुक्ताऽपि सर्वत्र मुक्तिप्राप्तिरेव फलत्वेन द्रष्टव्या ॥७॥ सामायिकचतुर्विं-
शतिस्तवसूत्रे प्रकटे ॥८–९॥ वन्दनकेन सौभाग्यं चाप्रतिहतम्, 'आज्ञाफलम्' आज्ञासारमित्यर्थः 'दक्षिणभावं च' अनुकूल-
भावं जनयति लोकस्येति गम्यते ॥१०॥ प्रतिक्रमणेन अशबलं—शबलस्थानैरकर्बुरीकृतं चारित्रं यस्य स तथा, "अपुहुत्ते" त्ति न
विद्यते पृथक्त्वं—प्रस्तावात् संयमयोगेभ्यो वियुक्तत्वस्वरूपं यस्याऽसावपृथक्त्वः, तथा 'सुप्रणिहितः' सुष्ठु संयमे प्रणिधिमान्,
शेषं सुगमम् ॥११॥ कायोत्सर्गेण अतीतं च—इह चिरकालभावित्वेन प्रत्युत्पन्नमिव प्रत्युत्पन्नं च—आसन्नकालभावितया
अतीतप्रत्युत्पन्नं 'प्रायश्चित्तम्' इत्युपचारात् प्रायश्चित्तार्हमतीचारम् ॥१२॥ प्रत्याख्यानसूत्रं सुगमम् ॥१३॥ स्तवाः—देवेन्द्रस्त-
वादयः स्तुतयः—एकादिसप्तश्लोकान्ताः, यत उक्तम्—"[1]एगदुगत्तिसिलोगा, थुईओ अन्नेसि जाव सत्तेव । देविदत्थयमाई,
तेण परं थुत्तया होंति ॥१॥" ततश्च स्तुतयः स्तवाश्च स्तुतिस्तवाः स्तुतिशब्दस्य क्त्यन्तत्वात् पूर्वनिपातः, सूत्रे तु प्राकृतत्वाद्
व्यत्ययः, त एव मङ्गलं—भावमङ्गलरूपं स्तुतिस्तवमङ्गलं तेन ज्ञानदर्शनचारित्रात्मिका बोधिः ज्ञानदर्शनचारित्रबोधिः तल्लाभं
जनयति ॥ उक्तं च—"[2]भत्तीए जिणवराणं, परमाए खीणपेज्जदोसाणं । आरुग्गबोहिलाभं, समाहिमरणं च पावेति ॥ १ ॥"

---

१ "एकद्वित्रिश्लोकाः, स्तुतयोऽन्येषां यावत् सप्तैव । देवेन्द्रस्तवाद्यास्ततः परं स्तवा भवन्ति ॥ १ ॥" २ "भक्त्या जिनवराणां, परमया क्षीणप्रेमद्वेषाणाम् । आरोग्यबोधिलाभं, समाधिमरणञ्च प्राप्नुवन्ति ॥ १ ॥"

त्रिसप्ततिपदानां फलनिरूपणम्।

अन्तः—पर्यन्तो भवस्य कर्मणां वा तस्य क्रिया—निवर्त्तनम् अन्तक्रिया मुक्तिरित्यर्थः, ततश्च अन्तक्रियाहेतुत्वादन्तक्रिया ताम् । तद्धेतुत्वं च तद्भवेऽपि स्याद् अत आह—कल्पाः—देवलोका विमानानि—ग्रैवेयकाऽनुत्तरविमानरूपाणि तेषूपपत्तिर्यस्याः सा तथा ताम् । किमुक्तं भवति ?—अनन्तरजन्मनि विशिष्टदेवत्वफलां परम्परया तु मुक्तिप्रापिकाम् 'आराधनां' ज्ञानाद्याराधनात्मिकामाराधयति ॥ १४ ॥ कालः—प्रादोपिकादिस्तस्य प्रत्युपेक्षणा—ग्रहणप्रतिजागरणरूपा कालप्रत्युपेक्षणा तया ॥ १५ ॥ 'प्रायश्चित्तकरणेन' आलोचनादिविधानरूपेण 'मार्गः' इह ज्ञानप्राप्तिहेतुः सम्यक्त्वं, युगपदुत्पत्तावपि सम्यक्त्वस्य ज्ञानहेतुत्वात्, यदुक्तम्—"[1]कारणकज्जविभागो, दीवपगासाण जुगवजम्मे वि । जुगवुप्पन्नं पि तहा, हेऊ नाणस्स सम्मत्तं ॥ १ ॥" तत्फलं च ज्ञानं विशोधयति । ततश्च आचर्यत इत्याचारः—चारित्रं तच्च तत्फलं च—मुक्तिलक्षणमाराधयति ॥ १६ ॥ 'क्षमणया' दुःकृतानन्तरं क्षमितव्यमिदं ममेत्यादिरूपया 'प्रह्लादनभावं' चित्तप्रसत्तिरूपं 'भावविशुद्धिं' रागद्वेषविगमरूपां कृत्वा निर्भयो भवति अशेषभयहेत्वभावात् ॥ १७ ॥ स्वाध्यायेन ज्ञानावरणीयम् उपलक्षणत्वात् शेषकर्म च क्षपयति, उक्तञ्च—"[2]कम्ममसंखेज्जभवं खवेइ अणुसमयमेव उवउत्तो । अन्नयरम्मि वि जोए, सज्झायम्मि य विसेसेणं ॥ १ ॥" ॥ १८ ॥ 'वाचनया' पाठनेन अनुपशने वर्तते, कोऽर्थः ? अव्यवच्छेदं करोति, तीर्थमिह गणधरस्तस्य धर्मः—आचारः श्रुतप्रदानलक्षणः तीर्थधर्मस्तम् 'अवलम्बमानः' आश्रयन् महत्—प्रशस्यं मुक्त्यवाप्त्या पर्यवसानम्—अन्तो गम्यमानत्वात् कर्मणो यस्य स महापर्यवसानः ॥ १९ ॥ पूर्वकथितसूत्रादेः पुनः प्रच्छनं प्रतिप्रच्छनं तेन काङ्क्षा—इदमित्थमित्थं च ममाध्येतुमुचितमित्यादिका

---

१ "कारणकार्यविभागो, दीपप्रकाशयोर्युगपज्जन्मन्यपि । युगपदुत्पन्नमपि तथा, हेतुर्ज्ञानस्य सम्यक्त्वम् ॥ १ ॥" २ "कर्माऽसङ्ख्येयभविकं क्षपयत्यनुसमयमेवोपयुक्तः । अन्यतरस्मिन्नपि योगे स्वाध्याये च विशेषेण ॥ १ ॥"

वाञ्छा सैव मोहयतीति मोहनीयं 'कर्म' अनभिग्रहिकमिथ्यात्वरूपं व्युच्छिनत्ति ॥ २० ॥ परावर्त्तनया 'व्यञ्जनानि' अक्षराणि जनयति, तानि हि विगलितान्यपि गुणयतः झगित्युत्पतन्तीति उत्पादितानि उच्यन्ते, तथा तथाविधक्षयोपशमतो व्यञ्जनलब्धिं चशब्दात् पदलब्धिं पदानुसारितालक्षणाम् ॥ २१ ॥ 'अनुप्रेक्षया' चिन्तनिकया ह्रस्वस्थितिकाः प्रकरोति, स्थितिखण्डकापहारेणेति भावः, एतच्चैवं सर्वकर्मणामपि स्थितेरशुभत्वात् । यत उक्तम्—"सव्वासिं पि ठिईओ, सुहासुहाणं पि होंति असुभाओ । माणुसतिरिच्छदेवाउयं च मोत्तूण सेसाणं ॥ १ ॥" मन्दानुभावाश्च इत्यत्राऽशुभप्रकृतय एव गृह्यन्ते, शुभभावस्य शुभासु तीव्रानुभावहेतुत्वात् । उक्तं हि—"सुहपयडीण विसोहीए तिव्वमसुभाण संकिलेसेणं" ति । आयुःकर्म च स्याद् बध्नाति स्याद् नो बध्नाति, तस्य त्रिभागादिशेषायुष्कतायामेव बन्धसम्भवात् । असातवेदनीयं च कर्म चशब्दाद् अन्याश्चाशुभप्रकृतीर्नो भूयोभूयः 'उपचिनोति' निबध्नाति । भूयोभूयोग्रहणं त्वन्यतमप्रमादतः प्रमत्तसंयतस्य तद्बन्धस्यापि सम्भवात्, अनादिकम् 'अनवदग्रम्' अनन्तम्, अत एव "दीहमद्धं" ति मकारोऽलाक्षणिकः 'दीर्घाद्धं' दीर्घकालम् ॥ २२ ॥ धर्मकथया "आगमे सस्सभद्दत्ताए" त्ति आगमिष्यतीति आगमः—आगामी कालस्तस्मिन् शश्वद्भद्रतया—अनवरतकल्याणतयोपलक्षितं कर्म निबध्नाति, शुभानुबन्धि शुभमुपार्जयतीति भावः ॥ २३ ॥ श्रुतस्य 'आराधनया' सम्यगासेवनया 'न च सङ्क्लिश्यते' नैव रागादिजनितसङ्क्लेशभाग् भवति, तद्वशतो नवनवसंवेगावाप्तेः ॥२४॥ एकं च तदग्रं च—प्रस्तावात् शुभमालम्बनमेकाग्रं तस्मिन् मनःसन्निवेशना एकाग्रमनःसन्निवेशना तया ॥२५॥ 'संयमेन' पञ्चास्रवविरमणादिना, "अणण्हयत्तं" ति 'अनंहस्कत्वम्' अविद्यमानकर्मत्वम् ॥ २६ ॥ तपसा "वोयाणं"

१ "सर्वासामपि स्थितयः, शुभाऽशुभानामपि भवन्त्यशुभाः । मनुष्यतिर्यग्देवायूंषि च मुक्त्वा शेषाणाम् ॥ १ ॥" २ "शुभप्रकृतीनां विशुद्ध्या तीव्रमशुभानां सङ्क्लेशेन" ।

त्रिसप्ति-पदानां फल-निरूपणम्।

ति 'व्यवदानं' पूर्वबद्धकर्ममलापगमतो विशिष्टां शुद्धिं जनयति ॥२७॥ व्यवदानेन अक्रियं, कोऽर्थः ? व्युपरतक्रियाख्यं शुक्लध्यानचतुर्थभेदम् 'अक्रियाकः' व्युपरतक्रियाख्यशुक्लध्यानवर्त्ती भूत्वा ततः पश्चात् 'सिद्ध्यति' निष्ठितार्थो भवति, 'बुध्यते' ज्ञानदर्शनयोगाभ्यां वस्तुतत्त्वमवगच्छति, 'मुच्यते' संसाराद्, अत एव परिनिर्वातीत्यादि ॥ २८ ॥ सुखं–वैषयिकं तस्य सातः–वद्धतत्स्पृहानिवारणेनापनयनं सुखसातस्तेन 'अनुत्सुकत्वं' विषयसुखं प्रति निःस्पृहत्वम्, अनुत्सुकश्च 'अनुकम्पकः' दुःखितानुकम्पी, सुखोत्सुको हि म्रियमाणमपि प्राणिनमवलोकयन् स्वसुखरसिक एवासीत्, तथा 'अनुद्भटः' अनुल्वणः 'विगतशोकः' नैहिकार्थभ्रंशे शोचते ॥ २९ ॥ 'अप्रतिबद्धतया' मनोनिरभिष्वङ्गतया 'निःसङ्गत्वं' बहिःसङ्गाभावं 'एकः' रागादिसहचरविकलतया 'एकाग्रचित्तः' धर्मैकतानमनाः, ततश्च दिवा रात्रौ चाऽसजन्, कोऽर्थः ? सर्वदा बहिःसङ्गं त्यजन्नप्रतिबद्धश्चाऽपि 'विहरति' मासकल्पादिनोद्यतविहारेण पर्यटति ॥ ३० ॥ विविक्तानि–स्त्र्याद्यसंसक्तानि शयनासनानि उपलक्षणत्वादुपाश्रयश्च यस्याऽसौ विविक्तशयनासनस्तद्भावस्तत्ता तया 'चारित्रगुप्तिं' चरणरक्षां विविक्तः–विकृत्यादिबृंहक-वस्तुविरहित आहारो यस्य स तथा, एकान्तेन–निश्चयेन रत एकान्तरतः संयम इति गम्यते, 'मोक्षभावप्रतिपन्नः' मोक्ष एव मया साधितव्य इत्यभिप्रायवान् ॥ ३१ ॥ 'विनिवर्त्तनया' विषयेभ्य आत्मनः पराङ्मुखीकरणरूपया 'पापकर्म्मणां' ज्ञानावरणादीनां ''अकरणयाए'' त्ति आर्षत्वात् 'अकरणेन' अपूर्वानुपार्जनेन अभ्युत्तिष्ठति मोक्षायेति शेषः, पूर्वबद्धानां च निर्जरणया 'तदि'ति पापकर्म 'निवर्त्तयति' विनाशयति ॥ ३२ ॥ सम्भोगः–एकमण्डलीकभोक्तृत्वं तस्य प्रत्याख्यानं– गीतार्थावस्थायां जिनकल्पाद्यभ्युद्यतविहारप्रतिपत्त्या परिहारः सम्भोगप्रत्याख्यानं तेन 'आलम्बनानि' ग्लानतादीनि 'क्षपयति' तिरस्कुरुते, सदोद्यतत्वेन वीर्याचारमेवावलम्बते, निरालम्बस्य च आयतः–मोक्षः स एवाऽर्थः–प्रयोजनं विद्यते येषामित्यायतार्थिकाः 'योगाः' व्यापाराः 'भवन्ति' प्रबन्धतः प्रवर्त्तन्ते, नो तर्कयतीत्यादीन्येकार्थिकानि नानादेशजविनेया-

नुग्रहाय उपात्तानि, भेदो वा सूक्ष्मधियाऽभ्यूह्यः । द्वितीयां सुखशय्यामुपसम्पद्य विहरति एवंविधरूपत्वात् तस्याः ॥ ३३ ॥
उपधेः—उपकरणस्य रजोहरणमुखवस्त्रिकाव्यतिरिक्तस्य प्रत्याख्यानं उपधिप्रत्याख्यानं तेन परिमन्थः—स्वाध्यायादिक्षतिस्तद-
भावोऽपरिमन्थस्तं जनयति, तथा निरुपधिको जीवः 'निःकाङ्क्षः' वस्त्राद्यभिलाषरहितः उपधिमन्तरेण चास्य भिन्नक्रमत्वात्
'न सङ्क्लिश्यति' न च क्लेशमाप्नोति । उक्तं हि—"[1]तस्स णं भिक्खुस्स नो एवं भवति—परिजुन्ने मे वत्थे सूइं जाइ-
स्सामि संधिस्सामि उक्कसिस्सामि तुण्णिस्सामि वोक्कसिस्सामि" इत्यादि ॥ ३४ ॥ आहारप्रत्याख्यानेन जीविते आशंसा—
अभिलापो जीविताशंसा तस्याः प्रयोगः—करणं जीविताशंसाप्रयोगः तं व्यवच्छिनत्ति, आहाराधीनत्वात् जीवितस्य ।
आहारमन्तरेण न सङ्क्लिश्यति, कोऽर्थः ? विकृष्टतपोऽनुष्ठानेऽपि न बाधामनुभवति ॥ ३५ ॥ 'कषायप्रत्याख्यानेन' क्रोधा-
दिविनिवारणेन वीतरागभावं जनयति, द्वेषाभावोपलक्षणमेतत् ॥ ३६ ॥ 'योगप्रत्याख्यानेन' तन्निरोधलक्षणेन ॥ ३७ ॥
शरीरम्—औदारिकादि तत्प्रत्याख्यानेन सिद्धानामतिशयगुणा न कृष्णा न नीला इत्यादयो यस्य स सिद्धातिशयगुणस्त-
द्भावस्तत्त्वम् ॥ ३८ ॥ सहायाः—साहाय्यकारिणो यतयस्तत्प्रत्याख्यानेन—तथाविधयोग्यताभाविनाऽभिग्रहविशेष रूपेण
'एकीभावम्' एकत्वम् 'एकीभावभूतश्च' एकत्वप्राप्तश्च 'ऐकाग्र्यम्' एकालम्बनत्वं 'भावयन्' अभ्यस्यन् अल्पझञ्झः
अवाक्कलहः अल्पकषायः "अप्पतुमंतुमे" त्ति अल्पम्—अविद्यमानं त्वं त्वमिति—स्वल्पापराधिन्यपि त्वमेवं पुराऽपि कृत-
वान् त्वमेवं सदा करोषीत्यादि पुनः पुनः प्रलपनं यस्य स तथा, संयमबहुलः संवरबहुलः प्राग्वत्, अत एव 'समा-
हितः' ज्ञानादिसमाधिमांश्चापि भवति ॥ ३९ ॥ 'भक्तप्रत्याख्यानेन' भक्तपरिज्ञादिना ॥ ४० ॥ सद्भावेन—सर्वथा पुनः-
करणासम्भवात् परमार्थेन प्रत्याख्यानं सद्भावप्रत्याख्यानं सर्वसंवररूपं शैलेशीति यावत् तेन, 'अनिवृत्तिं' शुक्लध्यानचतुर्थ-

[1] "तस्य भिक्षोर्नैव भवति—परिजीर्ण-मे वस्त्रं सूचिं याचयिष्यामि सन्धास्ये उत्कर्षयिष्यामि तूणयिष्यामि व्युत्कर्षयिष्यामि"

त्रिसप्ति-
पदानां फल-
निरूपणम् ।

भेदरूपं जनयति, केवलिनः "कम्मंस" त्ति सत्कर्माणि केवलिसत्कर्माणि ॥ ४१ ॥ प्रतिः–सादृश्ये, ततः प्रतीति–स्थविरकल्पिकादिसदृशं रूपं–वेषो यस्य स तथा तद्भावस्तत्ता तया–अधिकोपकरणपरिहाररूपया लाघवमस्याऽस्तीति लाघविकस्तद्भावो लाघविकता तां द्रव्यतः स्वल्पोपकरणत्वेन भावतस्तु अप्रतिबद्धतया, लघुभूतश्च जीवोऽप्रमत्तः, तथा 'प्रकटलिङ्गः' स्थविरकल्पादिरूपेण विज्ञायमानत्वात्, 'प्रशस्तलिङ्गः' जीवरक्षणहेतुरजोहरणादिधारकत्वाद्, विशुद्धसम्यक्त्वः "सत्तसमिइसमत्ते" त्ति सत्त्वं च समितयश्च समाप्ताः–परिपूर्णा यस्य स समाप्तसत्त्वसमितिः, तत एव सर्वप्राणभूतजीवसत्त्वेषु विश्वसनीयरूपः, तत्पीडापरिहारित्वात्, अल्पप्रत्युपेक्षो जितेन्द्रियः, विपुलेन–अनेकभेदतया तपसा समितिभिश्च सर्वविषयानुगतत्वेन विपुलाभिरेव समन्वागतः–युक्तो विपुलतपःसमितिसमन्वागतश्चाऽपि भवति, पूर्वत्र समितीनां परिपूर्णत्वाभिधानेन सागस्त्यमुक्तम्, इह तु सार्वत्रिकत्वमिति न पौनरुक्त्यम् ॥ ४२ ॥ वैयावृत्यसूत्रं सुगमम् ॥ ४३ ॥ सर्वगुणाः–ज्ञानादयस्तैः सम्पन्नः तद्भावः सर्वगुणसम्पन्नता तया ॥ ४४ ॥ 'वीतरागतया' रागद्वेषविगमरूपया स्नेहः–पुत्रादिविषयस्तद्रूपाण्यनुबन्धनानि–अनुकूलबन्धनानि स्नेहानुबन्धनानि, तृष्णा–लोभस्तद्रूपाणि अनुबन्धनानि तृष्णानुबन्धनानि, ततश्च मनोज्ञेषु शब्दादिषु विरज्यते, कषायप्रत्याख्यानेनैव गतत्वेऽपि रागस्यैव सकलानर्थमूलत्वख्यापनार्थं वीतरागतायाः पृथगुपादानम् ॥ ४५ ॥ क्षान्त्या 'परीषहान्' वधादीन् जयति ॥ ४६ ॥ मुक्त्या किञ्चनाभावोऽकिञ्चनं, कोऽर्थः ? निःपरिग्रहत्वम् ॥ ४७ ॥ "अज्जवयाए" त्ति आर्जवेन 'कायर्जुकतां' कुब्जादिवेषभ्रूविकाराद्यकरणतः प्राञ्जलताम्, 'भावर्जुकतां' यदन्यद्विचिन्तयन् लोकभक्त्यादिनिमित्तम् अन्यद् वाचा भाषते कायेन वा करोति तत्परिहाररूपाम्, 'भाषर्जुकतां' यदुपहासादिहेतोरन्यदेशभाषया भाषणं तत्परित्यागात्मिकाम्, तथा 'अविसंवादनं' पराऽविप्रतारणं जनयति ॥ ४८ ॥ "मद्दवयाए" त्ति मार्दवेन गम्यमानत्वादभ्यस्यमानेन मृदुः–द्रव्यतो भावतश्चाऽवनमनशीलस्तस्य मार्दवं यत् सदा मार्दवो-

त्रिसप्ति-पदानां फल-निरूपणम् ।

न्द्रियगाऽऽशङ्कादिमालिन्याऽपनयनेन विशुद्धान् करोति ॥ ५७॥'कायसमाधारणया' संयमयोगेषु शरीरस्य सम्यग्व्यवस्थापनरूपया 'चारित्रपर्यवान्' चारित्रभेदान् विशोधयति, तदुन्मार्गप्रवृत्तित एव प्रायस्तेषामतीचारकालुष्यसम्भवात्, तान् विशोध्य यथाख्यातचारित्रं 'विशोधयति' सर्वथाऽप्यसत उत्पत्त्यसम्भव इति पूर्वमपि कथञ्चित् सदेव तत् चारित्रमोहोदयमलिनं तन्निर्जरणेन निर्मलीकुरुते ॥५८॥ ज्ञानमिह प्रस्तावात् श्रुतज्ञानं तत्सम्पन्नतया 'सर्वभावाऽभिगमं' सर्वपदार्थज्ञानं जनयति, चतुरन्ते संसारकान्तारे 'न विनश्यति' न मुक्तिमार्गाद् विशेषेण दूरीभवति । अमुमेवार्थं दृष्टान्तद्वारेण स्पष्टतरमाह—'यथे'त्यादि, यथा सूचिः ससूत्रा पतिता न विनश्यति, तथा जीवः सश्रुतः संसारे न विनश्यति । अत एव ज्ञानं च—अवध्यादि विनयश्च तपश्च चारित्रयोगाश्च—चारित्रव्यापारा ज्ञानविनयतपश्चारित्रयोगास्तान् प्राप्नोति, तथा स्वसमयपरसमययोः सङ्घातनीयः—प्रमाणपुरुषतया मीलनीयः स्वसमयपरसमयसङ्घातनीयो भवति । इह च स्वसमयपरसमयशब्दाभ्यां तद्वेदिनः पुरुषा उच्यन्ते, तेष्वेव मीलनसम्भवात् ॥५९॥ 'दर्शनसम्पन्नतया' क्षायोपशमिकसम्यक्त्वसमन्विततया भवहेतुभूतं मिथ्यात्वं भवमिथ्यात्वं तस्य च्छेदनं—क्षपणं भवमिथ्यात्वच्छेदनं करोति, कोऽर्थः? क्षायिकसम्यक्त्वमवाप्नोति, ततश्च 'परमि'त्युत्तरकालम् उत्कृष्टतस्तस्मिन्नेव भवे मध्यमजघन्यापेक्षया तृतीये तुर्ये वा जन्मनि केवलज्ञानमाप्तौ 'न विध्यायति' ज्ञानदर्शनप्रकाशाभावरूपं विध्यानं नाऽवाप्नोति, किन्तु 'अनुत्तरेण' क्षायिकत्वात् प्रधानेन ज्ञानदर्शनेनाऽऽत्मानं 'संयोजयन्' प्रतिसमयमपरापरेणोपयोगरूपतयोत्पद्यमानेन घटयन्, संयोजनं च भेदेऽपि स्याद् अत आह—सम्यग् 'भावयन्' तेनाऽऽत्मानमात्मसाद् नयन् विहरति भवस्थकेवलितया ॥ ६० ॥ चारित्रसम्पन्नता सूत्रम्, इन्द्रियसूत्राणि पञ्च, कषायसूत्राणि च चत्वारि सुगमानि ॥ ६१-६२-६३-६४-६५-६६-६७-६८-६९-७० ॥ प्रेम च—रागरूपं द्वेषश्च मिथ्यादर्शनं च प्रेमद्वेषमिथ्यादर्शनानि तद्विजयेन ज्ञानदर्शनचारित्राराधनायाम् 'अभ्युत्तिष्ठति' उद्य-

त्रिसप्तिपदानां फलनिरूपणम् ।

च्छति, प्रेमादिनिमित्तत्वात् तद्विराधनायाः, ततश्चाष्टविधस्य कर्मणो मध्य इति गम्यते, कर्मग्रन्थिः—अतिदुर्भेद्घातिकर्मरूपस्तस्य विमोचना—क्षपणा कर्मग्रन्थिविमोचना तस्यै, चस्य गम्यमानत्वात् तदर्थं चाभ्युत्तिष्ठति, अभ्युत्थाय च किं करोति ? इत्याह—'तत्प्रथमतया' तत्पूर्वतया न हि तत् पुरा क्षपितमासीदिति आनुपूर्व्या अनतिक्रमेण यथानुपूर्वि अष्टाविंशतिविधं मोहनीयं कर्म 'उद्घातयति' क्षपयति, ततश्च पञ्चविधं ज्ञानावरणीयं नवविधं दर्शनावरणीयं पञ्चविधं अन्तरायम् "एए" त्ति एतानि त्रीण्यपि "कम्मंसे" त्ति सत्कर्माणि युगपत् क्षपयति, 'ततः' इति क्षपणातः पश्चात् 'अनुत्तरं' नाऽस्मादुत्तरं प्रधानं ज्ञानमस्तीत्यनुत्तरम्, 'अनन्तम्' अविनाशितया कृत्स्नवस्तुविषयत्वात्, 'परिपूर्णं' सकलस्वपरपर्यायपरिपूर्णवस्तुप्रकाशकत्वात्, 'निरावरणम्' अशेषावरणविगमात्, 'वितिमिरं' तस्मिन् सति कचिदप्यज्ञानतिमिराभावात्, 'विशुद्धं' सकलदोषाभावात्, 'लोकाऽलोकप्रभासकं' तत्स्वरूपप्रकाशकत्वात् केवलवरज्ञानदर्शनं समुत्पादयति, स च यावत् सयोगी भवति तावच्च किम् ? इत्याह—ईर्या—गतिस्तस्याः पन्था यदाश्रिता सा भवतित स्मिन् भवमैर्यापथिकम्, उपलक्षणं च पथिग्रहणम्, तिष्ठतोऽपि सयोगस्य ईर्यासम्भवात् । सम्भवन्ति हि सयोगितायां केवलिनोऽपि हि सूक्ष्मा गात्रसञ्चाराः, तदेवं पथिस्थस्तिष्ठन् ईर्यापथिकं कर्म्म बध्नाति, सुखयतीति सुखः स्पर्शः—आत्मप्रदेशैः सह संश्लेषो यस्य तत् सुखस्पर्शं द्विसमयस्थितिकं, तत् प्रथमसमये बद्धं द्वितीयसमये वेदितं तृतीयसमये 'निर्जीर्णं' परिशटितं, अतश्च तद् 'बद्धं' जीवप्रदेशैः श्लिष्टं 'स्पृष्टं' मसृणमणिकुड्यापतितशुष्कस्थूलचूर्णवत्, अनेन विशेषणद्वयेन तस्य निधत्तनिकाचितावस्थयोरभावमाह, 'उदीरितम्' उदयप्राप्तम् उदीरणायास्तत्रासम्भवात्, 'वेदितं' तत्फलसुखाऽनुभवनेन, 'निर्जीर्णं' क्षयमुपगतं, "सेयाले" त्ति सूत्रत्वाद् 'एष्यत्काले' चतुर्थसमयादौ अकर्म चापि भवति, तज्जीवापेक्षया पुनस्तस्य तथाविधपरिणामाभावात् ॥७१॥ शैलेश्यकर्मताद्वारद्वयमर्थतो व्याचिख्यासुराह—'अथे'ति केवलावाप्त्यनन्तरम् आयुष्कं पाल-

त्रिसप्ति-पदानां फल-निरूपणम् ।

यित्वा अन्तर्मुहूर्त्ताऽवशेषायुष्को योगनिरोधं "करेमाणे" त्ति करिष्यमाणः सूक्ष्मक्रियम् अप्रतिपाति 'शुक्लध्यानं' तृतीयभे-
दरूपं ध्यायन् तत्प्रथमतया मनोयोगं निरुणद्धि, वाग्योगं निरुणद्धि, काययोगं निरुणद्धि, आनापानौ—उच्छ्वास-निःश्वासौ
तन्निरोधं करोति, सकलकाययोगनिरोधोपलक्षणमेतत्, तत ईषदिति—स्वल्पप्रयत्नापेक्षया पञ्चानां ह्रस्वाक्षराणां 'अ इ उ
ऋ लृ' इत्येवंरूपाणामुच्चारः—भणनं तस्याऽद्धा—कालः ईषत्पञ्चाक्षरोच्चारणाद्धा तस्यां च 'णं' प्राग्वत्, अनगारः समुच्छिन्न-
क्रियम् अनिवर्त्ति 'शुक्लध्यानं' चतुर्थभेदरूपं ध्यायन् वेदनीयमायुर्नाम गोत्रं चैतानि चत्वार्यपि, "कम्मंसे" त्ति सत्कर्माणि
युगपत् क्षपयति ॥७२॥ 'ततः' वेदनीयादिक्षयानन्तरं "ओरालियकम्माइं च" त्ति 'औदारिक-कार्मणे' शरीरे, चशब्दात्
तैजसं च सर्वाभिः विशेषेण—प्रकर्षतो हानयः—त्यागा विप्रहाणयः व्यक्त्यपेक्षं बहुवचनं ताभिः, किमुक्तं भवति ?—
सर्वथा शाटनेन 'विप्रहाय' परिशाट्य ऋजुः—अवक्रा श्रेणिः—आकाशप्रदेशपङ्क्तिस्तां प्राप्त ऋजुश्रेणिप्राप्तः, अस्पृशद्गतिरिति,
कोऽर्थः ? स्वावगाहातिरिक्तनभःप्रदेशान् अस्पृशन् एकसमयेन 'अविग्रहेण' अवक्रेण अन्वयव्यतिरेकाभ्यामुक्तोऽर्थः
स्पष्टतरो भवतीति ऋजुश्रेणिप्राप्त इत्यनेन गतार्थत्वेऽपि पुनरभिधानम्, 'तत्रे'ति विवक्षिते मुक्तिपद इत्यर्थः गत्वा साकारो-
पयुक्तः सिध्यतीति प्राग्वत् ॥ ७३ ॥ उपसंहर्तुमाह—

**एसो खलु सम्मत्तपरक्कमस्स अज्झयणस्स अट्ठे समणेणं भगवया महावीरेणं**
**आघविए पन्नविए परूविए दंसिए निदंसिए उवदंसिए त्ति बेमि ॥ ७४ ॥**

व्याख्या—'एषः' अनन्तरोक्तः 'खलु' निश्चये सम्यक्त्वपराक्रमस्याध्ययनस्यार्थः श्रमणेन भगवता **महावीरेण**
"आघविए" त्ति आर्षत्वाद् 'आख्यातः' सामान्यविशेषपर्यायाभिव्याप्तिकथनेन, 'प्रज्ञापितः' हेतुफलादिप्रज्ञापनेन,

'प्ररूपितः' स्वरूपकथनेन, 'दर्शितः' नानाविधभेददर्शनेन, 'निदर्शितः' दृष्टान्तोपन्यासेन, 'उपदर्शितः' उपसंहारद्वारेण, 'इति' परिसमाप्तौ ब्रवीमीति पूर्ववत् ॥

इति श्रीनेमिचन्द्रसूरिविरचितायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां सम्यक्त्वपराक्रमाख्यमेकोनत्रिंशदध्ययनं समाप्तम् ॥

# अथ त्रिंशं तपोमार्गगत्याख्यमध्ययनम् ।

'अनन्तराध्ययनेऽप्रमाद उक्तः, तद्वता च तपो विधेयमिति तत्स्वरूपमुच्यते' इति सम्बद्धस्य त्रिंशत्तमाध्ययनस्य तपोमार्गगतिनामकस्याऽऽदिसूत्रम्—

अनाश्रव-जीव-स्वरूपम् ।

**जहा उ पावगं कम्मं, रागदोससमज्जियं । खवेइ तवसा भिक्खू, तमेगग्गमणो सुण ॥ १ ॥**

व्याख्या—'यथा' येन प्रकारेण, 'तुः' अवधारणार्थो भिन्नक्रमश्च, क्षपयति एवेत्यत्र योज्यते, शेषं स्पष्टमिति सूत्रार्थः ॥ १ ॥ इह चानाश्रवेणैव जीवेन कर्म क्षिप्यते इति यथाऽसौ भवति तथाऽऽह—

**पाणवह-मुसावाया, अदत्त-मेहुण-परिग्गहा विरओ । राईभोयणविरओ, जीवो हवइ अणासवो २**

**पंचसमिओ तिगुत्तो, अकसाओ जिइंदिओ । अगारवो य निस्सल्लो, जीवो हवइ अणासवो ॥ ३ ॥**

व्याख्या—सुगममेव ॥ २-३ ॥ एवंविधश्च यादृशं कर्म यथा क्षपयति आदराधानाय पुनः शिष्याभिमुखीकरणपूर्वकं दृष्टान्तद्वारेण तथाऽऽह—

सदृष्टान्तं कर्मक्षय-कारणं तपः ।

**एएसिं तु विवच्चासे, रागद्दोससमज्जियं । खवेइ उ जहा भिक्खू, तमेगग्गमणो सुण ॥ ४ ॥**

**जहा महातलागस्स, सन्निरुद्धे जलागमे । उस्सिंचणाए तवणाए, कमेणं सोसणा भवे ॥ ५ ॥**

**एवं तु संजयस्सावि, पावकम्मनिरासवे । भवकोडीसंचियं कम्मं, तवसा णिज्जरिज्जई ॥ ६ ॥**

व्याख्या—'एतेषां' प्राणिवधविरत्यादीनां समित्यादीनां च विपर्यासे सति ॥ "उस्सिंचणाए" त्ति 'उत्सिञ्चनेन' अरघट्ट-

1 रिरउ इति प्राणिवधादिभिः प्रत्येकं योज्यते ।

षष्ट्यादिभिः 'तपनेन' रविकरैः॥ 'पापकर्मनिराश्रवे' पापकर्मणामाऽऽस्रवाभावे भवकोटीसञ्चितम् अतिबहुत्वोपलक्षणमेतत्, कर्म तपसा निर्जीर्यते। शेषं स्पष्टमिति सूत्रत्रयार्थः॥४-५-६॥ तपसा कर्म निर्जीर्यते इत्युक्तम् अतो भेदतस्तत्स्वरूपमाह—

सो तवो दुविहो वुत्तो, बाहिरब्भिंतरो तहा। बाहिरो छव्विहो वुत्तो, एवमब्भिंतरो तवो ॥ ७ ॥

व्याख्या—सुगमम्। नवरम्—लोकप्रतीतत्वात् कुतीर्थिकैश्च स्वाभिप्रायेणाऽऽसेव्यमानत्वाद् बाह्यं तदितरच्चाऽभ्यन्तरमुक्तम्॥ ७ ॥ तत्र यथा बाह्यं षड्विधं तथाऽऽह—

बाह्यतपसः स्वरूपम्।

अणसणमूणोयरिया, भिक्खायरिया य रसपरिच्चाओ। कायकिलेसो संलीणया य बज्झो तवो होइ ८

व्याख्या—स्पष्टम्॥ ८ ॥ एतेषां स्वरूपमाह—

इत्तरिय मरणकाला य, अणसणा दुविहा भवे। इत्तरिया सावकंखा, निरवकंखा उ बिइज्जिया ॥९॥

जो सो इत्तरियतवो, सो समासेण छव्विहो। सेढितवो पयरतवो, घणो य तह होइ वग्गो य ॥ १० ॥

तत्तो य वग्गवग्गो, य पंचमो छट्ठओ पइन्नतवो। मणइच्छियचित्तत्थो, नायव्वो होइ इत्तरिओ ॥११॥

जा साऽणसणा मरणे, दुविहा सा वियाहिया। सवीयारमवीयारा, कायचिट्ठं पई भवे ॥ १२ ॥

अहवा सपरिकम्मा, अपरिकम्मा य आहिया। नीहारिमणीहारी, आहारच्छेओ य दोसु वि ॥ १३ ॥

व्याख्या—इत्वरमेव इत्वरकं—स्वल्पकालं मरणावसानः कालो यस्य तद् मरणकालं 'चः' समुच्चये, अनशनं द्विविधं भवेत्, स्त्रीलिङ्गनिर्देशः सर्वत्र प्राकृतत्वात्। इत्वरं सहाऽवकांक्षया—घटिकाद्वयाद्युत्तरकालं भोजनाभिलाषरूपया वर्त्तते सावकाङ्क्षम्। निरवकाङ्क्षं, 'तुः' भिन्नक्रमे, ततः द्वितीयं पुनः मरणकालम्॥ यत् तद् इत्वरकं तपः—इत्वरानशनरूपं तत् समासेन षड्विधम्। षड्विधत्वमेवाह—"सेढितवो" इत्यादि, अत्र च श्रेणिः—पङ्क्तिस्तदुपलक्षितं तपः श्रेणितपः, तच्चतुर्थादिक्र-

बाह्यतपसः स्वरूपम् ।

मेण क्रियमाणं पण्मासान्तं परिगृह्यते । तथा श्रेणिरेव श्रेण्या गुणिता प्रतरतप उच्यते, इह चाऽव्यामोहार्थं चतुर्थषष्ठाष्टमदशमात्मपदचतुष्टयात्मिका श्रेणिर्विवक्ष्यते, सा च चतुर्भिर्गुणिता षोडशपदात्मकः प्रतरो भवति । अयं चाऽऽयामतो विस्तरतश्च तुल्य इत्यस्य स्थापनोपाय उच्यते—"एकाद्याद्या व्यवस्थाप्याः, पङ्क्त्यो हि यथाक्रमम् । द्वितीयाद्याः क्रमाच्चैताः, पूर्वेदेकादिभिः ॥ १ ॥" स्थापना चेयम्—

| | | | |
|---|---|---|---|
| १ | २ | ३ | ४ |
| २ | ३ | ४ | १ |
| ३ | ४ | १ | २ |
| ४ | १ | २ | ३ |

'घनः' इति घनतपः, 'चः' पूरणे, 'तथे'ति समुच्चये, 'भवती'ति च क्रिया प्रतितपोभेदं योजनीया । अत्र षोडशपदात्मकः प्रतरः पदचतुष्टयात्मिकया श्रेण्या गुणितो घनो भवति, आगतं चतुःषष्टिः ६४, स्थापना पूर्विकैव, नवरं बाहल्यतोऽपि पदचतुष्टयात्मकत्वं विशेषः, एतदुपलक्षितं तपो घनतप उच्यते । 'चः' समुच्चये । 'तथा भवति वर्गश्च' इति इहापि प्रक्रमाद्वर्ग इति वर्गतपः, तत्र च घन एव घनेन गुणितो वर्गो भवति, ततश्चतुःषष्टिः चतुःषष्ट्यैव गुणिता जातानि षण्णवत्यधिकानि चत्वारि सहस्राणि, एतदुपलक्षितं तपो वर्गतपः ॥ 'ततश्च' वर्गतपसोऽनन्तरं 'वर्गवर्गः' इति वर्गवर्गतपः 'तुः' समुच्चये पञ्चमम्, अत्र वर्ग एव यदा वर्गेण गुण्यते तदा वर्गवर्गो भवति, यथा चत्वारि सहस्राणि षण्णवत्यधिकानि तावतैव गुणितानि जातेका कोटिः सप्तषष्टिर्लक्षाः सप्तसप्ततिसहस्राणि द्वे शते षोडशाधिके, अङ्कतोऽपि १६७७७२१६, एतदुपलक्षितं तपो वर्गवर्गतप इत्युच्यते । एवं पदचतुष्टयमाश्रित्य श्रेण्यादितपो दर्शितम् । एतदनुसारेण पञ्चादिपदेष्वपि एतत्परिभावना कार्या । षष्ठकं 'प्रकीर्णतपः' यत् श्रेण्यादिनियतरचनाविरहितं स्वशक्त्यपेक्षं यथाकथञ्चिद् विधीयते, तच्च नमस्कारसहितादि पूर्वपुरुषाचरितं यवमध्य-वज्रमध्य-चन्द्रप्रतिमादि । इत्थं भेदानभिधायोपसंहारमाह—"मणइच्छियचित्तत्थो" त्ति मनस ईप्सितः—इष्टः चित्रः—अनेकप्रकारः अर्थः—स्वर्गापवर्गादिः तेजोलेश्यादिर्वा यस्मात् तद् मनईप्सितचित्रार्थं ज्ञातव्यं भवति 'इत्वरकं' प्रक्रमाद् अनशनाख्यं तपः ॥ सम्प्रति मरणकालमनशनं

वक्तुमाह—"जा साऽणसण" त्ति यत्तदनशनं 'मरणे' मरणावसरे द्विविधं तद् व्याख्यातम् । तद् द्वैविध्यमेवाह—सह विचारेण–चेष्टात्मकेन वर्त्तते यत् तत् सविचारं, तद्विपरीतमविचारं, 'कायचेष्टाम्' उद्वर्त्तनादिककायप्रवीचारं 'प्रती' ति आश्रित्य भवेत् । तत्र सविचारं भक्तप्रत्याख्यानमिङ्गिनीमरणं च । तथा च भक्तप्रत्याख्यानस्वरूपम्—"वियडणमब्भुट्ठाणं, उचियं संलेहणं च काऊण । पच्चक्खइ आहारं, तिविहं व चउव्विहं वा वि ॥ १ ॥ उव्वत्तइ परियत्तइ, सयमन्नेणावि कारए किंचि । जत्थ समत्थो नवरं, समाहिजणयं अपडिबद्धो ॥२॥" तथा इङ्गिनीमरणस्वरूपम्—"पच्चक्खइ आहारं, चउव्विहं नियमओ गुरुसगासे । इंगियदेसम्मि तहा, चिट्ठं पि हु इंगियं कुणइ ॥ १ ॥ उव्वत्तइ परियत्तइ, काइयमाईसु होइ उ विभासा । किच्चं पि अप्पण च्चिय, जुंजइ नियमेण धीवलिओ ॥२॥" अविचारं तु पादपोपगमनम्, तथा च तद्विधिः—"अभिवंदिऊण देवे, जहाविहिं सेसए य गुरुमाई । पच्चक्खाइत्तु तओ, तयंतिए सव्वमाहारं ॥ १ ॥ गिरिकंदरमाईसुं, दंडाययमाइठाणमिह ठाउं । जावज्जीवं चिट्ठइ, निच्चेट्ठो पायवसमाणो ॥२॥" पुनर्द्वैविध्यमेव प्रकारान्तरेणाह—'अथवे'ति प्रकारान्तरसूचने, 'सपरिकर्म' स्थाननिपदनादिरूपपरिकर्मयुक्तम्, 'अपरिकर्म च' तद्विपरीतम् आख्यातम् । तत्र सपरिकर्म भक्तप्रत्याख्यानम् इङ्गिनीमरणं च, अपरिकर्म च पादपोपगमनम्, तथा चागमः—"समविसमम्मि य पडिओ, अच्छइ

१ विचारश्च कायवाङ्मनोभेदात्त्रिधेति तद्विशेषपरिज्ञानार्थमाह । २ "आलोचनमभ्युत्थानमुचितां संलेखनां च कृत्वा । प्रत्याख्याति आहारं, त्रिविधं वा चतुर्विधं वाऽपि ॥१॥ उद्वर्त्तते परिवर्त्तते स्वयमन्येनापि कारयेत् किञ्चित् । यत्र समर्थो नवरं, समाधिजनकमप्रतिबद्धः ॥ २ ॥" ३ "प्रत्याख्याति आहारं, चतुर्विधं नियमतो गुरुसकाशे । इङ्गितदेशे तथा चेष्टामपि खल्विङ्गितां करोति ॥१॥ उद्वर्त्तते परिवर्त्तते कायिक्यादिषु भवति तु विभाषा । कृत्यमप्यात्मनैव युनक्ति नियमेन धृतिबलिकः ॥ २ ॥" ४ "अभिवन्द्य देवान् यथाविधि शेषांश्च गुर्वादीन् । प्रत्याख्याय ततस्तदन्तिके सर्वमाहारम् ॥ १ ॥ गिरिकन्दरादिषु दण्डायतादिस्थानमिह स्थित्वा । यावज्जीवं तिष्ठति, निश्चेष्टः पादपसमान. ॥२॥" ५ "समे विषमे च पतितो, आस्ते स पादप इव निष्कम्पः । चलनं परप्रयोगात्, नवरं द्रुमस्येव तस्य भवेत् ॥१॥"

वाह्यतपसः स्वरूपम् ।

मो पायवो व्व निप्पंपो । चलणं परप्पओगा, नवर दुमस्सेव तस्स भवे ॥ १ ॥" यद्वा परिकर्म—संलेखना सा यत्राऽस्ति तत् सपरिकर्म, तद्विपरीतं त्वपरिकर्म । तत्र चान्याघाते त्रयमप्येतत्सूत्रार्थोभयनिष्ठितो निष्पादितशिष्यः संलेखनापूर्वकमेव विधत्ते, अन्यथाऽऽर्त्तध्यानसम्भवात् । उक्तञ्च—"देहम्मि असंलिहिए, सहसा धाऊहिं खिज्जमाणेहिं । जायइ अट्टज्झाणं, सरीरिणो चरिमकालम्मि ॥१॥" यत्पुनर्व्याघाते संलेखनामविधायैव क्रियते भक्तप्रत्याख्यानादि तद् अपरिकर्म, उक्तञ्च—"अभिघाओ वा विज्जूगिरिभित्तीकोणपाय वा होज्जा । संवद्धहत्थपायादओ व वाएण होज्जाहि ॥ १ ॥ एमाइकारणेहिं, वाघाइम मरण होइ नायव्वं । परिकम्ममकाऊणं पच्चक्खाई तओ भत्तं ॥२॥" तथा निर्हरणं निर्हारः—गिरिकन्दरादिगमनेन ग्रामादेर्बहिर्गमनं तद्विद्यते यत्र तन्निर्हारि, तदन्यदनिर्हारि यदुत्थातुकामे व्रजिकादौ विधीयते । एतच्च प्रकारद्वयमपि पादपोपगमनविषयम्, तत्प्रस्ताव एवागमेऽस्याभिधानात् । यदुक्तम्—"पाउवगमणं दुविहं नीहारिं चेव तह अनीहारिं । बहिया गामाईणं, गिरिकंदरमाइ नीहारिं ॥ १ ॥ वइयाइसु जं अंतो, उट्ठेउमणाण ठाइ अणिहारिं । तम्हा पायवगमणं, जं उवमा पायवेणेत्थ ॥ २ ॥" 'आहारच्छेदश्च' अशनादित्यागः 'द्वयोरपि' सपरिकर्माऽपरिकर्मणोर्निर्हार्यनिर्हारिणोश्च समं इति शेषः, इति सूत्रपञ्चकार्थः ॥ ९-१०-११-१२-१३ ॥ उक्तमनशनम् । ऊनोदरतामाह—

**ओमोयरणं पंचहा, समासेण वियाहियं । दव्वओ खित्तकालेणं, भावेणं पज्जवेहि य ॥ १४ ॥**

**जो जस्स उ आहारो, तत्तो ओमं तु जो करे । जहन्नेणेगसित्थाई, एवं दव्वेण ऊ भवे ॥ १५ ॥**

---

१ "देहेऽसंलिखिते सहसा, धातुषु क्षीयमाणेषु । जायते आर्त्तध्यानं, शरीरिणश्चरमकाले ॥ १ ॥" २ "अभिघातो वा गिरिविद्युभित्तिकोणकपातो वा भवेत् । सम्बद्धहस्तपादादयो वा वातेन भवेयुः ॥ १ ॥ एवमादिकारणैर्व्याघातिमं मरणं भवति ज्ञातव्यम् । परिकर्माऽकृत्वा, प्रत्याख्याति ततो भक्तम् ॥२॥" ३ "पादपोपगमनं द्विविध, निर्हारि चैव तथा अनिर्हारि । बहिर्ग्रामादीनां गिरिकन्दरादौ निर्हारि ॥१॥ व्रजिकादिषु यदन्त, उत्थातुमनसि तिष्ठति अनिर्हारि । तस्मात् पादपोपगमनं, यदुपमा पादपेनात्र ॥ २ ॥"

गामे नगरे तह रायहाणिनिगमे य आगरे पल्ली । खेडे कब्बड-दोणमुह-पट्टण-मडंब-संबाहे ॥१६॥
आसमपए विहारे, सन्निवेसे समायघोसे य । थलिसेणाखंधारे, सत्थे संवट्टकोट्टे य ॥ १७ ॥
वाडेसु य रत्थासु य, घरेसु वा एवमित्तियं खित्तं । कप्पइ उ एवमाई, एवं खित्तेण ऊ भवे ॥१८॥
पेडा य अद्धपेडा गोमुत्ति पयंगवीहिया चेव । संबुक्कावट्टाऽऽययगंतुंपच्चागया छट्ठा ॥ १९ ॥
दिवसस्स पोरिसीणं, चउण्हं पि उ जत्तिओ भवे कालो । एवं चरमाणो खलु, कालोमाणं मुणेयव्वं २०
अहवा तइयपोरिसीए, ऊणाए घासमेसंतो । चउभागूणाए वा, एवं कालेण ऊ भवे ॥ २१ ॥
इत्थी वा पुरिसो वा, अलंकिओ वाऽणलंकिओ वा वि । अण्णयरवयत्थो वा, अन्नयरेणं व वत्थेणं ॥२२
अण्णेण विसेसेणं, वण्णेणं भावमणुमुयंते उ । एवं चरमाणो खलु, भावोमाणं मुणेयव्वं ॥ २३ ॥
दव्वे खित्ते काले, भावम्मि य आहिया उ जे भावा । एएहिं ओमचरओ, पज्जवचरओ भवे भिक्खू २४

व्याख्या—तत्र अवमं-न्यूनमुदरमस्य अवमोदरस्तद्भावः 'अवमौदर्यं' न्यूनोदरता पञ्चधा समासेन व्याख्यातम् । 'द्रव्यतः' इति द्रव्याद्, हेतौ पञ्चमी, क्षेत्रं च कालश्च क्षेत्रकालं तेन, भावेन 'पर्यायैश्च' उपाधिभूतैः ॥ तत्र द्रव्यत आह— यो यस्य 'तुः' पूरणे, 'आहारः' द्वात्रिंशत्कवलमानः, 'ततः' स्वाहारात् 'अवमम्' ऊनं, 'तुः' प्राग्वद् यः कुर्याद् भुञ्जान इति शेषः, यत्तदोर्नित्याभिसम्बन्धात् तस्य 'एवम्' अमुना प्रकारेण 'द्रव्येण' उपाधिभूतेन भवेदिति सण्टङ्कः, अवमौदर्यमिति प्रक्रमः । एतच्च जघन्येन एकसिक्थं—यत्रैकमेव सिक्थं भुज्यते तदादि, आदिशब्दात् सिक्थद्वयादारभ्य यावदेकत्रिंशत्कवलभोजनम् । सम्प्रदायः पुनरत्र—"अप्पाहारोमोयरिया जहन्नेणेगकवला, उक्कोसेणं अट्ठ कवला" इत्यादि,



बाह्यतपसः स्वरूपम् ।

उक्तं च—*"अप्पाहार अवड्ढा दुभाग पैत्ता तहेव किंचूणा । अट्ठ दुवालस सोलस, चउवीस तहेक्कतीसा य ॥ १ ॥"

क्षेत्रावमौदर्यमाह—ग्रामे नगरे, तथा राजधानी च निगमश्च—प्रभूततरवणिजां निवासो राजधानीनिगमं तस्मिन्, आकरे

पल्ल्यां 'खेटे' पांशुप्राकारप्रतिक्षिप्ते, कर्वटं—कर्वटजनावासः, द्रोणमुखं—जलस्थलनिर्गम-प्रवेशं यथा ताम्रलिप्तिः, पत्तनं—

जलपत्तनं स्थलपत्तनं च, तत्राद्यं जलमध्यवर्त्ति, इतरन्निर्जलभूभागभावि, मडम्बम्—अविद्यमानार्द्धतृतीययोजनान्तर्ग्रामं,

सम्बाधं—प्रभूतचातुर्वर्ण्यनिवासः, कर्वटादीनां समाहारद्वन्द्वस्तस्मिन् ॥ 'आश्रमपदे' तापसावसथाद्युपलक्षितस्थाने, विहारः—

देवगृहं भिक्षुनिवासो वा तत्प्रधानो ग्रामादिरपि विहारस्तस्मिन्, 'सन्निवेशे' यात्रादिसमायातजनावासे, समाजः—पथिक-

समूहः घोषः—गोकुलम् अनयोः समाहारस्तस्मिन्, 'च:' समुच्चये, स्थल्याम्—उच्चभूभागे सेना—चतुरङ्गबलसमूहः स्कन्धा-

वारः स एवाऽशेषखेडाद्युपलक्षितः अनयोः समाहारस्तस्मिन्, 'सार्थे' प्रतीते, संवर्त्तः—भयत्रस्तजनस्थपणिः कोट्टं—

प्राकारोऽनयोः समाहारस्तस्मिन्, 'च:' समुच्चये, क्षेत्रप्रस्तावाच्चेह समाजादिषु क्षेत्रमेवोपलक्ष्यते ॥ 'वाटेषु पाटेषु वा'

वृत्त्यादिपरिक्षिप्तगृहसमूहात्मकेषु, 'रथ्यासु' सेरिकासु, गृहेषु वा, 'एवमि'ति अनेन हृदयस्थप्रकारेण "एत्तियं" ति एतावद्

विवक्षातो नियतपरिमाणं क्षेत्रं कल्पते पर्यटितुमिति शेषः, 'तु:' पूरणे, एवमादि, आदिशब्दाद् गृहशालादिपरिग्रहः,

'एवम्' अमुना प्रकारेण 'क्षेत्रेणे'ति क्षेत्रहेतुकं 'तु:' पूरणे भवेद् अवमौदर्यमिति प्रक्रमः ॥ पुनरन्यथा क्षेत्रावमौदर्य-

माह—"पेडे"त्यादि, अत्र च सम्प्रदायः—पेडा पेडिका इव चउकोणा, अद्धपेडा इमीए चेव अद्धसंठिया घरपरिवाडी,

गोमुत्तिया वंकावलिया, पयंगविही अणियया पयंगुड्डाणसरिसा, "संबुक्कावट्ट" त्ति शम्बूकः—शङ्खस्तद्वदावर्त्तो यस्यां सा

---

* "अल्पाहाराऽपार्धा द्विभागा प्राप्ता तथैव किञ्चिदूना । अष्ट द्वादश षोडश चतुर्विंशतिस्तथैकत्रिंशच्च ॥१॥" १ "पेडा" पेटिका इव चतुष्कोणा, 'अर्धपेटा' अस्यामेव अर्धसंस्थिता गृहपरिपाटी, 'गोमूत्रिका' वक्रावलिका, 'पतङ्गवीथिका' अनियता पतङ्गोड्डयनसदृशा ।

बाह्यतपसः स्वरूपम् ।

बाह्यतपसः स्वरूपम् ।

"अब्भिंतरसंबुक्का बाहिरसंबुक्का य, तत्थ अब्भिंतरसंबुक्काए संखनामि-
शम्बूकावर्त्ता, सा च द्विधा—यतः सम्प्रदायः—
खेत्तोवमाए आगिईए अंतो आढवइ बाहिरओ सन्नियट्टइ, इयरीए विवज्जओ"[1] । "आययगंतुंपच्चागय" त्ति अत्रायतं–दीर्घं
प्राञ्जलमित्यर्थः, तथा च सम्प्रदायः—तत्थ उज्जुयं गंतूण नियट्टइ "छट्ठ" त्ति षष्ठी । नन्वत्र गोचररूपत्वाद्भिक्षाचर्यात्व-
मेवासां तत्कथमिह क्षेत्रावमौदर्यरूपतोक्ता ? उच्यते—अवमौदर्यं ममास्तु इत्यभिसन्धिना विधीयमानत्वाद् अवमौदर्य-
व्यपदेशोऽप्यदुष्ट एव, दृश्यते हि निमित्तभेदादेकत्राऽपि देवदत्तादौ पितृपुत्राद्यनेकव्यपदेशः । एवं पूर्वत्र ग्रामादिविषयस्यो-
त्तरत्र कालादिविषयस्य च नैयत्यस्याऽभिग्रहत्वेन भिक्षाचर्यात्वप्रसङ्गे इदमेवोत्तरं वाच्यम् ॥ कालावमौदर्यमाह—दिवसस्य
पौरुषीणां चतसृणामपि, 'तुः' पूरणे, यावान् भवेत् 'कालः' अभिग्रहविषय इति शेषः, एवमि'त्येवंप्रकारेण प्रक्रमात्
कालेन "चरमाण" त्ति सुब्व्यत्ययात् चरतः 'खलु' निश्चितं "कालोमाण" त्ति कालेन–हेतुना अवमत्वं प्रस्तावाद् उद-
रस्य कालावमत्वम्, कोऽर्थः ? कालावमौदर्यं मुणितव्यम् ॥ एतदेव प्रकारान्तरेणाह—अथवा तृतीयपौरुष्याम् ऊनायां
'ग्रासम्' आहारं "एसंतो" त्ति सुब्व्यत्ययाद् एषयतः, न्यूनत्वमेव विशेषत आह—चतुर्भागोनायां, वाशब्दात् पञ्चादि-
भागोनायां वा, एवम्' अमुना कालविषयाभिग्रहलक्षणेन प्रकारेण चरत इत्यनुवर्त्तते, कालेन तु भवेद् अवमौदर्यम्, औत्सर्गि-
कविधिविषयं चैतद्, उत्सर्गतो हि तृतीयपौरुष्यामेव भिक्षाटनमुक्तम् ॥ भावावमौदर्यमाह—स्त्री वा पुरुषो वाऽलङ्कृतो
वाऽनलङ्कृतो वाऽपि अन्यतरवयःस्थो वा 'अन्यतरेण' पट्टवटकमयादिना वस्त्रेणोपलक्षितः ॥ अन्येन 'विशेषेण' कुपितप्रह-
सितादिनाऽवस्थाभेदेन 'वर्णेन' कृष्णादिनोपलक्षितः 'भावं' पर्यायम् उक्तरूपमेवाऽलङ्कृतत्वादि "अणुमुयंते उ" त्ति "अनु-

[1] "अभ्यन्तरशम्बूका बहिःशम्बूका च, तत्र अभ्यन्तरशम्बूकाया शङ्खनाभिक्षेत्रोपमाया आकृत्या अन्तरारभते बाह्यतः सन्निवर्त्तते, इतराया विपर्ययः" ।

न्युब्रजेन' यदि दाता दास्यति ततोऽहं ग्रहीष्ये नाऽन्यथेत्युपस्कारः, एवं "चरमाणो" त्ति प्राग्वत् चरतः 'खलु' निश्चितं "भावोमाणं" ति भावाऽवमत्वं मुणितव्यम् ॥ पर्यवावमौदर्यमाह—द्रव्ये क्षेत्रे काले भावे च आख्याताः 'तुः' पूरणे, ते 'भावाः' पर्याया एकसिक्थोनत्वादयः, 'एतैः' सर्वैरपि "ओम" त्ति अवममुपलक्षणत्वाद् अवमौदर्यं चरति अवमचरकः पर्यवचरको भवेद्भिक्षुः । इह च पर्यवग्रहणेन पर्यवप्राधान्यविवक्षया पर्यवावमौदर्यमुक्तम् । यत्रापि च द्रव्यतो न्यूनत्वमुदरस्य नास्ति तत्राऽपि क्षेत्रादिन्यूनतामपेक्ष्याऽवमौदर्याणि भण्यन्त इति सूत्रैकादशकार्थः ॥ १४-१५-१६-१७-१८-१९-२०-२१-२२-२३-२४ ॥ भिक्षाचर्यामाह—

स्वरूपम् ।

**अट्ठविहगोयरग्गं तु, तहा सत्तेव एसणा । अभिग्गहा य जे अन्ने, भिक्खायरियमाहिया ॥ २५ ॥**

व्याख्या—अट्ठविहगोयरग्गं" ति प्राकृतत्वाद् अष्टविधोऽग्रः—प्रधानोऽकल्पनीयपरिहारेण स चाऽसौ गोचरश्च अष्टविधाग्रगोचरः, 'तुः' पूरणे, तथा सप्तैवैषणा अभिग्रहाश्च ये 'अन्ये' तदतिरिक्ताः, ते किम् ? इत्याह—'भिक्खायरियमाहिय" त्ति सूत्रत्वेन भिक्षाचर्या वृत्तिसङ्क्षेपापरनामिका आख्याता । अत्र चाऽष्टावग्रगोचरभेदाः पेडादयः, सप्तैषणाभेदाः—*"संसट्ठमसंसट्ठा, उद्धड तह अप्पलेवडा चेव । उग्गहिया पग्गहिया उज्झियधम्मा य सत्तमिया ॥ १ ॥" 'अभिग्रहाश्च' द्रव्यक्षेत्रकालभावविषयाः । तत्र **द्रव्याभिग्रहाः**—कुन्ताग्रादिसंस्थितमण्डकखण्डादि ग्रहीष्ये इत्यादयः । क्षेत्राभिग्रहाः—देहलीं जङ्घयोरन्तर्विधाय यदि दास्यति ततो ग्राह्यमित्यादयः । **कालाभिग्रहाः**—सकलभिक्षाचरनिवर्तनावसरे मया पर्यटितव्यमित्यादयः । **भावाभिग्रहास्तु**—हसन् क्रन्दन् बद्धो वा यदि प्रतिलाभयिष्यति ततोऽहमाऽऽहास्ये न त्वन्यथेत्येवमादय इति सूत्रभावार्थः ॥ २५ ॥ अभिहिता भिक्षाचर्या । रसपरित्यागमाह—

* "संसृष्टाऽसंसृष्टे, उद्धृता तथाऽल्पलेपा चैव । उद्गृहीता प्रगृहीता, उज्झितधर्मा च सप्तमी ॥ १ ॥"

**खीरदहिसप्पिमाई, पणीयं पाणभोयणं । परिवज्जणं रसाणं तु, भणियं रसविवज्जणं ॥ २६ ॥**

व्याख्या—क्षीरदधिसर्पिरादि 'प्रणीतम्' अतिबृंहकं, पानं च—खर्जूररसादि भोजन च—गलद्बिन्द्वोदनादि पानभोजनं सोपस्कारत्वादेषां परिवर्जनं रसानां 'तुः' पुरणे, भणितं रसविवर्जनमिति सूत्रार्थः ॥ २६ ॥ कायक्लेशमाह—

**ठाणा वीरासणाईया, जीवस्स उ सुहावहा । उग्गा जहा धरिज्जंति, कायकिलेसं तमाहियं ॥२७॥**

व्याख्या—स्थानानि वीरासनादीनि, लोचाद्युपलक्षणं चैतत्, जीवस्य, 'तुः' अवधारणे भिन्नक्रमश्च, ततः सुखावहान्येव मुक्तिसुखहेतुत्वात्, 'उग्राणि' दुष्करतया 'यथा' येन प्रकारेण 'धार्यन्ते' सेव्यन्ते "कायकिलेसं तमाहियं" ति कायक्लेशः स आख्यातः तथैवेति शेष इति सूत्रार्थः ॥ २७ ॥ संलीनतामाह—

**एगंतमणावाए, इत्थीपसुविवज्जिए । सयणासणसेवणया, विवित्तं सयणासणं ॥ २८ ॥**

व्याख्या—"एगंतं" ति सुब्व्यत्ययाद् 'एकान्ते' जनेनाऽनाकुले 'अनापाते' स्त्र्याद्यापातरहिते 'स्त्रीपशुविवर्जिते' तत्रैवाऽवस्थितस्त्र्यादिरहिते शून्यागारादाविति भावः, "सयणासणसेवणय" त्ति सूत्रत्वात् शयनासनसेवनं विविक्तशयनासनं नाम बाह्यं तप उच्यते इति शेषः । उपलक्षणं चैतदेषणीयफलकादिग्रहणस्य, अनेन च विविक्तचर्या नाम संलीनतोक्ता । शेषसंलीनतोपलक्षणमेषा, यतश्चतुर्विधा इयमुक्ता । तथाहि—"इंदियकसायजोगे, पडुच्च संलीणया मुणेयव्वा । तह जा विवित्तचरिया, पन्नत्ता वीयरागेहिं ॥ १ ॥"[1] इति सूत्रार्थः ॥ २८ ॥ उक्तमेवार्थमुपसंहरन्नुत्तरग्रन्थसम्बन्धमाह—

**एसो बाहिरगतवो, समासेण वियाहिओ । अब्भिंतरतवो इत्तो, वुच्छामि अणुपुव्वसो ॥ २९ ॥**

व्याख्या—सुगममेव ॥ २९ ॥ प्रतिज्ञातमाह—

---

१ "इन्द्रियकषाययोगान्, प्रतीत्य संलीनता ज्ञातव्या । तथा या विविक्तचर्या, प्रज्ञप्ता वीतरागैः ॥ १ ॥"

पायच्छित्तं विणओ, वेयावच्चं तहेव सज्झाओ। झाणं च विउस्सग्गो, एसो अब्भिंतरो तवो ॥३०॥

व्याख्या—अक्षरार्थः सुगमः ॥ ३० ॥ भावार्थं तु स्वत एवाऽऽह सूत्रकृत्—

आलोयणारिहाईयं, पायच्छित्तं तु दसविहं। जे भिक्खू वहई सम्मं, पायच्छित्तं तमाहियं ॥ ३१ ॥
अब्भुट्ठाणं अंजलिकरणं, तहेवाऽऽसणदायणं। गुरुभत्ति भावसुस्सूसा, विणओ एस वियाहिओ ३२
आयरियमाइए, वेयावच्चम्मि दसविहे। आसेवणं जहाथामं, वेयावच्चं तमाहियं ॥ ३३ ॥
वायणा पुच्छणा चेव, तहेव परियट्टणा। अणुप्पेहा धम्मकहा, सज्झाओ पंचहा भवे ॥ ३४ ॥
अट्टरुद्दाणि वज्जेत्ता, झाइज्जा सुसमाहिए। धम्मसुक्काइं झाणाइं, झाणं तं तु बुहा वदे ॥ ३५ ॥
सयणासण ठाणे वा, जे उ भिक्खू ण वावरे। कायस्स विउस्सग्गो, छट्ठो सो परिकित्तिओ ॥ ३६ ॥

व्याख्या—आलोचनां अर्हति आलोचनार्हं—यत् पापमालोचनात एव शुद्ध्यति, आदिशब्दात् प्रतिक्रमणार्हादिग्रहः। इह पुनर्विषयविषयिणोरभेदोपचारादेवंविधपापविशुद्ध्युपायभूतानि आलोचनादीन्येव आलोचनार्हादिशब्देनोक्तानि, प्रायश्चित्तं 'तुः' अवधारणे भिन्नक्रमश्च, ततो दशविधमेव, दशविधत्वं चेत्थम्—"[1]आलोयण पडिकमणे, मीस विवेगे तहा विउस्सग्गे। तव छेय मूल अणवट्ठया य पारंचिए चेव ॥१॥" 'जे' इति आर्षत्वाद् यद् भिक्षुः 'वहति' आसेवते 'सम्यग्' अवैपरीत्येन प्रायश्चित्तं तद् आख्यातम् ॥ विनयमाह—अभ्युत्थानम् अञ्जलिकरणं, 'तथे'ति समुच्चये, 'एवे'ति पूरणे, "आसणदायणं" ति सूत्रत्वाद् आसनदानं, गुरुभक्तिः, भावेन—अन्तःकरणेन शुश्रूषा—तदादेशं प्रति श्रोतुमिच्छा पर्युपासना वा भावशुश्रूषा विनय एष व्याख्यातः ॥ वैयावृत्यमाह—'आचार्यादिके' आचार्यादिविषये, मकारस्त्वलाक्षणिकः,

अभ्यन्तरतपसः स्वरूपम्।

---

१ "आलोचना प्रतिक्रमणं मिश्रं विवेकस्तथा व्युत्सर्गः। तपश्छेदो मूलमनवस्थाप्यं च पाराञ्चिकमेव ॥ १ ॥"

अभ्यन्तरतपसः स्वरूपं तत्फलं च ।

वैयावृत्यमुचिताऽऽहारादिसम्पादनरूपम्, उक्तञ्च—"[1]वेयावच्चं वावडभावो तह धम्मसाहणनिमित्तं । अन्नाइयाण विहिणा, सपायणमेस भावत्थो ॥ १ ॥" तस्मिन् दशविधे, उक्तं हि—*"[2]आयरिय-उवज्झाए, थेरे-तवस्सी-गिलाण-सेहाणं । साहम्मिय-कुल-गण-संघसंगयं तमिह कायव्वं ॥ १ ॥" 'आसेवनम्' एतद्विषयमनुष्ठानं 'यथास्थाम' स्वसामर्थ्याऽनतिक्रमेण वैयावृत्यं तद् आख्यातम् ॥ **स्वाध्याय**माह—"वायणे"त्यादि सुगमम् ॥ **ध्यान**माह—"अट्टे"त्यादि प्रकटम् । नवरम्—'ध्यानं' ध्यानाख्यं तपः, "तं तु" तदेव बुधा वदन्ति ॥ **व्युत्सर्ग**माह—शयने आसने, उभयत्र सुपो लुक्, 'स्थाने' ऊर्ध्वस्थाने 'वा' विकल्पे, यस्तु भिक्षुः 'न व्याप्रियते' न चलनादिक्रियां कुरुते, यत्तदोर्नित्याभिसम्बन्धात् तस्य भिक्षोः कायस्य 'व्युत्सर्गः' चेष्टां प्रति परित्यागो यः षष्ठं 'तत्' तपः परिकीर्त्तितम् । शेषव्युत्सर्गोपलक्षणं चैतद्, अनेकविधत्वादस्य । उक्तं च—"[3]दव्वे भावे य तहा, दुह वुस्सग्गो चउविहो दव्वे । गणदेहोवहिभत्ते, भावे कोहाइचाउ त्ति ॥१॥" इति सूत्रषट्कार्थः ॥ ३१-३२-३३-३४-३५-३६ ॥ अध्ययनार्थमुपसंहरंस्तपस एव फलमाह—

**एयं तवं तु दुविहं, जं सम्मं आयरे मुणी । से खिप्पं सव्वसंसारा, विप्पमुच्चइ पंडिए ॥३७॥ त्ति बेमि ॥**

व्याख्या—स्पष्टम् ॥ ३७ ॥

**इति श्रीनेमिचन्द्रसूरिविरचितायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां तपोमार्गगत्याख्यं त्रिंशत्तममध्ययनं समाप्तम् ॥**

---

१ "वैयावृत्य व्यापृतभावस्तथा धर्मसाधननिमित्तम् । अन्नादिकानां विधिना, सम्पादनमेष भावार्थः ॥ १ ॥"

२ "आचार्योपाध्याये, स्थविरतपस्विग्लानशैक्षाणाम् । साधर्मिककुलगणसङ्घसङ्गतं तदिह कर्त्तव्यम् ॥ १ ॥"

३ "द्रव्ये भावे च तथा द्विधा व्युत्सर्गः चतुर्विधो द्रव्ये । गणदेहोपधिभक्ते, भावे क्रोधादित्याग इति ॥ १ ॥"

# अथ चरणविधिनामकमेकत्रिंशत्तममध्ययनम् ।



'अनन्तराध्ययने तप उक्तम्, तच्च चरणवत एव भवतीत्यधुना चरणमुच्यते' इति सम्बन्धस्यैकत्रिंशत्तमाध्ययनस्य चरणविधिनामकस्याऽऽदिसूत्रम्—

चरणविहिं पवक्खामि, जीवस्स उ सुहावहं । जं चरित्ता बहू जीवा, तिन्ना संसारसागरं ॥ १ ॥

व्याख्या—स्पष्टमेव ॥ १ ॥ प्रतिज्ञातमाह—

एगओ विरइं कुज्जा, एगओ अ पवत्तणं । असंजमे नियत्तिं च, संजमे य पवत्तणं ॥ २ ॥
रागद्दोसे य दो पावे, पावकम्मपवत्तणे । जे भिक्खू रुंभई निच्चं, से न अच्छइ मंडले ॥ ३ ॥
दंडाणं गारवाणं च, सल्लाणं च तियं तियं । जे भिक्खू चयई निच्चं, से न अच्छइ मंडले ॥ ४ ॥
दिव्वे य जे उवसग्गे, तहा तेरिच्छ-माणुसे । जे भिक्खू सहई निच्चं, से न अच्छइ मंडले ॥ ५ ॥
विगहा-कसाय-सन्नाणं, झाणाणं च दुयं तहा । जे भिक्खू वज्जई निच्चं, से न अच्छइ मंडले ॥ ६ ॥
वएसु इंदियत्थेसु, समिईसु किरियासु य । जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ ७ ॥
लेसासु छसु काएसु, छक्के आहारकारणे । जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ ८ ॥
पिंडुग्गहपडिमासुं, भयट्ठाणेसु सत्तसु । जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ ९ ॥
मएसु बंभगुत्तीसु, भिक्खुधम्मम्मि दसविहे । जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥१०॥

उवासगाणं पडिमासु, भिक्खूणं पडिमासु य। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ ११ ॥
किरियासु भूयगामेसु, परमाहम्मिएसु य। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ १२ ॥
गाहासोलसएहिं, तहा असंजमम्मि य। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ १३ ॥
बंभम्मि नायज्झयणेसु, ठाणेसु यऽसमाहिए। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ १४ ॥
इक्कवीसाए सबलेसुं, बावीसाए परीसहे। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ १५ ॥
तेवीसई सूयगडे, रूवाहिएसु सुरेसु य। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ १६ ॥
पणवीसा भावणाहिं च, उद्देसेसु दसाइणं। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ १७ ॥
अणगारगुणेहिं च, पगप्पम्मि तहेव य। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ १८ ॥
पावसुयप्पसंगेसु, मोहट्ठाणेसु चेव य। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ १९ ॥
सिद्धाइगुणजोगेसु, तित्तीसाऽऽसायणासु य। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ २० ॥

व्याख्या—'एकतः' एकस्माद् विरतिं कुर्यात्, 'एकतश्च' एकस्मिंश्च प्रवर्त्तनम्। एतदेव विशेषत आह—असंयमात् पञ्चम्यर्थे सप्तमी निवृत्तिं च संयमे च प्रवर्त्तनं कुर्यादित्यनुवर्त्तते। 'चकारौ' समुच्चये ॥ रागद्वेषौ च द्वौ पापौ पापकर्म्मप्रवर्त्तकौ यो भिक्षू 'रुणद्धि' तिरस्कुरुते नित्यं सः 'नाऽऽस्ते' न तिष्ठति 'मण्डले' संसारे वृद्धव्याख्यानात्। एवमुत्तरसूत्रेष्वपि नित्यमित्यादि व्याख्येयम् ॥ 'दण्डानां' मनोदण्डादीनां 'गौरवाणां च' ऋद्धिगौरवादीनां 'शल्यानां' मायाशल्यादीनां त्रिकं त्रिकं यो भिक्षुस्त्यजति ॥ दिव्यांश्चोपसर्गान्, तथा तैरश्चमानुषान् उपलक्षणत्वादात्मसंवेदनीयांश्च प्रत्येकं

चतुर्विधान्, तथाहि—"हास-पओस-विमंसा-पुढो-विमायाहिं देवउवसग्गा। आइतियं माणुस्सा, कुसीलपडिसेवहेऊ य ॥ १ ॥ भयरोसाहारकाए, अवचलयणाऽवणे य तेरिच्छा। घट्टण-पवडण-थंभण-लेसणया आयवेयणिया ॥२॥" यो भिक्षुः सहते ॥ 'विकथा-कषाय-सञ्ज्ञानां' प्रतीतानां प्रत्येकं चतुष्कमिति शेषः, "झाणाणं च" त्ति ध्यानयोश्च 'द्विकम्' आर्त्तरौद्ररूपं तथा यो भिक्षुर्वर्जयति, चतुर्विधत्वाच्च ध्यानस्याऽत्र प्रस्तावेऽभिधानम् ॥ व्रतेषु इन्द्रियार्थेषु समितिषु 'क्रियासु च' कायिक्यादिषु यो भिक्षुः 'यतते' यथायोगं परिपालनवर्जनविधानेन यत्नं कुरुते ॥ लेश्यासु षट्सु कायेषु 'षट्के' षट्परिमाणे 'आहारकारणे' वेदनादौ यो भिक्षुः 'यतते' यथायोगं निरोधरक्षादिविधानेन यत्नं कुरुते ॥ 'पिण्डावग्रह-प्रतिमासु' आहारग्रहणविषयाऽभिग्रहरूपासु संसृष्टादिषु सप्तस्विति योगः। तत्राऽसंसृष्टा हस्तमात्राभ्यां चिन्त्या—"असंसट्ठे हत्थे असंसट्ठे मत्ते अखरडिय त्ति वुत्तं भवई" एवं गृह्णतः प्रथमा भवति १। संसृष्टा ताभ्यामेव चिन्त्या—"संसट्ठे हत्थे संसट्ठे मत्ते" एवं गृह्णतो द्वितीया २। उद्धृता नाम—पाकस्थानाद् यत् स्थाल्यादौ स्वयोगेन भोजनभाजने वोद्धृतं तत एव गृह्णतस्तृतीया ३। अल्पलेपा नाम—अल्पशब्दोऽभाववाचकः, निर्लेपं पृथुकादि गृह्णतश्चतुर्थी ४। अवगृहीता नाम—भोजनकाले भोक्तुकामस्य शरावादिना यदुपहृतं भोजनजातं तत एव गृह्णतः पञ्चमी ५। प्रगृहीता नाम—भोजनवेलायां भोक्तुकामाय दातुमभ्युद्यतेन भोक्त्रा वा यत् करादिना प्रगृहीतं तद्गृह्णतः षष्ठी ६। उज्झितधर्म्मा तु—यत् परित्यागार्हं भोजनजातमन्ये च द्विपदादयो नैव काङ्क्षन्ति तदर्धत्यक्तं वा गृह्णत इति सप्तमी ७। तथा 'भयस्थानेषु'



---

१ "हास्यप्रद्वेषविमर्शपृथग्विमात्राभिर्देवोपसर्गाः। आदित्रिकं मानुषकाः कुशीलप्रतिसेवनाहेतुश्च ॥ १ ॥"
भयरोषाऽऽहारकृताः अपत्यलयनाऽवने च तैरश्चाः। घट्टनप्रपतनस्तम्भनश्लेषणकादात्मवेदनीया ॥ २ ॥"

२ "असंसृष्टो हस्तः असंसृष्ट मात्रकम्, अखरण्टिता इत्युक्तं भवति"।

इहलोकादिषु सप्तसु, उक्तञ्च—*"इहपरलोगाऽऽयाणमकम्हाआजीवमरणमसिलोए" यो भिक्षुः 'यतते' पालनभयाकरणाभ्याम् ॥ 'मदेषु' जातिमदादिष्वष्टसु, उक्तञ्च—†"जाईकुलबलरूवे तवईस्सरिए सुए लाभे" प्रतीतत्वाच्च इह, अन्यत्र च सूत्रे सङ्ख्याऽनभिधानम् । ब्रह्म—ब्रह्मचर्यं तद्गुप्तिषु—वसत्यादिषु नवसु, उक्तञ्च—‡"वसहि कह निसिज्जिंदिय कुड्डंतर पुव्वकीलिय पणीए । अईमायाऽऽहार विभूसणा य नव बंभगुत्तीओ ॥ १ ॥" भिक्षुधर्मे 'दशविधे' क्षान्त्यादिभेदतः, उक्तञ्च—¶"खंती य मद्दवऽज्जव मुत्ती तव संजमे य बोधव्वो । सच्चं सोयं आकिंचणं च, बंभं च जइधम्मो ॥ २ ॥" यो भिक्षुर्यतते परिहारादिना ॥ उपासकाः—श्रावकास्तेषां 'प्रतिमासु' अभिग्रहविशेषरूपासु दर्शनादिषु एकादशसु, उक्तं हि—$"दंसण वेय सामाइय पोसह पडिमा अबंभसच्चित्ते । आरंभपेसउद्दिट्ठवज्जए समणभूए य ॥१॥" तत्स्वरूपञ्चेदम्—"पसमाइगुणविसिट्ठं, कुग्गहसंकाइसल्लपरिहीणं । सम्मदंसणमणहं, दंसणपडिमा हवइ पढमा ॥ १ ॥ वीयाऽणुवयधारी, सामाइकडो य होइ तइया उ । होइ चउत्थी उ चउद्दसऽट्ठमाईसु दिवसेसु ॥ २ ॥ पोसह चउव्विहं पी, पडिपुन्नं सम्म सो उ अणुपाले । बंधाई अइयारा, पयत्तओ वज्जइ इमासु ॥ ३ ॥ यद्यपि च **सामायिकप्रतिमा** **दशा-**

---

* "इहपरलोकाऽऽदानाऽकस्मादाजीवमरणाऽश्लोकाः" । † "जाति-कुले-बले-रूपे तपसि ऐश्वर्ये श्रुते लाभे" । ‡ "वसतिः कथा निषद्येन्द्रियाणि कुड्यान्तरं पूर्वक्रीडितं प्रणीतम् । अतिमात्राहारो विभूषणा च नव ब्रह्मगुप्तयः ॥ १ ॥" ¶ "क्षान्तिश्च मार्दवं आर्जवं मुक्तिः तपः संयमश्च बोद्धव्यः । सत्यं शौचमकिञ्चनञ्च ब्रह्म च यतिधर्मः ॥१॥" $ "दर्शनं व्रतानि सामायिकं पोषधः प्रतिमा अब्रह्मचर्यसचित्तयोः । आरम्भप्रेष्योद्दिष्टानां वर्जकः श्रमणभूतश्च ॥१॥" १ "प्रशमादिगुणविशिष्टं, कुग्रहशङ्कादिशल्यपरिहीनम् । सम्यग्दर्शनमनघं, दर्शनप्रतिमा भवति प्रथमा ॥ १ ॥ द्वितीयाऽणुव्रतधारी, सामायिककृतश्च भवति तृतीया तु । भवति चतुर्थी तु चतुर्दश्यष्टम्यादिषु दिवसेषु ॥ २ ॥ पौषधं चतुर्विधमपि, प्रतिपूर्णं सम्यक् स तु अनुपालयेत् । बन्धादीनतिचारान्, प्रयत्नतो वर्जयत्यासु ॥ ३ ॥"

श्रुतस्कन्धाऽभिप्रायेणाऽनियतकालमाना तथाऽप्यावश्यकचूर्ण्यभिप्रायेणोपासकदशाऽभिप्रायेण च प्रतिदिनमुभयसन्ध्यं सामायिककरणतो मासत्रयमानोत्कर्षेण द्रष्टव्या। पोषधप्रतिमा तु मासचतुष्टयमाना, जघन्यतस्तु सर्वा अप्येकाहोरात्रमाना इति। "सम्ममणुव्वय-गुणवय-सिक्खावयवं थिरो य नाणी य। अट्ठमिचउद्दसीसुं, पडिमं ठाएगराईयं ॥४॥ असिणाण वियडभोई, मउलियडो दिवसबंभयारी य। रत्तिं परिमाणकडो, पडिमावज्जेसु दिवसेसु ॥ ५ ॥ "वियडभोइ" त्ति विकटे-प्रकटे दिन इत्यर्थः भुङ्क्ते 'विकटभोजी' चतुर्विधाहाररात्रिभोजनवर्जकः, 'मौलिकृतः' अबद्धकच्छः। झायइ पडिमाए ठिओ, तिलोयपुज्जे जिणे जियकसाए। नियदोसपच्चणीयं, अन्नं वा पंच जा मासा ॥६॥ सिंगारकह विभूसुक्करिसं इत्थीकहं च वज्जंतो। वज्जइ अबंभमेगं, तओ उ छट्ठाए छम्मासे ॥ ७ ॥ सत्तम सत्त उ मासे, नवि आहारे सचित्तमाहार। जं जं हेट्ठिल्लाणं, तं तोवरिमाण सव्वं पि ॥ ८ ॥ आरंभसयंकरणं, अट्ठमिया अट्ठमास वज्जेइ। नवमा नवमासे पुण, पेसारंभे विवज्जेइ ॥ ९ ॥ दसमा पुण दसमासे, उद्दिट्ठकयं तु भत्त नवि भुंजे। सो होइ उ खुरमुंडो सिहलिं वा धारए कोई ॥१०॥ 'उद्दिष्टकृतं' तमेवोद्दिश्य यत् कृतम्। ¹जं निहियमत्थजायं, पुच्छंत नियाण नवर सो तत्थ।

1 "सम्यक्त्वाणुव्रतगुणव्रतशिक्षाव्रतवान् स्थिरश्च ज्ञानी च। अष्टमीचतुर्दश्योः प्रतिमां तिष्ठत्येकरात्रिकीम् ॥ ४ ॥ अस्नानो विकटभोजी, मौलिकृतो दिवसब्रह्मचारी च। रात्रौ परिमाणकृतः, प्रतिमावर्जेषु दिवसेषु ॥ ५ ॥ ध्यायति प्रतिमायां स्थितः, त्रिलोकपूज्यान् जिनान् जितकषायान्। निजदोषप्रत्यनीकं, अन्यं वा पञ्च यावन्मासाः ॥ ६ ॥ शृङ्गारकथा विभूषोत्कर्षं स्त्रीकथां च वर्जयन्। वर्जयत्यब्रह्मैकं, ततश्च षष्ठ्यां षण्मासान् ॥ ७ ॥ सप्तमी सप्त तु मासान्, नापि आहरति सचित्तमाहारम्। यद्यदधस्तनीनां, तत्तदुपरितनीनां सर्वमपि ॥ ८ ॥ आरम्भस्वयंकरणं, अष्टमिका अष्टमासान् वर्जयति। नवमी नवमासान् पुनः, प्रेष्यारम्भान् विवर्जयति ॥ ९ ॥ दशमी पुनर्दशमासान्, उद्दिष्टकृतं तु भक्तं नापि भुञ्जीत। स भवति तु क्षुरमुण्डः, शिखां वा धारयेत् कोऽपि ॥ १० ॥ यन्निहितमर्थजातं, पृच्छतां निजानां नवरं स तत्र।

जइ जाणइ तो साहे, अह नवि तो वेइ नवि जाणे ॥ ११ ॥ नाऽन्यत् तस्य गृहकृत्यं किमपि कर्त्तुं कल्पत इति भावः । "खुरमुंडो लोएण व, रयहरण पडिग्गहं च गिण्हित्ता । समणब्भूओ विहरे, मासा एक्कारसुक्कोसं ॥१२॥ ममकारेऽवोच्छिन्ने, वच्चइ सन्नायपल्लि दट्ठुं जे । तत्थ वि साहु व जहा, गिण्हइ फासुं तु आहारं ॥ १३ ॥" 'सञ्ज्ञातपल्लिं' ज्ञातिसन्निवेशं "फासुं तु" प्रासुकमेव, उपलक्षणत्वादेषणीयं च, प्रेमाव्यवच्छेदात् सञ्ज्ञातिपल्लिगमनेऽपि तस्य न दोष इत्याशयः ॥ तथा भिक्षूणां प्रतिमासु मासिक्यादिषु द्वादशसु, यत आगमः—"मासाई सत्तंता, पढमा विति तइय सत्तराइदिणा । अहराइ एगराई, भिक्खुपडिमाण बारसगं ॥ १ ॥ तत्स्वरूपञ्चेदम्—पडिवज्जइ एयाओ, संघयण-धिईजुओ महासत्तो । पडिमाओ भावियप्पा, सम्मं गुरुणा अणुन्नाओ ॥२॥ गच्छे च्चिय निम्माओ, जा पुव्वा दस भवे असंपुन्ना । नवमस्स तइयवत्थुं होइ जहन्नो सुयाभिगमो ॥३॥ वोसट्ठचत्तदेहो, उवसग्गसहो जहेव जिणकप्पी । एसण अभिग्गहीया, भत्तं च अलेवडं तस्स ॥४॥ गच्छा विणिक्खमित्ता, पडिवज्जइ मासियं महापडिमं । दत्तेग भोयणस्सा, पाणस्स वि तत्थ एग भवे ॥५॥ जत्थऽत्थमेइ सूरो, न तओ ठाणा पयं पि संचलइ । नाएगराइवासी, एगं व दुगं व अन्नाए ॥ ६ ॥

---

यदि जानाति ततः कथयति, अथ नापि ततो ब्रवीति नापि जाने ॥ ११ ॥ १ "क्षुरमुण्डो लोचेन वा, रजोहरणं पतद्ग्रहं च गृहीत्वा । श्रमणभूतो विहरेत्, मासानेकादशोत्कृष्टम् ॥ १२ ॥ ममकारेऽव्युच्छिन्ने, व्रजति सञ्ज्ञातपल्लिं द्रष्टुम् । तत्रापि साधुरिव यथा, गृह्णाति प्रासुकं तु आहारम् ॥१३॥" २ "मासादयः सप्तान्ताः प्रथमा द्वितीया तृतीया सप्तरात्रि-दिनाः । अहोरात्रिकी एकरात्रिकी भिक्षुप्रतिमानां द्वादशकम् ॥ १ ॥ प्रतिपद्यते एता', संहनन-धृतियुतो महासत्त्वः । प्रतिमा भावितात्मा, सम्यग्गुरुणा अनुज्ञातः ॥२॥ गच्छे एव निर्मातः, यावत् पूर्वाणि दश भवेयुरसम्पूर्णानि । नवमस्य तृतीयवस्तु, भवति जघन्यः श्रुताभिगमः ॥ ३ ॥ व्युत्सृष्टत्यक्तदेहः, उपसर्गसहो यथैव जिनकल्पी । एषणा अभिगृहीता, भक्तं चाऽलेपकृतस्य ॥ ४ ॥ गच्छाद् विनिष्क्रम्य, प्रतिपद्यते मासिकीं महाप्रतिमाम् । दत्त्येका भोजनस्य, पानकस्यापि तत्रैका भवेत् ॥५॥ यत्राऽस्तमेति सूर्यः, न ततः स्थानात् पदमपि सञ्चलति । ज्ञात एकरात्रिवासी, एकां वा द्वे वाऽज्ञाते ॥६॥

उद्दस्सहत्थिमाईण नो भएणं पयं पि ओसरइ । एमाइनियमसेवी, विहरइ जाऽखण्डिओ मासो ॥ ७ ॥ पच्छा गच्छमईई, एव दुमासी तिमासी जा सत्त । नवरं दत्तीवुड्ढी, जा सत्त उ सत्तमासीए ॥ ८ ॥ तत्तो य अट्ठमीया, भवई हु पढम सत्तराइंदी । तीए चउत्थचउत्थेणऽपाणएणं अह विसेसो ॥ ९ ॥ उत्ताणग पासल्ली, नेसज्जी वावि ठाण ठाइत्ता । सहउवसग्गे घोरे, दिव्वाई तत्थ अविकंपो ॥ १० ॥ 'उत्तानकः' ऊर्द्धमुखशयितः, "नेसज्जि" त्ति निषद्यावान् समयुततया उपविष्टः । अस्यां च पारणके आयामाम्लं दत्तिनियमस्तु नास्ति, ग्रामादेर्बहिश्चाऽवस्थानम् । "दोच्चा वि एरिस चिय, बहिया गामाइयाण नवरं तु । उक्कुडु लगंडसाई, दंडायय उड्ढ ठाइत्ता ॥ ११ ॥" लगण्डं—वक्रकाष्ठं तद्वत् शेते लगण्डशायी शिरःपार्ष्णिकाभिरेव स्पृष्टभूः न तु पृष्ठेन, दण्डायतः—दण्डवद् भून्यस्तायतशरीरः । "तच्चाए वी एवं, नवरं ठाणं तु तस्स गोदोही । वीरासणमहवा वी, ठाएज्जा अंबखुज्जो हु ॥ १२ ॥" गोदोहिका—गोदोहनप्रवृत्तस्येवाऽग्रपादतलाभ्यामवस्थानम्, वीराणां—दृढसंहननानाम् आसनम् तद्धि सिंहासनाधिरूढस्य सिंहासनापनयनेऽपि निललितावस्थानेन तुल्यम्, 'आम्रकुब्जः' सहकारफलवद् वक्राकारः । "एमेव अहोराई, छट्ठं भत्तं अपाणयं नवरं ।

---

दुष्टाश्वहस्त्यादीनां न भयेन पदमपि अपसरति । एवमादिनियमसेवी, विहरति यावदखण्डितो मासः ॥ ७ ॥ पश्चाद् गच्छमत्येति, एवं द्विमासी त्रिमासी यावत् सप्त । केवलं दत्तिवृद्धिर्यावत् सप्त तु सप्तमासिक्याम् ॥ ८ ॥ ततश्च अष्टमिका, भवति खलु प्रथमा सप्तरात्रिन्दिवा । तस्यां चतुर्थचतुर्थेनाऽपानकेनाऽथ विशेषः ॥ ९ ॥ उत्तानको पार्श्वगः, नैषद्यी वाऽपि स्थानं स्थित्वा । सहते उपसर्गान् घोरान्, दिव्यादीन् तत्राऽविकम्पः ॥ १० ॥" १ "द्वितीयाऽपि ईदृशी एव, बहिस्ताद् ग्रामादिकानां केवलं तु । उत्कुटुको लगण्डशायी, दण्डायत ऊर्ध्वं स्थित्वा ॥ ११ ॥" २ "तृतीयायामप्येवं, केवलं स्थानं तु तस्य गोदोहिका । वीरासनमथवाऽपि तिष्ठेदाम्रकुब्जः खलु ॥ १२ ॥" ३ "एवमेवाऽहोरात्रिकी, षष्ठं भक्तमपानकं केवलम् ।

'व्याघारितपाणिके' प्रलम्बभुजस्येत्यर्थः, इयं च त्रिभिर्दिनैर्याति,
एकाशनेन चेयमारभ्यते, तेनैव च
अहोरात्रस्यान्ते षष्ठभक्तकरणात् । यदाह—"अहोराइया तहिं पच्छा छट्ठं करेइ" । एकाशनेन चेयमारभ्यते, तेनैव च
निष्ठां याति । "एमेव एगराई अट्ठमभत्तेण ठाण बाहिरओ । ईसीपब्भारगए, अणिमिसनयणेगदिट्ठी य ॥ १४ ॥"
"साहट्टु दो वि पाए, वग्घारियपाणि ठायइ ठाणं" ति, 'ईषत्प्राग्भारगतः' ईषत्कुब्जो नद्यादिदुस्तटीस्थितो वा, 'एकदृष्टिः' एक-
पुद्गलगतदृष्टिः, 'संहृत्य पादौ' जिनमुद्रया व्यवस्थाप्य इत्यर्थः, सम्यक्करणे चास्याऽवधिज्ञानं मनःपर्यवज्ञानं केवलज्ञानं
वा फलमागमेऽभिहितम् । इयं च प्रतिमा रात्रेरनन्तरमष्टमकरणात् चतूरात्रिंदिवमाना । यदाह—"एगराइया चउहिं पच्छा
अट्ठमं करेइ" त्ति । विस्तरश्चासां दशाभ्योऽवसेयः । एतासु यो भिक्षुर्यतते यथावत् परिज्ञानोपदेशपालनादिभिः ॥
'क्रियासु' कर्मबन्धनिबन्धनभूतचेष्टासु अर्थाऽनर्थादिभेदतः त्रयोदशसु, तथा चागमः—"अट्ठाणट्ठा हिंसाऽकम्हा दिट्ठी
य मोसऽदिन्ने या । अज्झत्थ माणमित्ते, माया लोभेरियावहिया ॥ १ ॥" आसां भावार्थः पुनरयम्—"तसथावरभूय-
हिओ, जो दंडं निसिरई हु कज्जम्मि । आयपरस्स व अट्ठा, अट्ठादंडं तयं बिंति ॥ १ ॥ जो पुण सरडाईयं, थावर-
कायं व वणलयाईयं । मारेउ छिंदिऊण व, छड्डे एसो अणट्ठाए ॥२॥ अहिमाइ वेरियस्स व, हिंसिंसु हिंसई व हिंसिहिई ।

---

ग्रामनगरयोर्बहिस्ताद् व्याघारितपाणिकं स्थानम् ॥ १३॥" १ "अहोरात्रिकी तत्र पश्चात् षष्ठं करोति" २ "एवमेव एकरात्रिकी अष्टमभक्तेन
स्थानं बहिस्तात् । ईषत्प्राग्भारगतोऽनिमिषनयनैकदृष्टिश्च ॥ १४ ॥ ३ "संहृत्य द्वावपि पादौ व्याघारितपाणिः तिष्ठति स्थानमिति" ४ "एक-
रात्रिकी चतुर्भिः पश्चात् अष्टमं करोती"ति । ५ "अर्थाऽनर्था हिंसा, अकस्माद् दृष्टिश्च मृषाऽदत्तं च । अध्यात्मं मानो मैत्री, माया लोभ ईर्या-
पथिकी ॥१॥" ६ "त्रसस्थावरभूतहितो, यो दण्डं निसृजति खलु कार्ये । आत्मनः परस्य वाऽर्थं, अर्थदण्डं तकं ब्रुवते ॥१॥ यः पुनः सरटा-
दिक, स्थावरकायं वा वनलतादिकम् । मारयित्वा छित्वा वा, मुञ्चति एषोऽनर्थाय ॥२॥ अह्यादेः वैरिणो वाऽहिंसीत् हिनस्ति वा हिंसिष्यति ।

जो इंदं आरभेई, हिंसादंडो भवे एसो ॥ ३ ॥ अण्णट्ठाए निसिरई, कंडाई अन्नमाहणे जो उ । जोऽवनियंतो सस्सं, छिंदेज्जा सालिमाईयं ॥ ४ ॥ एस अकम्हादंडो, दिट्ठि विवज्जासओ इमो होइ । जो सत्तु त्ती काउं, हणई मूढो असत्तुं पि ॥ ५ ॥ छट्ठो मोसाभासा, सत्तमदंडो अदिन्नगहणं तु । अज्झत्थीओ कज्जं, विणा वि जं दुम्मणो चिट्ठे ॥६॥ जाइमयाईमत्तो, हीलेइ परं तु माणकिरिएसा । माइपियभायगाइण, जो पुण अप्पे वि अवराहे ॥ ७ ॥ तिव्वं करेइ दंडं, दहणंकणबंधतालणाईयं । तन्निमित्तदोसवत्ति, किरियाठाणं भवे दसमं ॥८॥ एक्कारसमं माया, बारसमं जमिह लोभदोसेण । अन्नेसिं सत्ताणं, वहबंधणमारणे कुणइ ॥ ९ ॥ सययं तु अप्पमत्तस्स भगवओ जाव चक्खुपम्हं पि । निवडइ ता सुहुमा उ, इरियावहिया किरिय चरिमा ॥ १० ॥" 'भूतग्रामाः' जीवसङ्घाताश्च चतुर्दश । ते चामी—"[1]एगिन्दिय सुहुमियरा, सन्नियर पणिंदिया सबितिचऊ । पज्जत्ताऽपज्जत्ताभेएणं चउदस ग्गामा ॥ १ ॥" तेषु । तथा परमाश्च ते अधार्मिकाश्च परमाधार्मिकाः अम्बादयस्तेषु पञ्चदशसु । यत उक्तं—"[2]अंबे अंबरिसी चेव, सामे सबले त्ति आवरे ।

---

यो दण्डमारभते हिंसादण्डो भवेदेष. ॥३॥ अन्यार्थं निसृजति, काण्डादीन् अन्यमाहन्याद् यस्तु । योऽपनयन् सस्यं छिन्द्यात् शाल्यादिकम् ॥ ४ ॥ एष अकस्माद्दण्डो दृष्टिविपर्यासतोऽयं भवति । यः शत्रुरिति कृत्वा, हन्ति मूढोऽशत्रुमपि ॥ ५ ॥ षष्ठो मृषाभाषा, सप्तमदण्डोऽदत्तग्रहणं तु । आध्यात्मिकः कार्यं विनाऽपि यद् दुर्मनाः तिष्ठेत् ॥ ६ ॥ जातिमदादिमत्तो, हेलयति परं तु मानक्रिया एषा । मातृ पितृ भ्रात्रादीनां, य. पुनरल्पेऽप्यपराधे ॥७॥ तीव्रं करोति दण्डं, दहना-ऽङ्कन-बन्ध-ताडनादिकम् । तन्निमित्तद्वेषप्रत्ययिकं क्रियास्थानं भवेद् दशमम् ॥८॥ एकादशं माया, द्वादश यदिह लोभदोषेण । अन्येषां सत्त्वानां वधबन्धनमारणानि करोति ॥९॥ सततं स्वप्रमत्तस्य भगवतो यावत् चक्षुःपक्ष्मापि । निपतति तावत् सूक्ष्मा तु ईर्यापथिकी क्रिया चरमा ॥ १० ॥" [1] "एकेन्द्रियाः सूक्ष्मा इतरे च, संज्ञिन इतरे पञ्चेन्द्रिया. सद्वित्रिचतुरिन्द्रियाः । पर्याप्ताऽपर्याप्तकभेदेन चतुर्दश ग्रामाः ॥ १ ॥" [2] "अम्बोऽम्बर्षिश्चैव श्याम. शबल इत्यपरः ।

चरण-विधानम् ।

चरणविधानम् ।

रुद्दोवरुद्द काले य, महाकाले त्ति आवरे ॥ १ ॥ असिपत्ते धणुं कुंभे, वालुय वेयरणी इय । खरस्सरे महाघोसे एए पन्नरसाऽऽहिया ॥ २ ॥ तेषु यो भिक्षुर्यतते परिहारपरिज्ञानादिभिः ॥ गाथा—गाथाभिधानम् अध्ययनं—षोडशमेषां गाथाषोडशकानि सूत्रकृताऽऽद्यश्रुतस्कन्धाऽध्ययनानि तेषु, उक्तञ्च—*"समओ वेयालीयं, उवसग्गपरिन्न थीपरिन्ना य । निरयविभत्ती वीरत्थओ य कुसीलाण परिभासा ॥ १ ॥ वीरिए धम्म समाही, मग्ग समोसरण अहतहं गंथो । जमतीतं तह गाहा, सोलसमं होइ अज्झयणं ॥ २ ॥" तथा 'असंयमे च' सप्तदशभेदे पृथिव्यादिविषये, तत्सङ्ख्यात्वं चास्य तत्प्रतिपक्षस्य संयमस्य सप्तदशभेदत्वात् । यत उक्तम्—† "पुढवि-दग-अगणि-मारुय-वणप्फई-बि-ति-चउ-पणिंदि-अज्जीवे । पेहोपेह-पमज्जण-परिट्ठवण-मणो-वई-काए ॥ १ ॥" 'ब्रह्मणि' ब्रह्मचर्ये अष्टादशभेदभिन्ने, उक्तं हि—‡"ओरालियं च दिव्वं, मणवयकाएण करणजोएणं । अणुमोयण-कारावण-करणेणऽट्ठारसाऽबंभं ॥ १ ॥" ज्ञाताध्ययनेषु उत्क्षिप्तादिषु एकोनविंशतौ, यदुक्तम्—¶"उक्खित्तनाए संघाडे, अंडे कुम्मे य सेलए । तुंबे य रोहिणी मल्ली, मायंदी चंदिमा इय ॥ १॥ दावद्दवे उदगनाए, मंडुक्के तेयली इय । नंदिफले अवरकंका, आइन्ने सुंसु पुंडरिए ॥ २ ॥" 'स्थानेषु' आश्रयेषु कारणेष्वित्यर्थः, कस्य? इत्याह—'असमाधेः' असमाधानस्य, तानि च द्रुतं द्रुतं गमनादीनि

---

रुद्र उपरुद्रः कालश्च महाकाल इति चापरः ॥१॥ असिपत्रो धनुः कुम्भः, वालुको वैतरणिरिति । खरस्वरो महाघोषः, एते पञ्चदशाऽऽख्याताः ॥२॥ *"समयो वैतालीयं, उपसर्गपरिज्ञा स्त्रीपरिज्ञा च । निरयविभक्तिर्वीरस्तवश्च कुशीलानां परिभाषा ॥१॥ वीर्यं धर्मः समाधिर्मार्गः समवसरणं याथातथ्यं ग्रन्थः । आदानीयं तथा गाथा षोडशं भवत्यध्ययनम् ॥ २ ॥" † "पृथ्वी-दका-ऽग्नि-मारुत-वनस्पति-द्वि-त्रि-चतुः-पञ्चेन्द्रिया-ऽजीवेषु । प्रेक्ष्योत्प्रेक्ष्य-प्रमार्जन-परिष्ठापन-मनो-वचः-कायैः ॥ १ ॥" ‡ "औदारिकं च दिव्यं, मनोवचःकायेन करणयोगेन । अनुमोदन-कारण-करणैरष्टादशाऽब्रह्म ॥ १ ॥" ¶ "उत्क्षिप्तज्ञातः सङ्घाटोऽण्डः कूर्मश्च शैलकः । तुम्बश्च रोहिणी मल्ली माकन्दी चन्द्रिकेति ॥ १ ॥ दावद्रव उदकज्ञातो मण्डूकः तेतलिश्च । नन्दीफलमपरकङ्का अश्वः सुसमा पुण्डरीकम् ॥ २ ॥"

॥३४७॥

चरण-विधानम्।

विंशतिः, तथा चाऽऽह—*दवदवचारी–दुयं दुयं वयंतो इहेव अप्पाणं पवडणाइणा अन्ने य सत्ते वावायणाइणा असमाहीए जोयइ १, एवमन्येष्वपि असमाधिस्थानत्वं भावनीयम्। अपमज्जिए ठाणनिसीयणाइ करेइ २, एवं दुप्पमज्जिए वि ३, अइरित्ताए सेज्जाए आसणे वा निवसइ निसीयइ वा ४, राइणिए परिभवइ ५, थेरोवघाई–सीलाईदोसेहिं थेरे उवहणइ त्ति वुत्तं हवइ ६, भूओवघाई–अणट्ठाए एगिंदियाइए उवहणइ त्ति वुत्तं हवइ ७, मुहुत्ते मुहुत्ते संजलइ ८, सइं कुद्धो य अच्चंतकुद्धो हवइ ९, पिट्ठिमंसिए १०, अभिक्खणमोहारिणिं भासइ जहा दासो तुमं चोरो व त्ति ११, नवाइं अहिगरणाइं करेइ १२, उवसंताणि य उईरेइ १३, ससरक्खपाए अथंडिलाओ थंडिलं संकमइ, ससरक्खेहिं वा हत्थेहिं भिक्खं गेण्हइ १४, अकाले सज्झायं करेइ १५, असंखडसद्दं करेइ राईए वा महया सद्देण उल्लवइ १६, कलहं करेइ, तं वा करेइ जेण कलहो हवइ १७, तारिसं भासइ करेइ वा जेण सव्वो गणो झंझविओ अच्छइ १८, सूरोदयाओ अत्थमणं जाव भुंजइ १९, एसणासमिइं न पालेइ २०, यो भिक्षुर्यतते। एकविंशतौ शबलयन्ति–कर्बुरीकुर्वन्ति चारित्रमिति शबलाः–क्रियाविशेपास्तेपु, तथा चाऽऽगमः—

* दुतदुतचारी—द्रुतं द्रुत व्रजन् इहैवाऽऽत्मानं प्रपतनादिना अन्यांश्च सत्त्वान् व्यापादनादिनाऽसमाधौ योजयते, परलोके च आत्मानं सत्त्ववधजनितकर्मणाऽसमाधौ योजयति १, अप्रमार्जिते स्थाननिषदनादिकं करोति २, एवं दुष्प्रमार्जितेऽपि ३, अतिरिक्तायां शय्यायां आसने वा निवसति निषीदति वा ४, रात्निकान् परिभवति ५, स्थविरोपघाती–शीलादिदोषैः स्थविरान् उपहन्ति इत्युक्तं भवति ६, भूतोपघाती–अनर्थाय एकेन्द्रियादिकान् उपहन्ति इत्युक्तं भवति ७, मुहूर्त्ते मुहूर्त्ते संज्वलति ८, सकृत् क्रुद्धश्चात्यन्तक्रुद्धो भवति ९, पृष्ठमांसिकः १०, अभीक्ष्णमवधारिणीं भाषते–यथा दासस्त्वं चौरो वा इति ११, नवानि अधिकरणानि करोति १२, उपशान्तानि च उदीरयति १३, सरजस्कपादः अस्थण्डिलात् स्थण्डिलं सङ्क्रामति, सरजस्काभ्यां वा हस्ताभ्यां भिक्षां गृह्णाति १४, अकाले स्वाध्यायं करोति १५, असंस्कृतशब्दं करोति, रात्रौ वा महता शब्देन उल्लपति १६, कलहं करोति, तद् वा करोति येन कलहो भवति १७, तादृश भाषते करोति वा येन सर्वो गणो झंझवित आस्ते १८, सूर्योदयाद् अस्तमनं यावद् भुङ्क्ते १९, एषणासमितिं न पालयति २० ॥

* "तं जह उ हत्थकम्मं, कुव्वंते १ मेहुणं च सेवंते २ । राइं च भुंजमाणे ३ आहाकम्मं च भुंजंते ४ ॥ १ ॥ मैथुनं सेवत अतिक्रमादिपु त्रिपु । तत्तो य रायपिंडं ५, कीयं ६ पामिच्च ७ अभिहड ८ अछेज्जं ९ । भुंजंते सबले ऊ, पच्चक्खियऽभिक्ख भुंजंते १० ॥ २ ॥ छम्मासऽब्भंतरओ, गणा गणं संकमं करिंते य ११ । मासब्भंतर तिन्नि य, दगलेवा ऊ करेमाणे ॥३॥ मासब्भंतरओ चिय, माइट्ठाणाइं तिन्नि कुणमाणे १२ । पाणइवायाउट्टिं, कुव्वंते १३ मुसं वयंते य १४ ॥ ४ ॥ गिण्हंते य अदिन्नं १५ आउट्टि तह अणंतरहियाए । पुढवीए ठाण सेज्जा, निसीहियं वावि चेएइ १६ ॥ ५ ॥ एवं ससिणिद्धाए ससरक्खाए चित्तमंतसिललेलू । कोलावासपइट्ठा, कोल घुणा तेसि आवासो १७ ॥ ६ ॥ सड-सपाण-सवीए, जाव उ संताणए भवे तहियं । ठाणाइ चेयमाणे, सबले आउट्टियाए उ १८ ॥७॥ आउट्टि मूलकंदे, पुप्फे य फले य वीय हरिए य । भुंजंते सबले ऊ १९, तहेव संवच्छरस्संतो ॥ ८ ॥ दस दगलेवे कुव्वं, तह माइट्ठाण दस य वरिसंतो २० । आउट्टिय सीओदगवग्घारियहत्थमत्ते य ॥ ९ ॥ दव्वीए भायणेण व, दिज्जंतं भत्त-पाण घेत्तूणं ।

---

* "तद्यथा तु हस्तकर्म कुर्वाणो मैथुनं च सेवमान. । रात्रौ च भुञ्जान आधाकर्म च भुञ्जान' ॥१॥ ततश्च राजपिण्डं क्रीतं प्रामित्यमभ्याहृतमाच्छेद्यम् । भुञ्जानः शबल एव प्रत्याख्यायाऽभीक्ष्ण भुञ्जानः ॥ २ ॥ षण्मासाभ्यन्तरतो गणाद् गणं सङ्क्रमं कुर्वंश्च । मासाभ्यन्तरे त्रींश्च दकलेपांस्तु कुर्वाण' ॥ ३ ॥ मासाभ्यन्तरत एव मातृस्थानानि त्रीणि कुर्वाणः । प्राणातिपातमाकुट्टया कुर्वाणो मृषा वदंश्च ॥ ४ ॥ गृह्णंश्चाऽदत्तमाकुट्टया तथाऽनन्तर्हितायाम् । पृथ्व्यां स्थानं शय्यां नैषेधिकीं वाऽपि चेतयति ॥ ५ ॥ एवं सस्निग्धायां सरजस्कायां चित्तवच्छिलालेलुमत्याम् । कोलावासप्रकुष्ठाया कोलाघुणास्तेपामावासः ॥ ६ ॥ साण्ड-सप्राण-सबीजं यावत् तु सन्तानकं भवेत् तत्र । स्थानादि चेतयन् शबल आकुट्यैव ॥७॥ आकुट्या मूलानि कन्दान् पुष्पाणि च फलानि च बीजानि हरितानि च । भुञ्जानः शबलस्तु तथैव संवत्सरस्यान्तः ॥ ८ ॥ दश उदकलेपान् कुर्वन् तथा मातृस्थानानि दश च वर्पान्त. । आकुट्या शीतोदकक्लिन्नहस्तमात्रे च ॥ ९ ॥ दर्व्या भाजनेन वा दीयमान भक्त-पानं गृहीत्वा ।

मुंजइ मज्जो एसो, इगवीसो होइ नायव्वो २१ ॥१०॥ द्वाविंशतौ परीषहेषु प्राक्कथितेषु यो भिक्षुर्यतते ॥ त्रयोविंशत्यध्य-
यनयोगात् त्रयोविंशतिसूत्रकृतं तस्मिन्, त्रयोविंशतिसूत्रकृताध्ययनानि चेमानि—*"पुंडरिय किरियठाणं आहारपरिन्न
पच्चक्खाणकिरिया य । अणगार अद्द नालंद सोलसाइं च तेवीसं ॥ १ ॥" तथा रूपम्—एकस्तदधिकेषु प्रक्रमात् सूत्रकृ-
ताध्ययनेभ्यः 'सुरेषु च' भवनपति-व्यन्तर-ज्योतिष्क-वैमानिकरूपेषु दशाष्टपञ्चैकविधेषु यो भिक्षुर्यतते यथावत्प्ररू-
पणादिना ॥ "पणवीस" त्ति पञ्चविंशतौ "भावणाहिं" ति सुव्व्यत्ययाद् 'भावनासु' महाव्रतविषयासु, उक्तं हि—
† 'पणवीसं भावणाओ पन्नत्ताओ, तं जहा—ईरियासमिइ मणगुत्ती वयगुत्ती आलोइऊण पाणभोयणं आयाणभंडम-
त्तनिक्खेवणासमिई पढमवए । अणुवीइभासणया कोहविवेगे लोहविवेगे भयविवेगे हासविवेगे बिइयवए । उग्गह-
अणुन्नवणया उग्गहसीमजाणणया सयमेव उग्गहअणुगिण्हणया साहम्मियउग्गहं अणुण्णविय परिभुंजणया साहा-
रणभत्तपाणं अणुन्नविय परिभुंजणया तइयवए । इत्थि-पसु-पंडगसंसत्तसयणाऽऽसणवज्जणया इत्थीकहविवज्जणया
इत्थीण इंदियाण आलोयणवज्जणया पुव्वरयपुव्वकीलियाणं विसयाणं असरणया पणीयाहारविवज्जणया चउत्थवए ।

---

भुंजन्ति द्वाविंश एष एकविंशतितमो भवति ज्ञातव्य ॥१०॥" * "पौण्डरीकं क्रियास्थानमाहारपरिज्ञा प्रत्याख्यानक्रिया च । अनगार आर्द्रो
नालन्दं षोडश च त्रयोविंशतिः ॥१॥" † "पञ्चविंशतिर्भावनाः प्रज्ञप्ताः । तद्यथा—ईर्यासमितिः १ मनोगुप्तिः २ वचोगुप्तिः ३ आलोक्य
पान-भोजनम् ४ आदानभाण्डमात्रनिक्षेपणासमितिः ५ प्रथमव्रते । अनुवीचीभाषणता १ क्रोधविवेकः २ लोभविवेकः ३ भयविवेकः
४ हास्यविवेकः ५ द्वितीयव्रते । अवग्रहानुज्ञापनता १ अवग्रहसीमयाचनता २ स्वयमेवाऽवग्रहानुग्रहणता ३ साधर्मिकावग्रहमनुज्ञाप्य
परिभुञ्जनता ४ साधारणभक्तपानमनुज्ञाप्य परिभुञ्जनता ५ तृतीयव्रते । १ स्त्री-पशु-पण्डकसंसक्तशयनासनवर्जनता १ स्त्रीकथाविवर्ज-
नता २ स्त्रीणाम् इन्द्रियाणामालोकनवर्जनता ३ पूर्वरत-पूर्वक्रीडितानां विषयाणामस्मरणता ४ प्रणीताऽऽहारविवर्जनता ५ चतुर्थव्रते ।

चरण-
विधानम् ।

सोइंदियरागोवरमे', एवं पंच वि इंदिया ५ पंचमवए। उद्देशेषु इत्युपलक्षणत्वाद् उद्देशकालेषु 'दशादीनां' दशाश्रुतस्कन्ध-कल्प-व्यवहाराणां षड्विंशतिसङ्ख्येष्विति शेषः। उक्तं हि—"दस उद्देसणकाला, दसाण कप्पस्स हुंति छ चेव। दस चेव य ववहारस्स हुंति सव्वे वि छव्वीसं ॥ १ ॥" यो भिक्षुर्यतते। 'अनगारगुणाः' व्रतादयः सप्तविंशतिः, सुब्व्यत्ययात् तेषु च, उक्तं हि—*"वयछक्कमिंदियाणं, च निग्गहो भाव करणसच्चं च। खमया विरागया वि य, मणमाईणं निरोहो य ॥ १ ॥ कायाण छक्क जोगम्मि जुत्तया वेयणाहियासणया। तह मारणंतियहियासणा य एएऽणगारगुणा ॥ २ ॥" प्रकृष्टः कल्पः—यतिव्यवहारो यस्मिन्नसौ प्रकल्पः स चेहाचाराङ्गमेव शस्त्रपरिज्ञाद्यष्टाविंशत्यध्ययनात्मकं तस्मिन्। उक्तं च—†"सत्थपरिन्ना लोगविजओ सीओसणिज्ज सम्मत्तं। आवंति धुवं विमोहो, उवहाणसुयं महपरिन्ना ॥ १ ॥ पिंडेसण सेज्जेरिया भासा वत्थेसणा य पाएसा। उग्गहपडिमा सत्तिक्कसत्तया भावण विमुत्ती ॥ २ ॥ उग्घायमणुग्घायं, आरोवण तिविहमो निसीहं तु। इइ अट्ठावीसविहो, आयारपकप्पनामो उ ॥ ३ ॥" 'तथैव' तेनैव यथावदासेवनादिप्रकारेण, 'तुः' समुच्चये, यो भिक्षुर्यतते ॥ पापश्रुतेषु प्रसङ्गाः—तथाविधाऽऽसक्तिरूपाः पापश्रुतप्रसङ्गाः तेषु एकोनत्रिंशद्भेदेषु, उक्तं हि—

---

श्रोत्रेन्द्रियरागोपरमः १ एव पञ्चापि इन्द्रियाणि २-३-४-५ पञ्चमव्रते। १ "दश उद्देशनकाला दशानां कल्पस्य भवन्ति षडेव। दश चैव च व्यवहारस्य भवन्ति सर्वेऽपि षड्विंशतिः ॥ १ ॥" * व्रतषट्कमिन्द्रियाणां च निग्रहो भाव. करणसत्यं च। क्षमता विरागताऽपि च मनआदीनां निरोधश्च ॥ १ ॥ कायानां षट्कं योगे युक्तता वेदनाऽध्यासनता। मारणान्तिकाध्यासनता च एतेऽनगारगुणाः ॥ २ ॥" † "शस्त्रपरिज्ञा लोकविजयः शीतोष्णीय सम्यक्त्वम्। आवन्ती धूतो विमोक्ष उपधानश्रुतं महापरिज्ञा ॥ १ ॥ पिण्डैषणा शय्येर्या भाषा वस्त्रैषणा च पात्रैषणा। अवग्रहप्रतिमा सप्तैकसप्तिका भावना विमुक्तिः ॥ २ ॥ उद्घातमनुद्घातमारोपणं त्रिविधं निशीथं तु। इत्यष्टाविंशतिविध आचारप्रकल्पनामा तु ॥ ३ ॥"

*"अट्ठ निमित्तंगाइं, दिव्वुप्पायंतलिक्खभोमं च । अंगं सर-लक्खण वंजणं च तिविहं पुणेक्किक्कं ॥ १ ॥ सुत्तं वित्ती तह वत्तियं च पावसुयमउणतीसविहं । गंधव्व-नट्ट-वत्थुं आउं धणुवेयसंजुत्तं ॥ २ ॥" 'दिव्यं' व्यन्तराट्टहासादि, 'औत्पातं' सहजरुधिरवृष्ट्यादि, 'आन्तरिक्षं' ग्रहभेदादि, 'भौमं' भूविकाररूपं, 'व्यञ्जनं' मषादि, "वत्थु" त्ति वास्तुविद्या, "आउ" त्ति वैद्यकम्। मोहः—मोहनीयं तत्स्थानेषु त्रिंशत्सु, उक्तं हि—"वारिमज्झेऽवगाहित्ता, तसे पाणे विहिंसइ । छाएउ मुहं हत्थेणं, अंतो नायं गलेरवं ॥ १ ॥ सीसावेढेण वेढित्ता, संकिलेसेण मारए । सीसम्मि जे य आहंतु, दुहमारेण हिंसई ॥ २ ॥ बहुजणस्स नेयारं, दीवं ताणं च पाणिणं । साहारणे गिलाणम्मि, पहुकिच्चं न कुव्वई ॥ ३ ॥ साहुं अकम्मधम्मो उ, जो भंसेइ उवट्ठियं । नेयाउयस्स मग्गस्स, अवगारम्मि वट्टई ॥ ४ ॥ परेसिं सम्मदंसणाईण विपरिणामं करेइ त्ति वुत्तं भवइ । जिणाणऽणंतनाणीणं, अवण्णं जो पभासए । आयरियउवज्झाए, खिसए मंदबुद्धिए ॥ ५ ॥ तेसिमेव य नाणीणं, सम्मं नो परितप्पई । पुणो पुणो अहिगरणं, उप्पाए [ निवपत्थाणदिणाइ कहेइ त्ति वुत्तं भवइ ] तित्थभेयए ॥ ६ ॥

---

* "अष्ट निमित्ताङ्गानि दिव्यमौत्पातं आन्तरिक्षं भौमं च । आङ्गं स्वर-लक्षणे व्यञ्जनं च त्रिविधं पुनरेकैकम् ॥ १ ॥ सूत्रं वृत्तिस्तथा वार्तिकं च पापश्रुतमेकोनत्रिंशद्विधम् । गान्धर्व-नाट्य-वास्तु, आयुर्धनुर्वेदसंयुक्तम् ॥ २ ॥" २ "वारिमध्येऽवगाह्य त्रसान् प्राणान् विहिनस्ति । छादयित्वा मुखं हस्तेनान्तर्नादं रौद्रारवम् ॥ १ ॥ शीर्षावेष्टेन वेष्टयित्वा सङ्क्लेशेन मारयेत् । शीर्षे यश्चाऽऽहत्य दुःखमारेण हिनस्ति ॥ २ ॥ बहुजनस्य नेतारं, द्वीप त्राणं च प्राणिनाम् । साधारणे ग्लाने प्रभुकृत्यं न करोति ॥ ३ ॥ साधुमधर्मकर्मा तु, यो भ्रंशयेदुपस्थितम् । नैयायिकस्य मार्गस्यापकारे वर्तते ॥ ४ ॥ परेषां सम्यग्दर्शनादीनां विपरिणाम करोति इत्युक्तं भवति । जिनानामनन्तज्ञानिनामवर्णं यः प्रभाषते । आचार्योपाध्यायान् खिंसति मन्दबुद्धिकः ॥ ५ ॥ तेषामेव च ज्ञानिनां सम्यग् नो परितर्पयेत् । पुनः पुनरधिकरणमुत्पादयति [ नृपप्रस्थानदिनादि कथयति इत्युक्तं भवति ] तीर्थभेदकश्च ॥ ६ ॥

जाणं आहम्मिए जोए, पउंजेइ पुणो पुणो[23] । कामे वमेत्ता पत्थेइ, इहऽन्नभविएँ[24] इ वा ॥ ७ ॥ अभिक्खं बहुस्सुएऽहं ति जो भासंतऽबहुस्सुओ[25] । तहा य अतवस्सी वि, जे तवस्सि त्तिऽहं वएँ[26] ॥ ८ ॥ जायतेएण बहुजणं, अंतो धूमेण हिंसएँ । अकिच्चमप्पणा काउं, कयमेएण भासएँ ॥ ९ ॥ नियडुवहि-पणिहीए पलिउंचे सादिजोयजुत्ते यँ । वेइ सव्वं मुसं वयंसि[3], अज्झीणझंझए सयाँ[3] ॥ १० ॥ अद्धाणम्मि पविसित्ता, जो धणं हरइ पाणिणं[22] । वीसंभित्ता उवाएणं, दारे तस्सेव लुब्भइ[23] ॥ ११ ॥ अभिक्खमकुमारे उ, कुमारेऽहं ति भासएँ । एवं अबंभयारी वि बंभयारि त्ति भासएँ[25] ॥ १२ ॥ जेणेवेसरियं नीए, वित्ते तस्सेव लुब्भएँ[26] । तप्पहावुट्ठिए वा वि, अंतरायं करेइ से[27] ॥ १३ ॥ सेणावइं पसत्थारं, भत्तारं वा वि हिंसए । रट्ठस्स वा वि निगमस्स, नायगं सेट्ठिमेव वाँ ॥ १४ ॥ अपस्समाणो पस्सामि, अहं देव त्ति वा वएँ[29] । अवण्णेणं च देवाणं, महामोहं पकुव्वइँ[30] ॥ १५ ॥” सिद्धानामतिशायिनो गुणाः सिद्धातिगुणा एकत्रिंशद्, उक्तं हि—
“पडिसेहण[1] संठाणे, वन्न-गंध-रसे-फासे-वेएँ य । पण-पण-दु-पणऽट्ठ-तिहा इगतीसमकायऽसंगऽरुहा ॥ १ ॥ अथवा—

जानन् आधार्मिकान् योगान् प्रयुनक्ति पुनः पुनः । कामान् वान्त्वा प्रार्थयते इहान्यभविकान् वा ॥ ७ ॥ अभीक्ष्णं बहुश्रुतोऽहमिति यो भाषतेऽबहुश्रुतः । तथा चातपस्व्यपि यस्तपस्व्यहमिति वदेत् ॥ ८ ॥ जाततेजसा बहुजनमन्तर्धूमेन हिनस्ति । अकृत्यमात्मना कृत्वा कृतमेतेन भाषते ॥ ९ ॥ निकृत्युपधि-प्रणिधिकः परिकुञ्चति सातियोगयुक्तश्च । ब्रूते सर्वं मृषा वदसि अक्लेशं क्लेशयति सदा ॥ १० ॥ अध्वनि प्रवेश्य यो धनं हरति प्राणिनाम् । विश्रम्भ्योपायेन दारेषु तस्यैव लुभ्यति ॥ ११ ॥ अभीक्ष्णमकुमारस्तु कुमारोऽहमिति भाषते । एवमब्रह्मचार्यपि ब्रह्मचारीति भाषते ॥ १२ ॥ येनैश्वर्यं नीतो वित्ते तस्यैव लुभ्यति । तत्प्रभावोत्थितो वाऽपि अन्तरायं करोति तस्य ॥१३॥ सेनापतिं प्रशास्तारं भर्तारं वाऽपि हिनस्ति । राष्ट्रस्य वापि निगमस्य नायकं श्रेष्ठिनमेव वा ॥ १४ ॥ अपश्यन् पश्याम्यहं देवान् इति वा वदेत् । अवर्णेन च देवानां महामोहं प्रकुरुते ॥ १५ ॥” १ “प्रतिषेधनं संस्थाने वर्ण-गन्ध-रस-स्पर्श-वेदे च । पञ्च-पञ्च-द्वि-पञ्चा-ऽष्ट-त्रिधा एकत्रिंशदकायाऽसङ्गाऽरुहाः ॥ १ ॥

नन दरिसणम्मि चत्तारि आउए पंच आइमे अंते । सेसे दो दो भेया, खीणमिलावेण इगतीसं ॥ २ ॥" "जोगे" त्ति सूत्रकत्वात् सूत्रस्य योगसङ्ग्रहा यैः योगाः–शुभमनोवाक्कायव्यापाराः सङ्गृह्यन्ते–स्वीक्रियन्ते, ते च द्वात्रिंशद् , उक्तं हि–

*"आलोयणा निरवलावे, आवईसु दढधम्मया । अणिस्सिओवहाणे य, सिक्खा निप्पडिकम्मया ॥ १ ॥ निरपलापः साधुःऽऽचार्यः दत्तायामालोचनायां नान्यस्मै कथयति ॥ अन्नायया अलोभे य, तितिक्खा अज्जवे सुई । सम्मदिट्ठी समाही य, आयारे विणओवए ॥ २ ॥ अज्ञातता तपसि कार्या, तितिक्षा–परीपहादिजयः, 'सुइ' त्ति शुचिना भाव्यं संगमवतेत्यर्थः । धिईमई य [19]संवेगो, [20]पणिही सुविही [21]संवरे । अत्तदोसोवसंहारे, सव्वकामविरत्तया ॥ ३ ॥ धृति-प्रधाना मतिर्धृतिमतिः, प्रणिधिः–माया सा त्याज्या, सुविधिः कार्यः । पच्चक्खाणे विउस्सग्गे, अप्पमाए लवालवे । झाण-संवरजोगे य, उदए मारणंतिए ॥४॥ प्रत्याख्यानं मूलगुणोत्तरगुणविषयतया द्विभेदमिति द्वारद्वयम् । "लवालवे" त्ति कालोपलक्षणम्, क्षणे क्षणे सामाचार्यनुष्ठानं विधेयम्, ध्यानमेव संवरयोगो ध्यानसंवरयोगः, "उदए मारणंतिए" त्ति वेदनोदये मारणान्तिके न क्षोभः कार्यः । संगाणं च परिन्नाया, पायच्छित्तकरणे इय । आराहणा य मरणंते, बत्तीसं जोगसंगहा ॥५॥" ततो उक्ते सिद्धातिगुणयोगास्तेपु ॥ त्रयस्त्रिंशद् 'आशातनासु च' अर्हदादिविपयासु प्रतिक्रमणसूत्रप्रतीतासु पुरतः

---

नव दर्शने चत्वार्यायुषि पञ्चादावन्ते । शेषे द्वौ द्वौ भेदौ क्षीणाभिलापेन चैकत्रिंशत् ॥ २ ॥" * "आलोचना निरपलाप आपत्सु दृढधर्मता । अनिश्रितोपधानश्च शिक्षा निष्प्रतिकर्मता ॥ १ ॥ अज्ञातता अलोभश्च तितिक्षाऽऽर्जवः शुचिः । सम्यग्दृष्टिः समाधिश्चाचारो विनयोपगः ॥ २ ॥ धृतिमतिश्च संवेगः प्रणिधिः सुविधिः संवरः । आत्मदोषोपसंहारः सर्वकामविरक्तता ॥ ३ ॥ प्रत्याख्यानं व्युत्सर्गोऽप्रमादो लवालवः । ध्यानसंवरयोगश्चोदये मारणान्तिके ॥ ४ ॥ सङ्गानां च परिज्ञाता प्रायश्चित्तकरणमिति । आराधना च मरणान्ते द्वात्रिंशद् योगसङ्ग्रहाः ॥ ५ ॥"

चरण-विधानम् ।

शिक्षकगमनादिकासु वा समवायाङ्गामिहितासु, तथाहि—*सेहे राइणियस्स पुरओ[1] वा पक्खओ[2] वा आसन्ने[3] वा गंता भवइ। एवं चिट्ठित्ता ६। एवं निसीइत्ता। ९। बहिया वियारभूमीगए पुव्वतरं आयामइ। पुव्विं चेव गमणागमणं आलोएइ[11]। राओ वाहरमाणस्स राइणियस्स जागरमाणे वि अपडिसुणेत्ता[12] भवइ। कंचि आलवियव्वं पुव्विं चेव आलवइ[13]। असणाई पुव्वं सेहतरस्स आलोएइ पच्छा राइणियस्स[14]। एवं उवदंसेइ[15]। एवं निमंतणं[16] करेइ। अणापुच्छाए जो जमिच्छइ तस्स तं खद्धं खद्धं[17] देइ प्रचुरमित्यर्थः। मणुन्नं मणुन्नं अप्पणा चेव आहारेइ[18]। दिवसओ रायणियस्स वाहरमाणस्स न पडिसुणेइ[19]। राइणियस्स खद्धं खद्धं वत्ता भवइ वड्डुसद्देण खरनिट्ठुरं भणंतीत्यर्थः[20]। वाहरिए संते जत्थ गए सुणइ तत्थ गए चेव उल्लावं देइ[21]। किं भणसि त्ति वत्ता भवति[22]। तुमं ति वयई[23]। तज्जाएण पडिभणइ—कीस अज्जो गिलाणस्स न करेइ? इच्चाइ भणिओ तुमं कीस न करेसि? त्ति भणतीत्यर्थः[24]। कहं कहेमाणस्स नो सुमणसो हवइ[25]। नो सुमरसि तुमं ति भासइ[26]। कहं छेत्ता भवइ[27]। परिसं भेत्ता भवइ—भिक्खावेला वट्टइ एवमाइउल्लवणेण सुत्तऽत्थपोरिसिं भिनत्तीत्यर्थः[28]।

---

* “शैक्षो रात्निकस्य पुरतो वा पार्श्वतो वा आसन्ने वा गन्ता भवति ३। एवं स्थित्वा ६। एवं निषद्य ९। बहिस्ताद् विचारभूमिगतः पूर्वतरं आचामति १०। पूर्वं चैव गमनागमनमालोचयति ११। रात्रौ व्याहरतो रात्निकस्य जाग्रदपि अप्रतिश्रोता भवति १२। कञ्चिदालपितव्यं पूर्वं चैवालपति १३। अशनादि पूर्वं शैक्षतरस्य आलोचयति पश्चाद् रात्निकस्य १४। एवं उपदर्शयति १५। एवं निमन्त्रणं करोति १६। अनापृच्छया यो यदिच्छति तस्मै तत् प्रचुरं प्रचुरं ददाति १७। मनोज्ञं मनोज्ञं आत्मना एव आहरति १८। दिवसतः रात्निकस्य व्याहरतो न प्रतिशृणोति १९। रात्निकस्य शीघ्रं शीघ्रं वक्ता भवति, महच्छब्देन खरनिष्ठुरं भणति २०। व्याहृतः सन् यत्र गतः शृणोति तत्र गतश्चैवोल्लापं ददाति २१। किं भणसि इति वक्ता भवति २२। त्वमिति वदति २३। तज्जातेन प्रतिभणति—कस्माद् आर्यो ग्लानस्य न करोति? इत्यादि भणितः त्वं कस्मात् न करोति? इति भणति २४। कथां कथयमाणस्य नो सुमना भवति २५। नो स्मरसि त्वमिति भाषते २६। कथां छेत्ता भवति २७। परिषदं भेत्ता भवति—भिक्षवेला वर्तते एवमाद्युल्लपनेन सूत्रार्थपौरुषीं भिनत्ति २८।

अणुट्ठियाए परिसाए कड्ढेइ, तह निविट्ठाए चेव, अहिगयरेहिं अत्थेहिं तमेव सुत्तं विगप्पेई इत्यर्थः । संथारयं पाएण घट्टेई । संथारए निसीयइ तुयट्टइ वा[31] । उच्चासणे निसीयइ[32] । समासणे वा[33] । यो भिक्षुर्येतवे यथायोगं श्रद्धानसेवनावर्जनादिना इत्येकोनविंशतिसूत्रार्थः ॥ २-३-४-५-६-७-८-९-१०-११-१२-१३-१४-१५-१६-१७-१८-१९-२० ॥

अध्ययनार्थं निगमयितुमाह—

**इइ एएसु ठाणेसु, जे भिक्खू जयई सया । खिप्पं से सव्वसंसारा, विप्पमुच्चइ पंडिए ॥२१॥ त्ति बेमि ॥**

व्याख्या—'इति' अनेन प्रकारेण 'एतेषु' अनन्तरोक्तेषु, शेषं स्पष्टमिति ॥ २१ ॥

इति श्रीनेमिचन्द्रसूरिविरचितायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां चरणविधिनामकमेकत्रिंशमध्ययनं समाप्तम् ॥

---

अनुत्थितायै परिषदे कथयति, तथा निविष्टायै चैव, अधिकतरैरर्थैः तदेव सूत्रं विकल्पयति २९ । संस्तारकं पादेन घट्टयति ३० । संस्तारके निषीदति त्वग्वर्तयति वा ३१ । उच्चासने निषीदति ३२ । समासने वा ३३ ।"

प्रमादस्य स्थानानि ।

# अथ द्वात्रिंशत्तमं प्रमादस्थानाख्यमध्ययनम् ।

'अनन्तराध्ययने चरणमभिहितम्, तच्च प्रमादस्थानपरिहारत एवाऽऽसेवितुं शक्यं तत्परिहारश्च तत्परिज्ञानपूर्वक इति तदर्थं द्वात्रिंशमप्रमादस्थाननामकमध्ययनमधुनाऽऽरभ्यते' इति सम्बन्धस्याऽस्येदमादिसूत्रम्—

**अच्चंतकालस्स समूलयस्स, सव्वस्स दुक्खस्स उ जो पमोक्खो ।**
**तं भासओ मे पडिपुण्णचित्ता, सुणेह एगंतहियं हियत्थं ॥ १ ॥**

व्याख्या—अन्तमतिक्रान्तोऽत्यन्तः, वस्तुनश्च द्वावन्तौ—आरम्भक्षणो निष्ठाक्षणश्च, तत्रेह आरम्भक्षणोऽन्तः परिगृह्यते, तथा चात्यन्तः—अनादिः कालो यस्य सोऽत्यन्तकालस्तस्य, सह मूलेन—कषायाविरतिरूपेण वर्त्तत इति समूलकस्तस्य, उक्तं हि—"[1]मूलं संसारस्स उ, हुंति कसाया अविरई य" । सर्वस्य, दुःखयतीति दुःखं—संसारस्तस्य यः प्रकर्षेण मोक्षः—अपगमः प्रमोक्षः पूर्वस्य तुशब्दस्यावधारणार्थस्येह सम्बन्धात् प्रमोक्ष एव, तं भाषमाणस्य मे प्रतिपूर्ण—प्रक्रान्तार्थश्रवणव्यतिरिक्तविषयान्तरागमनेनाऽखण्डितं चित्तं येषां ते प्रतिपूर्णचित्ताः शृणुत एकान्तहितं, हितः—तत्त्वतो मोक्ष एव तदर्थमिति सूत्रार्थः ॥ १ ॥ यथाप्रतिज्ञातमाह—

**नाणस्स सव्वस्स पगासणाए, अन्नाणमोहस्स विवज्जणाए ।**
**रागस्स दोसस्स य संखएणं, एगंतसुक्खं समुवेइ मोक्खं ॥ २ ॥**

1 "मूलं संसारस्य तु भवन्ति कषाया अविरतिश्च" ।

प्रमादस्य स्थानानि ।

व्याख्या—'ज्ञानस्य' आभिनिबोधिकज्ञानादेः सर्वस्य, पाठान्तरेण सत्यस्य वा 'प्रकाशनया' निर्मलीकरणेन, अनेन ज्ञानात्मको मोक्षहेतुरुक्तः, तथा अज्ञानं—मत्यज्ञानादि मोहः—दर्शनमोहनीयम् अनयोः समाहारस्तस्य 'विवर्जनया' मिथ्याश्रुतश्रवणकुदृष्टिसङ्गपरिहारादिना, अनेन स एव सम्यग्दर्शनात्मकोऽभिहितः, रागस्य द्वेपस्य च सङ्क्षयेण, एतेन तस्यैव चारित्रात्मकस्याऽभिधानम्, रागद्वेपयोरेव तदुपघातकत्वाऽभिधानात्, ततश्चायमर्थः—सम्यग्दर्शनज्ञानचारित्रैरे-कान्तसौख्यं समुपैति मोक्षम्, अयं च दुःखप्रमोक्षाविनाभावी इत्यनेन स एवोपलक्षित इति सूत्रार्थः ॥ २ ॥ नन्वस्तु ज्ञानादिभिर्दुःखप्रमोक्षः, अमीपां तु कः प्राप्तिहेतुः ? उच्यते—

तस्सेस मग्गो गुरु-विद्धसेवा, विवज्जणा बालजणस्स दूरा ।
सज्झायएगंतनिसेवणा य, सुत्तऽत्थसंचिंतणया धिई य ॥ ३ ॥

व्याख्या—'तस्ये'ति अनन्तरमुक्तस्य मोक्षोपायस्यैपः 'मार्गः' पन्था उपाय इत्यर्थः, यदुत गुरवः—यथावच्छास्त्राऽभिधायका वृद्धाश्च—श्रुतपर्यायादिवृद्धास्तेपां सेवा गुरुवृद्धसेवा, विवर्जना 'बालजनस्य' पार्श्वस्थादेः 'दूरात्' दूरेण, तथा स्वाध्यायस्यैकान्तनिपेवणा स्वाध्यायैकान्तनिपेवणा, 'चः' समुच्चये, सूत्रार्थसञ्चिन्तना धृतिश्च, नहि धृतिं विना ज्ञानादिलाभ इति सूत्रार्थः ॥ ३ ॥ यद्येवंविधो ज्ञानादिमार्गः तत एतान्यभिलपता प्राक् किं विधेयम् ? इत्याह—

आहारमिच्छे मियमेसणिज्जं, सहायमिच्छे निउणत्थवुद्धिं ।
निकेयमिच्छिज्ज विवेगजोगं, समाहिकामे समणे तवस्सी ॥ ४ ॥

व्याख्या—आहारमिच्छेद् मितमेपणीयं सहायमिच्छेद् निपुणा अर्थेपु—जीवादिपु बुद्धिर्यस्य स तथा तं, निकेतमिच्छेद् निकेतः—स्त्र्यादिसंसर्गत्यागयोग्यं तदुचितं, समाधिकामः श्रमणः तपस्वीति सूत्रार्थः ॥४॥ एवंविधसहायाऽप्राप्तौ यत् कृत्यं तदाह—

न वा लभिज्जा निउणं सहायं, गुणाहियं वा गुणओ समं वा ।
इक्को वि पावाइँ विवज्जयंतो, विहरेज्ज कामेसु असज्जमाणो ॥ ५ ॥

व्याख्या—'न' निषेधे, वाशब्दः चेदर्थे, ततश्च न चेद् लभेत, शेषं सुगमम् ॥ ५ ॥ इत्थं सप्रसङ्गं ज्ञानादीनां दुःखप्रमोक्षोपायत्वमुक्तम् । इदानीं तेषामपि मोहादिक्षयनिबन्धनत्वात् तत्क्षयस्यैव प्राधान्येन दुःखप्रमोक्षहेतुत्वख्यापनार्थं यथा मोहादीनां सम्भवः यथा दुःखहेतुत्वं यथा च दुःखस्याभावः प्रसङ्गतस्तेषां चाभावः तथाऽभिधातुमाह—

प्रमादस्य स्थानानि ।

जहा य अंडप्पभवा बलागा, अंडं बलागप्पभवं जहा य ।
एमेव मोहाययणं खु तण्हं, मोहं च तण्हाययणं वयंति ॥ ६ ॥
रागो य दोसो वि य कम्मबीयं, कम्मं च मोहप्पभवं वयंति ।
कम्मं च जाई-मरणस्स मूलं, दुक्खं च जाई-मरणं वयंति ॥ ७ ॥
दुक्खं हयं जस्स न होइ मोहो, मोहो हओ जस्स न होइ तण्हा ।
तण्हा हया जस्स न होइ लोभो, लोभो हओ जस्स न किंचणाइं ॥ ८ ॥

व्याख्या—'यथा च' येनैव प्रकारेण अण्डप्रभवा बलाका अण्डं बलाकाप्रभवं यथा च, 'एवमेव' अनेनैव प्रकारेण मोहः—अज्ञानं मिथ्यादर्शनं च स आयतनं—उत्पत्तिस्थानं यस्याः सा मोहायतना तां, 'खुः' अवधारणे, तृष्णां वदन्तीति सम्बन्धः, यथोक्तमोहाभावे ह्यवश्यम्भावी तृष्णाक्षयः, मोहं च तृष्णायतनं वदन्ति । तृष्णा हि सति वस्तुनि मूर्च्छा, स चा रागप्रधाना ततस्तया राग उपलक्ष्यते, सति च तत्र द्वेषोऽपि भवतीति सोऽपि अनयैवाक्षिप्यते, ततस्तृष्णाग्रहणेन रागद्वेषावुक्तौ, तदुत्कटतायां च सिद्ध एव मोहः, एतेन च परस्परं हेतु-हेतुमद्भावाऽभिधानेन यथा रागादीनां

॥ ३५२ ॥

सम्भवलयोक्तम् ॥ सम्प्रति यथैषां दुःखहेतुत्वं तथा वक्तुमाह—रागश्च द्वेषोऽपि च कर्मबीजं, कर्म चस्य मिश्रकमत्वाद् 'ह यमि'त्यादि, 'मिश्रनानि' मोहप्रभवं च वदन्ति, उत्तरार्द्धं सुगमम् ॥ यतश्चैवम् अतः किं स्थितम्? इत्याह—दुःखं 'ह यमि'त्यादि, 'मिश्रनानि' द्रव्याणि, शेषं स्पष्टमिति सूत्रत्रयार्थः ॥ ६-७-८ ॥ सन्त्वेवं दुःखस्य मोहादयो हेतवः, हननोपायः तेषामयमेव ? उताऽन्योऽप्यस्ति? इत्याशङ्क्याह—

प्रमादस्य स्थानानि ।

रागं च दोसं च तहेव मोहं, उद्धत्तुकामेण समूलजालं ।
जे जे उवाया पडिवज्जियव्वा, ते कित्तइस्सामि अहाणुपुव्विं ॥ ९ ॥

व्याख्या—सह मूलानामिव मूलानां तीव्रकषायोदयादीनां मोहप्रकृतीनां जालेन—समूहेन वर्त्तत इति समूलजालस्तं, शेषं स्पष्टम् ॥ ९ ॥ यथाप्रतिज्ञातमेवाह—

रसा पगामं न निसेवियव्वा, पायं रसा दित्तिकरा नराणं ।
दित्तं च कामा समभिद्दवंति, दुमं जहा साउफलं व पक्खी ॥ १० ॥
जहा दवग्गी पउरिंधणे वणे, समारुओ नोवसमं उवेइ ।
एविंदियग्गी वि पगामभोइणो, न बंभयारिस्स हियाय कस्सई ॥ ११ ॥
विवित्तसिज्जासणजंतियाणं, ओमासणाणं दमिइंदियाणं ।
न रागसत्तू धरिसेइ चित्तं, पराइओ वाहिरिवोसहेहिं ॥ १२ ॥
जहा विरालावसहस्स मूले, न मूसगाणं वसही पसत्था ।
एमेव इत्थीनिलयस्स मज्झे, न बंभयारिस्स खमो निवासो ॥ १३ ॥

प्रमादस्य स्थानानि ।

न रूव-लावण्ण-विलास-हासं, न जंपियं इंगिय पेहियं वा ।
इत्थीण चित्तंसि निवेसइत्ता, दट्ठुं ववस्से समणे तवस्सी ॥ १४ ॥
अदंसणं चेव अपत्थणं च, अचिंतणं चेव अकित्तणं च ।
इत्थीजणस्सारियझाणजुग्गं, हियं सया बंभवए रयाणं ॥ १५ ॥
कामं तु देवीहि विभूसियाहिं, न चाइया खोभइउं तिगुत्ता ।
तहा वि एगंतहियं ति नच्चा, विवित्तवासो मुणिणं पसत्थो ॥ १६ ॥
मोक्खाभिकंखिस्स वि माणवस्स, संसारभीरुस्स ठियस्स धम्मे ।
न तारिसं दुत्तरमत्थि लोए, जह त्थिओ बालमणोहराओ ॥ १७ ॥
एए य संगे समइक्कमित्ता, सुहुत्तरा चेव भवंति सेसा ।
जहा महासागरमुत्तरित्ता, नई भवे अवि गंगासमाणा ॥ १८ ॥
कामाणुगिद्धिप्पभवं खु दुक्खं, सव्वस्स लोगस्स सदेवगस्स ।
जं काइयं माणसियं च किंचि, तस्संतगं गच्छइ वीयरागो ॥ १९ ॥
जहा य किंपागफला मणोरमा, रसेण वण्णेण य भुज्जमाणा ।
ते खुद्दए जीविय पच्चमाणा, एओवमा कामगुणा विवागे ॥ २० ॥

व्याख्या—सुगमम् । नवरम्—'दृप्तिकराः' धातूद्रेककारिणः, दृप्तं च कामाः समभिद्रवन्ति, कमिव के? इत्याह—द्रुमं यथा स्वादुफलं, 'वे'ति भिन्नक्रमः, ततश्च पक्षिण इव ॥ किञ्च—"जहे"त्यादि ॥ विविक्तशय्यावस्थानेऽपि

प्रमादस्य स्थानानि ।

कदाचित् स्त्रीसम्पाते यत्कर्त्तव्यं तदाह—'न' नैव रूपं–सुसंस्थानता लावण्यं–नयनमनसामाह्लादको गुणः विलासाः–विशिष्टनेपथ्यरचनादयः हासः–प्रतीत एषां समाहारः, न 'जल्पितम्' उल्लपितं "इंगिय" त्ति बिन्दुलोपात् 'इङ्गितम्' अङ्गभङ्गादि 'वीक्षितं' प्रतीतं 'वा' समुच्चये, स्त्रीणां सम्बन्धि चित्ते 'निवेश्य' अहो! सुन्दरमिदमिति विकल्पतः स्थापयित्वा 'द्रष्टुम्' इन्द्रियविषयतां नेतुं व्यवस्येत् श्रमणः तपस्वी ॥ किमित्येवमुपदिश्यते? इत्याह—अदर्शनं च, 'एव' अवधारणे, अदर्शनमेव च अप्रार्थनं च 'अचिन्तनं चैव' रूपाद्यपरिभावनम् 'अकीर्त्तनं च' नामतो गुणतो वा स्त्रीजनस्य, आर्यध्यानं–धर्मादि तद्योग्यं–तद्धेतुत्वेनोचितम् ॥ ननु विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः, तत्किमिति विविक्तशय्यासनता विधीयते? इत्याह—"कामं तु" त्ति अनुमतमेवैतद् यद् 'देवीभिः' इत्यादि ॥ विविक्तशय्यासनतासमर्थनार्थमेव स्त्रीणां दुरतिक्रमत्वमाह—"मोक्खे"त्यादि ॥ स्त्रीसङ्गातिक्रमेण गुणमाह—एतांश्च 'सङ्गान्' सम्बन्धान् प्रक्रमात् स्त्रीविषयान् समतिक्रम्य सुखोत्तराश्चैव भवन्ति 'शेषाः' द्रव्यादिसङ्गाः, यथा महासागरमुत्तीर्य नदी भवेत् सुखोत्तरैवेति प्रक्रमः "अवि गंगासमाण" त्ति गङ्गासमानाऽपि ॥ किञ्च—कामेषु अनुगृद्धिः–सतताऽभिकाङ्क्षा कामानुगृद्धिस्तत्प्रभवमेव खुशब्दस्याऽवधारणार्थत्वाद् दुःखं सर्वस्य लोकस्य सदेवकस्य यत् कायिकं मानसिकं च 'किञ्चिद्' अल्पमपि तस्याऽन्तमेवाऽन्तकं गच्छति वीतरागः ॥ ननु कामाः सुखरूपाः, तत्कथं तत्प्रभवमेव दुःखम्? उच्यते—'यथा न' यथैव किम्पाकफलानि अपेगन्धमानत्वाद् मनोरमाण्यपि रसेन वर्णेन चशब्दाद् गन्धादिना च भुज्यमानानि 'तानि' लोकप्रतीतानि "खुड्ड" त्ति आर्षत्वात् 'क्षोदयन्ति' विनाशयन्ति जीवितं 'पच्यमानानि' विपाकावस्थाप्राप्तानि । एतदुपमाः कामगुणा विपाके विपाकदारुणतासाम्येन तत्तुल्या इति भाव इति सूत्रैकादशकार्थः ॥ १०-११-१२-१३-१४-१५-

१०६० १६-१७-१८-१९-२० ॥ इत्थं रागस्य केवलस्योद्धरणोपायमभिधाय सम्प्रति तस्यैव द्वेषसहितस्य तमाह—

जे इंदियाणं विसया मणुन्ना, न तेसु भावं निसिरे कयाई ।
न याऽमणुन्नेसु मणं पि कुज्जा, समाहिकामे समणे तवस्सी ॥ २१ ॥

व्याख्या—ये इन्द्रियाणां विषया मनोज्ञा न तेषु 'भावम्' अभिप्रायम् अपेर्गम्यमानत्वाद् भावमपि प्रस्तावादिन्द्रियाणि प्रवर्त्तयितुं किं पुनस्तत्प्रवर्त्तनमित्यपिशब्दार्थः 'निसृजेत्' कुर्यात् कदाचित्, न चामनोज्ञेषु मनोऽपि, अत्रापि इन्द्रियाणि प्रवर्त्तयितुमपि प्राग्वत् कुर्यात् समाधिकामः श्रमणः तपस्वी इति सूत्रार्थः ॥ २१ ॥ इत्थं रागद्वेषोद्धरणैषिणो विषयेभ्यो निवर्त्तनमिन्द्रियाणामुपदिष्टम् । अधुना तेषु तत्प्रवर्त्तने रागद्वेषाऽनुद्धरणे च यो दोषस्तं प्रत्येकमिन्द्रियाणि तत्प्रसङ्गतो मनश्चाश्रित्य दर्शयितुमाह—

चक्खुस्स रूवं गहणं वयंति, तं रागहेउं तु मणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु, समो य जो तेसु स वीयरागो ॥ २२ ॥
रूवस्स चक्खुं गहणं वयंति, चक्खुस्स रूवं गहणं वयंति ।
रागस्स हेउं समणुन्नमाहु, दोसस्स हेउं अमणुन्नमाहु ॥ २३ ॥
रूवेसु जो गिद्धिमुवेइ तिव्वं, अकालियं पावइ सो विणासं ।
रागाउरे से जह वा पयंगे, आलोयलोले समुवेइ मच्चुं ॥ २४ ॥
जे यावि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दंतदोसेण सएण जंतू, न किंचि रूवं अवरज्झई से ॥ २५ ॥

एगंतरत्तो रुइरंसि रूवे, अतालिसे से कुणई पओसं ।
दुक्खस्स संपीलमुवेइ बाले, न लिप्पई तेण मुणी विरागे ॥ २६ ॥
रूवाणुगासाणुगए य जीवे, चराचरे हिंसइ णेगरूवे ।
चित्तेहिं ते परियावेइ बाले, पीलेइ अत्तट्ठ गुरू किलिट्ठे ॥ २७ ॥
रूवाणुवाए ण परिग्गहेण, उप्पायणे रक्खणसन्निओगे ।
वए विओगे य कहं सुहं से, संभोगकाले य अतित्तिलाभे ॥ २८ ॥
रूवे अतित्ते अ परिग्गहम्मि, सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥ २९ ॥
तण्हाभिभूयस्स अदत्तहारिणो, रूवे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा, तत्थाऽवि दुक्खा न विमुच्चई से ॥ ३० ॥
मोसस्स पच्छा य पुरत्थओ य, पओगकाले य दुही दुरंते ।
एवं अदत्ताणि समाययंतो, रूवे अतित्तो दुहिओ अणिस्सो ॥ ३१ ॥
रूवाणुरत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि ? ।
तत्थोवभोगे वि किलेसदुक्खं, निव्वत्तई जस्स कए ण दुक्खं ॥ ३२ ॥
एमेव रूवम्मि गओ पओसं, उवेइ दुक्खोहपरंपराओ ।
पउट्ठचित्तो अ चिणाई कम्मं, जं से पुणो होइ दुहं विवागे ॥ ३३ ॥

प्रमादस्य स्थानानि ।

रूवे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण ।
न लिप्पई भवमज्झे वि संतो, जलेण वा पुक्खरिणीपलासं ॥ ३४ ॥
सोयस्स सद्दं गहणं वयंति, तं रागहेउं तु मणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु, समो य जो तेसु स वीयरागो ॥ ३५ ॥
सद्दस्स सोयं गहणं वयंति, सोयस्स सद्दं गहणं वयंति ।
रागस्स हेउं समणुन्नमाहु, दोसस्स हेउं अमणुन्नमाहु ॥ ३६ ॥
सद्देसु जो गिद्धिमुवेइ तिव्वं, अकालियं पावइ से विणासं ।
रागाउरे हरिणमिए व मुद्धे, सद्दे अतित्ते समुवेइ मच्चुं ॥ ३७ ॥
जे यावि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दंतदोसेण सएण जंतू, न किंचि सद्दं अवरज्झई से ॥ ३८ ॥
एगंतरत्तो रुइरंसि सद्दे, अतालिसे से कुणई पओसं ।
दुक्खस्स संपीलमुवेइ बाले, न लिप्पई तेण मुणी विरागो ॥ ३९ ॥
सद्दाणुगासाणुगए य जीवे, चराचरे हिंसइ णेगरूवे ।
चित्तेहिं ते परियावेइ बाले, पीलेइ अत्तट्ठ गुरू किलिट्ठे ॥ ४० ॥
सद्दाणुवाएण परिग्गहेण, उप्पायणे रक्खणसन्निओगे ।
वए विओगे य कहं सुहं से, संभोगकाले य अतित्तिलाभे ॥ ४१ ॥

सद्दे अतित्ते य परिग्गहम्मि, सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥ ४२ ॥
तण्हाऽभिभूयस्स अदत्तहारिणो, सद्दे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा, तत्थावि दुक्खा न विमुच्चई से ॥ ४३ ॥
मोसस्स पच्छा य पुरत्थओ य, पओगकाले य दुही दुरंते ।
एवं अदत्ताणि समाययंतो, सद्दे अतित्तो दुहिओ अणिस्सो ॥ ४४ ॥
सद्दाणुरत्तस्स नरस्स एवं, कत्तो सुहं हुज्ज कयाइ किंचि ।
तत्थोवभोगे वि किलेसदुक्खं, निव्वत्तए जस्स कए न दुक्खं ॥ ४५ ॥
एमेव सद्दम्मि गओ पओसं, उवेइ दुक्खोहपरंपराओ ।
पदुट्ठचित्तो य चिणेइ कम्मं, जं से पुणो होइ दुहं विवागे ॥ ४६ ॥
सद्दे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण ।
न लिप्पई भवमज्झे वि संतो, जलेण वा पुक्खरिणीपलासं ॥ ४७ ॥
घाणस्स गंधं गहणं वयंति, तं रागहेउं समणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु, समो य जो तेसु स वीयरागो ॥ ४८ ॥
गंधस्स घाणं गहणं वयंति, घाणस्स गंधं गहणं वयंति ।
रागस्स हेउं समणुन्नमाहु, दोसस्स हेउं अमणुन्नमाहु ॥ ४९ ॥

प्रमादस्य स्थानानि ।

गंधस्स जो गिद्धिमुवेइ तिव्वं, अकालियं पावइ से विणासं ।
रागाउरे ओसहिगंधगिद्धे, सप्पे बिलाओ विव निक्खमंतो ॥ ५० ॥
जे आवि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दंतदोसेण सएण जंतू, न किंचि गंधो अवरज्झई से ॥ ५१ ॥
एगंतरत्तो रुइरंसि गंधे, अतालिसे से कुणई पओसं ।
दुक्खस्स संपीलमुवेइ बाले, न लिप्पई तेण मुणी विरागो ॥ ५२ ॥
गंधाणुयासाणुगए य जीवे, चराचरे हिंसइ णेगरूवे ।
चित्तेहिं ते परितावेइ बाले, पीलेइ अत्तट्ठ गुरू किलिट्ठे ॥ ५३ ॥
गंधाणुवाएण परिग्गहेण, उप्पायणे रक्खणसन्निओगे ।
वए विओगे य कहं सुहं से, संभोगकाले य अतित्तिलाभे ॥ ५४ ॥
गंधे अतित्ते य परिग्गहम्मि, सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥ ५५ ॥
तण्हाऽभिभूयस्स अदत्तहारिणो, गंधे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा, तत्थाऽवि दुक्खा न विमुच्चई से ॥ ५६ ॥
मोसस्स पच्छा य पुरत्थओ य, पओगकाले य दुही दुरंते ।
एवं अदत्ताणि समाययंतो, गंधे अतित्तो दुहिओ अणिस्सो ॥ ५७ ॥

गंधाणुरत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि ? ।
तत्थोवभोगे वि किलेसदुक्खं, निव्वत्तए जस्स कए ण दुक्खं ॥ ५८ ॥
एमेव गंधम्मि गओ पओसं, उवेइ दुक्खोहपरंपराओ ।
पदुट्ठचित्तो य चिणाइ कम्मं, जं से पुणो होइ दुहं विवागे ॥ ५९ ॥
गंधे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण ।
न लिप्पई भवमज्झे वि संतो, जलेण वा पुक्खरिणीपलासं ॥ ६० ॥
जिब्भाए रसं गहणं वयंति, तं रागहेउं समणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु, समो य जो तेसु स वीयरागो ॥ ६१ ॥
रसस्स जिब्भं गहणं वयंति, जिब्भाए रसं गहणं वयंति ।
रागस्स हेउं समणुन्नमाहु, दोसस्स हेउं अमणुन्नमाहु ॥ ६२ ॥
रसस्स जो गिद्धिमुवेइ तिव्वं, अकालियं पावइ से विणासं ।
रागाउरे बडिसविभिन्नकाए, मच्छे जहा आमिसभोगगिद्धे ॥ ६३ ॥
जे आवि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दंतदोसेण सएण जंतू, रसं न किंचि अवरज्झई से ॥ ६४ ॥
एगंतरत्तो रुइरे रसम्मि, अतालिसे से कुणई पओसं ।
दुक्खस्स संपीलमुवेइ बाले, न लिप्पई तेण मुणी विरागो ॥ ६५ ॥

प्रमादस्य
स्थानानि ।

रसाणुयासाणुगए य जीवे, चराचरे हिंसइ णेगरूवे ।
चित्तेहिं ते परितावेइ बाले, पीलेइ अत्तट्ठ गुरू किलिट्ठे ॥ ६६ ॥
रसाणुवाएण परिग्गहेण, उप्पायणे रक्खणसन्निओगे ।
वए विओगे य कहं सुहं से, संभोगकाले य अतित्तिलाभे ॥ ६७ ॥
रसे अतित्ते य परिग्गहम्मि, सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥ ६८ ॥
तण्हाऽभिभूयस्स अदत्तहारिणो, रसे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा, तत्थाऽवि दुक्खा न विमुच्चती से ॥ ६९ ॥
मोसस्स पच्छा य पुरत्थओ य, पओगकाले य दुही दुरंते ।
एवं अदत्ताणि समाइयंतो, रसे अतित्तो दुहिओ अणिस्सो ॥ ७० ॥
रसाणुरत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि? ।
तत्थोवभोगे वि किलेसदुक्खं, निव्वत्तए जस्स कए न दुक्खं ॥ ७१ ॥
एमेव रसम्मि गओ पओसं, उवेइ दुक्खोहपरंपराओ ।
पउट्ठचित्तो य चिणाति कम्मं, जं से पुणो होइ दुहं विवागे ॥ ७२ ॥
रसे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण ।
न लिप्पई भवमज्झे वि संतो, जलेण वा पुक्खरिणीपलासं ॥ ७३ ॥

कायस्स फासं गहणं वयंति, तं रागहेउं समणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु, समो य जो तेसु स वीयरागो ॥ ७४ ॥
फासस्स कायं गहणं वयंति, कायस्स फासं गहणं वयंति ।
रागस्स हेउं समणुण्णमाहु, दोसस्स हेउं अमणुन्नमाहु ॥ ७५ ॥
फासस्स जो गिद्धिमुवेइ तिव्वं, अकालियं पावइ से विणासं ।
रागाउरे सीयजलावसन्ने, गाहग्गहीए महिसे व रन्ने ॥ ७६ ॥
जे यावि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दंतदोसेण सएण जंतू, न किंचि फासं अवरज्झई से ॥ ७७ ॥
एगंतरत्तो रुइरंसि फासे, अतालिसे से कुणई पओसं ।
दुक्खस्स संपीलमुवेइ बाले, न लिप्पई तेण मुणी विरागो ॥ ७८ ॥
फासाणुगासाणुगए य जीवे, चराचरे हिंसइ णेगरूवे ।
चित्तेहिं ते परितावेइ बाले, पीलेइ अत्तट्ठ गुरू किलिट्ठे ॥ ७९ ॥
फासाणुवाएण परिग्गहेण, उप्पायणे रक्खण-सन्निओगे ।
वए विओगे य कहं सुहं से, संभोगकाले य अतित्तिलाभे ॥ ८० ॥
फासे अतित्ते य परिग्गहम्मि, सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥ ८१ ॥

तण्हाऽभिभूयस्स अदत्तहारिणो, फासे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा, तत्थाऽवि दुक्खा न विमुच्चई से ॥ ८२ ॥
मोसस्स पच्छा य पुरत्थओ य, पओगकाले य दुही दुरंते ।
एवं अदत्ताणि समाइयंतो, फासे अतित्तो दुहिओ अणिस्सो ॥ ८३ ॥
फासाणुरत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि ? ।
तत्थोवभोगे वि किलेसदुक्खं, निव्वत्तए जस्स कए न दुक्खं ॥ ८४ ॥
एमेव फासम्मि गओ पओसं, उवेइ दुक्खोहपरंपराओ ।
पउट्ठचित्तो य चिणाइ कम्मं, जं से पुणो होइ दुहं विवागे ॥ ८५ ॥
फासे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपराओ ।
न लिप्पई भवमज्झे वि संतो, जलेण वा पुक्खरिणीपलासं ॥ ८६ ॥
मणस्स भावं गहणं वयंति, तं रागहेउं समणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु, समो य जो तेसु स वीयरागो ॥ ८७ ॥
भावस्स मणं गहणं वयंति, मणस्स भावं गहणं वयंति ।
रागस्स हेउं समणुन्नमाहु, दोसस्स हेउं अमणुन्नमाहु ॥ ८८ ॥
मणेण जो गिद्धिमुवेइ तिव्वं, अकालियं पावइ से विणासं ।
रागाउरे कामगुणेसु गिद्धे, करेणुमग्गावहिए गए वा ॥ ८९ ॥

जे आवि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दंतदोसेण सएण जंतू, न किंचि भावं अवरज्झई से ॥ ९० ॥
एगंतरत्तो रुइरंसि भावे, अतालिसे से कुणई पओसं ।
दुक्खस्स संपीलमुवेइ बाले, न लिप्पई तेण मुणी विरागो ॥ ९१ ॥
भावाणुगासाणुगए य जीवे, चराचरे हिंसइ णेगरूवे ।
चित्तेहिं ते परितावेइ बाले, पीलेइ अत्तट्ठ गुरू किलिट्ठे ॥ ९२ ॥
भावाणुवाएण परिग्गहेण, उप्पायणे रक्खण-सन्निओगे ।
वए विओगे य कहं सुहं से, संभोगकाले य अतित्तिलाभे ॥ ९३ ॥
भावे अतित्ते य परिग्गहम्मि, सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥ ९४ ॥
तण्हाऽभिभूयस्स अदत्तहारिणो, भावे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा, तत्थाऽवि दुक्खा न विमुच्चई से ॥ ९५ ॥
मोसस्स पच्छा य पुरत्थओ य, पओगकाले य दुही दुरंते ।
एवं अदत्ताणि समाइयंतो, भावे अतित्तो दुहिओ अणिस्सो ॥ ९६ ॥
भावाणुरत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि? ।
तत्थोवभोगे वि किलेसदुक्खं, निव्वत्तए जस्स कए न दुक्खं ॥ ९७ ॥

प्रमादस्य
स्थानानि ।

एमेव भावम्मि गओ पओसं, उवेइ दुक्खोहपरंपराओ ।
पउट्ठचित्तो य चिणाइ कम्मं, जं से पुणो होइ दुहं विवागो ॥ ९८ ॥
भावे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण ।
न लिप्पई भवमज्झे वि संतो, जलेण वा पुक्खरिणीपलासं ॥ ९९ ॥

व्याख्या—"चक्खुरस" इत्यादिसूत्राणि अष्टसप्ततिः । तत्रापि चक्षुराश्रित्य त्रयोदश—चक्षुषो रूपं, गृह्यतेऽनेनेति ग्रहणं, कोऽर्थः ? आक्षेपकं वदन्ति । ततः किम् ? इत्याह—'तद्' रूपं रागहेतुः, 'तुः' पूरणे, मनोज्ञमाहुः, तथा 'तद्' रूपमेव द्वेषहेतुम् अमनोज्ञमाहुः, ततस्तयोश्चक्षुःप्रवर्त्तने रागद्वेषसम्भवात् तदुद्धरणाशक्तिलक्षणो दोष इति भावः । आह—एवं न कश्चित् सति रूपे वीतरागः स्याद् अत आह—'समस्तु' अरक्तद्विष्टतया तुल्यः पुनर्यः 'तयोः' मनोज्ञेतररूपयोः स वीतराग इव वीतरागः, उपलक्षणत्वाद् वीतद्वेपश्च, इदमुक्तं भवति—न तावत् चक्षुः तयोः प्रवर्त्तयेत्, कथञ्चित् प्रवर्त्तने च समतामेवावलम्बेतेति ॥ ननु यद्येवं रूपमेव रागद्वेषजनकं ततस्तदुद्धरणार्थिनस्तद्गतैव चिन्ताऽस्तु, रूपे चक्षुर्न प्रवर्त्तयेद् इत्येवं तु न चक्षुषश्चिन्ता कर्तुं युक्तेत्याशङ्क्याह—रूपस्य चक्षुः गृह्णातीति ग्रहणं वदन्ति, तथा चक्षुषो रूपं गृह्यत इति ग्रहणं वदन्ति, अनेन च रूपचक्षुषोर्ग्राह्यग्राहकभावदर्शनतः परस्परमुपकार्योपकारकभाव उक्तः, ततो यथा रूपं रागद्वेषकारणं तथा चक्षुरपि इत्युक्तं भवति । अत आह—रागस्य हेतुं अक्रमात् चक्षुः सह मनोज्ञेन ग्राह्येण रूपेण वर्त्तते समनोज्ञमाहुः, द्वेपस्य हेतुम् 'अमनोज्ञम्' अविद्यमानमनोज्ञरूपमाहुः ॥ इत्थं रागद्वेपोद्धरणोपायमभिधाय एतदनुद्धरणे दोपमाह—रूपेषु यः 'गृद्धिं' रागरूपां उपैति तीव्राम्, अकाले भवम् आकालिकं प्राप्नोति

१ यदुक्तम्—इच्छा मूर्च्छा कामः, स्नेहो गार्द्ध्यं ममत्वमभिनन्दः । अभिलाष इत्यनेकानि रागपर्यायवचनानि ॥ १ ॥

स विनाशं रागातुरः सन् 'सः' इति लोकप्रतीतः, 'यथा वा' इति वाशब्दस्यैवकारार्थत्वाद् यथैव पतङ्गः 'आलोकलोलः' स्निग्धदीपशिखादर्शनलम्पटः समुपैति मृत्युम् ॥ 'यश्च' इति यस्तु, अपिः तस्मिन् इत्यनेन योक्ष्यते, द्वेषं समुपैति रूपेष्विति प्रक्रमः तीव्रम्, स किम्? इत्याह—तस्मिन्नपि क्षणे सः 'तुः' पूरणे उपैति 'दुःखं' चित्तसन्तापात्मकम्। इत्थं तर्हि रूपस्यैव दुःखहेतुत्वं तद्दर्शन एव द्वेषसम्भवाद् इत्याशङ्क्याह—दुष्टं दमनं दुर्दान्तं तच्च प्रक्रमात् चक्षुषः तदेव दोषो दुर्दान्तदोषस्तेन 'स्वकेन' आत्मीयेन 'जन्तुः' देही न 'किञ्चिद्' अल्पमपि रूपमपराध्यति "से" तस्य ॥

इत्थं रागद्वेषयोरनर्थहेतुत्वमुक्तम्। इदानीं तु द्वेषस्यापि रागहेतुकत्वात् स एव महाऽनर्थमूलमिति दर्शयंस्तस्य विशेषतः परिहर्तव्यतां ज्ञापयितुमाह—एकान्तरक्तः 'रुचिरे' मनोरमे रूपे 'अतादृशे' अनीदृशे स करोति प्रद्वेषम्, तथा च दुःखस्य 'सम्पीडं' सङ्घातं समुपैति 'बालः' अज्ञः, न लिप्यते तेन मुनिर्विरागः ॥ सम्प्रति रागस्यैव हिंसाद्याश्रवनिमित्ततामिदं च तद्द्वारेण दुःखजनकत्वं सूत्रपट्केनाह—रूपं-प्रस्तावाद् मनोज्ञमनुगच्छति रूपाऽनुगा सा चाऽसौ आशा च रूपानुगाशा-रूपविषयोऽभिलाप इत्यर्थः तदनुगतश्च, पठन्ति च—"रूवाणुवायाणुगए य" त्ति रूपाणाम् उपायैः-उपार्जनहेतुभिरनुगत उपायाऽनुगतः स च जीवान् 'चराचरान्' त्रसस्थावरान् हिनस्ति अनेकरूपान्, कांश्चित् तु 'चित्रैः' अनेकप्रकारैरुपायैरिति गम्यते तान् 'परितापयति' दुःखयति बालः, अपरांश्च पीडयति एकदेशदुःखोत्पादनेन 'आत्मार्थं गुरुः' स्वप्रयोजननिष्ठः 'क्लिष्टः' रागबाधितः ॥ अन्यच्च—रूपेऽनुपातः-गमनम् अनुराग इत्यर्थः रूपाऽनुपातस्तस्मिन् सति 'ण'ति पूरणे, 'परिग्रहेण' मूर्च्छात्मकेन हेतुना 'उत्पादने' उपार्जने रक्षणं च-अपायेभ्यः सन्नियोगश्च—स्वपरप्रयोजनेषु सम्यग्व्यापारणं रक्षण-सन्नियोगं तस्मिन् "वये" त्ति 'व्यये' विनाशे 'वियोगे' विरहे सर्वत्र रूपस्येति गम्यते, क्व सुखं? न कचित् "से" तस्य, इदमुक्तं भवति—सुरूपकलत्रकरितुरगादीनामुत्पादनादिषु दुःखमेवाऽनुभवति

प्रमादस्य स्थानानि।

रूपाऽनुरागी । पठन्ति च—"रूवाणुरागेणं" ति तत्र रूपानुरागेण हेतुना यः परिग्रहस्तेन, शेषं तथैव, स्यादेतत्—
मा भूदुत्पादनादिषु रूपस्य सुखं, सम्भोगकाले भविष्यतीत्याशङ्क्याह—सम्भोगकाले च 'अतृप्तिलाभे' तृप्तिप्राप्त्यभावे क्व
सुखम् ? इति सम्बन्धः, उत्तरोत्तरेच्छया हि खिद्यत एव रागी ॥ आह—एवं परिग्रहाद् दुःखमनुभवतस्तद्गीरुतया ततो
निवृत्तिर्दोषान्तरानारम्भणं वा किमस्य सम्भवतीत्याशङ्क्याह—रूपेऽतृप्तः चस्य भिन्नक्रमत्वात् 'परिग्रहे च' तद्विषयमूर्च्छा-
त्मके सक्तः—सामान्येनैवासक्तिमान् उपसक्तश्च—गाढमासक्तस्ततः सक्तश्च पूर्वम् उपसक्तश्च पश्चात् सक्तोपसक्तः नोपैति
तुष्टिम्, तथा चातुष्टिरेव दोषोऽतुष्टिदोषस्तेन 'दुःखी' यदि ममेदमिदं च रूपवद्वस्तु स्यादित्याकाङ्क्षातोऽतिशयदुःखवान्
सन्, किं कुरुते ? इत्याह—परस्य सम्बन्धि रूपवद्वस्त्विति गम्यते 'लोभाविलः' लोभकलुषः आदत्तेऽदत्तम् ॥
तत्किमस्यैतावानेव दोष उताऽन्योऽपि ? इत्याशङ्क्याह—'तृष्णाऽभिभूतस्य' लोभपराजितस्य, तत एवाऽदत्तहारिणो
'रूपे' रूपविषयो यः परिग्रहस्तस्मिन्निति योगः चस्य भिन्नक्रमत्वाद् अतृप्तस्य च मायाप्रधानं "मोसं" ति 'मृषा'
अलीकभाषणं मायामृषा वर्द्धते, कुतः पुनरिदमित्थम् ? इत्याह—लोभदोषात्, लुब्धो हि परस्वमादत्ते आदाय च
तद्गोपायनपरो मायामृषां वक्ति, तत्राऽपि को दोषः ? इत्याह—'तत्राऽपि' मृषाभाषणेऽपि दुःखान्न विमुच्यते सः ॥
दुःखाऽविमुक्तमेव भावयति—"मोसस्स" त्ति अनृतभाषणस्य पश्चाच्च पुरस्ताच्च प्रयोगकाले च दुःखी सन्, तत्र
पश्चादिदं न मया सुसंस्थापितमुक्तमिति पश्चात्तापतः पुरस्ताच्च कथमयं मया वञ्चनीय इति चिन्तया प्रयोगकाले च
नासौ ममालीकभाषितां लक्षयतीति क्षोभतः, तथा दुष्टोऽन्तः—पर्यन्तः तज्जन्मन्यनेकविडम्बनातोऽन्यजन्मनि च नरका-
दिप्राप्त्या यस्यासौ दुरन्तो भवति जन्तुरिति गम्यते, अथवा 'मोषस्य' स्तेयस्येति व्याख्येयम् ॥ उपसंहारमाह—
'एवम्' अमुना प्रकारेण अदत्तानि समाददानो रूपेऽतृप्तः सन् दुःखितो भवति, कीदृशः सन् ? इत्याह—'अनिश्रः'

प्रमादस्य स्थानानि ।

कम्पनिदसम्बन्धिनाऽवष्टम्भेन रहितः, मैथुनरूपाश्रवोपलक्षणं चैतत् ॥ उक्तमेवार्थं निगमयितुमाह—रूपाऽनुरक्तस्य नरस्य 'एवम्' अनन्तरोक्तप्रकारेण कुतः सुखं भवेत् कदाचित् किञ्चित् ?, किमित्येवम् ?, यतः 'तत्र' रूपाऽनुरागे उपभोगेऽपि 'क्लेशदुःखम्' अतृप्तिलाभनालक्षणबाधाजनितमसातम्, उपभोगमेव विशिनष्टि—'निर्वर्त्तयति' उत्पादयति, 'यस्य' उपभोगस्य कृते "णं" वाक्यालङ्कारे, 'दुःखं' कृच्छ्रम् आत्मन इति गम्यते ॥ इत्थं रागस्यानर्थहेतुतामभिधाय द्वेषस्याऽपि तामतिदेष्टुमाह—'एवमेव' यथाऽनुरक्तस्तथैव रूपे गतः प्रद्वेषमुपैति 'दुःखौघपरम्पराः' उत्तरोत्तरदुःखसमूहरूपाः, तथा प्रदुष्टचित्तः तत्र भिन्नक्रमत्वात् चिनोति च कर्म, 'यत्' कर्म "से" तस्य पुनर्भवति 'दुःखं' दुःखहेतुः 'विपाके' अनुभवकाले, इह परत्र चेति भावः । पुनर्दुःखग्रहणमैहिकदुःखापेक्षम्, अशुभकर्मोपचयश्च हिंसाद्याश्रवाऽविनाभावीति तद्धेतुत्वमनेनाऽऽक्षिप्यते ॥ इत्थं रागद्वेषयोरनुद्धरणे दोषमभिधाय तदुद्धरणे गुणमाह—रूपे विरक्तः उपलक्षणत्वाद् अद्विष्टश्च मनुजः 'विशोकः' शोकरहितः सन् तन्निबन्धनयो रागद्वेषयोरभावात् 'एतेन' अनन्तरोपदर्शितेन "दुक्खोहपरंपरेणं" ति दुःखानाम् ओघाः–सङ्घातास्तेषां परम्परा–सन्ततिः दुःखौघपरम्परा तया 'न लिप्यते' न स्पृश्यते भवमध्येऽपि 'सन्' तिष्ठन्, दृष्टान्तमाह—जलेनेव, वाशब्दस्योपमार्थत्वात् 'पुष्करिणीपलाशं' पद्मिनीपत्रं जलमध्ये सदिति शेषः ॥ इत्थं चक्षुराश्रित्य त्रयोदश सूत्राणि व्याख्यातानि । एतदनुसारेणैव शेषेन्द्रियाणां मनसश्च त्रयोदश सूत्राणि व्याख्येयानि । नवरम्—"हरिणमिए" त्ति मृगः सर्वोऽपि पशुरुच्यते, ततश्च 'हरिणमृगः' हरिणपशुः ॥ तथा "बडिसविभिन्नकाए" त्ति बडिशं–प्रान्तन्यस्तामिषो लोहकीलकः ॥ 'मनसः' चेतसो भावः–अभिप्रायः स चेह स्मृतिगोचरस्तं 'ग्रहणं' ग्राह्यं वदन्ति, 'मनोज्ञं' मनोज्ञरूपादिविषयम् 'अमनोज्ञं' तद्विपरीतविषयम् । एवमुत्तरग्रन्थोऽपि भावविषयरूपाद्यपेक्षया व्याख्येयः । यद्वा स्वप्नकामदशादिषु भावोपस्थापितो रूपादिरपि भाव उक्तः, स मनसो ग्राह्यः । "करेणुमग्गावहिए

गए व" त्ति करेण्वा मार्गेण—निजपथेन अपहृतः—आकृष्टः करेणुमार्गापहृतः 'गज इव' हस्तीव, स हि मदान्धोऽप्यदूरवर्त्तिनीं करिणीमुपदर्श्य तद्रूपादिमोहितः तन्मार्गानुगामितया गृह्यते, ततः सङ्ग्रामादिषु विनाशमाप्नोति। आह—एवं चक्षुरादीन्द्रियवशादेव गजस्य प्रवृत्तिरिति कथमस्य दृष्टान्तत्वेनाऽभिधानम्? उच्यते—एवमेतत्, मनःप्राधान्यविवक्षया तु एतन्नेयम् इत्यष्टसप्ततिसूत्रार्थः ॥ २२-२३-२४-२५-२६-२७-२८-२९-३०-३१-३२-३३-३४-३५-३६-३७-३८-३९-
४०-४१-४२-४३-४४-४५-४६-४७-४८-४९-५०-५१-५२-५३-५४-५५-५६-५७-५८-५९-६०-६१-६२-६३-६४-
६५-६६-६७-६८-६९-७०-७१-७२-७३-७४-७५-७६-७७-७८-७९-८०-८१-८२-८३-८४-८५-८६-८७-८८-८९-
९०-९१-९२-९३-९४-९५-९६-९७-९८-९९ ॥ उक्तमेवार्थं सङ्क्षेपत उपसंहारव्याजेनाऽऽह—

**एविंदियत्था य मणस्स अत्था, दुक्खस्स हेउं मणुयस्स रागिणो।**
**ते चेव थेवं पि कयाइ दुक्खं, न वीयरागस्स करिंति किंचि ॥ १०० ॥**

**व्याख्या**—'एवम्' उक्तन्यायेन इन्द्रियार्थाः, चस्य भिन्नक्रमत्वाद् मनसोऽर्थाश्च उपलक्षणत्वाद् इन्द्रियमनांसि च दुःखस्य हेतवो मनुजस्य रागिणः, उपलक्षणत्वाद् द्वेषिणश्च। ते चैव स्तोकमपि कदाचिद् दुःखं न 'वीतरागस्ये'ति विगतरागद्वेषस्य कुर्वन्ति 'किञ्चिदि'ति शारीरं मानसं चेति सूत्रार्थः ॥ १०० ॥ ननु न कश्चन कामभोगेषु सत्सु वीतरागः सम्भवति, तत्कथमस्य दुःखाभावः? उच्यते—

**न कामभोगा समयं उवेंति, न यावि भोगा विगइं उवेंति।**
**जे तप्पओसी य परिग्गही य, सो तेसु मोहा विगइं उवेइ ॥ १०१ ॥**

**व्याख्या**—न कामभोगाः 'समतां' रागद्वेषाऽभावरूपाम् 'उपयान्ति' उपगच्छन्ति हेतुत्वेनेति गम्यते, तद्धेतुत्वे हि

तेषां न कश्चिद् रागद्वेषवान् भवेत्, न चाऽपि 'भोगाः' शब्दादयः 'विकृतिं' क्रोधादिरूपाम्, इहाऽपि हेतुत्वेनोपयान्ति, अन्यथा न कश्चन रागद्वेषरहितः स्यात्, कोऽनयोस्तर्हि हेतुः ? इत्याह—यः तत्प्रद्वेषी च 'परिग्रही च' परिग्रहबुद्धिमान् तस्यैव रागीत्यर्थः, स तेषु 'मोहात्' मोहनीयाद् विकृतिमुपैति, रागद्वेषरहितस्तु समतामित्यर्थादुक्तं भवतीति सूत्रार्थः ॥१०१॥ किंरूपा पुनरसौ विकृतिः यां रागद्वेषवशादुपैति ? इत्याह—

कोहं च माणं च तहेव मायं, लोभं दुगुंछं अरइं रइं च ।
हासं भयं सोगपुमित्थिवेयं, नपुंसवेयं विविहे य भावे ॥ १०२ ॥
आवज्जई एवमणेगरूवे, एवंविहे कामगुणेसु सत्तो ।
अन्ने य एयप्पभवे विसेसे, कारुण्णदीणे हिरिमे वइस्से ॥ १०३ ॥

व्याख्या—क्रोधं च मानं च तथैव मायां लोभं च जुगुप्साम् अरतिं रतिं च हासं भयं शोकपुंस्त्रीवेदमिति समाहारनिर्देशः, तत्र 'पुंवेदं' योषिदभिलापं 'स्त्रीवेदं' पुरुषाऽभिष्वङ्गं 'नपुंसकवेदम्' उभयाऽभिलापं, विविधांश्च 'भावान्' हर्षविषादादीन् आपद्यते 'एवम्' अमुना रागद्वेषवत्तालक्षणेन प्रकारेण 'अनेकरूपान्' बहुभेदान् 'अनन्तानुबन्ध्यादिभेदेन तारतम्यभेदेन च 'एवंविधान्' उक्तप्रकारान् विकारानिति गम्यते, कामगुणेषु सक्त अन्यांश्च 'एतत्प्रभवान्' क्रोधादिजनितान् 'विशेषान्' परितापदुर्गतिपातादीन्, कीदृशः सन् ? इत्याह—कारुण्यास्पदीभूतो दीनः कारुण्यदीनः मध्यपदलोपी समासः अत्यन्तदीन इत्यर्थः, "हिरिमे" त्ति 'ह्रीमान्' लज्जावान्, कोपाद्यापन्नो हि प्रीतिविनाशादिकमिहैवाऽनुभवन् परत्र च तद्विपाकमतिकटुकं परिभावयन् प्रायोऽतिदैन्यं लज्जां च भजते, तथा "वइस्स" त्ति आर्षत्वात् 'द्वेष्यः'

प्रमादस्य स्थानानि ।

तत्तद्दोषदुष्टत्वात् सर्वस्याऽप्रीतिभाजनमिति सूत्रद्वयार्थः ॥ १०२-१०३ ॥ पुनरप्यतिदुरन्ततया रागस्य प्रकारान्तरेणोद्धरणोपायाऽभिधानार्थं तद्विपर्यये दोषदर्शनार्थं चेदमाह—

**कप्पं न इच्छिज्ज सहायलिच्छू, पच्छाणुतावेण तवप्पभावं ।**
**एवं विकारे अमियप्पयारे, आवज्जई इंदियचोरवस्से ॥ १०४ ॥**

**व्याख्या**—कल्पते–स्वाध्यायादिक्रियासु समर्थो भवतीति कल्पः–योग्यस्तम्, अपेर्गम्यमानत्वात् कल्पमपि, किं पुनरकल्पं ? शिष्यादिकमिति गम्यते, न इच्छेत् 'सहायलिप्सुः' ममाऽयं विश्रामणादिसाहाय्यं करिष्यतीत्यभिलाषुकः सन्, तथा पश्चादिति–प्रस्तावाद् व्रतस्याऽङ्गीकाराद् उत्तरकालमनुतापः–किमेतावन्मया कष्टमङ्गीकृतमिति चित्तसन्तापात्मकः पश्चादनुतापस्तेन हेतुना उपलक्षणत्वादन्यथा वा 'तपःप्रभावं' तपःफलम् इहैवामर्षौषध्यादिलब्धिप्रार्थनेन भवान्तरभोगादिनिदानकरणेन वा नेच्छेदिति प्रक्रमः । किमेवं निषिध्यते ? इत्याह—'एवम्' अमुना प्रकारेण 'विकारान्' दोषान् अमितप्रकारानापद्यते इन्द्रियचोरवश्यः, एवं च ब्रुवतोऽयमाशयः—तदनुग्रहबुद्ध्या कल्पं पुष्टालम्बनेन तपःप्रभावं वाञ्छतोऽपि न दोषः । एतेन च रागस्य हेतुद्वयपरिहरणमुद्धरणोपाय उक्तः । उपलक्षणं चैतदीदृशाम्, अन्येषामपि रागहेतूनां परिहारस्य, ततः सिद्धमस्योद्धरणोपायानां तद्विपर्यये च दोषाणामभिधानमिति सूत्रार्थः ॥१०४॥ किं च—

**तओ से जायंति पओअणाइं, निमज्जिउं मोहमहन्नवम्मि ।**
**सुहेसिणो दुक्खविणोयणट्ठा, तप्पच्चयं उज्जमए अ रागी ॥ १०५ ॥**

**व्याख्या**—'ततः' इति विकारापत्तेरनन्तरं "से" तस्य जायन्ते 'प्रयोजनानि' विषयसेवनहिंसादीनि "निमज्जिउं" ति निमज्जयितुमिव निमज्जयितुं प्रक्रमात् तमेव जन्तुं मोहमहार्णवे, किमुक्तं भवति ?—यैर्मोहमहार्णवे निमग्न इव जन्तुः

क्रियते, कीदृशस्य पुनरस्य किमर्थं चैवंविधप्रयोजनानि जायन्ते ? इत्याह—सुखैषिणो दुःखविनोदनार्थम्, कदाचिदेवं-विधप्रयोजनोत्पत्तावपि तत्रायमुदासीन एव स्याद् ? अत उच्यते—'तत्प्रत्ययम्' उक्तरूपप्रयोजननिमित्तं 'उद्यच्छति च' उद्यच्छतेव, कोऽर्थः ? तत्प्रवृत्तावुत्सहत एव रागी, उपलक्षणत्वाद् द्वेषी च सन्, रागद्वेषयोरेव सकलाऽनर्थपरम्परा-कारणत्वादिति सूत्रार्थः ॥ १०५ ॥ किमिति रागद्वेषवशत एव सकलाऽनर्थपरम्परोच्यते ? इत्याशङ्क्याह—

विरज्जमाणस्स य इंदियत्था, सद्दाइया तावइयप्पगारा ।
न तस्स सव्वे वि मणुन्नयं वा, निव्वत्तयंती अमणुन्नयं वा ॥ १०६ ॥

व्याख्या—विरज्यमानस्य उपलक्षणत्वाद् अद्विषतश्च, 'चः' पुनरर्थे, ततो विरज्यमानस्याऽद्विषतश्च पुनः 'इन्द्रि-यार्थाः' शब्दादिकाः तावन्त इति—यावन्तो लोके प्रतीताः प्रकाराः—खरमधुरादिभेदा येषां ते तावत्प्रकारा बहुभेदा इत्यर्थः, न 'तस्ये'ति मनुजस्य सर्वेऽपि मनोज्ञतां वा 'निर्वर्त्तयन्ति' जनयन्ति अमनोज्ञतां वा, किन्तु रागद्वेषवशत एव, स्वरूपेण हि रूपादयो न मनोज्ञताममनोज्ञतां वा कर्त्तुमात्मनः क्षमाः किन्तु रक्तेतरप्रतिपत्त्रध्यवसायवशात् । उच्यते चान्यैरपि—परिव्राट्-कामुक-शुनामेकस्यां प्रमदातनौ । कुणपं कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ॥ १ ॥ ततो न वीतरागस्य मनो-ज्ञताममनोज्ञतां वा निर्वर्त्तयेयुः, तदभावे च कथं विषयसेवनाऽऽक्रोशदानादिप्रयोजनोत्पत्तिः ? इति सूत्रार्थः ॥ १०६ ॥ यदेवं रागद्वेषयोरतिदुष्टत्वात् साक्षान्मोहस्य न तदाऽऽयतनत्वात् तद्द्वारेणोद्धरणोपायान् निरूप्योपसंहरन्नाह—

एवं ससंकप्पविकप्पणासुं, संजायई समयमुवट्ठियस्स ।
अत्थे च संकप्पयओ तओ से, पहीयए कामगुणेसु तण्हा ॥ १०७ ॥

व्याख्या—'एवम्' उक्तप्रकारेण स्वस्य—आत्मनः सङ्कल्पाः—रागद्वेषमोहरूपा अध्यवसायास्तेषां विकल्पनाः—सकल-

प्रमादस्य स्थानानि ।

दोषमूलत्वादिपरिभावनाः स्वसङ्कल्पविकल्पनास्तासु 'उपस्थितस्य' उद्यतस्येति सम्बन्धः । किम्? इत्याह—सञ्जायते "समयं" ति आर्षत्वात् 'समता' माध्यस्थ्यं 'अर्थान्' जीवादीन्, चस्य भिन्नक्रमत्वात् 'सङ्कल्पयतश्च' शुभध्यानविषयतयाऽध्यवस्यतः 'ततः' इति समतायाः "से" 'तस्य' साधोः प्रहीयते कामगुणेषु 'तृष्णा' अभिलाष इति सूत्रार्थः ॥१०७॥ ततः स कीदृशः सन् किं विधत्ते ? इत्याह—

**सो वीयरागो कयसव्वकिच्चो, खवेइ नाणावरणं खणेणं ।**
**तहेव जं दरिसणमावरेइ, जं चंतरायं पकरेइ कम्मं ॥ १०८ ॥**

व्याख्या—'सः' इति प्रहीणतृष्णो वीतरागो भवति, तथा कृतसर्वकृत्य इव कृतसर्वकृत्यः, प्राप्तप्रायत्वादनेन मुक्तेः क्षपयति ज्ञानावरणं क्षणेन, तथैव यद् दर्शनमावृणोति, यच्च 'अन्तरायं' दानादिविघ्नं प्रकरोति 'कर्म' अन्तरायनामकमित्यर्थः, इति सूत्रार्थः ॥ ८ ॥ तत्क्षयाच्च कं गुणमवाप्नोति ? इत्याह—

**सव्वं तओ जाणइ पासई य, अमोहणो होइ निरंतराए ।**
**अणासवे झाणसमाहिजुत्तो, आउक्खए मुक्खमुवेइ सुद्धे ॥ १०९ ॥**

व्याख्या—सर्वं 'ततः' ज्ञानावरणादिक्षयात् 'जानाति' विशेषरूपतयाऽवगच्छति, 'पश्यति च' सामान्यरूपतया, तथा च 'अमोहनः' मोहरहितो भवति, तथा निरन्तरायोऽनाश्रवः, ध्यानं—शुक्लध्यानं तेन समाधिः—परमस्वास्थ्यं तेन युक्तो ध्यानसमाधियुक्तः आयुष उपलक्षणत्वाद् नाम-गोत्र-वेद्यानां च क्षय आयुःक्षयस्तस्मिन् सति मोक्षमुपैति 'शुद्धः' विगतकर्ममल इति सूत्रार्थः ॥ १०९ ॥ मोक्षगतश्च यादृशो भवति तदाह—

सो तस्स सव्वस्स दुहस्स मोक्खो, जं बाहई सययं जंतुमेयं ।
दीहामयविप्पमुक्को पसत्थो, तो होइ अच्चंतसुही कयत्थो ॥ ११० ॥

व्याख्या—'सः' इति मोक्षं प्राप्तः 'तस्मात्' जातिजरामरणादिरूपत्वेन प्रतिपादितात् सर्वस्माद् दुःखात् सर्वत्र सूत्रत्वात् पञ्चम्यर्थे षष्ठी, 'मुक्तः' पृथग्भूतः, यत् कीदृग्? इत्याह—'यद्' दुःखं बाधते सततं जन्तुम् 'एनं' प्रत्यक्षम्, दीर्घाणि-स्थितितः प्रकमान् कर्माणि तानि आमया इव-रोगा इव विविधबाधाविधायितया दीर्घामयास्तेभ्यो विप्रमुक्तो दीर्घामयविप्रमुक्तः अत एव 'प्रशस्तः' प्रशंसार्हः, ततः किम्? इत्याह—"तो" इति 'ततः' दीर्घामयविप्रमोक्षाद् भवति अत्यन्तसुखी, तत एव च कृतार्थ इति सूत्रार्थः ॥ ११० ॥ सकलाऽध्ययनार्थं निगमयितुमाह—

अणाइकालप्पभवस्स एसो, सव्वस्स दुक्खस्स पमुक्खमग्गो ।
वियाहिओ जं समुविच सत्ता, कमेण अच्चंतसुही भवंति ॥ १११ ॥ त्ति बेमि ॥

व्याख्या—अनादिकालप्रभवस्य 'एषः' अनन्तरोक्तः सर्वस्य दुःखस्य 'प्रमोक्षमार्गः' प्रमोक्षोपायो व्याख्यातः, यं 'समुपेत्य' सम्यक् प्रतिपद्य सत्त्वाः 'क्रमेण' उत्तरोत्तरगुणप्रतिपत्तिरूपेणाऽत्यन्तसुखिनो भवन्तीति सूत्रार्थः ॥ १११ ॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥

इति श्रीनेमिचन्द्रसूरिविरचितायां उत्तराध्ययनसूत्रलघुटीकायां
सुखबोधायां प्रमादस्थानाख्यं द्वात्रिंशमध्ययनं समाप्तम् ॥

वीतराग-स्वरूपम् ।

# अथ कर्मप्रकृतिनामकं त्रयस्त्रिंशमध्ययनम् ।

अनन्तराऽध्ययने प्रमादस्थानान्युक्तानि, तैश्च कर्म बध्यते, तस्य च काः प्रकृतयः ? कियती वा स्थितिः ? इत्यादिसन्देहापनोदाय कर्मप्रकृतिनामकमध्ययनं त्रयस्त्रिंशं समारभ्यते, तस्येदमादिसूत्रम्—

**अट्ठ कम्माइं वोच्छामि, आणुपुव्विं जहक्कमं । जेहिं बद्धे अयं जीवे, संसारे परिवत्तए ॥ १ ॥**

व्याख्या—अष्ट कर्माणि वक्ष्यामि, "आणुपुव्विं" ति आनुपूर्व्या, इयं च पश्चानुपूर्व्यादिरपि सम्भवत्यत आह—'यथाक्रमं' क्रमाऽनतिक्रमेण, शेषं स्पष्टमिति सूत्रार्थः ॥ १ ॥ यथाप्रतिज्ञातमाह—

**नाणस्साऽऽवरणिज्जं, दंसणावरणं तहा । वेयणिज्जं तहा मोहं, आउकम्मं तहेव य ॥ २ ॥**
**नामं कम्मं च गोयं च, अंतरायं तहेव य । एवमेयाइं कम्माइं, अट्ठेव उ समासओ ॥ ३ ॥**

व्याख्या—स्पष्टम् ॥ २–३ ॥ मूलप्रकृतीः कर्मणोऽभिधाय उत्तरप्रकृतीराह—

**नाणावरणं पंचविहं, सुयं आभिणिबोहियं । ओहिं नाणं तइयं, मणनाणं च केवलं ॥ ४ ॥**
**निद्दा तहेव पयला, निद्दानिद्दा य पयलपयला य । तत्तो य थीणगिद्धी, पंचमा होइ नायव्वा ॥ ५ ॥**
**चक्खुमचक्खुओहिस्स दंसणे केवले य आवरणे । एवं तु नवविगप्पं, नायव्वं दंसणावरणं ॥ ६ ॥**
**वेयणियं पि य दुविहं, सायमसायं च आहियं । सायस्स उ बहू भेया, एमेवासायस्स वि ॥ ७ ॥**
**मोहणिज्जं पि दुविहं, दंसणे चरणे तहा । दंसणे तिविहं वुत्तं, चरणे दुविहं भवे ॥ ८ ॥**

सम्मत्तं चेव मिच्छत्तं, सम्मामिच्छत्तमेव य। एयाओ तिन्नि पयडीओ, मोहणिज्जस्स दंसणे ॥ ९ ॥
चरित्तमोहणं कम्मं, दुविहं तु वियाहियं। कसायमोहणिज्जं च, नोकसायं तहेव य ॥ १० ॥
सोलसविहभेदेणं, कम्मं तु कसायजं। सत्तविह नवविहं वा, कम्मं च नोकसायजं ॥ ११ ॥
नेरइयतिरिक्खाऊ, माणुस्साउं तहेव य। देवाउयं चउत्थं तु, आउकम्मं चउविहं ॥ १२ ॥
नामं कम्मं तु दुविहं, सुहमसुहं च आहियं। सुहस्स उ बहू भेया, एमेव य असुहस्स वि ॥ १३ ॥
गोत्तं कम्मं तु दुविहं, उच्चं नीयं च आहियं। उच्चं अट्ठविहं होइ, एवं नीयं पि आहियं ॥ १४ ॥
दाणे लाभे य भोगे य, उवभोगे वीरिए तहा। पंचविहमंतरायं, समासेण वियाहियं ॥ १५ ॥

कर्मणामुत्तरप्रकृतयः ।

व्याख्या—सुगमान्येव । नवरम्—ज्ञानावरणं पञ्चविधम्, तत्र कथं पञ्चविधम्? इत्याशङ्कायाम् आचार्यभेदादेव ज्ञानावरणस्य भेद इत्यभिप्रायेणाऽऽचार्यस्यैव भेदानाह—'श्रुतमि'त्यादि ॥ "सायस्स उ बहू भेय" त्ति सातस्य तु बहवो भेदाः तद्धेतुभूतभूतानुकम्पादीनां बहुभेदत्वात्। एवमेवाऽसातस्यापि दुःखशोकादितद्धेतुबहुविधत्वादेव ॥ "सत्तविह नवविहं च" त्ति बिन्दुलोपात् सप्तविधं नवविधं वा कर्म नोकषायजं, तत्र सप्तविधं हास्यादिषट्कं वेदश्च सामान्यविवक्षयैक एवेति, नवविधं तु तदेव षट्कं वेदत्रयसहितम् ॥ "उच्चं अट्ठविहं होइ" त्ति इत्यत्राऽष्टविधत्वं बन्धहेत्वष्टविधत्वात्, अष्टौ हि जातिमदादय उच्चैर्गोत्रस्य बन्धहेतवः, तावन्त एव च जातिमदादयो नीचैर्गोत्रस्येति सूत्रद्वादशकार्थः ॥ ४-५-६-७-८-९-१०-११-१२-१३-१४-१५ ॥ इत्थं प्रकृतयोऽभिहिताः । सम्प्रत्येतन्निगमनायोत्तरग्रन्थसम्बन्धनायाह—

एयाओ मूलपयडीओ, उत्तराओ य आहिया। पएसग्गं खित्तकाले य, भावं चादुत्तरं सुण ॥ १६ ॥

व्याख्या—एता मूलप्रकृतयः 'उत्तराश्च' उत्तरप्रकृतय आख्याताः, प्रदेशाः—परमाणवस्तेषामग्रं—परिमाणं प्रदेशाग्रं,

"द... य" त्ति क्षेत्रकालौ च 'भावं च' अनुभावलक्षणं पर्यायं चतुःस्थानिकादिरसमिति यावत्, "अदुत्तरं" ति अत उत्तरं शृणु कथ्यमानमिति शेष इति सूत्रार्थः ॥ १६ ॥ तत्र तावत् प्रदेशाग्रमाह—

**सव्वेसिं चेव कम्माणं, पएसग्गमणंतगं । गंठियसत्ताईयं, अंतो सिद्धाण आहियं ॥ १७ ॥**

**व्याख्या**—सर्वेषां, 'चः' पूरणे, 'एवः' अपिशब्दार्थः, सर्वेषामपि कर्मणां प्रदेशाग्रम् अनन्तमेवाऽनन्तकं, तच्चानन्तकं ग्रन्थिगसत्त्वाः—ये ग्रन्थिदेशं गत्वाऽपि तद्भेदाऽविधानेन न कदाचिदुपरिष्टाद् गन्तारः ते चाऽभव्या एवाऽत्र गृह्यन्ते तान् अतीतं—तेभ्योऽनन्तगुणत्वेन अतिक्रान्तं ग्रन्थिगसत्त्वातीतं, तथा 'अन्तः' मध्ये सिद्धानामाख्यातम्, सिद्धेभ्यो हि कर्मपरमाणवोऽनन्तभाग एवेति सूत्रार्थः ॥ १७ ॥ सम्प्रति क्षेत्रमाह—

**सव्वजीवाण कम्मं तु, संगहे छद्दिसागयं । सव्वेसु वि पएसेसु, सव्वं सव्वेण बद्धगं ॥ १८ ॥**

**व्याख्या**—सर्वजीवानां कर्म, 'तुः' पूरणे, 'सङ्ग्रहे' सङ्ग्रहक्रियायां योग्यं भवतीति शेषः। कीदृशं सत् ? इत्याह—"छद्दिसागयं" ति षण्णां दिशां समाहारः षड्दिशं तत्र गतं—स्थितं षड्दिशगतम्, एतच्च द्वीन्द्रियादीनेवाधिकृत्य नियमेन व्याख्येयम्, एकेन्द्रियाणामन्यथाऽपि सम्भवात्। तथा चागमः—"[1]एगिंदिया णं भंते! तेयाकम्मपोग्गलाणं गहणं करेमाणे किं तिदिसिं करेइ चउद्दिसिं करेइ पंचदिसिं करेइ छद्दिसिं करेइ ? गोयमा! सिय तिदिसिं सिय चउद्दिसिं सिय पंचदिसिं सिय छद्दिसिं करेइ । बेइंदिया जाव पंचिंदिया नियमा छद्दिसिं" ति । तच्च गृहीतं सत् केन सह कियत् कथं वा बद्धं भवति ? इत्याह—"सव्वेसु वि पएसेसु" त्ति सुव्यत्ययात् सर्वैरपि 'प्रदेशैः' आत्मसम्बन्धिभिः 'सर्वं' समस्तं

१ "एकेन्द्रियो भगवन्! तैजसकार्मणपुद्गलानां ग्रहणं कुर्वाणः किं त्रिदिशं करोति चतुर्दिशं करोति पञ्चदिशं करोति षड्दिशं करोति? गौतम! स्यात् त्रिदिशं स्यात् चतुर्दिशं स्यात् पञ्चदिशं स्यात् षड्दिशं करोति । द्वीन्द्रियो यावत् पञ्चेन्द्रियो नियमात् षड्दिशमि"ति ।

ज्ञानावरणादि न त्वन्यतरदेव 'सर्वेण' गम्यमानत्वात् प्रकृतिस्थित्यादिना प्रकारेण बद्धं—क्षीरोदकवद् आत्मप्रदेशैः श्लिष्टं कर्मणां कालपरिमाणं भावश्च ।
कर्मेत्र गम्यकमिति सूत्रार्थः ॥ १८ ॥ सम्प्रति कालमाह—

उदहीसरिसनामाणं, तीसई कोडिकोडीओ । उक्कोसिया होइ ठिई, अंतमुहुत्तं जहन्निया ॥ १९ ॥
आवरणिज्जाण दुण्हं पि, वेयणिज्जे तहेव य । अंतराए य कम्मम्मि, ठिई एसा वियाहिया ॥ २० ॥
उदहीसरिसनामाणं, सत्तरिं कोडकोडीओ । मोहणिज्जस्स उक्कोसा, अंतमुहुत्तं जहन्निया ॥ २१ ॥
तित्तीस सागरोवम, उक्कोसेणं वियाहिया । ठिई उ आउकम्मस्स, अंतमुहुत्तं जहन्निया ॥ २२ ॥
उदहीसरिसनामाणं, वीसई कोडकोडीओ । नामगोआण उक्कोसा, अंतमुहुत्तं जहन्निया ॥ २३ ॥

व्याख्या—स्पष्टम् । नवरम्—उदधिना सदृक्–सदृशं नाम येषां तानि उदधिसदृग्नामानि–सागरोपमाणि तेषाम् ॥ १९-२०-२१-२२-२३ ॥ सम्प्रति भावमभिधातुमाह—

सिद्धाणऽणंतभागे, अणुभागा हवंति उ । सव्वेसु वि पएसग्गं, सव्वजीवेसऽइच्छियं ॥ २४ ॥

व्याख्या—सिद्धानामनन्तभागे 'अनुभागाः' रसविशेषा भवन्ति, 'तुः' पूरणे, अयं चाऽनन्तभागोऽनन्तसङ्ख्य एवेति । तथा 'सर्वेष्वपि' प्रक्रमादनुभागेषु, प्रदिश्यन्त इति प्रदेशाः—बुद्ध्या विभज्यमानास्तदविभागैकदेशास्तेषामग्रं प्रदेशाग्रं "सव्वजीवेसऽइच्छियं" ति सर्वजीवेभ्योऽतिक्रान्तम्, ततोऽपि तेषामनन्तगुणत्वादिति सूत्रार्थः ॥ २४ ॥ अध्ययनार्थोपसंहारव्याजेनोपदेष्टुमाह—

तम्हा एएसि कम्माणं, अणुभागे वियाणिया। एएसिं संवरे चेव, खवणे य जए बुहे ॥२५॥ त्ति बेमि ॥

व्याख्या—"तम्ह" त्ति यस्मादेवंविधाः प्रकृतिबन्धादयः तस्मादेतेषां कर्मणामनुभागान् उपलक्षणत्वात् प्रकृतिबन्धादींश्च विज्ञाय 'एतेषामि'ति कर्मणां 'संवरे' निरोधे 'चः' समुच्चये 'एवः' अवधारणे भिन्नक्रमः, ततः 'क्षपणे च' निर्जरणे "जए" त्ति 'यतेतैव' यत्नं कुर्यादेव 'बुधः' विद्वानिति सूत्रार्थः ॥ २५ ॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥

इति श्रीनेमिचन्द्रसूरिविनिर्मितायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां कर्मप्रकृतिनामकं त्रयस्त्रिंशमध्ययनं समाप्तम् ॥

## अथ चतुस्त्रिंशं लेश्याख्यमध्ययनम् ।

अनन्तराध्ययने कर्मप्रकृतय उक्ताः, तत्स्थितिश्च लेश्यावशत इत्यतस्तदभिधानार्थं चतुस्त्रिंशं लेश्याध्ययननामकमध्ययनमारभ्यते, अस्य चेदमादिसूत्रम्—

लेश्यानां नामादिद्वाराणि ।

**लेसज्झयणं पवक्खामि, आणुपुव्विं जहक्कमं । छण्हं पि कम्मलेसाणं, अणुभावे सुणेह मे ॥ १ ॥**

व्याख्या—लेश्याऽभिधायकमध्ययनं लेश्याध्ययनं तत् प्रवक्ष्यामि आनुपूर्व्या यथाक्रममिति च प्राग्वत् । तत्र च षण्णामपि 'कर्मलेश्यानां' कर्मस्थितिविधायकतत्तद्विशिष्टपुद्गलरूपाणाम् 'अनुभावान्' रसविशेषान् शृणुत मे कथयत इति शेष इति सूत्रार्थः ॥ १ ॥ एतदनुभावाश्च नामादिप्ररूपणातः कथिता एव भवन्तीति तत्प्ररूपणाय विनेयाभिमुखीकरणकारि द्वारसूत्रमाह—

**नामाइं वण्णरसगंधफासपरिणामलक्खणं ठाणं । ठिइं गइं च आउं, लेसाणं तु सुणेह मे ॥ २ ॥**

व्याख्या—नामानि तथा वर्ण-रस-गन्ध-स्पर्श-परिणाम-लक्षणमिति पदषट्कस्य समाहारनिर्देशः । परिणामश्चाऽत्र—जघन्यादिः, लक्षणं च—पञ्चाश्रवासेवनादि, 'स्थानम्' उत्कर्षाऽपकर्षरूपं, 'स्थितिम्' अवस्थानकालं, 'गतिं' नरकादिकां यतो याऽऽप्यते, 'आयुः' जीवितं यावति तत्राऽवशिष्यमाणे आगामिभवलेश्यापरिणामस्तदिह गृह्यते, लेश्यानां, 'तुः' पूरणे, शृणुत मे इति सूत्रार्थः ॥ २ ॥ 'यथोद्देशं निर्देशः' इति न्यायतो नामान्याह—

---

१ लिश्यते-श्लिष्यते आत्मा कर्मणा सहाऽनयेति लेश्या, कृष्णादिद्रव्यसाचिव्यादात्मनः परिणामविशेषः, यदुक्तम्—कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मनः । स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रयुज्यते ॥ १ ॥

जह तरुणअंबयरसो, तुवरकविट्ठस्स वावि जारिसओ ।
इत्तो वि अणंतगुणो, रसो उ काऊए नायवो ॥ १२ ॥
जह परिणयंबगरसो, पक्ककविट्ठस्स वा वि जारिसओ ।
इत्तो वि अणंतगुणो, रसो उ तेऊए नायवो ॥ १३ ॥
वरवारुणीइ व रसो, विविहाण व आसवाण जारिसओ ।
महुमेरयस्स व रसो, इत्तो पम्हाए परएणं ॥ १४ ॥
खज्जूरमुद्दियरसो, खीररसो खंडसक्कररसो वा ।
इत्तो वि अणंतगुणो, रसो उ सुक्काए नायवो ॥ १५ ॥

व्याख्या—स्पष्टान्येव । नवरम्—वरवारुणी–प्रधानसुरा, आसवाः–पुष्पप्रभवमद्यानि ॥ 'मधुमैरेयस्ये'ति समाहारः, तत्र मधु–मद्यविशेषो मैरेयं–सरकः, अतो वरवारुण्यादिरसात् पद्मायाः प्रक्रमाद् रसः 'परकेणे'ति अनन्तगुणत्वात् पद्धतिक्रमेण वर्तत इति गम्यते, अयं च किञ्चिदम्लः कषायो मधुरश्चेति भावनीयमिति ॥ मुद्रिका च–द्राक्षेति सूत्रपञ्चार्थः ॥ १०-११-१२-१३-१४-१५ ॥ सम्प्रति गन्धमाह—

जह गोमडस्स गंधो, सुणगमडस्स व जहा अहिमडस्स ।
एत्तो वि अणंतगुणो, लेसाणं अप्पसत्थाणं ॥ १६ ॥
जह सुरभिकुसुमगंधो, गंधवासाण पिस्समाणाणं ।
इत्तो वि अणंतगुणो, पसत्थलेसाण तिण्हं पि ॥ १७ ॥

लेश्यानां रस-गन्ध-द्वारे ।

व्याख्या—स्पष्टम् । नवरम्—"गंधवासाणं" ति गन्धाश्च—कोष्ठपुटपाकनिष्पन्नाः वासाश्च—इतरे गन्धवासाः, इह चैतदङ्गान्येवोपचारादेवमुक्तानि तेषाम्, इह चाऽनुक्तोऽपि गन्धविशेषो लेश्यानां तारतम्येनाऽवसेय इति सूत्रद्वयार्थः ॥ १६–१७ ॥ सम्प्रति स्पर्शमाह—

जह करगयस्स फासो, गोजिब्भाए व सागपत्ताणं ।
इत्तो वि अणंतगुणो, लेसाणं अप्पसत्थाणं ॥ १८ ॥
जह बूरस्स वि फासो, नवणीयस्स व सिरीसकुसुमाणं ।
इत्तो वि अणंतगुणो, पसत्थलेसाण तिण्हं पि ॥ १९ ॥

व्याख्या—स्पष्टम् । नवरम्—यथाक्रममप्रशस्तानां प्रशस्तानां च क्रकचादि-बूरादिसमः स्पर्शो वाच्यः ॥१८–१९॥ परिणामद्वारमाह—

तिविहो व नवविहो वा, सत्तावीसइविहिक्कसीओ वा ।
दुसओ तेयालो वा, लेसाणं होइ परिणामो ॥ २० ॥

व्याख्या—स्पष्टम् । नवरम्—'त्रिविधः' जघन्यमध्यमोत्कृष्टभेदेन, 'नवविधः' यदैषामपि स्वस्थानतारतम्यचिन्तायां प्रत्येकं जघन्यादित्रयेण गुणना, एवं पुनः पुनस्त्रिकगुणनया सप्तविंशतिविधत्वादि भावनीयम् । उपलक्षणञ्चैतत् तारतम्यचिन्तायां, सङ्ख्यानियमस्याऽभावात् । तथा च प्रज्ञापना—"[1]कण्हलेसा णं भंते ! कइविहं परिणामं परिणमइ ? गोयमा !

---

१ "कृष्णलेश्या भगवन् ! कतिविधं परिणामं परिणमति ? गौतम ! त्रिविधं वा नवविधं वा सप्तविंशतिविधं वा एकाशीतिविधं वाऽपि यावत् त्रिचत्वारिंशं द्विशतविधं वा बहु वा बहुविधं वा परिणामं परिणमति, एवं यावत् शुक्ललेश्या" ।

लेश्यानां लक्षण-द्वारम् ।

तिविहं वा नवविहं वा सत्तावीसइविहं वा एकासीइविहं वा वि जाव तेयालदुसयविहं वा बहुं वा बहुविहं वा परिणामं परिणमइ, एवं जाव सुक्कलेसा" इति सूत्रार्थः ॥ २० ॥ लक्षणमाह—

पंचासवप्पवत्तो, तीहिं अगुत्तो छसुं अविरओ य । तिव्वारंभपरिणओ, खुद्दो साहस्सिओ नरो २१

निद्धंधसपरिणामो, निस्संसो अजिइंदिओ । एयजोयसमाउत्तो, कण्हलेसं तु परिणमे ॥ २२ ॥

ईसाअमरिसअतवो, अविज्ज माया अहीरिया य । गेही पओसे य सढे, पमत्ते रसलोलुए ॥ २३ ॥

आरंभओ अविरओ, खुद्दो साहस्सिओ नरो । एयजोगसमाउत्तो, नीललेसं तु परिणमे ॥ २४ ॥

वंके वंकसमायारे, नियडिल्ले अणुज्जुए । पलिउंचग ओवहिए, मिच्छदिट्ठी अणारिए ॥ २५ ॥

उप्फालगदुट्ठवाई य, तेणे आवि य मच्छरी । एयजोगसमाउत्तो, काउलेसं तु परिणमे ॥ २६ ॥

नीयावित्ती अचवले, अमाई अकुऊहले । विणीयविणए दंते, जोगवं उवहाणवं ॥ २७ ॥

पियधम्मे दढधम्मे, वज्जभीरू हिएसए । एयजोगसमाउत्तो, तेउलेसं तु परिणमे ॥ २८ ॥

पयणुकोहमाणे य, मायालोभे य पयणुए । पसंतचित्ते दंतप्पा, जोगवं उवहाणवं ॥ २९ ॥

तहा य पयणुवाई य, उवसंते जिइंदिए । एयजोयसमाउत्तो, पम्हलेसं तु परिणमे ॥ ३० ॥

अट्टरुद्दाणि वज्जित्ता, धम्मसुक्काणि साहए । पसंतचित्ते दंतप्पा, समिए गुत्ते य गुत्तिसु ॥ ३१ ॥

सरागे वीयरागे वा, उवसंते जिइंदिए । एयजोगसमाउत्तो, सुक्कलेसं तु परिणमे ॥ ३२ ॥

व्याख्या—पञ्चाश्रवप्रवृत्तः 'त्रिभिः' प्रस्तावान्मनोवाक्कायैः अगुप्तः 'षट्सु' जीवनिकायेषु अविरतः, तीव्राः—उत्कटाः स्वरूपतोऽध्यवसायतो वा आरम्भाः—सावद्यव्यापारास्तत्परिणतः—तस्मिन्निरतः 'क्षुद्रः' सर्वस्यैवाऽहितैषी, सहसा—अप-

लेश्यानां लक्षणद्वारम् ।

र्यालोच्य प्रवर्त्तते साहसिकः चौर्यादिकृदित्यर्थः, नर उपलक्षणत्वात् स्त्र्यादिर्वा ॥ "निद्धंधस" त्ति ऐहिकामुष्मिकापायशङ्काविकलः परिणामो यस्य सः, तथा "निस्संसो" त्ति 'नृशंसः' निस्तृंशो जीवान् विहिंसन् न मनागपि शङ्कते, अजितेन्द्रियः, एते च ते योगाश्च—व्यापारा एतद्योगास्तैः समायुक्तः—अन्वित एतद्योगसमायुक्तः कृष्णलेश्यामेव तुशब्दस्याऽवधारणार्थत्वात् परिणमेत् ॥ ईर्ष्या च—परगुणासहनम् अमर्षश्च—अत्यन्ताभिनिवेशः अतपश्च—तपोविपर्ययोऽमीषां समाहारः, 'अविद्या' कुशास्त्ररूपा, 'माया' प्रतीता, 'अह्रीकता च' असमाचारविषया निर्लज्जता, 'गृद्धिः' विषयेषु लाम्पट्यं, 'प्रद्वेषश्च' अभेदोपचाराच्चेह सर्वत्र तद्वान् जन्तुरेवोच्यते, अत एव 'शठः' अलीकभाषणात्, 'प्रमत्तः' प्रकर्षेण जातिमदासेवनात्, 'रसलोलुपः' सातगवेषकश्च ॥ 'आरम्भात्' प्राण्युपमर्दाद् अविरतः शेषं प्राग्वत् ॥ वक्रः वचसा, वक्रसमाचारः क्रियया, निकृतिमान् मनसा, अनृजुकः कथञ्चिद् ऋजूकर्त्तुमशक्यतया, "पलिउंचग" त्ति प्रतिकुञ्चकः स्वदोषप्रच्छादकतया, उपधिः—छद्म तेन चरति औपधिकः सर्वत्र व्याजतः प्रवृत्तेः, एकार्थिकानि चैतानि, मिथ्यादृष्टिः अनार्यः ॥ "उप्फालग" त्ति उत्प्रासकं यथा पर उत्प्रास्यते दुष्टं च रागादिदोषवद् यथा भवत्येवं वदनशील उत्प्रासकदुष्टवादी, 'चः' समुच्चये, 'स्तेनः' चौरः, 'चः' समुच्चये, 'अपि च' इति पूरणे, मत्सरः—परसम्पदसहनं तद्वान् मत्सरी, शेषं प्राग्वत् ॥ "नीयाविति" त्ति 'नीचैर्वृत्तिः' कायमनोवाग्भिरनुत्सिक्तः, योगः—स्वाध्यायादिव्यापारस्तद्वान् 'उपधानवान्' विहितशास्त्रोपचारः, शेषं स्पष्टम् ॥ प्रतनुक्रोधमानः, 'चः' पूरणे, माया लोभश्च प्रतनुको यस्येति शेषः, अत एव प्रशान्तचित्तो दान्तात्मा ॥ 'उपशान्तः' अनुद्भटतयोपशान्ताकृतिः, शेषं स्पष्टम् ॥ आर्त्तरौद्रे वर्जयित्वा धर्मशुक्ले साधयेत् यः स प्रशान्तचित्त इत्यादि, शेषं स्पष्टम् इति सूत्रद्वादशकार्थः ॥२१-२२-२३-२४-२५-२६-२७-२८-२९-३०-३१-३२॥ सम्प्रति **स्थान**द्वारमाह—

लेश्यानां स्थान-स्थिति-द्वारे।

अस्संखेज्जाणोसप्पिणीण उस्सप्पिणीण जे समया। संखाईया लोगा, लेसाण हवंति ठाणाइं ॥३३॥

व्याख्या—असङ्ख्येयानामवसर्पिणीनां तथोत्सर्पिणीनां चे समयाः, कियन्तः? इत्याह—सङ्ख्यातीता लोकाः, कोऽर्थः? असङ्ख्येयलोकाकाशप्रदेशपरिमाणा लेश्यानां भवन्ति, 'स्थानानि' प्रकर्षाऽपकर्षकृतानि तत्परिमाणानीति शेष इति सूत्रार्थः ॥ ३३ ॥ इदानीं स्थितिमाह—

मुहुत्तद्धं तु जहन्ना, तित्तीसं सागरा मुहुत्तऽहिया। उक्कोसा होइ ठिई, नायव्वा किण्हलेसाए ॥३४॥
मुहुत्तद्धं तु जहन्ना, दसउदही पलियमसंखभागमब्भहिया। उक्कोसा होइ ठिई, नायव्वा नीललेसाए ॥
मुहुत्तद्धं तु जहन्ना, तिन्नुदही पलियमसंखभागमब्भहिया। उक्कोसा होइ ठिई, नायव्वा काउलेसाए ३६
मुहुत्तद्धं तु जहन्ना, दोण्णुदही पलियमसंखभागमब्भहिया। उक्कोसा होइ ठिई, नायव्वा तेउलेसाए ३७
मुहुत्तद्धं तु जहन्ना, दसउदही होइ मुहुत्तमब्भहिया। उक्कोसा होइ ठिई, नायव्वा पम्हलेसाए ॥३८॥
मुहुत्तद्धं तु जहन्ना, तित्तीसं सागरा मुहुत्तहिया। उक्कोसा होइ ठिई, नायव्वा सुक्कलेसाए ॥ ३९॥

व्याख्या—मुहूर्त्तार्द्धं तु, कोऽर्थः? अन्तर्मुहूर्त्तमेव जघन्या। त्रयस्त्रिंशत् "सागर" त्ति सागरोपमाणि "मुहुत्तहिय" त्ति इहोत्तरत्र च मुहूर्त्तशब्देनोपचारात् मुहूर्त्तैकदेश एवोक्तः, ततश्चान्तर्मुहूर्त्ताधिकानि उत्कृष्टा भवति स्थितिः कृष्णलेश्यायाः। इह चान्तर्मुहूर्त्तशब्देन पूर्वोत्तरभवसम्बन्ध्यन्तर्मुहूर्त्तद्वयमुक्तं द्रष्टव्यम्। एवमुत्तरत्राऽपि। शेषं सुगममिति सूत्रषट्कार्थः ॥ ३४-३५-३६-३७-३८-३९ ॥ प्रकृतमुपसंहरन्नुत्तरग्रन्थसम्बन्धमाह—

एसा खलु लेसाणं, ओहेण ठिई उ वन्निया होइ। चउसु वि गईसु इत्तो, लेसाण ठिई उ वुच्छामि ४०

व्याख्या—स्पष्टम् ॥ ४० ॥ प्रतिज्ञातमाह—

दसवाससहस्साइं, काऊए ठिई जहन्निया होइ । तिन्नोदही पलियमसंखभागं च उक्कोसा ॥४१॥
तिन्नुदही पलियमसंखभागो जहन्न नीलठिई । दस उदही पलिओवममसंखभागं च उक्कोसा ॥४२॥
दस उदही पलिओवममसंखभागं जहन्निया होइ । तित्तीससागराइं, उक्कोसा होइ किण्हाए ॥४३॥
एसा नेरइयाणं, लेसाण ठिई उ वन्निया होइ । तेण परं वुच्छामि, तिरियमणुस्साण देवाणं ॥४४॥
अंतोमुहुत्तमद्धं, लेसाण ठिई जहिं जहिं जा उ । तिरियाण नराणं वा, वज्जित्ता केवलं लेसं ॥४५॥
मुहुत्तद्धं तु जहन्ना, उक्कोसा होइ पुव्वकोडी उ । नवहिं वरिसेहिं ऊणा, नायव्वा सुक्कलेसाए ॥४६॥
एसा तिरियनराणं, लेसाण ठिई उ वन्निया होइ । तेण परं वुच्छामि, लेसाण ठिई उ देवाणं ॥४७॥
दसवाससहस्साइं, किण्हाए ठिई जहन्निया होइ । पलियमसंखेज्जइमो, उक्कोसा होइ किण्हाए ॥४८॥
जा कण्हाइ ठिई खलु, उक्कोसा सा उ समयमब्भहिया । जहन्नेणं नीलाए, पलियमसंखं च उक्कोसा ॥
जा नीलाइ ठिई खलु, उक्कोसा सा उ समयमब्भहिया । जहन्नेणं काऊए, पलियमसंखं च उक्कोसा ५०
तेण परं वोच्छामि, तेऊलेसा जहा सुरगणाणं । भवणवइ-वाणमंतर-जोइस-वेमाणियाणं च ॥५१॥
पलिओवमं जहन्ना, उक्कोसा सागरा उ दुण्हऽहिया । पलियमसंखिज्जेणं, होइ सभागेण तेऊए ॥५२॥
दसवाससहस्साइं, तेऊए ठिई जहन्निया होइ । दुण्णुदही पलिओवमअसंखभागं च उक्कोसा ॥५३॥
जा तेऊइ ठिई खलु, उक्कोसा सा उ समयमब्भहिया । जहन्नेणं पम्हाए, दसमुहुत्तऽहियाइं उक्कोसा५४
जा पम्हाइ ठिई खलु, उक्कोसा सा उ समयमब्भहिया । जहन्नेणं सुक्काए, तित्तीसमुहुत्तमब्भहिया५५

व्याख्या—दशवर्षसहस्राणि कापोतायाः स्थितिर्जघन्यका भवति, त्रयः 'उदधयः' सागरोपमाणीत्यर्थः "पलियम-

लेश्यानां स्थिति-द्वारम् ।

संखभागं च" त्ति सूत्रत्वात् पल्योपमासङ्ख्येयभागश्चोत्कृष्टा । इयं च जघन्या **रत्नप्रभायाम्**, उत्कृष्टा **वालुकायाम्** । नीलाया जघन्या **वालुकायाम्**; उत्कृष्टा **धूमप्रभायाम्** कृष्णाया जघन्या **धूमप्रभायाम्**, इतरा तु **महातमःप्रभायाम्**; शेषं नारकसूत्रेषु त्रिषु स्पष्टम् ॥ "एसा" सूत्रं स्पष्टम् ॥ तिर्यङ्मनुष्यसूत्रे "अंतोमुहुत्तमद्धं" ति 'अन्तर्मुहूर्त्तार्द्धम्' अन्तर्मुहूर्त्तकालं लेश्यानां स्थितिर्जघन्या उत्कृष्टा चेति शेषः, कतरासाम्? इत्याह—'यस्मिन् यस्मिन्' इति पृथिवीकायादौ सम्मूर्च्छिममनुष्यादौ च 'याः' कृष्णाद्याः, 'तुः' पूरणे तिरश्चां मनुष्याणां च मध्ये सम्भवन्ति तासां वर्जयित्वा 'केवलां' शुद्धां लेश्यां शुक्ललेश्यामित्यर्थः ॥ अस्या एव स्थितिमाह—'मुहूर्त्तमि'त्यादि स्पष्टम्, नवरम्–इह यद्यपि कश्चिद् अष्टवार्षिकोऽपि पूर्वकोट्यायुर्व्रतपरिणाममवाप्नोति तथाऽपि नैतावद्वयःस्थस्य वर्षपर्यायादर्वाक् शुक्ललेश्यायाः सम्भव इति नवभिर्वर्षैरूना पूर्वकोटिरुच्यते ॥ "एसा" सूत्रं स्पष्टमेव ॥ प्रतिज्ञातमाह—'दसे'त्यादि सूत्रत्रयं स्पष्टम् । नवरम्—"पलियमसंखेज्जइमो" त्ति पल्योपमासङ्ख्येयतमः प्रस्तावाद् भागः, इयं च द्विधाऽपि कृष्णायाः स्थितिरेतावदायुषामेव **भवनपति-व्यन्तराणां** ज्ञेया ॥ **नीलासूत्रे** "पलियमसंखं च" त्ति सूचनात् सूत्रमिति पल्योपमासङ्ख्येयभागः, बृहत्तरश्चायं भागः पूर्वस्मादवसेयः । **कापोताया** अपि स्थितिर्जघन्येतरा च **भवनपति-व्यन्तराणामेव** ज्ञातव्या । बृहत्तमश्चाऽत्राऽसङ्ख्यातभागो गृह्यते ॥ इत्थं निकायद्वयभाविनीमाद्यलेश्यात्रयस्थितिमुपदर्श्य समस्तनिकायभाविनीं **तेजोलेश्यास्थितिमभिधातुं** प्रतिज्ञासूत्रमाह—"तेण" त्ति ततः परं प्रवक्ष्यामि **तेजोलेश्यां** 'यथे'ति येनाऽवस्थानप्रकारेण सुरगणानां भवति, 'तत्रे'त्युपस्कारः, **भवनपति-व्यन्तर-ज्योति-र्वैमानिकानां**, 'चः' पूरणे ॥ प्रतिज्ञातमाह—"पलिए"त्यादि सूत्रचतुष्टयं स्पष्टम् । नवरम्—प्रथमसूत्रे वैमानिकानेवाश्रित्य **तैजस्याः** स्थितिरुक्ता । तत्र च जघन्या **सौधर्मे** उत्कृष्टा **चेशाने** ॥ द्वितीयसूत्रे तु निकायचतुष्टयमाश्रित्य सैवोक्ता । इह च दशवर्षसहस्राणि जघन्या **तैजस्याः** स्थितिरुक्ता, प्रक्रमाऽऽनुरूप्येण तु योत्कृष्टा

कापोतायाः स्थितिः असौ एवास्याः समयाधिका प्राप्नोति, तदत्र तत्त्वं न विद्मः ॥ तृतीयसूत्रे पद्मास्थितिरुक्ता, तत्र च "दसमुहुत्तहियाइं" ति दशैव प्रस्तावात् सागरोपमाणि पूर्वभवसत्कान्तर्मुहूर्त्ताधिकानि । इयं च जघन्या सनत्कुमारे, उत्कृष्टा च ब्रह्मलोके । आह—यदीहान्तर्मुहूर्त्तमधिकमुच्यते ततः पूर्वत्राऽपि किं न तदधिकमुक्तम् ? उच्यते—देवभवलेश्याया एव तत्र विवक्षितत्वात्, प्रतिज्ञातं हि 'तेण परं वोच्छामि लेसाण ठिइं तु देवाणं' ति; एवं सति इहान्तर्मुहूर्त्ताधिकत्वं विरुध्यते, नैवम्, अत्र हि प्रागुत्तरभवलेश्याऽपि "अंतो मुहुत्तम्मि गए" इति वचनाद् देवभवसम्बन्धिन्येवेति प्रदर्शनार्थमित्थमुक्तमिति न विरोध इति भावनीयम् ॥ चतुर्थसूत्रे शुक्लायाः स्थितिरुक्ता । तत्र च जघन्या लान्तके, अपरा तु अनुत्तरेष्विति पञ्चदशसूत्रार्थः ॥ ४१-४२-४३-४४-४५-४६-४७-४८-४९-५०-५१-५२-५३-५४-५५ ॥

उक्तं स्थितिद्वारम् । गतिद्वारमाह—

**किण्हा नीला काऊ, तिन्नि वि एयाउ अहम्मलेसाउ । एयाहि तिहि वि जीवो, दुग्गइं उववज्जई ५६**
**तेऊ पम्हा सुक्का, तिन्नि वि एयाउ धम्मलेसाउ । एयाहि तिहि वि जीवो, सुग्गइं उववज्जई ॥५७॥**

व्याख्या—स्पष्टम् । नवरम्—'दुर्गतिं' नरकतिर्यग्गतिरूपाम् 'उपपद्यते' प्राप्नोति ॥ 'सुगतिं' मनुजगत्यादिकामित्यर्थः ॥ ५६–५७ ॥ सम्प्रत्यायुर्द्वारावसरः, तत्र चावश्यं हि जन्तुर्यल्लेश्येषूत्पद्यते तल्लेश्य एव म्रियते, तत्र च जन्मान्तरभाविलेश्यायाः किं प्रथमसमये परभवायुष उदयः ? आहोश्वित् चरमसमये ? अन्यथा वा ? इति संशयापनोदायाह—

**लेसाहिं सव्वाहिं, पढमे समयम्मि परिणयाहिं तु । न हु कस्सइ उववाओ, परे भवे अत्थि जीवस्स ५८**
**लेसाहिं सव्वाहिं, चरमे समयम्मि परिणयाहिं तु । न हु कस्स वि उववाओ, परे भवे अत्थि जीवस्स ५९**
**लेसाहिं परिणयाहिं, जीवा गच्छंति परलोयं ६०**
**अंतमुहुत्तम्मि गए, अंतमुहुत्तम्मि सेसए चेव ।**

व्याख्या—लेश्याभिः सर्वाभिः 'प्रथमसमये' तत्प्रतिपत्तिकालापेक्षया 'परिणताभिः' प्रस्तावादात्मरूपतामापन्नाभि-रात्मभिरिन्मत्वा 'तुः' पूरणे, 'न हु' नैव कस्यापि उपपादः परे भवे भवति जीवस्य ॥ तथा लेश्याभिः सर्वाभिः 'चरमे' अन्त्ये समये परिणताभिस्तु 'न हु' नैव कस्याप्युपपादः परे भवे भवति जीवस्य ॥ कदा तर्हि ? इत्याह—अन्तर्मुहूर्ते गत एव, तथाऽन्तर्मुहूर्ते 'शेषके चैव' अवतिष्ठमान एव लेश्याभिः परिणताभिर्जीवा गच्छन्ति परलोकम् । अनेनान्तर्मुहूर्ताऽवशेषे आयुषि परभवलेश्यापरिणाम इत्युक्तं भवतीति सूत्रत्रयार्थः ॥ ५८-५९-६० ॥ सम्प्रत्यध्ययनार्थमुपसञ्जिहीर्षुरुपदेष्टुमाह—

अप्रशस्त-प्रशस्तानां लेश्यानां वर्जनसेवनोपदेशः ।

तम्हा एयासि लेसाणं, अणुभावं वियाणिया । अप्पसत्था उ वज्जित्ता, पसत्था उ अहिट्ठए मुणि ६१

त्ति बेमि ॥

व्याख्या—यस्मादेता अप्रशस्ता दुर्गतिहेतवः प्रशस्ताश्च सुगतिहेतवः तस्मादेतासां लेश्यानाम् 'अनुभावम्' उक्तरूपं विज्ञाय अप्रशस्ता वर्जयित्वा प्रशस्ता अधितिष्ठेत् मुनिरिति शेषः, उभयत्राऽपि 'तुः' पूरणे, इति सूत्रार्थः ॥ ६१ ॥ 'इति' परिसमाप्तौ, ब्रवीमीति च प्राग्वत् ॥

इति श्रीनेमिचन्द्रसूरिविरचितायां उत्तराध्ययनसूत्रलघुटीकायां सुख-बोधायां चतुस्त्रिंशं लेश्याख्यमध्ययनं समाप्तम् ॥

# अथ अनगारमार्गगतिनामकं पञ्चत्रिंशमध्ययनम्।

अनन्तराध्ययने लेश्या अभिहिताः, तत्र चाऽप्रशस्तलेश्यात्यागतः प्रशस्ता एवाऽधिष्ठातव्याः, एतच्च भिक्षुगुणव्यवस्थितेन सम्यग् विधातुं शक्यम्, अतो भिक्षुगुणपरिज्ञानार्थमधुनाऽनगारमार्गगतिनामकं पञ्चत्रिंशमध्ययनमारभ्यते, तस्य चेदमादिसूत्रम्—

अनगारस्य मार्गः।

सुणेह मे एगमणा, मग्गं बुद्धेहिं देसियं। जमायरंतो भिक्खू, दुक्खाणंतकरो भवे ॥ १ ॥

व्याख्या—शृणुत 'मे' कथयत इति शेषः, एकाग्रमनसः 'मार्गं' प्रक्रमान्मुक्तेः 'बुद्धैः' अर्हदादिभिः 'दर्शितम्' उपदिष्टं यम् 'आचरन्' आसेवमानो भिक्षुर्दुःखानामन्तकरो भवेदिति गाथार्थः ॥ १ ॥ प्रतिज्ञातमाह—

गिहवासं परिच्चज्जा, पवज्जामस्सिए मुणी। इमे संगे वियाणिज्जा, जेहिं सज्जंति माणवा ॥ २ ॥
तहेव हिंसं अलियं, चोज्जं अबंभसेवणं। इच्छाकामं च लोभं च, संजओ परिवज्जए ॥ ३ ॥
मणोहरं चित्तघरं, मल्लधूवेण वासियं। सकवाडं पंडरुल्लोयं, मणसा वि न पत्थए ॥ ४ ॥
इंदियाणि उ भिक्खुस्स, तारिसम्मि उवस्सए। दुक्कराइं निवारेउं, कामरागविवड्ढणे ॥ ५ ॥
सुसाणे सुन्नगारे वा, रुक्खमूले व एक्कओ। पइरिक्के परकडे वा, वासं तत्थऽभिरोयए ॥ ६ ॥
फासुयम्मि अणाबाहे, इत्थीहिं अणभिद्दुए। तत्थ संकप्पए वासं, भिक्खू परमसंजए ॥ ७ ॥
न सयं गिहाइं कुव्विज्जा, नेव अन्नेहिं कारए। गिहकम्मसमारंभे, भूयाणं दिस्सए वहो ॥ ८ ॥
तसाणं थावराणं च, सुहुमाणं बायराण य। तम्हा गिहसमारंभं, संजओ परिवज्जए ॥ ९ ॥

तहेव भत्तपाणेसु, पयणे पयावणेसु य । पाणभूयदयट्ठाए, न पए न पयावए ॥ १० ॥
जलधन्ननिस्सिया जीवा, पुढवीकट्ठनिस्सिया । हम्मंति भत्तपाणेसु, तम्हा भिक्खू न पयावए ॥११॥
विसप्पे सव्वओधारे, बहुपाणविणासणे । नत्थि जोइसमे सत्थे, तम्हा जोई न दीवए ॥ १२ ॥
हिरन्नं जायरूवं च, मणसा वि न पत्थए । समलिट्ठुकंचणे भिक्खू, विरए कयविक्कए ॥ १३ ॥
किणंतो कइओ होइ, विक्किणंतो अ वाणिओ । कयविक्कयम्मि वट्टंतो, भिक्खू हवइ तारिसो ॥१४॥
भिक्खियव्वं न केयव्वं, भिक्खुणा भिक्खवित्तिणा । कयविक्कए महादोसो, भिक्खावित्ती सुहावहा ॥
समुयाणं उंछमेसेज्जा, जहासुत्तमणिंदियं । लाभालाभम्मि संतुट्ठे, पिंडवायं चरे मुणी ॥ १६ ॥
अलोले न रसे गिद्धो, जिब्भादंतो अमुच्छिओ । न रसट्ठाए भुंजिज्जा, जवणट्ठाए महामुणी ॥१७॥
अच्चणं रयणं चेव, वंदणं पूयणं तहा । इड्ढीसक्कारसम्माणं, मणसा वि न पत्थए ॥ १८ ॥
सुक्कं झाणं झियाइज्जा, अणियाणे अकिंचणे । वोसट्ठकाए विहरिज्जा, जाव कालस्स पज्जओ ॥१९॥
णिज्जूहिऊण आहारं, कालधम्मे उवट्ठिए । चइऊण माणुसं बुंदिं, पहू दुक्खा विमुच्चई ॥ २० ॥
निम्ममो निरहंकारो, वीयराओ अणासवो । संपत्तो केवलं नाणं, सासयं परिनिव्वुडे ॥२१॥ त्ति बेमि ॥

व्याख्या—गृहवासं परित्यज्य प्रव्रज्यामाश्रितो मुनिः 'इमान्' प्रतिप्राणिप्रतीततया प्रत्यक्षान् 'सङ्गान्' पुत्रकलत्रादीन् 'विजानीयात्' भवहेतवोऽमीति विशेषेणाऽवबुध्येत, ज्ञानस्य च विरतिफलत्वात् प्रत्याचक्षीतेत्युक्तं भवति । सङ्गशब्दव्युत्पत्तिमाह—यैः 'सज्यन्ते' प्रतिबध्यन्ते मानवाः उपलक्षणत्वादन्येऽपि जन्तवः ॥ 'तथे'ति समुच्चये, 'एवे'ति पूरणे, हिंसामलीकं चौर्यमब्रह्मसेवनम्, इच्छारूपः कामः इच्छाकामस्तं चाऽप्राप्तवस्तुकाङ्क्षारूपं 'लोभं च' लब्धवस्तुविषयगृद्ध्या-

त्मकम्, उभयेनाऽपि परिग्रह उक्तः, ततः परिग्रहं च संयतः परिवर्जयेत् ॥ तथा मनोहरं चित्रप्रधानं गृहं चित्रगृहं माल्यधूपेन वासितं सकपाटं पाण्डुरोल्लोचं मनसाऽपि आस्तां वचसा न प्रार्थयेत् किं पुनस्तत्र तिष्ठेद् इति भावः ॥ किं पुनरेवमुपदिश्यते? इत्याह—इन्द्रियाणि, 'तुः' इति यस्माद् भिक्षोस्तादृशे उपाश्रये 'दुःकराणि' करोतेः सर्वधात्वर्थत्वाद् दुःशक्यानि निवारयितुं 'कामरागविवर्द्धने' उपाश्रयविशेषणम् ॥ तर्हि क्व स्थातव्यम्? इत्याह—स्मशाने शून्यागारे वा वृक्षमूले वा 'एककः' रागादिवियुक्तोऽसहायो वा "पइरिक्के" 'एकान्ते' स्त्र्याद्यसङ्कुले 'परकृते' परैर्निष्पादिते स्वार्थमिति गम्यते, 'वा' समुच्चये 'वासम्' अवस्थानं 'तत्र' स्मशानादौ अभिरोचयेद् भिक्षुरिति योगः ॥ प्रासुके 'अनाबाधे' कस्यापि बाधारहिते स्त्रीभिरनभिद्रुते 'तत्रे'ति प्रागुक्तविशेषणे स्मशानादौ 'सङ्कल्पयेत्' कुर्याद् वासं भिक्षुः परमसंयतः ॥ ननु किमिह परकृत इति विशेषणमुक्तम्? इत्याशङ्क्याह—न स्वयं गृहाणि कुर्वीत, नैवाऽन्यैः कारयेद्, उपलक्षणत्वान्नाऽपि कुर्वन्तमनुमन्येत, किमिति? यतो गृहकर्म—इष्टकामृदानयनादि तस्य समारम्भः—प्रवर्त्तनं गृहकर्मसमारम्भस्तस्मिन् भूतानां दृश्यते वधः ॥ कतरेषाम्? इत्याह—त्रसानां स्थावराणां च सूक्ष्माणां शरीराऽपेक्षया बादराणां च, तथैवोपसंहर्तुमाह—तस्माद् गृहसमारम्भं संयतः परिवर्जयेत् ॥ अन्यच्च—'तथैव' इति प्राग्वद् भक्तपानेषु पचने पाचनेषु च भूतवधो दृश्यते इति प्रागुक्तेन सम्बन्धः, ततः किम्? इत्याह—प्राणाः—त्रसाः भूतानि—पृथिव्यादीनि तद्दयार्थं न पचेन्न पाचयेत् ॥ अमुमेवार्थं स्पष्टतरमाह—जलधान्यनिश्रिता जीवाः पृथिवीकाष्ठनिश्रिताः हन्यन्ते 'भक्तपानेषु' प्रक्रमात् पच्यमानेषु, यत एवं तस्माद्भिक्षुर्न पाचयेद् अपेर्गम्यमानत्वात् पाचयेदपि न किं पुनः स्वयं पचेत् ॥ अपरञ्च—विसर्पति—स्वल्पमपि बहु भवतीति विसर्पं, 'सर्वतोधारं' सर्वदिगवस्थितं जन्तूपघातकत्वात्, उक्तञ्च—"पाईणं पडीणं वा वी"त्यादि।

१ "प्राचीनं प्रतीचीनं वाऽपि" इत्यादि ।

अत एव बहुप्राणविनाशनं, नास्ति ज्योतिःसमं शस्त्रं, यस्मादेवं तस्मात् ज्योतिर्न दीपयेत् ॥ पचनादौ जीवघातो भवति न तु क्रयविक्रययोः, अतो युक्तमेवाऽऽभ्यां निर्वहणमिति कस्यचिदाऽऽशङ्का स्यादत आह—'हिरण्यं' कनकं 'जातरूपं च' रूप्यं, चकारोऽनुक्ताऽशेषधनधान्यादिसमुच्चये, मनसाऽपि न प्रार्थयेद्भिक्षुरिति योगः, कीदृशः सन्? समलेष्टुकाञ्चनो विरतः 'क्रयविक्रये' क्रयविक्रयविषये ॥ किमित्येवम्? अत आह—क्रीणन् 'क्रयिको भवति' तथाविधेतरलोकसदृश एव भवति, विक्रीणानश्च वणिग् भवति, वाणिज्यप्रवृत्तत्वादिति भावः, अत एव क्रयविक्रये 'वर्त्तमानः' प्रवर्त्तमानो भिक्षुर्भवति न तादृशो गम्यमानत्वाद् यादृशः समयेऽभिहितः ॥ ततः किम्? इत्याह—'भिक्षितव्यं' याचितव्यं नगारिणं वणिगिति गम्यते, नैव क्रेतव्यं भिक्षुणा भिक्षावृत्तिना, अत्रैवादरख्यापनार्थमाह—क्रयश्च विक्रयश्च क्रयविक्रयं महादोषं, लिङ्गव्यत्ययश्च प्राकृतत्वात्, भिक्षावृत्तिः सुखावहा ॥ भिक्षितव्यमित्युक्तम्, तच्चैककुलेऽपि स्याद् अत आह—'समुदानं' भैक्ष्यं, तच्च उञ्छमिव 'उञ्छम्' अन्यान्यवेश्मतः स्तोकस्तोकमीलनाद् एषयेत् 'यथासूत्रम्' आगमानतिक्रमेण उद्गमैषणाबाधात इति भावः, तत एव 'अनिन्दितम्' अजुगुप्सितं जुगुप्सितजनसम्बन्धि न भवतीत्यर्थः, तथा लाभाऽलाभे सन्तुष्टः, पिण्डस्य पातः—पतनं प्रक्रमात् पात्रेऽस्मिन्निति 'पिण्डपातं' भिक्षाऽटनं तत् 'चरेत्' भावेन मुनिः, वाक्यान्तरविषयत्वाच्च अपौनरुक्त्यम् ॥ इत्थं पिण्डमवाप्य यथा भुञ्जीत तथाह—'अलोलः' न सरसान्ने प्राप्ते लम्पटत्ववान्, न 'रसे' मधुरादौ 'गृद्धः' प्राप्तेऽभिकाङ्क्षावान्, कथं चैवंविधः? "जिब्भादंतो" त्ति दान्तजिह्वः, अत एव 'अमूर्च्छितः' सन्निधेरकरणेन, एवंविधश्च 'न' नैव "रसट्ठाए" त्ति रसः—धातुविशेषः स चाऽशेषधातूपलक्षणं बलाद्युपचयः स्यादिति तदर्थं न भुञ्जीत, किमर्थं तर्हि? इत्याह—यापना—निर्वाहः स चार्थात् संयमस्य तदर्थं महामुनिः ॥ तथा 'अर्चनां' पुष्पादिभिः पूजां 'रचनां' निषद्यादिविषयां स्वस्तिकाद्यात्मिकां वा, 'चः' समुच्चये, 'एवः' अवधारणे

अनगारस्य मार्गः ।

'न' इत्यनेन सम्बध्यते, 'वन्दनं' प्रतीतं, 'पूजनं' वस्त्रादिभिः प्रतिलाभनं, 'तथे'ति समुच्चये, ऋद्धिश्च—श्रावकोपकरणादिसम्पत् सत्कारश्च—अर्घप्रदानादिः सन्मानश्च—अभ्युत्थानादिः ऋद्धिसत्कारसन्मानं तन्मनसाऽपि न प्रार्थयेत् ॥ किं पुनः कुर्याद् ? इत्याह—"सुक्कं झाणं" ति सोपस्कारत्वात् शुक्लध्यानं यथा भवत्येवं ध्यायेद् अनिदानोऽकिञ्चनः व्युत्सृष्टकायः 'विहरेत्' अप्रतिबद्धविहारितयेति गम्यते, कियन्तं कालम् ? इत्याह—यावत् 'कालस्य' मृत्योः 'पर्ययः' परिपाटी प्रस्ताव इत्यर्थः ॥ एवंविधानगारगुणस्थश्च मृत्युसमये यत् कृत्वा यत् फलमवाप्नोति तदाह—"निज्जूहिऊणं" ति परित्यज्य आहारं संलेखनाक्रमेण 'कालधर्मे' आयुःक्षयरूपे उपस्थिते तथा त्यक्त्वा मानुषीं "बोंदिं" तनुं 'प्रभुः' वीर्यान्तरायापगमतो विशिष्टसामर्थ्यवान् "दुक्खे"ति 'दुःखैः' शारीरमानसैर्विमुच्यते ॥ कीदृशः सन् ? इत्याह—निर्ममो निरहङ्कारः, कुतोऽयमीदृग् ? यतो वीतरागः, उपलक्षणत्वाद् वीतद्वेषश्च, तथा 'अनाश्रवः' कर्माश्रवरहितः सम्प्राप्तः केवलं ज्ञानं शाश्वतं 'परिनिर्वृतः' अस्वास्थ्यहेतुकर्माभावतः सर्वथा स्वस्थीभूत इति विंशतिसूत्रार्थः ॥ २-३-४-५-६-७-८-९-१०-११-१२-१३-१४-१५-१६-१७-१८-१९-२०-२१ ॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥

इति श्रीनेमिचन्द्रसूरिसंदृब्धायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायामनगारमार्गगतिनामकं पञ्चत्रिंशमध्ययनं समाप्तम् ॥

# अथ जीवाजीवविभक्तिनामकं षट्त्रिंशमध्ययनम् ।

अनन्तराऽध्ययनेऽहिंसादयो भिक्षुगुणा उक्ताः, ते च जीवाऽजीवस्वरूपपरिज्ञानत एवाऽऽसेवितुं शक्यन्ते इति तज्ज्ञापनार्थमधुना षट्त्रिंशं जीवाऽजीवविभक्तिसंज्ञमध्ययनमारभ्यते, तस्येदमादिसूत्रम्—

**जीवाजीवविभत्तिं, सुणेह मे एगमणा इओ । जं जाणिऊण भिक्खू, सम्मं जयइ संजमे ॥१॥**

व्याख्या—जीवाऽजीवानां विभक्तिः—तत्तद्भेदादिदर्शनतो विभागेनाऽवस्थापनं जीवाऽजीवविभक्तिस्तां शृणुत 'मे' कथयत इति गम्यते, एकमनसः सन्तः 'इतः' अनन्तराध्ययनादनन्तरं शेषं स्पष्टमिति सूत्रार्थः ॥ १ ॥ जीवाऽजीवविभक्तिप्रसङ्गत एव लोकालोकविभक्तिमाह—

**जीवा चेव अजीवा य, एस लोए वियाहिए । अजीवदेसमागासे, अलोए से वियाहिए ॥ २ ॥**

व्याख्या—स्पष्टम् ॥२॥ इह च जीवाऽजीवानां विभक्तिः प्ररूपणाद्वारेणैवेति तां विधित्सुर्यथाऽसौ भवति तथाऽऽह—

**दव्वओ खित्तओ चेव, कालओ भावओ तहा । परूवणा तेसि भवे, जीवाणमजीवाण य ॥३॥**

व्याख्या—'द्रव्यतः' इदमियद्भेदं द्रव्यमिति, 'क्षेत्रतश्चैव' इदमियति क्षेत्रे इति, 'कालतः' इदमियत्स्थितिकमिति, 'भावतस्तथा' इमेऽस्य पर्याया इति प्ररूपणा 'तेषां' विभजनीयत्वेन प्रक्रान्तानां भवेद् जीवानामजीवानां चेति सूत्रार्थः ॥ ३ ॥ तत्राऽल्पवक्तव्यत्वाद् द्रव्यतोऽजीवप्ररूपणामाह—

**रूविणो चेवऽरूवी य, अजीवा दुविहा भवे । अरूवी दसहा वुत्ता, रूविणो वि चउव्विहा ॥ ४ ॥**

**धम्मत्थिकाए तद्देसे, तप्पएसे य आहिए । अधम्मे तस्स देसे य, तप्पएसे य आहिए ॥ ५ ॥**

लोकालोकविभागः, अजीवप्ररूपणायां द्रव्यतोऽरूप्यजीववक्तव्यता ।

**आगासे तस्स देसे य, तप्पएसे य आहिए । अद्धासमए चेव, अरूवी दसहा भवे ॥ ६ ॥** सम्प्रत्येतानेव क्षेत्रत आह—

व्याख्या—स्पष्टम् । नवरम्—देशः—त्रिभागादिः, प्रदेशस्तु—निरंशः ॥ ४–५–६ ॥

**धम्माधम्मे य दोऽवेए, लोगमित्ता वियाहिया । लोगालोगे य आगासे, समए समयखेत्तिए ॥७॥**

व्याख्या—स्पष्टम् ॥ ७ ॥ एतानेव कालत आह—

**धम्माधम्मागासा, तिन्नि वि एए अणाइया । अपज्जवसिया चेव, सव्वद्धं तु वियाहिया ॥ ८ ॥**

**समए वि संतइं पप्प, एवमेव वियाहिया । आएसं पप्प साईए, सपज्जवसिए वि य ॥ ९ ॥**

व्याख्या—धर्माधर्माकाशानि त्रीण्यपि 'एतानि' द्रव्याणि, अनादिकानि अपर्यवसितानि चैव, अत एव "सव्वद्धं तु" 'सर्वाद्धामेव' सर्वदा स्वस्वरूपापरित्यागतो नित्यानीति यावत्॥ 'सन्ततिम्' अपरापरोत्पत्तिरूपप्रवाहात्मिकां 'प्राप्य' आश्रित्य 'एवमेव' अनाद्यपर्यवसितत्वलक्षणेनैव प्रकारेण व्याख्यातः, 'आदेशं' विशेषं प्रतिनियतव्यक्त्यात्मकं शेषं स्पष्टम् ॥८–९॥ सम्प्रत्यमूर्त्तत्वेनाऽमीषां पर्यायाः प्ररूप्यमाणा अपि न संवित्तिमानेतुं शक्या इति भावतः प्ररूपणामनादृत्य द्रव्यतो रूपिणः प्ररूपयितुमाह—

**खंधा य खंधदेसा य, तप्पएसा तहेव य । परमाणुणो य बोद्धव्वा, रूविणो य चउव्विहा ॥१०॥**

व्याख्या—स्पष्टम् ॥ १० ॥ इह च देशप्रदेशानां स्कन्धेष्वेवान्तर्भावात् स्कन्धाः परमाणवश्चेति समासतो द्वावेव रूपिद्रव्यभेदौ, तयोश्च किं लक्षणम् ? इत्याह—

**एगत्तेण पुहुत्तेण, खंधा य परमाणुणो ।**

व्याख्या—'एकत्वेन' समानपरिणतिरूपेण 'पृथक्त्वेन' परमाण्वन्तरैरसङ्घातरूपेण लक्ष्यन्त इति शेषः, स्कन्धाः चस्य भिन्नक्रमत्वात् परमाणवश्च । एतानेव क्षेत्रत आह—

लोगगदेसे लोए य, भइयव्वा ते उ खेत्तओ ।

व्याख्या—लोकस्यैकदेशे लोके च 'भक्तव्याः' भजनया दर्शनीयाः 'ते' इति स्कन्धाः परमाणवश्च 'तुः' पूरणे, क्षेत्रतः । अत्र चाविशेषोक्तावपि परमाणूनामेकप्रदेशे एवाऽवस्थानात् स्कन्धविषयैव भजना द्रष्टव्या, ते हि विचित्रत्वात् परिणते-र्बहुतरप्रदेशोपचिता अपि केचिदेकप्रदेशेऽवतिष्ठन्ते, अन्ये तु सङ्ख्येयेष्वसङ्ख्येयेषु च प्रदेशेषु यावत् सकललोकेऽपि तथाविधाऽचित्तमहास्कन्धवद्भवेयुरिति भजनीया उच्यन्ते ।

एत्तो कालविभागं तु, तेसिं वुच्छं चउव्विहं ॥ ११ ॥

व्याख्या—'अतः' इति क्षेत्रप्ररूपणातोऽनन्तरमिति गम्यते 'कालविभागं तु' कालभेदं पुनः 'तेषां' स्कन्धादीनां वक्ष्ये 'चतुर्विधं' साद्यनादिसपर्यवसिताऽपर्यवसितभेदेनेति सूत्रार्थः ॥ ११ ॥ इदं च सूत्रं षट्पादम्, प्रत्यन्तरेषु तु अन्त्यपादद्वयं न दृश्यत एव । यथाप्रतिज्ञातमाह—

संतइं पप्प तेऽणाई, अपज्जवसिया वि य । ठिइं पडुच्च साईया, सप्पज्जवसिया वि य ॥ १२ ॥

व्याख्या—स्पष्टम् ॥ १२ ॥ सादिसपर्यवसितत्वे च कियत्कालमेषामवस्थितिः ? इत्याह—

असंखकालमुक्कोसा, एक्कं समयं जहन्निया । अजीवाण य रूवीणं, ठिई एसा वियाहिया ॥ १३ ॥

व्याख्या—असङ्ख्यकालमुत्कृष्टा, एकं समयं जघन्यका, यत्राऽपि 'असंखकालमुक्कोसं एक्को समओ जहन्नयं' ति पाठः, तत्रापि लिङ्गव्यत्ययादनमेव संस्कारः, एवमुत्तरत्राऽपि, शेषं स्पष्टम् । नवरं 'स्थितिः' प्रतिनियतक्षेत्राऽवस्थानरूपा ॥ १३ ॥ इत्थं कालमाश्रित्य स्थितिरुक्ता । सम्प्रत्येतदन्तर्गतमेवाऽन्तरमाह—

अणंतकालमुक्कोसं, एक्को समओ जहन्नयं । अजीवाण य रूवीणं, अंतरेयं वियाहियं ॥ १४ ॥

क्षेत्रतः कालतश्च रूप्यजीव-वक्तव्यता ।

व्याख्या—स्पष्टम् । नवरम्—'अन्तरं' विवक्षितक्षेत्राऽवस्थितेः प्रच्युतानां पुनस्तत्प्राप्तेर्व्यवधानम् ॥१४॥ एतान्येव भावतोऽभिधातुमाह—

वण्णओ गंधओ चेव, रसओ फासओ तहा । संठाणओ य विण्णेओ, परिणामो तेसि पंचहा ॥१५॥
वण्णओ परिणया जे उ, पंचहा ते पकित्तिया । किण्हा नीला य लोहिया, हालिद्दा सुक्किला तहा १६
गंधओ परिणया जे उ, दुविहा ते वियाहिया । सुब्भिगंधपरिणामा, दुब्भिगंधा तहेव य ॥१७॥
रसओ परिणया जे उ, पंचहा ते पकित्तिया । तित्त कडुय कसाया, अंबिला महुरा तहा ॥१८॥
फासओ परिणया जे उ, अट्ठहा ते पकित्तिया । कक्खडा मउया चेव, गुरुया लहुया तहा ॥१९॥
सीया उण्हा य निद्धा य, तहा लुक्खा य आहिया । इति फासपरिणया, एए पुग्गला समुदाहिया २०
संठाणपरिणया जे उ, पंचहा ते पकित्तिया । परिमंडला य वट्टा य, तंसा चउरंसमायया ॥२१॥
वण्णओ जे भवे किण्हे, भइए से उ गंधओ । रसओ फासओ चेव, भइए संठाणओ वि य ॥ २२ ॥
वन्नओ जे भवे नीले, भइए से उ गंधओ । रसओ फासओ चेव, भइए संठाणओ वि य ॥२३॥
वन्नओ लोहिए जे उ, भइए से उ गंधओ । रसओ फासओ चेव, भइए संठाणओ वि य ॥२४॥
वन्नओ पीअए जे उ, भइए से उ गंधओ । रसओ फासओ चेव, भइए संठाणओ वि य ॥२५॥
वन्नओ सुक्किले जे उ, भइए से उ गंधओ । रसओ फासओ चेव, भइए संठाणओ वि य ॥२६॥
गंधओ जे भवे सुब्भी, भइए से उ वन्नओ । रसओ फासओ चेव, भइए संठाणओ वि य ॥२७॥
गंधओ जे भवे दुब्भी, भइए से उ वन्नओ । रसओ फासओ चेव, भइए संठाणओ वि य ॥२८॥



भावतो रूप्यजीवप्ररूपणा ।

रसओ तित्तए जे उ, भइए से उ वण्णओ। गंधओ फासओ चेव, भइए संठाणओ वि य ॥२९॥
रसओ कडुए जे उ, भइए से उ वण्णओ। गंधओ फासओ चेव, भइए संठाणओ वि य ॥३०॥
रसओ कसाए जे उ, भइए से उ वन्नओ। गंधओ फासओ चेव, भइए संठाणओ वि य ॥३१॥
रसओ अंबिले जे उ, भइए से उ वण्णओ। गंधओ फासओ चेव, भइए संठाणओ वि य ॥३२॥
रसओ मुहुरए जे उ, भइए से उ वन्नओ। गंधओ फासओ चेव, भइए संठाणओ वि य ॥३३॥
फासओ कक्खडे जे उ, भइए से उ वन्नओ। गंधओ रसओ चेव, भइए संठाणओ वि य ॥३४॥
फासओ मउए जे उ, भइए से उ वन्नओ। गंधओ रसओ चेव, भइए संठाणओ वि य ॥३५॥
फासओ गुरुए जे उ, भइए से उ वन्नओ। गंधओ रसओ चेव, भइए संठाणओ वि य ॥३६॥
फासओ लहुए जे उ, भइए से उ वन्नओ। गंधओ रसओ चेव, भइए संठाणओ वि य ॥३७॥
फासओ सीयए जे उ, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए संठाणओ वि य ॥३८॥
फासओ उण्हए जे उ, भइए से उ वन्नओ। गंधओ रसओ चेव, भइए संठाणओ वि य ॥३९॥
फासओ निद्धए जे उ, भइए से उ वन्नओ। गंधओ रसओ चेव, भइए संठाणओ वि य ॥४०॥
फासओ लुक्खए जे उ, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए संठाणओ वि य ॥४१॥
परिमंडलसंठाणे, भइए से उ वन्नओ। गंधओ रसओ चेव, भइए फासओ वि य ॥ ४२ ॥
संठाणओ भवे वट्टे, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए फासओ वि य ॥ ४३ ॥
संठाणओ भवे तंसे, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए फासओ वि य ॥ ४४ ॥

भावतो रूप्यजीव-प्ररूपणा।

संठाणओ य चउरंसे, भइए से उ वण्णओ । गंधओ रसओ चेव, भइए फासओ वि य ॥ ४५ ॥
जे आययसंठाणे, भइए से उ वण्णओ । गंधओ रसओ चेव, भइए फासओ वि य ॥ ४६ ॥

व्याख्या—सुगमान्येव ॥ १५-१६-१७-१८-१९-२०-२१-२२-२३-२४-२५-२६-२७-२८-२९-३०-३१-३२-३३-३४-३५-३६-३७-३८-३९-४०-४१-४२-४३-४४-४५-४६ ॥ सम्प्रत्युपसंहरन्नुत्तरग्रन्थसम्बन्धमाह—

एसा अजीवविभत्ती, समासेण वियाहिया । इत्तो जीवविभत्तिं, वुच्छामि अणुपुव्वसो ॥ ४७ ॥

व्याख्या—स्पष्टम् ॥ ४७ ॥ यथाप्रतिज्ञातमाह—

संसारत्था य सिद्धा य, दुविहा जीवा वियाहिया । सिद्धा णेगविहा वुत्ता, तं मे कित्तयओ सुण ४८

व्याख्या—स्पष्टम् ॥ ४८ ॥ अनेकविधत्वमेव सिद्धानामुपाधिभेदत आह—

इत्थीपुरिससिद्धा य, तहेव य नपुंसगा । सलिंगे अन्नलिंगे य गिहिलिंगे तहे व य ॥ ४९ ॥

व्याख्या—स्पष्टम् । नवरम्—"गिहिलिंगे तहेव य" त्ति 'तथैवे'त्युक्तसमुच्चये, चकारस्तु तीर्थसिद्धाद्यनुक्तभेदसंसूचकः ॥ ४९ ॥ सिद्धानेव अवगाहनतः क्षेत्रतश्चाह—

---

१ पूरणगलनधर्माणः पुद्गलाः, अत्र च गन्धौ द्वौ, रसाः पञ्च, स्पर्शाः अष्ट, संस्थानानि पञ्च, एते च मीलिताः विंशतिः २०। एतावतो भङ्गान् प्रत्येकं पञ्चाऽपि वर्णा लभन्ते जातं शतम् १००। रसादयः अष्टादश पञ्चभिर्वर्णैर्मीलितैः त्रयोविंशतिः २३। ततश्च गन्धद्वयेन लब्धा भङ्गानां षट्चत्वारिंशत् ४६। एवं रसपञ्चकसंयोगे शतम् १००। स्पर्शाष्टकसंयोगे षट्त्रिंशं शतम् १३६। परिमण्डलसंस्थाने यो वर्त्तते इति शेषः भाज्यः स तु सामान्यप्रक्रमेऽपि स्कन्धः, परमाणूनां संस्थानाऽसम्भवाद् अत्र 'संस्थानपञ्चकसंयोगे शतम् १००। एवं वर्णादीनां सर्वभङ्गसङ्कलनया व्यशीत्यधिकानि चत्वारि शतानि ४८२ ॥

उक्कोसोगाहणाए य, जहन्नमज्झिमाइ य। उड्ढं अहे तिरियं च, समुद्दम्मि जलम्मि य ॥ ५० ॥

व्याख्या—उत्कृष्टावगाहनायां च पञ्चधनुःशतप्रमाणायां सिद्धाः, "जहन्नमज्झिमाइ य" त्ति 'जघन्यावगाहनायां' द्विहस्तमानायां 'मध्यमावगाहनायां च' उत्कृष्टोत्कृष्टजघन्यावगाहनान्तरालवर्तिन्यां सिद्धाः, 'ऊर्ध्वम्' ऊर्ध्वलोके–मेरुचूलिकादौ 'अधः' अधोलोके–अधोलौकिकग्रामरूपे 'तिर्यक्' तिर्यग्लोके–अर्धतृतीयद्वीपसमुद्ररूपे तत्राऽपि केचित् समुद्रे 'जले च' नद्यादिसम्बन्धिनीति सूत्रार्थः ॥ ५० ॥ इत्थं स्त्रीसिद्धादीनभिदधता स्त्र्यादिषु सिद्धिसम्भव उक्तः। सम्प्रति तत्रापि क कियन्तः सिद्धान्ति? इत्याशङ्क्याह—

दस य नपुंसएसुं, वीसं इत्थियासु य। पुरिसेसु य अट्ठसयं, समएणेगेण सिज्झई ॥ ५१ ॥
चत्तारि य गिहिलिंगे, अन्नलिंगे दसेव य। सलिंगेण य अट्ठसयं, समएणेगेण सिज्झई ॥ ५२ ॥
उक्कोसोगाहणाए उ, सिज्झंते जुगवं दुवे। चत्तारि य जहन्नाए, मज्झे अट्ठुत्तरं सयं ॥ ५३ ॥
चउरुड्ढलोए य दुवे समुद्दे, तओ जले वीसमहे तहेव य।
सयं च अट्ठुत्तर तिरियलोए, समएणेगेण उ सिज्झई धुवं ॥ ५४ ॥

व्याख्या—स्पष्टम् ॥ ५१-५२-५३-५४ ॥ सम्प्रति तेषामेव प्रतिघातादिप्रतिपादनायाह—

कहिं पडिहया सिद्धा?, कहिं सिद्धा पइट्ठिया?। कहिं बुंदिं चइत्ता णं, कत्थ गंतूण सिज्झई? ॥५५॥
अलोए पडिहया सिद्धा, लोगग्गे य पइट्ठिया। इहं बोंदिं चइत्ता णं, तत्थ गंतूण सिज्झई ॥५६॥

१ मध्यमत्वमिह यवमध्यं मध्यमाऽवगाहना तस्यामष्टोत्तरशतम्, यवमध्यत्वं च उत्कृष्टजघन्यावगाहनयोर्मध्यवर्तित्वात्तदपेक्षया च बहुतरसङ्ख्यत्वेनास्याः स्थूलत्वेन भासमानत्वात्।

व्याख्या—स्पष्टम् । नवरम्—"तत्थ" त्ति लोकाग्रे "सिज्झइ" त्ति 'सिध्यन्ते' निष्ठितार्था भवन्ति ॥५५-५६॥ लोकाग्रे गत्वा सिद्ध्यन्तीत्युक्तम्, लोकाग्रं च ईषत्प्राग्भाराया उपरीति यस्मिन् प्रदेशे यत्संस्थाना यत्प्रमाणा यद्वर्णा चासौ तदाऽऽह—

बारसहिं जोयणेहिं, सव्वट्ठस्सुवरिं भवे । ईसीपब्भारनामा उ, पुढवी छत्तसंठिया ॥ ५७ ॥
पणयाल सयसहस्सा, जोयणाणं तु आयया । तावइयं चेव विच्छिन्ना, तिगुणो तस्सेव परिरओ ५८
अट्ठजोयणबाहल्ला, सा मज्झम्मि वियाहिया । परिहायंती चरिमंते, मच्छियपत्ताओ तणुययरी ॥५९॥
अज्जुणसुवन्नगमई, सा पुढवी निम्मला सहावेणं । उत्ताणयछत्तयसंठिया य भणिया जिणवरेहिं ६०
संखंककुंदसंकासा, पंडुरा निम्मला सुभा ।

व्याख्या—स्पष्टम् । नवरम्—अर्जुनं–शुक्लं यत् सुवर्णं तन्मयी । प्रथमसूत्रे च सामान्येन छत्रसंस्थितेत्युक्तम्, चतुर्थसूत्रे तु उत्तानत्वं तद्विशेष इति न पौनरुक्त्यम् ॥ ५७-५८-५९-६० ॥ यदीदृशी पृथिवी ततः किम्? इत्याह—

सीयाए जोयणे तत्तो, लोयंतो उ वियाहिओ ॥ ६१ ॥

व्याख्या—स्पष्टम् ॥ ६१ ॥ यदि योजने लोकान्तस्तत् किं तत्र योजने सर्वत्र सिद्धाः सन्ति? इत्याशङ्क्याह—

जोयणस्स उ जो तत्थ, कोसो उवरिमो भवे । तस्स कोसस्स छब्भाए, सिद्धाणोगाहणा भवे ॥६२॥

व्याख्या—स्पष्टम् ॥ ६२ ॥ अवगाहना च चलनसम्भवेऽपि स्यादत आह—अथवा केचिदनन्तरसूत्रार्द्धमधीयते— "कोसस्स वि य जो तत्थ, छब्भाओ उवरिमो भवे" त्ति । तत्र किम्? इत्याह—

तत्थ सिद्धा महाभागा, लोयग्गम्मि पइट्ठिया । भवप्पवंचउम्मुक्का, सिद्धिं वरगइं गया ॥ ६३ ॥

सिद्धजीव-वक्तव्यता ।

व्याख्या—तत्र सिद्धा महाभागा लोकाग्रे 'प्रतिष्ठिताः' सदाऽवस्थिताः, एतच्च कुतः ? इत्याह—भवप्रपञ्चोन्मुक्ताः सन्तः सिद्धिं वरगतिं गताः ॥ ६३ ॥ तदवगाहनामाह—

**उस्सेहो जस्स जो होइ, भवम्मि चरिमम्मि य। तिभागहीणा तत्तो य, सिद्धाणोगाहणा भवे ॥ ६४ ॥**

व्याख्या—स्पष्टम् ॥ ६४ ॥ एतानेव कालतः प्ररूपयितुमाह—

**एगत्तेण साईया, अपज्जवसिया वि य । पुहुत्तेण अणाईया, अपज्जवसिया वि य ॥ ६५ ॥**

व्याख्या—स्पष्टम् । नवरम्—'पृथक्त्वेन' बहुत्वेन सामस्त्येनेत्यर्थः ॥ ६५ ॥ एषामेव स्वरूपमाह—

**अरूविणो जीवघणा, णाणदंसणसण्णिया । अउलं सुहं संपत्ता, उवमा जस्स णत्थि उ ॥ ६६ ॥**

व्याख्या—स्पष्टम् । नवरम्—जीवाश्च ते घनाश्च-शुषिरपूरणतो निचिता जीवघनाः, ज्ञानदर्शने एव सञ्ज्ञा सञ्जाता येषां ते ज्ञानदर्शनसञ्ज्ञिताः, "सुहं" ति सुखम् ॥ ६६ ॥ उक्तग्रन्थेन गतमपि विप्रतिपत्तिनिराकरणार्थं पुनः क्षेत्रस्वरूपं च तेनामाह—

**लोएगदेसे ते सव्वे, णाणदंसणसन्निया । संसारपारनित्थिन्ना, सिद्धिं वरगइं गया ॥ ६७ ॥**

व्याख्या—स्पष्टम् । नवरम्—लोकैकदेशे ते सर्वे इत्यनेन सर्वत्र मुक्तास्तिष्ठन्तीति मतमपास्तम् । ज्ञानदर्शनसञ्ज्ञिता इत्यनेन केषाञ्चिन्मा भूत् ज्ञानसञ्ज्ञाऽपरेषां दर्शनसञ्ज्ञैव केवला, किन्तूभे अपि सर्वेषामिति । संसारपारं 'निस्तीर्णाः' अतिक्रान्ताः, अनेन तु—"ज्ञानिनो धर्मतीर्थस्य, कर्त्तारः परमं पदम् । गत्वाऽऽगच्छन्ति भूयोऽपि, भवं तीर्थनिकारतः ॥ १ ॥" इति मतं निराकृतम् । सिद्धिं वरगतिं गताः, अनेन तु क्षीणकर्मणोऽपि लोकाग्रगमनात् स्वभावेनैवोत्पत्तिसमये सक्रियत्वमप्यस्ति इति ख्याप्यते । वाचनान्तरे तु इदं सूत्रं नास्त्येव ॥ ६७ ॥ इत्थं सिद्धानभिधाय संसारिण आह—

संसारत्था उ जे जीवा, दुविहा ते वियाहिया । तसा य थावरा चेव, थावरा तिविहा तहिं ॥ ६८ ॥

व्याख्या—स्पष्टम् ॥ ६८ ॥ त्रैविध्यमेवाह—

पुढवी आउजीवा य, तहेव य वणस्सई । इच्चेए थावरा तिविहा, तेसिं भेए सुणेह मे ॥ ६९ ॥

व्याख्या—स्पष्टम् ॥ ६९ ॥ तत्र पृथिवीभेदानाह—

दुविहा पुढविजीवा उ, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेए दुहा पुणो ॥ ७० ॥
बायरा जे उ पज्जत्ता, दुविहा ते वियाहिया । सण्हा खरा य बोद्धव्वा, सण्हा सत्तविहा तहिं ॥ ७१ ॥
किण्हा नीला य रुहिरा य, हालिद्दा सुक्किला तहा । पंडुपणगमट्टिया, खरा छत्तीसईविहा ॥ ७२ ॥
पुढवी[1] य सक्करा[2] वालुया[3] य उवले[4] सिला[5] य लोणूसे[6,7] । अय[8]-तंउय[9]-तंब[10]-सीसग[11]-रुप्प[12]-सुवण्णे[13] य वयरे[14] य॥
हरियाले[15] हिंगुलुए[16] मणोसिला[17], सासगंजण[18,19]पवाले[20] । अब्भपडल[21]ऽब्भवालुय[22], बायरकाए मणिविहाणा॥
गोमिज्जए[23] य रुयगे[24], अंके[25] फलिहे य लोहियक्खे[26] य । मरगय-मसारगल्ले[27], भुयमोयग[28] इंदनीले[29] य ७५
चंदण गेरुय हंसगब्भे[30], पुलए[31] सोगंधिए[32] य बोद्धव्वे । चंदप्पभ[33] वेरुलिए[34], जलकंते[35] सूरकंते[36] य ॥७६॥

व्याख्या—स्पष्टम् । नवरम्—'श्लक्ष्णा' इह चूर्णितलोष्टकल्पा मृदुः पृथिवी तदात्मिका जीवा अप्युपचारतः श्लक्ष्णाः, एवमुत्तरत्राऽपि । 'खराः' कठिनाः ॥ सप्तविधत्वमेवाह—"किण्हे"त्यादि, "पंडु" त्ति 'पाण्डवः' आपाण्डुराः—आ—ईषत् शुभ्रत्वभाज इत्यर्थः, इत्थं वर्णभेदेन षड्विधत्वम् । इह च पाण्डुग्रहणं कृष्णादिवर्णानामपि स्वस्थानभेदान्तरसम्भवसूचकम् । पनकः—अत्यन्तसूक्ष्मरजोरूपः स एव मृत्तिका पनकमृत्तिका, पनकस्य च नभसि विवर्त्तमानस्य लोके पृथिवीत्वेनारूढत्वाद् भेदेनोपादानम् ॥ 'पृथिवी'ति शुद्धपृथिवी, 'शर्करा' लघूपलशकलरूपा, 'उपलः' गण्डशैलादिः, 'शिला च' वट्टा,

'करः' आरकुलिका, 'वज्रं च' हीरकः ॥ 'सासकः' धातुविशेषः, 'अञ्जनं' समीरकं, 'प्रवालं' विद्रुमः, 'अभ्रपटलं' प्रतीतम्, 'अभ्रवालुका' अभ्रपटलमिश्रा वालुका, 'बादरकाये' बादरपृथिवीकायेऽमी भेदा इति शेषः, "मणिविहाण" त्ति ... नानात्वाद् 'मणिविधानानि च' मणिभेदाः ॥ कानि पुनस्तानि? इत्याह—"गोमेज्जए"त्यादि, इह च पृथि- ... चतुर्दश हरितालादयोऽष्टौ गोमेजकादयश्च क्वचित् कस्यचित् कथञ्चिदन्तर्भावाच्चतुर्दशेति, अमी मीलिताः षट्त्रिंश- ... भवन्तीति सूत्रसमुदायार्थः ॥ ७०-७१-७२-७३-७४-७५-७६ ॥ प्रकृतोपसंहारपूर्वकं सूक्ष्मपृथिवीकायानाह—

एए खरपुढवीए, भेया छत्तीसमाहिया । एगविहमणाणत्ता, सुहुमा तत्थ वियाहिया ॥ ७७ ॥

व्याख्या—स्पष्टम् । नवरम्—"एगविहं" ति आर्षत्वाद् एकविधाः, किमित्येवंविधाः? यतः 'अनानात्वाः' ... 'भेदे'ति पृथिवीजीवेषु ॥ ७७ ॥ पृथिवीकायानेव क्षेत्रत आह—

सुहुमा य सव्वलोगम्मि, लोगदेसे य बायरा । इत्तो कालविभागं तु, तेसिं वुच्छं चउव्विहं ॥७८॥

व्याख्या—स्पष्टम् ॥ ७८ ॥ अधुना कालत आह—

संतइं पप्पऽणाईया, अपज्जवसिया वि य । ठिइं पडुच्च साईया, सपज्जवसिया वि य ॥ ७९ ॥
बावीससहस्साइं, वासाणुक्कोसिया भवे । आउठिई पुढवीणं, अंतोमुहुत्तं जहन्निया ॥ ८० ॥
असंखकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । कायठिई पुढवीणं, तं कायं तु अमुंचओ ॥ ८१ ॥

व्याख्या—स्पष्टम् । नवरम्—'स्थिति' भवस्थिति-कायस्थितिरूपाम् ॥ "तं कायं तु अमुंचउ" त्ति 'तं' पृथिवीरूपं कायममुञ्चतामेव ॥ ७९-८०-८१ ॥ कालान्तर्गतमेवान्तरमाह—

अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नगं । विजढम्मि सए काए, पुढवीजीवाण अंतरं ॥ ८२ ॥

व्याख्या—स्पष्टम् । नवरम्—"विजढम्मि" त्ति त्यक्ते स्वके काये ॥ ८२ ॥ एतानेव भावत आह—

एएसिं वन्नओ चेव, गंधओ रसफासओ । संठाणभेयओ वा वि, विहाणाइं सहस्ससो ॥ ८३ ॥

व्याख्या—स्पष्टम् । नवरम्—'विधानानि' भेदाः 'सहस्रशः' इति च बहुतरत्वोपलक्षणम् ॥ ८३ ॥ एवम्—

दुविहा आउजीवा उ, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेते दुहा पुणो ॥ ८४ ॥
बायरा जे उ पज्जत्ता, पंचहा ते पकित्तिया । सुद्धोदए य उस्से, हरतणु महिया हिमे ॥ ८५ ॥
एगविहमणाणत्ता, सुहुमा तत्थ वियाहिया । सुहुमा सवलोयम्मि, लोगदेसे य बायरा ॥ ८६ ॥
संतइं पप्पऽणाईया, अपज्जवसिया वि य । ठिइं पडुच्च साईया, सपज्जवसिया वि य ॥ ८७ ॥
सत्तेव सहस्साइं, वासाणुक्कोसिया भवे । आउठिई आऊणं, अंतोमुहुत्तं जहन्नयं ॥ ८८ ॥
असंखकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । कायठिई आऊणं, तं कायं तु अमुंचओ ॥ ८९ ॥
अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । विजढम्मि सए काए, आउजीवाण अंतरं ॥ ९० ॥
एएसिं वण्णओ चेव, गंधओ रसफासओ । संठाणभेयओ वा वि, विहाणाइं सहस्ससो ॥ ९१ ॥

व्याख्या—सूत्राष्टकमपि सुगमम् । नवरम्—'हरतनुः' स्निग्धपृथिवीसमुद्भवः तृणाग्रविन्दुः, 'महिका' गर्भमासेषु सूक्ष्मवर्षम्, 'हिमं' प्रतीतम् ॥ ८४-८५-८६-८७-८८-८९-९०-९१ ॥ वनस्पतिसूत्राण्यपि चतुर्दश—

दुविहा वणस्सईजीवा, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेते दुहा पुणो ॥ ९२ ॥
बायरा जे उ पज्जत्ता, दुविहा ते वियाहिया । साहारणसरीरा य, पत्तेगा य तहेव य ॥ ९३ ॥
पत्तेयसरीरा उ, णेगहा ते पकित्तिया । रुक्खा गुच्छा य गुम्मा य, लया वल्ली तणा तहा ॥ ९४ ॥

षट्त्रिंशं जीवाजीवविभक्तिनामकमध्ययनम् ।

संसारिजीववक्तव्यता ।

संसारिजीव-वक्तव्यता ।

वलया पव्वया कुहुणा, जलरुहा ओसही तहा । हरियकाया य बोद्धव्वा, पत्तेया इति आहिया ॥९५॥
साहारणसरीरा उ, णेगहा ते पकित्तिया । आलूए मूलए चेव, सिंगबेरे तहेव य ॥ ९६ ॥
हिरिली सिरिली सिस्सिरिली, जावई केतकंदली । पलंडु-लसणकंदे य, कंदली य कुहव्वए ॥ ९७ ॥
लोहिणीहू य थीहू य, कुहगा य तहेव य । कंदे य वज्जकंदे य, कंदे सूरणए तहा ॥ ९८ ॥
अस्सकन्नी य बोद्धव्वा, सीहकन्नी तहेव य । मुसुंढी य हलिद्दा य, णेगहा एवमायओ ॥ ९९ ॥
एगविहमणाणत्ता, सुहुमा तत्थ वियाहिया । सुहुमा सव्वलोगम्मि, लोगदेसे य बायरा ॥ १०० ॥
संतइं पप्पऽणाईया, अपज्जवसिया वि य । ठिइं पडुच्च साईया, सपज्जवसिया वि य ॥ १०१ ॥
दस चेव सहस्साइं, वासाणुक्कोसिया भवे । वणस्सईण आउं तु, अंतोमुहुत्तं जहन्नगं ॥ १०२ ॥
अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नगं । कायठिई पणगाणं, तं कायं तु अमुंचओ ॥ १०३ ॥
असंखकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । विजढम्मि सए काए, पणगजीवाण अंतरं ॥ १०४ ॥
एएसिं वण्णओ चेव, गंधओ रसफासओ । संठाणादेसओ वा वि, विहाणाइं सहस्ससो ॥ १०५ ॥

व्याख्या—स्पष्टान्येव । नवरम्—'वृक्षाः' चूतादयः, 'गुच्छाः' वृन्ताकीप्रभृतयः, 'गुल्माः' नवमालिकादयः, 'लताः' चम्पकलतादयः, 'वल्ल्यः' त्रपुष्यादयः, 'तृणानि' जुज्जुकार्जुनादीनि, "वलय" त्ति 'लतावलयानि' नालिकेरी-कदल्यादीनि, तेषां च शाखान्तराभावेन लतारूपता त्वचो वलयाकारत्वेन च वलयता, 'पर्वगाः' इक्ष्वादयः, 'कुहुणाः' भूमिस्फोटकादयः, 'जलरुहाः' पद्मादयः, 'ओषधयः' शाल्यादयः, 'तथे'ति समुच्चये, हरितान्येव काया येषां ते 'हरितकायाः' तण्डुलेयकादयः, चशब्दः स्वगतानेकभेदसंसूचकः ॥ आलुकादयः प्रायः कन्दविशेषाः ॥ 'पनकानां' पनको-

॥ ९२-९३-९४-९५-९६-९७-९८-९९-१००-१०१-१०२-१०३-१०४-१०५ ॥

पलक्षितानां सामान्यवनस्पतीनाम् ॥ ९२-९३-९४-९५-९६-९७-९८-९९-१००-१०१-१०२-१०३-१०४-१०५ ॥

प्रकृतमुपसंहरन्नुत्तरग्रन्थं सम्बन्धयितुमाह—

इच्चेए थावरा तिविहा, समासेण वियाहिया । इत्तो उ तसे तिविहे, वुच्छामि अणुपुव्वसो ॥ १०६ ॥

व्याख्या—स्पष्टम् ॥ १०६ ॥

तेऊ वाऊ य बोद्धव्वा, ओराला य तसा तहा । इच्चेए तसा तिविहा, तेसिं भेए सुणेह मे ॥१०७॥

व्याख्या—स्पष्टम् । नवरम्—'इत्येते' अनन्तरोक्ताः, त्रस्यन्ति—चलन्तीति त्रसाः तत्र तेजोवाय्वोर्गतित उदाराणां च द्वीन्द्रियादीनां लब्धितः त्रसत्वम् ॥ १०७ ॥ तत्र तेजोजीवानाह—

दुविहा तेउजीवा उ, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेए दुहा पुणो ॥ १०८ ॥

बायरा जे उ पज्जत्ता, णेगहा ते वियाहिया । इंगाले मुम्मुरे अगणी, अच्चिं जाला तहेव य ॥ १०९ ॥

उक्का विज्जू य बोधव्वा, णेगहा एवमायओ । एगविहमणाणत्ता, सुहुमा ते वियाहिया ॥ ११० ॥

सुहुमा सव्वलोगम्मि, एगदेसम्मि बायरा । इत्तो कालविभागं तु, तेसिं वुच्छं चउव्विहं ॥ १११ ॥

संतइं पप्पऽणाईया, अपज्जवसिया वि य । ठिइं पडुच्च सादीया, सपज्जवसिया वि य ॥ ११२ ॥

तिन्नेव अहोरत्ता, उक्कोसेण वियाहिया । आउठिई तेऊणं, अंतोमुहुत्तं जहन्नयं ॥ ११३ ॥

असंखकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । कायठिई तेऊणं, तं कायं तु अमुंचओ ॥ ११४ ॥

अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । विजढम्मि सए काए, तेउजीवाण अंतरं ॥ ११५ ॥

एएसिं वन्नओ चेव, गंधओ रसफासओ । संठाणादेसओ वा वि, विहाणाइं सहस्ससो ॥ ११६ ॥

व्याख्या—स्पष्टानि । नवरम्—'अङ्गारः' भास्वररूपः, 'मुर्मुरः' भस्मसिश्राग्निकणरूपः, 'अग्निः' उक्तभेदातिरिक्तः, 'अर्चिः' मूलाग्निविच्छिन्ना, 'ज्वाला' छिन्नमूला ॥ १०८-१०९-११०-१११-११२-११३-११४-११५-११६ ॥ वायु-

सूत्रनवकम्—

दुविहा वाउजीवा य, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेते दुहा पुणो ॥ ११७ ॥

बायरा जे उ पज्जत्ता, पंचहा ते पकित्तिया । उक्कलिया-मंडलिया-घण-गुंजा-सुद्धवाया य ॥ ११८ ॥

संवट्टगवाए य, णेगहा एवमायओ । एगविहमणाणत्ता, सुहुमा तत्थ वियाहिया ॥ ११९ ॥

सुहुमा सव्वलोगम्मि, लोगदेसे य बायरा । इत्तो कालविभागं तु, तेसिं वुच्छं चउव्विहं ॥ १२० ॥

संतइं पप्पऽणादीया, अपज्जवसिया वि य । ठिइं पडुच्च सादीया, सपज्जवसिया वि य ॥ १२१ ॥

तिण्णेव सहस्साइं, वासाणुक्कोसिया भवे । आउठिई वाऊणं, अंतोमुहुत्तं जहन्नयं ॥ १२२ ॥

असंखकालमुक्कोसं, अंतोमुहुत्तं जहन्नगं । कायठिई वाऊणं, तं कायं तु अमुंचओ ॥ १२३ ॥

अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नगं । विजढम्मि सए काए, वाउजीवाण अंतरं ॥ १२४ ॥

एएसिं वण्णओ चेव, गंधओ रसफासओ । संठाणादेसओ वा वि, विहाणाइं सहस्ससो ॥ १२५ ॥

व्याख्या—सुगमम् । नवरम्—'पञ्चधे'त्युपलक्षणम्, अत्रैवास्य अनेकधेत्यभिधानात्, उत्कलिकावाताः—ये स्थित्वा स्थित्वा वान्ति, मण्डलिकावाताः—वातोलीरूपाः, घनवाताः—रत्नप्रभाद्याधाराः, गुञ्जावाताः—ये गुञ्जन्तो वान्ति, शुद्धवाताः—उक्तविशेषविकला मन्दानिलादयः ॥ 'संवर्त्तकवाताश्च' ये बहिःस्थितमपि तृणादि विवक्षितक्षेत्रान्तः क्षिपन्ति ॥ ११७-११८-११९-१२०-१२१-१२२-१२३-१२४-१२५ ॥ उदारत्रसाभिधित्सयाऽऽह—

संसारिजीव-वक्तव्यता।

ओराला तसा जे उ, चउहा ते पकित्तिया । बेइंदिय तेइंदिय, चउरो पंचिंदिया चेव ॥ १२६ ॥

व्याख्या—स्पष्टम् ॥ १२६ ॥ द्वीन्द्रियानाह—

बेइंदिया उ जे जीवा, दुविहा ते पकित्तिया । पज्जत्तमपज्जत्ता, तेसिं भेदे सुणेह मे ॥ १२७ ॥
किमिणो सोमंगला चेव, अलसा माइवाहया । वासीमुहा य सिप्पीया, संखा संखगणा तहा ॥१२८॥
पल्लोयाणुल्लगा चेव, तहेव य वराडगा । जलूगा जालगा चेव, चंदणा य तहेव य ॥ १२९ ॥
इइ बेइंदिया एए, णेगहा एवमायओ । लोएगदेसे ते सव्वे, न सव्वत्थ वियाहिया ॥ १३० ॥
संतइं पप्पऽणाईया, अपज्जवसिया वि य । ठिइं पडुच्च साईया, सपज्जवसिया वि य ॥ १३१ ॥
वासाइं बारसेव उ, उक्कोसेण वियाहिया । बेइंदियआउठिई, अंतोमुहुत्तं जहन्नयं ॥ १३२ ॥
संखेज्जकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । बेइंदियकायठिई, तं कायं तु अमुंचओ ॥ १३३ ॥
अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । बेइंदियजीवाणं, अंतरेयं वियाहियं ॥ १३४ ॥
एएसिं वण्णओ चेव, गंधओ रसफासओ । संठाणाएसओ वा वि, विहाणाइं सहस्ससो ॥ १३५ ॥

व्याख्या—सूत्रनवकं स्पष्टम् । नवरम्—'कृमयः' अशुच्यादिसम्भवाः, शेषास्तु केचित् प्रकटाः केचिद् यथासम्प्रदायं वाच्याः ॥ १२७-१२८-१२९-१३०-१३१-१३२-१३३-१३४-१३५ ॥ त्रीन्द्रियानाह—

तेइंदिया उ जे जीवा, दुविहा ते पकित्तिया । पज्जत्तमपज्जत्ता, तेसिं भेदे सुणेह मे ॥ १३६ ॥
कुंथुपिवीलिउदंसा, उक्कलुदेहिया तहा । तणहारा कट्ठहारा य, मालूगा पत्तहारगा ॥ १३७ ॥
कप्पासऽट्ठिमिंजा य, तिंदुगा तउसमिंजगा । सदावरी य गुम्मी य, बोधव्वा इंदगाइया ॥ १३८ ॥

इंदगोवगमाईया, णेगहा एवमायओ। लोगेगदेसे ते सव्वे, न सव्वत्थ वियाहिया ॥ १३९ ॥

संतइं पप्पऽणाईया, अपज्जवसिया वि य। ठिइं पडुच्च साईया, सपज्जवसिया वि य ॥ १४० ॥

एगूणपण्णऽहोरत्ता, उक्कोसेण वियाहिया। तेइंदियआउठिई, अंतोमुहुत्तं जहन्नयं ॥ १४१ ॥

संखेज्जकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं। तेइंदियकायठिई, तं कायं तु अमुंचओ ॥ १४२ ॥

अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं। तेइंदियजीवाणं, अंतरेयं वियाहियं ॥ १४३ ॥

एएसिं वण्णओ चेव, गंधओ रसफासओ। संठाणाएसओ वा वि, विहाणाइं सहस्ससो ॥ १४४ ॥

व्याख्या—त्रीन्द्रियसूत्रनवकमपि स्पष्टम्। नवरम्—'गुम्मी' शतपदी ॥ १३६-१३७-१३८-१३९-१४०-१४१-१४२-१४३-१४४ ॥ चतुरिन्द्रियानाह—

चउरिंदिया उ जे जीवा, दुविहा ते पकित्तिया। पज्जत्तमपज्जत्ता, तेसिं भेए सुणेह मे ॥ १४५ ॥

अंधिया पोत्तिया चेव, मच्छिया मसगा तहा। भमरे कीडपयंगे य, ढिंकुणे कुंकुणे तहा ॥ १४६ ॥

कुक्कुडे भिंगिरीडी य, नंदावत्ते य विंछिए। डोले भिंगिरीडी य, विरिली अच्छिवेहए ॥ १४७ ॥

अच्छिले माहए अच्छि-विचित्ते चित्तपत्तए। ओहिंजलिया जलकारी य, नीया तंबगाइया ॥ १४८ ॥

इइ चउरिंदिया एए, णेगहा एवमायओ। लोगस्स एगदेसम्मि, ते सव्वे पकित्तिया ॥ १४९ ॥

संतइं पप्पऽणाईया, अपज्जवसिया वि य। ठिइं पडुच्च साईया, सपज्जवसिया वि य ॥ १५० ॥

छच्चेव य मासा उ, उक्कोसेण वियाहिया। चउरिंदियआउठिई, अंतोमुहुत्तं जहन्निया ॥ १५१ ॥

संखेज्जकालमुक्कोसं, अंतोमुहुत्तं जहन्निया। चउरिंदियकायठिई, तं कायं तु अमुंचओ ॥ १५२ ॥

संसारिजीव-वक्तव्यता।

अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । विजढम्मि सए काए, अंतरेयं वियाहियं ॥ १५३ ॥
एएसिं वन्नओ चेव, गंधओ रसफासओ । संठाणादेसओ वा वि, विहाणाइं सहस्ससो ॥ १५४ ॥

व्याख्या—सूत्रदशकमपि स्पष्टम् ॥ १४५-१४६-१४७-१४८-१४९-१५०-१५१-१५२-१५३-१५४ ॥

पञ्चेन्द्रियानाह—

पंचिंदिया उ जे जीवा, चउव्विहा ते वियाहिया । णेरइय तिरिक्खा य, मणुया देवा य आहिया १५५

व्याख्या—स्पष्टम् ॥ १५५ ॥ तत्र तावन्नैरयिकानाह—

नेरइया सत्तविहा, पुढवीसू सत्तसू भवे । रयणाभ सक्कराभा, वालुयाभा य, आहिया ॥ १५६ ॥
पंकाभा धूमाभा, तमा तमतमा तहा । इइ नेरइया एए, सत्तहा परिकित्तिया ॥ १५७ ॥
लोगस्स एगदेसम्मि, ते सव्वे उ वियाहिया । इत्तो कालविभागं तु, तेसिं वुच्छं चउव्विहं ॥१५८॥
संतइं पप्पऽणाईया, अपज्जवसिया वि य । ठिइं पडुच्च साईया, सपज्जवसिया वि य ॥ १५९ ॥
सागरोवममेगं तु, उक्कोसेण वियाहिया । पढमाइ जहन्नेणं, दसवाससहस्सिया ॥ १६० ॥
तिन्नेव सागराऊ, उक्कोसेण वियाहिया । दुचाए जहन्नेणं, एगं तू सागरोवमं ॥ १६१ ॥
सत्तेव सागराऊ, उक्कोसेण वियाहिया । तइयाए जहन्नेणं, तिन्नेव उ सागरोवमा ॥ १६२ ॥
दससागरोवमाऊ, उक्कोसेण वियाहिया । चउत्थीए जहन्नेणं, सत्तेव उ सागरोवमा ॥ १६३ ॥
सत्तरससागराऊ, उक्कोसेण वियाहिया । पंचमाए जहन्नेणं, दस चेव उ सागरा ॥ १६४ ॥
बावीससागराऊ, उक्कोसेण वियाहिया । छट्ठीइ जहन्नेणं, सत्तरस सागरोवमा ॥ १६५ ॥
तित्तीससागराऊ, उक्कोसेण वियाहिया । सत्तमाए जहन्नेणं, बावीसं सागरोवमा ॥ १६६ ॥

संसारिजीव-वक्तव्यता।

जा चेव आउठिई, नेरइयाणं वियाहिया । सा तेसिं कायठिई, जहन्नुक्कोसिया भवे ॥१६७॥
अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । विजढम्मि सए काए, नेरइयाणं तु अंतरं ॥१६८॥
एएसिं वण्णओ चेव, गंधओ रसफासओ । संठाणभेदओ वा वि, विहाणाइं सहस्ससो ॥१६९॥

व्याख्या—नारकसूत्राणि चतुर्दश प्रकटानि ॥ १५६-१५७-१५८-१५९-१६०-१६१-१६२-१६३-१६४-१६५-१६६-१६७-१६८-१६९ ॥ तिर्यक्पञ्चेन्द्रियानाह—

पंचिंदियतिरिक्खा उ, दुविहा ते वियाहिया । सम्मुच्छिमतिरिक्खा उ, गब्भवक्कंतिया तहा ॥१७०॥
दुविहा वि ते भवे तिविहा, जलयरा थलयरा तहा । खहयरा य बोद्धव्वा, तेसिं भेए सुणेह मे ॥१७१॥
मच्छा य कच्छभा य, गाहा य मगरा तहा । सुंसुमारा य बोद्धव्वा, पंचहा जलयराऽऽहिया ॥१७२॥
लोएगदेसे ते सव्वे, न सव्वत्थ वियाहिया । इत्तो कालविभागं तु, तेसिं वुच्छं चउव्विहं ॥१७३॥
संतइं पप्पऽणाईया, अपज्जवसिया वि य । ठिइं पडुच्च साईया, सपज्जवसिया वि य ॥१७४॥
एगा य पुव्वकोडी उ, उक्कोसेण वियाहिया । आउठिई जलयराणं, अंतोमुहुत्तं जहन्निया ॥१७५॥
पुव्वकोडीपुहुत्तं तु, उक्कोसेण वियाहिया । कायठिई जलयराणं, अंतोमुहुत्तं जहन्निया ॥१७६॥
अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । विजढम्मि सए काए, जलयराणं तु अंतरं ॥१७७॥
एएसिं वण्णओ चेव, गंधओ रसफासओ । संठाणाएसओ वा वि, विहाणाइं सहस्ससो ॥१७८॥
चउप्पया य परिसप्पा, दुविहा थलयरा भवे । चउप्पया चउविहा उ, ते मे कित्तयओ सुण ॥१७९॥
एगखुरा दुखुरा चेव, गंडीपय सणप्पया । हयमाई गोणमाई, गयमाई सीहमाइणो ॥१८०॥

भुओरगपरिसप्पा य, परिसप्पा दुविहा भवे । गोहाई अहिमाई य, इक्केक्का णेगहा भवे ॥१८१॥
लोएगदेसे ते सव्वे, न सव्वत्थ वियाहिया । एत्तो कालविभागं तु, तेसिं वोच्छं तु चउविहं ॥१८२॥
संतइं पप्पऽणाईया, अपज्जवसिया वि य । ठिइं पडुच्च साईया, सपज्जवसिया वि य ॥१८३॥
पलिओवमा उ तिन्नि उ, उक्कोसेण वियाहिया । आउठिई थलयराणं, अंतोमुहुत्तं जहन्नयं ॥१८४॥
पलिओवमा उ तिन्नि उ, उक्कोसेण वियाहिया । पुव्वकोडीपुहुत्तं तु, अंतोमुहुत्तं जहन्नयं ॥१८५॥
कायठिई थलयराणं, अंतरं तेसिमं भवे । कालं अणंतमुक्कोसं, अंतोमुहुत्तं जहन्नयं ॥१८६॥
एएसिं वन्नओ चेव, गंधओ रसफासओ । संठाणादेसओ वा वि, विहाणाइं सहस्ससो ॥१८७॥
विजढम्मि सए काए, थलयराणं तु अंतरं । चम्मे उ लोमपक्खीया, तइया समुग्गपक्खीया ॥१८८॥
विययपक्खी य बोद्धव्वा, पक्खिणो उ चउव्विहा । लोएगदेसे ते सव्वे, न सव्वत्थ वियाहिया ॥१८९॥
संतइं पप्पऽणाईया, अपज्जवसिया वि य । ठिइं पडुच्च साईया, सपज्जवसिया वि य ॥१९०॥
पलिओवमस्स भागो, असंखिज्जइमो भवे । आउठिई खहयराणं, अंतोमुहुत्तं जहन्निया ॥१९१॥
असंखभागो पलियस्स, उक्कोसेण उ साहिओ । पुव्वकोडीपुहुत्तेणं, अंतोमुहुत्तं जहन्निया ॥१९२॥
कायठिई खहयराणं, अंतरं तेसिमं भवे । कालं अणंतमुक्कोसं, अंतोमुहुत्तं जहन्नयं ॥१९३॥
एएसिं वण्णओ चेव, गंधओ रसफासओ । संठाणादेसओ वा वि, विहाणाइं सहस्ससो ॥१९४॥

व्याख्या—प्रकटान्येव । नवरम्—'एकखुराः' हयादयः, 'द्विखुराः' गवादयः, गण्डी—पद्मोत्पद्मिका तद्वद् वृत्ततया पदानि येषां ते 'गण्डीपदाः' गजादयः, "सणप्पय" त्ति सूत्रत्वात् 'सनखपदाः' सिंहादयः, "चम्मे" त्ति प्रक्रमात्


॥३८५॥

चर्मपक्षिणः, 'रोमपक्षिणः' हंसादयः, 'समुद्गपक्षिणः' समुद्गकाकारपक्षवन्तः ते च मानुषोत्तराद् बहिर्भवन्ति, 'वितत-पक्षिणः' ये सर्वदा विस्तारिताभ्यां पक्षाभ्यामासते ॥ १७०-१७१-१७२-१७३-१७४-१७५-१७६-१७७-१७८-१७९-१८०-१८१-१८२-१८३-१८४-१८५-१८६-१८७-१८८-१८९-१९०-१९१-१९२-१९३-१९४ ॥ मनुष्यानाह—

संसारिजीव-वक्तव्यता ।

मणुया दुविहभेया उ, ते मे कित्तयओ सुण। सम्मुच्छिमा य मणुया, गब्भवक्कंतिया तहा ॥१९५॥
गब्भवक्कंतिया जे उ, तिविहा ते वियाहिया। अकम्म-कम्मभूमा य, अंतरद्दीवया तहा ॥१९६॥
पण्णरस-तीसइविहा, भेया अट्ठवीसई। संखा उ कमसो तेसिं, इति एसा वियाहिया ॥१९७॥
सम्मुच्छिमाण एसेव, भेओ होइ आहिओ। लोगस्स एगदेसम्मि, ते सव्वे वियाहिया ॥१९८॥
संतइं पप्पऽणाईया, अपज्जवसिया वि य। ठिइं पडुच्च साईया, सपज्जवसिया वि य ॥१९९॥
पलिओवमाइं तिन्नि उ, उक्कोसेण वियाहिया। आउठिई मणुयाणं, अंतोमुहुत्तं जहन्निया ॥२००॥
पलिओवमाइं तिन्नि उ, उक्कोसेण वियाहिया। पुव्वकोडिपुहुत्तेणं, अंतोमुहुत्तं जहन्निया ॥२०१॥
कायठिई मणुयाणं, अंतरं तेसिमं भवे। अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नगं ॥२०२॥
एएसिं वण्णओ चेव, गंधओ रसफासओ। संठाणभेदओ वा वि, विहाणाइं सहस्ससो ॥२०३॥

व्याख्या—स्पष्टम्। नवरम्—"अकम्म-कम्मभूमा य" त्ति भूमशब्दस्य प्रत्येकमभिसम्बन्धाद् अकर्मभूमाः कर्मभूमाश्च, इह च क्रमस्य उत्क्रमणेऽपि पश्चान्निर्दिष्टानामपि कर्मभूमानां मुक्तिसाधकत्वेन प्राधान्यतः प्रथमं भेदाभिधानम्, पठन्ति च—"तीसइपन्नरसविहा" त्ति। "अंतरदीवय" त्ति भेदा अष्टाविंशतिरन्तरद्वीपजानामिति विभक्तिविपरिणामेन सम्बन्धनीयम्, अष्टाविंशतिसङ्ख्यात्वं चैषामेतत्सङ्ख्यत्वादन्तरद्वीपानां, ते हि हिमवतः पूर्वापरप्रान्तविदिक्प्रसृतकोटिषु

प्रथमेऽन्तरद्वीपाः, ततोऽप्येकैकयोजनशत-
त्रीणि त्रीणि योजनशतान्यवगाह्य तावन्त्येव योजनशतानि आयामविस्ताराभ्यां प्रथमेऽन्तरद्वीपाः, ततोऽप्येकैकयोजनशत-
वृद्ध्याऽवगाहनया योजनशतचतुष्टयाद्यायामविस्तारा द्वितीयादयः षट्, एषां च पूर्वोत्तरादिक्रमात् प्रादक्षिण्यतः प्रथमस्य
चतुष्कस्य एकोरुक आभाषको लाङ्गूलिको वैषाणिक इति नाम । द्वितीयस्य हयकर्णो गजकर्णो गोकर्णः शष्कुलीकर्णः ।
तृतीयस्य आदर्शमुखो मेषमुखो हयमुखो गजमुखः । चतुर्थस्य अश्वमुखो हस्तिमुखः सिंहमुखो व्याघ्रमुखः । पञ्चमस्य
अश्वकर्णः सिंहकर्णः गजकर्णः कर्णप्रावरणः । षष्ठस्य उल्कामुखो विद्युन्मुखो जिह्वामुखो मेघमुखः । सप्तमस्य घनदन्तो
गूढदन्तः श्रेष्ठदन्तः शुद्धदन्त इति, एतन्नामान एव चैतेषु युगलधार्मिकाः प्रतिवसन्ति, तच्छरीरमानाद्यभिधायि चेदं
गाथायुगलम्—"अंतरदीवेसु णरा, धणुसयअट्ठूसिया सया मुइया । पालंति मिहुणभावं, पल्लस्स असंखभागाऊ ॥१॥
चउसट्ठी पिट्ठकरंडयाण मणुयाण तेसिमाहारो । भत्तस्स चउत्थस्स अउणसीइदिणाण पालणया ॥ २ ॥" एते च शिख-
रिणोऽपि पूर्वाऽपरप्रान्तविदिक्प्रसृतकोटिषु उक्तन्यायतोऽष्टाविंशतिः सन्ति । सर्वसाम्याच्चैषां भेदेनाऽविवक्षितत्वान्न सूत्रेऽ-
ष्टाविंशतिसङ्ख्याविरोध इति भावनीयम् ॥ सम्मूर्च्छिमानामेष एव भेदो यो गर्भजानां, ते हि तेषामेव वान्तपित्तादिषु
सम्भवन्ति ॥ कायस्थितिश्च पल्योपमानि त्रीणि पूर्वकोटिपृथक्त्वेनाऽधिकानीति शेषः ॥ १९५-१९६-१९७-१९८-१९९-
२००-२०१-२०२-२०३ ॥ देवाधिकारः—

**देवा चउव्विहा वुत्ता, ते मे कित्तयओ सुण । भोमिज्ज वाणमंतर, जोइस वेमाणिया तहा ॥२०४॥**
**दसहा भवणवासी, अट्ठहा वणचारिणो । पंचविहा जोइसिया, दुविहा वेमाणिया तहा ॥२०५॥**

१ "अन्तर्द्वीपेषु नरा धनुःशताष्टोच्छ्रिताः सदा मुदिताः । पालयन्ति मिथुनभावं, पल्यस्यासङ्ख्यभागायुषः ॥ १ ॥ चतुःषष्टिः पृष्ठकरण्डकानां मनुजानां तेषामाहारः । भक्तेन चतुर्थेन एकोनाशीतिदिनानि पालनता ॥ २ ॥"

असुरा नाग सुवन्ना, विज्जू अग्गी य आहिया। दीवोदही दिसा वाया, थणिया भवणवासिणो ॥
पिसाय भूया जक्खा य, रक्खसा किन्नरा य किंपुरिसा। महोरगा य गंधव्वा, अट्ठविहा वाणमंतरा ॥
चंदा सूरा य नक्खत्ता, गहा तारागणा तहा। दिसाविचारिणो चेव, पंचहा जोइसालया ॥२०८॥
वेमाणिया उ जे देवा, दुविहा ते पकित्तिया। कप्पोवगा य बोद्धव्वा, कप्पाईया तहेव य ॥२०९॥
कप्पोवगा य बारसहा, सोहम्मीसाणगा तहा। सणंकुमारमाहिंदा, बंभलोगा य लंतगा ॥२१०॥
महासुक्का सहस्सारा, आणया पाणया तहा। आरणा अच्चुया चेव, इति कप्पोवगा सुरा ॥२११॥
कप्पातीता उ जे देवा, दुविहा ते वियाहिया। गेविज्जाऽणुत्तरा चेव, गेवेज्जा नवहा तहिं ॥२१२॥
हिट्ठिमा हिट्ठिमा चेव, हिट्ठिमा मज्झिमा तहा। हिट्ठिमा उवरिमा चेव, मज्झिमा हिट्ठिमा तहा ॥
मज्झिमा मज्झिमा चेव, मज्झिमा उवरिमा तहा। उवरिमा हिट्ठिमा चेव, उवरिमा मज्झिमा तहा ॥
उवरिमा उवरिमा चेव, इइ गेविज्जगा सुरा। विजया वेजयंता य, जयंता अपराजिया ॥२१५॥
सव्वट्ठसिद्धगा चेव, पंचहाणुत्तरा सुरा। इइ वेमाणिया एए, णेगहा एवमायओ ॥२१६॥
लोगस्स एगदेसम्मि, ते सव्वे परिकित्तिया। इत्तो कालविभागं तु, तेसिं वोच्छं चउव्विहं ॥२१७॥
संतइं पप्पऽणाईया, अपज्जवसिया वि य। ठिइं पडुच्च साईया, सपज्जवसिया वि य ॥२१८॥
साहियं सागरं इक्कं, उक्कोसेणं ठिई भवे। भोमिज्जाण जहन्नेणं, दसवाससहस्सिया ॥२१९॥
पलिओवमं तु एगं, उक्कोसेणं ठिई भवे। वंतराणं जहन्नेणं, दसवाससहस्सिया ॥२२०॥
पलिओवमं तु एगं, वासलक्खेण साहियं। पलिओवमऽट्ठभागो, जोइसेसु जहन्निया ॥२२१॥

संसारिजीव-वक्तव्यता।

संसारिजीववक्तव्यता।

दो चेव सागराइं, उक्कोसेण वियाहिया। सोहम्मम्मि जहन्नेणं, एगं तु पलिओवमं ॥ २२२ ॥
सागरा साहिया दुन्नि, उक्कोसेण वियाहिया। ईसाणम्मि जहन्नेणं, साहियं पलिओवमं ॥ २२३ ॥
सागराणि य सत्तेव, उक्कोसेणं ठिई भवे। सणंकुमारे जहन्नेणं, दुन्नि ऊ सागरोवमा ॥ २२४ ॥
साहिया सागरा सत्त, उक्कोसेणं ठिई भवे। माहिंदम्मि जहन्नेणं, साहिया दोन्नि सागरा ॥ २२५ ॥
दस चेव सागराइं, उक्कोसेणं ठिई भवे। बंभलोए जहन्नेणं, सत्त ऊ सागरोवमा ॥ २२६ ॥
चउद्दस उ सागराइं, उक्कोसेणं ठिई भवे। लंतगम्मि जहन्नेणं, दस ऊ सागरोवमा ॥ २२७ ॥
सत्तरस सागराइं, उक्कोसेणं ठिई भवे। महासुक्के जहन्नेणं, चउद्दस सागरोवमा ॥ २२८ ॥
अट्ठारस सागराइं, उक्कोसेणं ठिई भवे। सहस्सारे जहन्नेणं, सत्तरस सागरोवमा ॥ २२९ ॥
सागरा अउणवीसं तु, उक्कोसेणं ठिई भवे। आणयम्मि जहन्नेणं, अट्ठारस सागरोवमा ॥ २३० ॥
वीसं तु सागराइं, उक्कोसेणं ठिई भवे। पाणयम्मि जहन्नेणं, सागरा अउणवीसई ॥ २३१ ॥
सागरा एक्कवीसं तु, उक्कोसेणं ठिई भवे। आरणम्मि जहन्नेणं, वीसई सागरोवमा ॥ २३२ ॥
बावीस सागराइं, उक्कोसेणं ठिई भवे। अच्चुयम्मि जहन्नेणं, सागरा इक्कवीसई ॥ २३३ ॥
[illegible] सागराइं, उक्कोसेणं ठिई भवे। पढमम्मि जहन्नेणं, बावीसं सागरोवमा ॥ २३४ ॥
[illegible] गराइं, उक्कोसेणं ठिई भवे। बीयम्मि जहन्नेणं, तेवीसं सागरोवमा ॥ २३५ ॥
[illegible] सागराइं, उक्कोसेणं ठिई भवे। तइयम्मि जहन्नेणं, चउवीसं सागरोवमा ॥ २३६ ॥
[illegible] सागराइं, उक्कोसेणं ठिई भवे। चउत्थम्मि जहन्नेणं, सागरा पणवीसई ॥ २३७ ॥


॥३८७॥

संसारिजीव-वक्तव्यता ।

सागरा सत्तवीसं तु, उक्कोसेणं ठिई भवे । पंचमम्मि जहन्नेणं, सागरा उ छवीसई ॥ २३८ ॥
सागरा अट्ठवीसं तु, उक्कोसेणं ठिई भवे । छट्ठम्मि जहन्नेणं, सागरा सत्तवीसई ॥ २३९ ॥
सागरा इगुणतीसं तु, उक्कोसेणं ठिई भवे । सत्तमम्मि जहन्नेणं, सागरा अट्ठवीसई ॥ २४० ॥
तीसं तु सागराइं, उक्कोसेणं ठिई भवे । अट्ठमम्मि जहन्नेणं, सागराइं उणतीसई ॥ २४१ ॥
सागरा इक्कतीसं तु, उक्कोसेणं ठिई भवे । नवमम्मि जहन्नेणं, तीसई सागरोवमा ॥ २४२ ॥
तित्तीस सागराइं, उक्कोसेणं ठिई भवे । चउसुं पि विजयाईसुं, जहन्ना एक्कतीसई ॥ २४३ ॥
अजहन्नमणुक्कोसं, तित्तीसं सागरोवमा । महाविमाणसव्वट्ठे, ठिई एसा वियाहिया ॥ २४४ ॥
जा चेव य आउठिई, देवाणं तु वियाहिया । सा तेसिं कायठिई, जहन्नमुक्कोसिया भवे ॥ २४५ ॥
अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । विजढम्मि सए काए, देवाणं हुज्ज अंतरं ॥ २४६ ॥
एएसिं वण्णओ चेव, गंधओ रसफासओ । संठाणादेसओ चेव, विहाणाइं सहस्ससो ॥ २४७ ॥

व्याख्या—सूत्राणि द्वि(चतुः)चत्वारिंशत् प्रकटानि ॥ २०४-२०५-२०६-२०७-२०८-२०९-२१०-२११-२१२-२१३-२१४-२१५-२१६-२१७-२१८-२१९-२२०-२२१-२२२-२२३-२२४-२२५-२२६-२२७-२२८-२२९-२३०-२३१-२३२-२३३-२३४-२३५-२३६-२३७-२३८-२३९-२४०-२४१-२४२-२४३-२४४-२४५-२४६-२४७ ॥ सम्प्रति निगमनमाह—

संसारत्था य सिद्धा य, इति जीवा वियाहिया । रूविणो चेवऽरूवी य, अजीवा दुविहा वि य ॥२४८॥

व्याख्या—स्पष्टम् ॥ २४८ ॥ सम्प्रति कश्चिज्जीवाऽजीवविभक्तेः श्रवणश्रद्धानमात्रेणैव कृतार्थतां मन्येत अतस्तदाशङ्काऽपनोदार्थमाह—

इति जीवमजीवे य, सोच्चा सद्दहिऊण य । सव्वनयाण अणुमए, रमेज्जा संजमे मुणी ॥ २४९ ॥

व्याख्या—स्पष्टम् ॥ २४९ ॥ संयमरतिकरणानन्तरं यद्विधेयं तदाह—

तओ बहूणि वासाइं, सामन्नमणुपालिया । इमेण कमजोएण, अप्पाणं संलिहे मुणी ॥ २५० ॥

व्याख्या—स्पष्टम् । नवरम्—क्रमेण योगः—तपोऽनुष्ठानरूपो व्यापारः क्रमयोगस्तेन ॥२५०॥ क्रमयोगमेवाह—

बारसेव उ वासाइं, संलेहुक्कोसिया भवे । संवच्छरं मज्झिमया, छम्मासा य जहन्निया ॥ २५१ ॥
पढमे वासचउक्कम्मि, विगईनिज्जूहणं करे । बिइए वासचउक्कम्मि, विचित्तं तु तवं चरे ॥ २५२ ॥
एगंतरमायामं, कट्टु संवच्छरे दुवे । तओ संवच्छरऽद्धं तु, नाइविगिट्ठं तवं चरे ॥ २५३ ॥
तओ संवच्छरऽद्धं तु, विगिट्ठं तु तवं चरे । परिमियं चेव आयामं, तम्मि संवच्छरे करे ॥ २५४ ॥
कोडीसहियमायामं, कट्टु संवच्छरे मुणी । मासद्ध-मासिएणं तु, आहारेणं तवं चरे ॥ २५५ ॥

व्याख्या—द्वादशैव 'तुः' पूरणे वर्षाणि 'संलेखना' द्रव्यतः शरीरस्य भावतः कषायाणां कृशतापादनमुत्कृष्टा भवति, संवत्सरं मध्यमा, षण्मासान् जघन्यिका ॥ उत्कृष्टायाः क्रमयोगमाह—प्रथमे वर्षचतुष्के 'विकृतिनिर्यूहणं' विकृतित्यागं कुर्यात्, इदं च विचित्रतपसः पारणके, यदाह निशीथचूर्णिकारः—"[1]अन्ने चत्तारि वरिसे विचित्तं तु तवं काउं आयंबिलेण निव्वीएण वा पारेइ" त्ति । केवलमनेन निर्युक्तिकृता च द्वितीये वर्षचतुष्क इदमुक्तम् । अत्र च प्रथमे

१ "अन्यानि चत्वारि वर्षाणि विचित्रं तु तपः कृत्वा आचाम्लेन निर्विकृतिकेन वा पारयति" इति ।

इत्यत्र त्वुभयथाऽपि करणमनुमतं मन्यामहे । द्वितीये वर्षचतुष्के ''विचित्तं तु'' विचित्रमेव चतुर्थषष्ठाऽष्टमादिरूपं तपश्चरेत्, अत्र च पारणके सम्प्रदायः—''उग्गमविसुद्धं सव्वं कप्पणिज्जं पारेइ'' त्ति ॥ एकेन—चतुर्थलक्षणेन तपसा अनन्तरं—अव्यवधानं तस्मिन् तदेकान्तरं 'आयामम्' आचाम्लं कृत्वा संवत्सरौ द्वौ, ततः संवत्सरार्द्धं 'तुः' पूरणे 'न' नैव 'अतिविकृष्टम्' अष्टमादि तपश्चरेत्॥ ततः संवत्सरार्द्धं 'तुः' पुनरर्थे ''विगिट्ठं तु'' विकृष्टमेव तपश्चरेत्, अत्रैव विशेषमाह—''परिमितं चेव'' त्ति 'चः' पूरणे, 'परिमितमेव' स्वल्पमेव, द्वादशे हि वर्षे निरन्तरम् आयामम् इह तु चतुर्थादिपारणके एवं द्वितीयमुक्तम्, 'तस्मिन्' द्विधा विभक्ते संवत्सरे कुर्यात् ॥ कोट्यौ—अग्रे सहिते—मिलिते यस्मिन् तत्कोटीसहितम् आयामं कृत्वा 'संवत्सरे' प्रक्रमाद् द्वादशे मुनिः ''मास'' त्ति सूत्रत्वान्मासं भूतो मासिकस्तेन एवमर्द्धमासिकेन ''आहारेण'' त्ति उपलक्षणत्वाद् आहारत्यागेन 'तपः' इति प्रस्तावाद् भक्तपरिज्ञादिकमनशनं चरेत् ॥ निशीथचूर्णिसम्प्रदायश्चात्र—''एत्थ बारसस्स वासस्स पच्छिमा जे चत्तारि मासा तेसु तेल्लगंडूसं निसट्ठं धरेउ खेल्लमल्लए निच्छुभइ, मा अइरुक्खत्तणओ मुहजंतविसंवाओ भविस्सइ त्ति, तस्स य विसंवाए नो सम्मं नमोक्कारमाराहेइ'' इति सूत्रपञ्चकार्थः ॥ २५१-२५२-२५३-२५४-२५५ ॥ इत्थं प्रतिपन्नाऽनशनस्याऽप्यशुभभावनानां मिथ्यादर्शनानुरागादीनां चानर्थहेतुतां सद्विपर्ययाणां चार्थहेतुतामाह—

**कंदप्पमाभिओगं, किब्बिसियं मोहमासुरत्तं च। एआओ दुग्गईओ, मरणम्मि विराहिया हुंति॥२५६॥**

**मिच्छादंसणरत्ता, सनियाणा हु हिंसगा। इय जे मरंति जीवा, तेसिं पुण दुल्लहा बोही॥२५७॥**

---

1 ''उद्गमविशुद्धं सर्वं कल्पनीयं पारयति'' इति। 2 ''अत्र द्वादशस्य वर्षस्य पश्चिमा ये चत्वारो मासास्तेषु तैलगण्डूषं निसृष्टं धृत्वा श्लेष्ममल्लके निक्षिपति, माऽतिरूक्षत्वात् मुखयन्त्रविसंवादो भूदिति, तस्य च विसंवादे न सम्यग् नमस्कारमाराधयति''।

सम्मदंसणरत्ता, अणियाणा सुक्कलेसमोगाढा। इय जे मरंति जीवा, सुलहा तेसिं भवे बोही ॥२५८॥
मिच्छादंसणरत्ता, सनियाणा कण्हलेसमोगाढा। इय जे मरंति जीवा,तेसिं पुण दुलहा बोही॥२५९॥

व्याख्या—"कंदप्प" त्ति उपलक्षणत्वात् कन्दर्पभावना, एवमाभियोग्यभावना, किल्बिषिकभावना, मोहभावना, आसुरत्वभावना च, एता भावना दुर्गतिहेतुतया दुर्गतयः, एतद्विधातॄणां तद्विधसुरेष्वेवोत्पादात्, 'मरणे' मरणसमये कीदृश्यः सत्यः ? इत्याह—विराधिकाः सम्यग्दर्शनादीनामिति गम्यते । मरण इत्यभिधानं चेह पूर्वमेतत्सत्तायामप्युत्तरकालं शुभभावभावे सुगतेरपि सम्भवात्, शेषं सुगमम् ॥ इह चाऽऽद्येन सूत्रेण कन्दर्पभावनादीनां दुर्गतिरूपाऽनर्थस्य हेतुत्वमुक्तम्, अर्थाच्च तद्विपरीतभावनानां सुगतिस्वरूपार्थस्य, द्वितीयेन मिथ्यादर्शनरक्तत्वादीनां दुर्लभबोधिलक्षणाऽनर्थस्य, तृतीयेन सम्यग्दर्शनरक्तत्वादीनां सुलभबोध्यात्मकार्थस्य, चतुर्थेन तूक्तनीत्या मिथ्यादर्शनरक्तत्वादीनामेव विशेषज्ञापनमिति सूत्रचतुष्टयार्थः ॥ २५६-२५७-२५८-२५९ ॥ जिनवचनाराधनामूलमेव सकलं संलेखनादि श्रेयः, अतस्तत्रैवाऽऽदरख्यापनार्थमन्वयव्यतिरेकाभ्यां तन्माहात्म्यमाह—

जिणवयणे अणुरत्ता, जिणवयणं जे करिंति भावेण। अमला असंकिलिट्ठा, ते हुंति परित्तसंसारा[1]॥
बालमरणाणि बहुसो, अकाममरणाणि चेव य बहूणि। मरिहंति ते वराया,जिणवयणं जे न याणंति॥

व्याख्या—स्पष्टम् । नवरम्—'अमलाः' श्रद्धानादिमालिन्यहेतुमिथ्यात्वादिभावमलरहिताः, तथा 'असङ्क्लिष्टाः' रागादिसङ्क्लेशमुक्ताः ॥ 'बालमरणैः' उद्बन्धनादिनिबन्धनैः 'अकाममरणैश्च' अनिच्छामरणैः बहुभिः, सर्वत्र सुब्व्यत्ययः

१ परीतः—समस्तदेवादिभवाऽऽदपताऽऽपादनेन समन्तात् परिमितः संसारो विद्यते येषां ते परीतसंसारिणः कतिपयभवाऽभ्यन्तरमुक्तिभाज इत्यर्थः ।

संसारिजीव-वक्तव्यता।

प्राकृतत्वात्, 'एत च' पूरणे ॥१६०-१६१॥ यतश्चैवमतो जिनवचनं भावतः कर्त्तव्यम्, तद्भावकरणं च आलोचनया,
सा च तच्छ्रवणार्हाणां देया, ते च यैर्हेतुभिर्भवन्ति तानाह—

**बहुआगमविन्नाणा, समाहिउप्पायगा य गुणगाही। एएण कारणेणं, अरिहा आलोयणं सोउं ॥२६२॥**

व्याख्या—बहुः-सूत्रतोऽर्थतश्च स चासौ आगमश्च बह्वागमस्तस्मिन् विशिष्टं ज्ञानं येषां ते बह्वागमविज्ञानाः, "समाहि" त्ति समाधेः उत्पादकाः, किमुक्तं भवति ?—देशकालाशयादिविज्ञतया समाधिमेव मधुरभणित्यादिभिरालो-चनादातॄणामुत्पादयन्ति, चशब्दो भिन्नक्रमः, ततः "गुणग्गाहि" त्ति 'गुणग्राहिणश्च' उपबृंहणार्थं परेषां सद्भूतगुणग्रहण-शीलाः, "एएण कारणेणं" ति एतैः कारणैः अर्हा भवन्त्याचार्यादय इति गम्यते आलोचनां श्रोतुमिति सूत्रार्थः ॥२६२॥
इत्यमनशनस्थितेन यत्कृत्यं तदुपदर्श्य सम्प्रति प्रागुद्दिष्टकन्दर्पादिभावनानां स्वरूपमाह—

**कंदप्प-कोक्कुयाइं, तह सील-सहाव-हसण-विगहाहिं। विम्हावेंतो य परं, कंदप्पं भावणं कुणइ २६३**
**मंताजोगं काउं, भूईकम्मं च जे पउंजंति। सायरसइड्ढिहेउं, अभिओगं भावणं कुणइ ॥ २६४ ॥**
**णाणस्स केवलीणं, धम्मायरियस्स संघसाहूणं। माई अवन्नवाई, किब्बिसियं भावणं कुणइ॥२६५॥**
**अणुबद्धरोसपसरो, तह य निमित्तम्मि होइ पडिसेवी। एएहि कारणेहि य, आसुरियं भावणं कुणइ॥**
**सत्थग्गहणं विसभक्खणं च जलणं च जलप्पवेसो य। अणायारभंडसेवा, जम्मणमरणाणि बंधंति॥**

व्याख्या—"कंदप्पकोक्कुयाइं" ति कन्दर्पकौकुच्ये कुर्वन्निति शेषः, तत्र कन्दर्पः—"कहकहकहस्स हसणं, कंदप्पो अनिहुया य आलावा। कंदप्पकहाकहणं, कंदप्पुवएससंसा य ॥ १ ॥" अनिभृता आलापाश्च—गुर्वादिनाऽपि सह

1 "कहकहकहस्य हसनं कन्दर्पोऽनिभृताश्च संलापाः। कन्दर्पकथाकथनं कन्दर्पोपदेशशंसा च ॥ १ ॥"

निठुरवक्रोक्त्यादिरूपाः, कन्दर्पकथा–कामस्य कथा, कौकुच्यं द्विधा–कायेन वाचा, तथा च—"[1]भूनयणवयणदसणच्छएहिं करचरणकण्णमाईहिं । तं तं करेइ जह जह, हसइ परो अत्तणा अहसं ॥ १ ॥ वायाए कोकुइओ, तं जंपइ जेण हस्सए अन्नो । नाणाविहजीवरुए, कुवइ मुहतूरए चेव ॥ २ ॥" "तह" त्ति येन प्रकारेण परस्य विस्मय उपजायते तथा यच्छीलं च–फलनिरपेक्षा वृत्तिः स्वभावश्च–परविस्मयोत्पादनाभिसन्धिनैव तत्तन्मुखविकारादिकं स्वरूपं हसनं च–अट्टाट्टहासादि विकथाश्च–परविस्मापकविविधोल्लापरूपाः शीलस्वभावहासविकथास्ताभिर्विस्मापयन् परं "कंदप्पं" ति कन्दर्पयोगात्कन्दर्पाः ते च प्रस्तावाद् देवास्तेषामियं कान्दर्पी तां 'भावनां' तद्भावाऽभ्यासरूपां करोति ॥ "मंतायोगं" ति सूत्रत्वात् मन्त्राश्च योगाश्च–तथाविधद्रव्यसंयोगा मन्त्रयोगं तत् कृत्वा भूया–उपलक्षणत्वात् मृदा सूत्रेण च कर्म–रक्षार्थं क्रिया भूतिकर्म, चशब्दात् कौतुकादि च "जे पउंजंति" त्ति प्राकृतत्वाद् यः प्रयुङ्क्ते 'सातरसर्द्धिहेतोः' सातार्थमिति भावः, अनेन पुष्टालम्बने निःस्पृहस्यैतत्कुर्वतः प्रत्युत गुण इति ज्ञापयति, स आभियोगीं भावनां करोति ॥ नाणे"त्यादि प्रकटम् । नवरम्—ज्ञानस्याऽवर्णवादी, यथा—"[2]काया वया य ते च्चिय, ते चेव पमायमप्पमाया य । मोक्खाहिगारियाणं, जोइसजोणीहिं किं कज्जं ? ॥ १ ॥" धर्माचार्यस्य—"[3]जच्चाईहिं अवन्नं, विहसइ वट्टइ न यावि उववाए । अहिओ छिद्दप्पेही, पगासवाई अणणुकूलो ॥ १ ॥ साधूनां च—"[4]अविसहणाऽतुरियगई, अणाणुवत्ती इमे गुरूणं पि ।

१ "भ्रूनयनवदनदशनच्छदैः करचरणकर्णादिभिः । तत्तत्करोति यथा यथा हसति पर आत्मनाऽहसन् ॥१॥ वाचा कौत्कुचिकस्तज्जल्पति येन हसत्यन्यः । नानाविधजीवरुतान् करोति मुखतूर्याणि वा ॥२॥" २ "कायाव्रतानि च तान्येव तावेव प्रमादाप्रमादौ च । मोक्षाधिकारिणां ज्योतिर्योनिभिः किं कार्यम् ? ॥१॥" ३ "जात्यादिभिरवर्णं विहसति वर्तते न चाप्युपपाते । अहितश्छिद्रप्रेक्षी प्रकाशवाद्यननुकूलः ॥१॥"
४ "अविषहणाऽत्वरितगतयोऽननुवृत्तयश्चेमे गुरूणामपि ।"

रागमेगमीइरोना, निद्दिनच्छल्ला न संतइया ॥ १ ॥" 'मायी' स्वस्वभावनिगूहनादिमान्, यथोक्तम्—"गूहइ आय- सहावं, घायइ य गुणे परस्स संते वि । चोरो व सव्वसंकी, गूढायारो वितहभासी ॥ १ ॥" इदानीं विचित्रत्वात् सूत्रकृतेर्मोहीभावेऽनानुपूर्वीभावना गत्कुर्वता कृता भवति तदाह—'अणुबद्धे'त्यादि स्पष्टम् । नवरम्—अनुबद्धरोप- प्रसरलक्षणम्—निच्चं वुग्गहसीलो, काऊण य णाणुतप्पए पच्छा । न य खामिओ पसीयइ, अवराहीणं दुवेण्ह पि ॥ १ ॥" 'तथा' समुच्चये, 'च:' पूरणे, निमित्तम्–अतीतादि तद्विषये भवति 'प्रतिसेवी' अपुष्टालम्बनेऽपि तदासेवनात् ॥ शस्त्रस्य ग्रहणम्–आत्मनि वधार्थं व्यापारणं शस्त्रग्रहणं, विषभक्षणं, चशब्द उक्तसमुच्चयार्थः पर्यन्ते योक्ष्यते, 'ज्वलनं' शरीरस्यात्मन इति गम्यते, जलप्रवेशः, चशब्दोऽनुक्तभृगुपातादिपरिग्रहार्थः, आचारः–शास्त्रविहितः व्यवहारस्तेन भाण्डम्–उपकरणमाचारभाण्डं न तथा अनाचारभाण्डं तस्य सेवा–हासमोहादिभिः परिभोगः अनाचारभाण्डसेवा, सा च क्रियमाणत्वाद् एतानि कुर्वन्तो यतनः 'जन्मजरामरणानि' उपचारात् तत्तन्निमित्तकर्माणि बध्नन्ति इति, अनेन चोन्मार्ग- देशकत्वा मार्गविप्रतिपन्निराद्धिता, तथा चाऽर्थतो मोहीभावनोक्ता । यतस्तल्लक्षणम—"उम्मग्गदेसओ मग्गनासओ मग्गविप्पडिवत्ती । मोहेण य मोहेत्ता, सम्मोहं भावणं कुणइ ॥ १ ॥" फलं चाऽऽसाम्—"एयाओ भावणाओ, भाविता देवदुग्गइं जंति । तत्तो य चुया संता, पडंति भवसागरमणंतं ॥ २ ॥" इति सूत्रपञ्चकार्थः ॥ २६३-२६४- २६५-२६६-२६७ ॥ साम्प्रतमुपसंहारव्याजेन शास्त्रस्य माहात्म्यमाह—

संसारिजीव-वक्तव्यता।

---

अनुबद्धविग्रहाः संसक्ततपो निमित्तमादेशी । निष्कृपो निरनुकम्पश्चासुरीं भावनां करोति ॥ १ ॥" १ "गूहते आत्मस्वभावं घातयति च गुणान् परस्य सतोऽपि । चौर इव सर्वशङ्की, गूढाचारो वितथभाषी ॥ १ ॥" २ "नित्यं व्युद्ग्रहशीलः कृत्वा न चानुतप्यते पश्चात् । न च क्षामितः प्रसीदति अपराधिनोर्द्वयोरपि ॥ १ ॥" ३ "उन्मार्गदेशको मार्गनाशको मार्गविप्रतिपत्तिः । मोहेन च मोहयित्वा सम्मोहीं भावनां करोति ॥ १ ॥" ४ "एता भावना भाव- यित्वा देवदुर्गतिं यान्ति । ततश्च च्युताः सन्तः पतन्ति भवसागरमनन्तम् ॥ १ ॥"

इइ पाउकरे बुद्धे नायए परिनिव्वुए । छत्तीसं उत्तरज्झाए भवसिद्धीयसम्मए ॥२६८॥ त्ति बेमि ॥

व्याख्या—'इति' एताननन्तरमुपवर्णितान्, "पाउकरे" त्ति 'प्रादुःकृत्य' कांश्चिदर्थतः कांश्चन सूत्रतोऽपि प्रकाश्य 'बुद्धः' केवलज्ञानावगतसकलवस्तुतत्त्वः 'ज्ञातजः' ज्ञातकुलसमुद्भवः, स चेह भगवान् महावीरः 'परिनिर्वृतः' निर्वाणं गतः, षट्त्रिंशद् उत्तराः—प्रधाना अध्यायाः—अध्ययनानि उत्तराध्यायास्तान्, भवसिद्धिकानां—भव्यानां सम्मतान्—अभिप्रेतान्, 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववदिति सूत्रार्थः ॥ २६८ ॥ निर्युक्तिकार एतन्माहात्म्यमाह—"जे[1] किर भवसिद्धीया, परित्तसंसारिया य जे भव्वा । ते किर पढंति एए, छत्तीसं उत्तरज्झाए ॥ १ ॥ तम्हा जिणपण्णत्ते, अणंतगम-पज्जवेहि संजुत्ते । अज्झाए जहजोगं, गुरुप्पसाया अहिज्जिज्जा ॥ २ ॥" योगः—उपधानादिव्यापारस्तदनतिक्रमेण यथायोगम् ॥

१ "ये किल भवसिद्धिकाः परीतसंसारकाश्च ये भव्याः । ते किल पठन्त्येतान् षट्त्रिंशदुत्तराध्यायान् ॥ १ ॥ तस्माज्जिनप्रज्ञप्तान् अनन्तगमपर्यवैः संयुक्तान् । अध्यायान् यथायोगं गुरुप्रसादादधीयेत ॥ २ ॥"

इति श्रीनेमिचन्द्रसूरिविनिर्मितायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां जीवाजीवविभक्तिनामकं षट्त्रिंशमध्ययनं समाप्तम् ॥

॥ समाप्तानि चाशेषाण्युत्तराध्ययनानि ॥

# श्रीउत्तराध्ययनसूत्रलघुव्याख्याव्याख्यातुः प्रशस्तिः ।

अस्ति विस्तारवानुर्व्यां, गुरुशाखासमन्वितः । आसेव्यो भव्यसार्थानां, श्रीकोटिकगणद्रुमः ॥१॥ तदुत्थवैरिशाखायाम-भूदतिशालिनी । विशाला प्रतिशाखेव, श्रीचन्द्रकुलसन्ततिः ॥२॥ तस्याश्चोत्पद्यमानच्छदनिचयसदृक्षावकर्णान्वयोत्थ-श्रीधारापद्रगच्छप्रसवभरलसद्धर्मकिञ्जल्कपानात् । श्रीशान्त्याचार्यभृङ्गः प्रवरमधुसमामुत्तराध्यायवृत्तिं, विद्वल्लोकस्य तृप्त्यममुहुरमुहुरुद्गिरन्नां गभीरार्थसाराम् ॥३॥ तस्याः समुद्धृता चैषा, सूत्रमात्रस्य वृत्तिका । एकपाठगता मन्दबुद्धीनां हितकाम्य-या ॥४॥ आत्मसंस्मरणार्थाय, यथा मन्दधिया मया । अतोऽपराधमेनं मे, क्षमन्तु श्रुतशालिनः ॥५॥ आसीच्चन्द्रकुलोद्भूतो, विख्यातो जगतीतले । अक्षमाराजितोऽप्युच्चैः क्षमाराजितः सदा ॥६॥ धर्मोऽथ मूर्त्तिमानेव, सौम्यमूर्त्तिः शशाङ्कवत् । वर्जि-तश्चाशुभैर्भावै रागद्वेषमदादिभिः ॥७॥ सुनिर्मलगुणैर्नित्यं, प्रशान्तैः श्रुतशालिभिः । प्रद्युम्न-मानदेवादिसूरिभिः प्रविराजितः ॥८॥ विश्रुतस्य महीपीठे, बृहद्गच्छस्य मण्डनम् । श्रीमान् विहारुकप्रष्ठः, सूरिरुद्योतनाभिधः ॥९॥ शिष्यस्तस्याऽऽम्रदेवोऽ-भूदुपाध्यायः सतां मतः । यत्रैकान्तगुणापूर्णे, दोषैर्लेभे पदं न तु ॥१०॥ श्रीनेमिचन्द्रसूरिरुद्धृतवान् वृत्तिकां तद्विनेयः । गुरु-सोदर्यश्रीमन्मुनिचन्द्राचार्यवचनेन ॥११॥ शोधयतु कृतानुग्रहबुद्धिं मयि संविधाय विज्ञजनः । तत्र च मिथ्यादुष्कृतमस्तु कृतमननुगं यदिह ॥१२॥ अणहिल्लपाटकनगरे, दोहडिसच्छ्रेष्ठिसत्कवसतौ च । सन्तिष्ठता कृतेयं, नवकरहरवत्सरे चैव ॥१३॥ पट्टिकातोऽलिखच्चेमां, सर्वदेवाभिधो गणी । आत्मकर्मक्षयायाऽथ, परोपकृतिहेतवे ॥१४॥ दोहडिश्रेष्ठिना चाऽस्या, लेखिता प्रथमा प्रतिः । जिनवाक्यानुरक्तेन, भक्तेन गुणवज्जने ॥१५॥ अनुष्टुभां सहस्राणि, गणितक्रियया‌ऽभवन् । द्वादश ग्रन्थ-मानं तु, पूर्णस्या विनिश्चितम् ॥१६॥ ग्रन्थाग्रं सूत्रेण सह [१३५५०] श्रीउत्तराध्ययनलघुवृत्तिः परिपूर्णा ॥ संवत् १५४५ वर्षे कार्तिकसुदि ३ दिने श्रीधर्मघोषगच्छे मूलपट्टे श्रीधर्मसूरिसन्ताने श्रीपद्मशेखरसूरिपट्टालङ्करणगच्छाधिराजश्रीपद्मान-न्दसूरिशिष्यवाचकश्रीभावशेखरवाचनार्थं लिखितमिदं मुनिना क्षमारत्नेन श्रुतज्ञानवृद्धये ॥ शुभं भवतु श्रीपार्श्वप्रसादात् ॥

॥ इति श्रीउत्तराध्ययनानि समाप्तानि ॥

इति श्रीआतम-वल्लभग्रन्थाङ्कः—१२.